मेघागमः फणिभुजां प्रथितान्धकारः प्रीणाति हंसममलो जलदात्ययश्च ।
प्रीतेः समानरुचितैव भवेन्निदानं दातुः प्रतिग्रहकृतश्च परस्परस्य ॥३०८॥
स वर्षसप्ततिं भुक्त्वा भुवं भूलोकभैरवः । भूरिरोगार्दितवपुः प्राविशज्जातवेदसम् ॥३०९॥
310 सोयं त्रिकोटिहा मुक्तो यः स्वात्मन्यपि निर्घृणः । देहत्यागेस्य गगनादुच्चचारेति भारती ॥३१०॥
इत्यूचुर्ये मते तेषां स एव परिहारदः। खण्डबन्धीतघृणतामग्रहारादिकर्मभिः ॥३११॥
आक्रान्ते दारदैर्भौट्टैर्म्लेच्छैरशुचिकर्मभिः । विनष्टधर्मे देशेस्मिन्पुण्याचारप्रवर्तनम् ॥३१२॥
आर्यदेश्यान्स संस्थाप्य व्यतनोद्दारुणं तपः । संकल्प्य स्ववपुर्दाहं प्रायश्चित्तक्रियां व्यधात् ॥३१३॥
अत एवाग्रहाराणां सहस्रं प्रत्यपादयत् । गान्धारदेशजातेभ्यो द्विजेभ्यो विजयेश्वरे ॥३१४॥
315 क्षुरखड्गासिधेन्वादिपूर्णायःफलके तदा । वह्निप्रदीप्ते सहसा पर्यन्ते स्वां तनुं जहौ ॥३१५॥
इत्येतस्मिञ्जनाम्नाये केचिद्व्यभिचारिणि । प्राहुः पुरुषसिंहस्य शौर्यं तस्याविगर्हितम् ॥३१६॥ कुलकम् ॥
ये नागेन रुषा प्लुष्टे नगरे प्राभवन्खशाः । तेषां नाशाय वृत्तान्तं पूर्वोक्तं जगदुः परे ॥३१७॥
अवतारयतस्तस्य चन्द्रकुल्याभिधां नदीम् । अशक्योन्मूलना मध्ये शिलाभूद्विघ्नकारिणी ॥३१८॥
ततः कृततपाः स्वप्ने देवैरुक्तः स भूपतिः । यक्षः शिलायां बलवान्ब्रह्मचार्यत्र तिष्ठति ॥३१९॥
320 साध्वी स्पृशति चेदेनां निरोद्धुं न स शक्नुयात् । ततोपरेद्युः स्वप्नोक्तं शिलायां तेन कारितम् ॥३२०॥
तासु तासु कुलस्त्रीषु व्यर्थयत्नास्वथाचलत् । चन्द्रवत्याख्यया स्पृष्टा कुलाल्या सा महाशिला ॥३२१॥
कोटित्रयं नरपतिः क्रुद्धस्तेनागसा ततः । सपतिभ्रातृपुत्राणामवधीत्कुलयोषिताम् ॥३२२॥
इयं चान्यमते ख्यातिः प्रथते तथ्यतः पुनः । अभव्या सनिमित्तापि प्राणिहिंसा गरीयसी ॥३२३॥
एवं क्षुब्धोपि यद्राजा संभूय न हतो जनैः । तत्कर्म कारयद्भिस्तैर्दैवतैरेव रक्षितः ॥३२४॥
325 प्रजापुण्योदयैस्तीव्रैश्चिरात्तस्मिन्क्षयं गते । बकस्तत्प्रभवः पौरैः सदाचारोभ्यषिच्यत ॥३२५॥
तत्रापि पूर्वसंस्कारादुल्कावासं दधे जनः । श्मशानर्धिहृते लीलावेश्मनीव नृपास्पदे ॥३२६॥
अतिसंतापदाज्जातः स जनाह्लादकोभवत् । जलौघो जलदश्यामात्तपात्ययदिनादिव ॥३२७॥
लोकान्तरादिवायातं मेने धर्मं तदा जनः । अभयं च परावृत्तं प्रवासाद्वनादिव ॥३२८॥
स बकेशं बकश्वभ्रे बकवत्यापगां तथा । कृत्वा पुरं परार्ध्यश्रीर्लवणोत्साभिधं व्यधात् ॥३२९॥
330 तत्र त्रिषष्टिर्वर्षाणां सत्र्योदशवासरा । अत्यवाह्यत भूपेन तेन पृथ्वीं प्रशासता ॥३३०॥
अथ योगेश्वरी काचिद्भट्टाख्या रजनीमुखे । कृत्वा कान्ताकृतिं काम्यामुपतस्थे विशां पतिम् ॥३३१॥
तया मनोहरैस्तैस्तैर्वचनैर्लोपितस्मृतिः । स यागोत्सवमाहात्म्यं द्रष्टुं दृष्टो न्यमन्त्र्यत ॥३३२॥
पुत्रपौत्रशतोपेतः प्रातस्तत्र ततो गतः । चक्रवर्ती तया निन्ये देवीचक्रोपहारताम् ॥३३३॥
कर्मणा तेन सिद्धाया व्योमाक्रमणसूचकम् । जानुमुद्राद्वयं तस्या दृशद्यद्यापि दृश्यते ॥३३४॥

---

३०८. [1]) Edd. add before this verse the following verses, not found in A G R: अतिनीचकुलम्भूतनिर्लज्जाम्लेच्छवंशजाः । स्नुषासङ्गतिलम्पटाश्च दारदाः सन्ति पापिनः ॥ वस्तुभावैस्तथा भाट्टा भार्याविक्रयकारिणः । परोपभोगितास्तेषां निर्लज्जास्ताहि योषितः ॥.—[2]) $A_2$ °त्रिमित्रं.—[3]) Thus $A_2$; $A_1$ °प्रग्रहतश्च. ३२०. [1]) Thus corr. by $A_2$ from $A_1$ न च. ३२५. [1]) Emended; A R G एकस्त°. ३२६. [1]) G कक्कावासं. ३३२. [1]) Thus corr. by $A_2$ from $A_1$ °हरैस्तैस्तैर्वै°.

देवः शतकपालेशो मातृचक्रं शिला च सा । खेरीमठेषु तद्वार्तास्मृतिमद्यापि यच्छति ॥३३५॥ 335

देव्या कुलवतीः कम्बः क्षितिनन्दोथ शोषितः । ततस्तस्य सुतस्त्रिंशद्वत्सरानन्वशान्महीम् ॥३३६॥

द्वापञ्चाशतमब्दान्क्ष्मां द्वौ च मासौ तदात्मजः । अपासीद्वसुनन्दाख्यः प्रख्यातस्मरशास्त्रकृत् ॥३३७॥

नरः षष्टिं तस्य सूनुस्तावतोक्षश्च तत्सुतः । वर्षानभूद्विभुर्नाम योक्षवालमकारयत् ॥३३८॥

जुगोप गोपादित्योथ क्ष्मां सद्वीपां तदात्मजः । वर्णाश्रमप्रत्यवेक्षाशंसिताद्वियुगोदयः ॥३३९॥

सखोलखागिकाहाडिग्रामस्कन्दपुराभिधान् । शमाङ्गासंमुखांश्चाग्रहारान्यः प्रत्यपादयत् ॥३४०॥ 340

ज्येष्ठेश्वरं प्रतिष्ठाप्य गोपाद्रावार्यदेशजाः । गोपाग्रहारान्कृतिना येन स्वीकारिता द्विजाः ॥३४१॥

भूक्षीरवाटिकायां यो निर्वास्य लशुनाशिनः । खासटायां न्यधाद्विप्रान्निजाचारविवर्जितान् ॥३४२॥

अन्यांश्चानीय देशेभ्यः पुण्येभ्यो वच्चिकादिषु । पावनामग्रहारेषु ब्राह्मणान्स न्यरोपयत् ॥३४३॥

उत्तमो लोकपालोयमिति लक्ष्म प्रशस्तिषु । यः प्राप्तवान्विना यज्ञं चक्षमे न पशुक्षयम् ॥३४४॥

सषड्दिनां वर्षषष्टिं पालयित्वा स मेदिनीम् । भोक्तुं पुण्यपरीपाकं लोकान्सुकृतिनामगात् ॥३४५॥ 345

गोकर्णस्तत्सुतः क्षोणीं गोकर्णेश्वरकृद्दधे । अष्टपञ्चाशतं वर्षांस्त्रिंशत्याह्नां विवर्जितान् ॥३४६॥

सूनुर्नरेन्द्रादित्योस्य खिङ्खिलान्याभिधोभवत् । भूतेश्वरप्रतिष्ठानामक्षयिण्याश्च कारकः ॥३४७॥

दिव्यानुग्रहमागुप्राभिधो यस्य गुरुर्व्यधात् । उग्रेशं मातृचक्रं च प्रभावोदग्रविग्रहः ॥३४८॥

भुक्त्वा षट्त्रिंशतं वर्षाञ्शतं चाह्नां विभुर्भुवः । स दीर्घैरमलांल्लोकानासदत्सुकृतैः कृती ॥३४९॥

युधिष्ठिराभिधानोभूदथ राजा तदात्मजः । यः सूक्ष्माक्षतया लोकैः कथितोन्धयुधिष्ठिरः ॥३५०॥ 350

तेन क्रमागतं राज्यं सावधानेन शासता । अनुजग्मे मितं कालं पूर्वभूपालपद्धतिः ॥३५१॥

काले कियत्यपि ततो वास्यभाग्यवशादसौ । सिषेवे श्रीमदक्षीबो यत्किंचनविधायिताम् ॥३५२॥

नान्वग्रहीदनुग्राह्यान्न संजग्राह धीमतः । न प्रवृत्तोपचाराणां प्रागिवासीत्प्रियंकरः ॥३५३॥

दुर्विदग्धपर्षदा सार्कं निर्विशेषं सभाजितैः । परिजह्रे स दुर्जातो जाततेजोवधैर्बुधैः ॥३५४॥

सर्वत्र समवृत्तित्वं गुणोयं खलु योगिनः । अकीर्तिहेतुः स महान्दोषस्तु पृथिवीपतेः ॥३५५॥ 355

नयद्भिर्गुणतां दोषान्दोषतां च गुणान्विटैः । स लुप्तप्रतिभश्चक्रे शनकैः स्त्रीजितोपमः ॥३५६॥

प्राज्ञमर्मच्छेदिनी दीर्घं नर्म शश्वत्कथा विटैः । अनीश्वरोचिता तस्य क्रीडापि भयदाभवत् ॥३५७॥

पुरो मिथ्या गुणग्राही परोक्षं दोषदर्शकः । असुस्थिरादरो भूभृत्सोभूद्द्वेष्योनुजीविनाम् ॥३५८॥

मनागनवधानेन स्खलतस्तस्य भूपतेः । इत्थं राज्यस्थितिरगादचिरेण विसूत्रताम् ॥३५९॥

उपेक्षितस्य निर्द्रोहैरयतन्ताजितात्मनः । अथ लब्धबलास्तस्य नाशाय द्रोहिमन्त्रिणः ॥३६०॥ 360

---

३३९. ¹) Thus corr. by $A_2$ from $A_1$ प्रत्यवेक्षा°. ३४०. ¹) $A_2$ gloss खोवेपात्.—²) $A_2$ gloss खन्दोर्.—³) $A_2$ शमाङ्गासा, with gloss शिमन् ग्रामस्. ३४१. ¹) $A_2$ gloss गोपकार इति प्रसिद्धस्थले. ३४२. ¹) $A_2$ gloss भुछ्रपेचार् इति भाषया प्रसिद्धस्थले.—²) $A_2$ gloss खोवरखले.—³) Emended; A R न्यधान्नि°; G न्यधान्नि°. ३४३. ¹) $A_2$ gloss वच्चिग्रामादिषु. ३४५. ¹) $A_2$ सषण्मासां. ३४७. ¹) Thus corr. from $A_1$ °न्याश्च by $A_2$ which adds the glosses [illegible] इति च प्रसिद्धा, and [illegible] इति पार्वतीयदेशादौ काश्मीरीयकाव्यकर्तृणि अक्षयिण्या इति प्रसिद्धाः यासु ($A_2$ यस्यां) [illegible] भोजनं वितीर्यते. Of a third gloss by $A_2$ which has been smeared over with ink, only the following can be read: [illegible] ——.—²) Thus corr. by $A_2$ from $A_1$ कारका. ३५०. ¹) Thus $A_2$; $A_1$ सूक्ष्माक्षितया. ३५४. ¹) Thus $A_2$; $A_1$ °जिह्रे. ३६०. ¹) $A_2$ gloss मन्त्रिभिः.

प्रभोः संकोचिताशैस्तैश्चरद्भिर्भिदुरग्रहम् । राज्यं जिहीर्षवो भूपाश्चक्रिरे भूम्यनन्तराः ॥३६१॥

तदनुप्राणिताः सर्वे ते ते[1] नानादिगाश्रयाः । आसन्नराज्यामिषं प्राप्तुं श्येना इव ससंभ्रमाः ॥३६२॥

अथोत्पन्नभयो राजा न शशाक निजस्थितिम् । व्यवस्थापयितुं यन्त्रच्युतां कारुः शिलामिव ॥३६३॥

चिरं क्षुण्णे क्षमाभर्तुस्तस्मिन्राज्ये विसंस्थुले । उपायोस्य स्थितेर्हेतुर्नैकः कथनं पपथे ॥३६४॥

365 दृष्टदोषान्स्थितिं प्राप्तो[1] हन्यादस्माननसंशयम् । विचिन्त्येति न सामास्य जगृहुर्निजमन्त्रिणः ॥३६५॥

अथ निरुरुधुस्ते संनद्धा बलैर्नृपमन्दिरं व्यवहितजनाक्रन्दं भेरीरवैरतिभैरवैः ।
मदकरिघटाकेतुच्छायानिरुद्धरविप्रभा भवनवलभीः संतन्वन्तो दिवापि तमोवृताः ॥३६६॥

तैर्गन्तुं स्वभुवो निवारितरणैर्दत्तावकाशो[1] ततस्त्यक्तश्रीर्नगरान्तरात्स नृपतिस्तात्पर्यतो निर्ययौ ।
आजानेयरजोऽङ्कुराजललनाप्रस्थानसंदर्शनक्षुभ्यत्पौरजनाकुलाजकणिकाकीर्णेन राजाध्वना ॥३६७॥

राज्याच्च्युतस्य बहुशः परिवाररामाक्रोशादि[1] तस्य रिपवो व्रजतोपजह्रुः[2] ।
उर्वीरुहो विगलितस्य[3] नगेन्द्रशृङ्गाद्वल्लीफलादि रभसादिव गण्डशैलाः ॥३६८॥

रम्यैः शैलपथैर्व्रजन्श्रमवशाच्छायां श्रितः शाखिनामासीनः[1] प्रचलायितेन सुमहद्दुःखं विसस्मार सः ।
दूरात्पामरपूत्कृतैः श्रुतिपथप्राप्तैः प्रबुद्धस्त्वभूद्दृष्टो निर्झरवारिभिः सह मनः[2] श्वभ्रे निमज्जन्निव ॥३६९॥

नानावीरुत्तृणपरिमलैरुग्रगन्धा वनोर्वीरम्भःक्षोभप्रतिहतशिलाः पिच्छिलाश्चाद्रिकुल्याः ।
370 क्रान्त्वा श्रान्तैर्बिसकिसलयच्छायमुग्धाङ्गलेखैरभ्युत्सङ्गं[1] निहिततनुभिर्मूर्छितं तस्य दारैः ॥३७०॥

पर्यन्ताश्रितटाद्विलोक्य सुचिरं दूरीभवन्मण्डलं ग्रामामन्त्रयितुं जहत्सु[1] नृपतेर्दारेषु पुष्पाञ्जलीन् ।
क्षोणीपृष्ठविकीर्णपक्षतिनमत्तुण्डैः स्वनीडस्थितैः सावेगं गिरिकन्दरासु पततां वृन्दैरपि क्रन्दितम् ॥३७१॥

स्तनयुगतलनद्धस्रस्तमूर्धांशुकानां त्रिकवलनविलोलं वीक्ष्य दूरात्स्वदेशम् ।
अवहत रुदतीनां मौलिविन्यस्तहस्तं पथि नृपवनितानामश्रुभिर्निर्झराम्भः ॥३७२॥

भीतिस्थैर्यैरुचितवचनाक्षिप्तया शोकशान्त्या निर्व्याजाज्ञाग्रहणगुरुभिस्तैश्च तैश्चोपचारैः ।
तस्य स्नेहादुपगतवतो राज्यविभ्रंशदुःखं मन्दीचक्रुः स्वभुवि सुजना भूपतेर्भूमिपालाः ॥३७३॥

इति[1] काश्मीरिकमहामात्यश्रीचण्पकप्रभुसूनोः कल्हणस्य कृतौ राजतरङ्गिण्यां प्रथमस्तरङ्गः ॥
चतुर्दशाधिकं[2] वर्षसहस्रं नव वासराः । मासाश्च विगता ह्यस्मिन्नेकविंशतिराजसु[3] ॥

---

३६२. [1]) $A_1$ had written च after ते ते; struck out. $A_2$ तदनुप्राणिता वैरिनृपा नाना°. ३६३. [1]) $A_2$ gloss यन्त्रच्युत इति सेनायां युद्धार्थो प्रसिद्धम्. ३६४. [1]) Thus corr. by $A_2$ from $A_1$ कस्य न. ३६५. [1]) Thus corr. by $A_2$ from $A_1$ प्राप्तान्ह°. ३६७. [1]) $A_2$ gloss धर्मद्वारे. ३६८. [1]) Thus corr. by $A_2$; $A_1$ °रामा..क्रो°.—[2]) Thus corr. by $A_2$ from $A_1$ °पिजह्रुः—[3]) $A_2$ विच्यलितस्य. ३६९. [1]) G has *sec. manu* the *v. l.* आसीनः प्रलयायितेन.—[2]) Thus $A_1$; $A_2$ gives the *v. l.* महत् for मनः between the lines and another *v. l.* पुनः in margin. ३७०. [1]) $A_2$ अभ्युत्सङ्गं. ३७१. [1]) Thus $A_2$; $A_1$ पर्यन्ता°.—[2]) $A_2$ क्षिपत्सु. ३७२. [1]) $A_2$ बलभवलानां, with gloss अबलानां बलं कर्तुं.—[2]) $A_2$ gloss कर्मं. *Colophon.* [1]) $A_2$ adds before this the note रा १८ ॥ मं ॥ ३७३ ॥.—[2]) $A_2$ चतुर्विशा°.—[3]) Thus $A_2$; $A_1$ °नद्वाविंशति रा°.

## ॥ द्वितीयस्तरङ्गः ॥

विहितमजगोशृङ्गाभ्यां[1] धनुर्घटितं तथा नरकरटिनोर्देहार्धाभ्यां गणं परिगृह्णतः[2] ।
विविधघटनाभ्यासाभ्यानां[3] निधेरुचितां विभोर्जयति ललनापुंभागाभ्यां शरीरविनिर्मितिः ॥१॥
भूयो राज्यार्जनोद्योगस्तेनात्यज्यत भूभुजा । जरसा शमिवाण्या[1] च कर्णमूलमवाप्तया ॥२॥
अनयद्विनयोदात्तः समं स्वविषयेण तान् । विषयान्वशिनामग्र्यः स ताम्यन्नापि विस्मृतिम् ॥३॥
ध्यायन्राज्येच्छया दुर्गागलिकायां[1] स्वमन्त्रिभिः । कालेन स्थापितो बद्धस्त्वभ्यधायि तु कैरपि ॥४॥
अथ प्रतापादित्याख्यस्तैरानीय दिगन्तरात् । विक्रमादित्यभूभर्तुर्ज्ञातिराज्येऽभ्यषिच्यत ॥५॥
शकारिर्विक्रमादित्य इति स[1] भ्रममाश्रितैः । अन्यैरत्रान्यथालेखि विसंवादि[2] कदर्थितम् ॥६॥
इदं स्वभेदविधुरं हर्षादीनां धराभुजाम् । कंचित्कालमभूद्भोज्यं ततः प्रभृति मण्डलम् ॥७॥
असपूर्वापि तेनोर्वी सपूर्वेव महीभुजा । लालिता हृदयज्ञेन पत्या नववधूरिव ॥८॥
भुक्त्वा द्वात्रिंशतं वर्षान्भुवं तस्मिन्दिवं गते । जलौकास्तत्सुतो भूमेर्भूषणं समपद्यत ॥९॥
पितुरेव समं कालं वृद्धिहेतोः स दिद्युते । विधुवत्पूर्णशीतांशुरिव शीतेतरार्चिषः ॥१०॥
अथ वाक्पुष्टया सार्धं देव्या दिव्यप्रभावया । भुवं तत्प्रभवो भुञ्जंस्तुञ्जीनोऽरञ्जयत्प्रजाः ॥११॥
दंपतिभ्यामियं ताभ्यामभूष्यत वसुंधरा । गङ्गामृगाङ्कखण्डाभ्यां जटाभूरिव धूर्जटेः ॥१२॥
मण्डलं साध्वधत्तां तौ नानावर्णमनोरमम् । शरद्वर्षापयोवाहौ माहेन्द्रमिव कार्मुकम् ॥१३॥
चक्राते च महाभागौ विभ्रमाभरणं भुवः । तुङ्गेश्वरं हरावासं कातिकाख्यं[1] च पत्तनम् ॥१४॥
कश्चिन्मडवराज्यान्तःस्थाने चण्डातपोज्ज्वले[1] । तत्प्रभावेण फलितं वृत्तिस्तत्क्षणरोपितैः ॥१५॥
नाट्यं सर्वजनप्रेक्ष्यं यश्चक्रे स महाकविः । द्वैपायनमुनेरंशस्तत्काले चन्दकोऽभवत्[1] ॥१६॥
तयोः प्रभावमाहात्म्यजिज्ञासार्थमिवोद्यता । प्रजासु दुःसहा जातु व्यापद्दैवी[1] व्यजृम्भत ॥१७॥
पाकोन्मुखशरच्छालिच्छन्नकेदारमण्डले । मासि भाद्रपदेऽकस्मात्पपात तुहिनं महत् ॥१८॥
तस्मिन्विश्वक्षयोद्युक्तकालाट्टहसितोपमे । न्यमज्जञ्छालयः साकं प्रजानां जीविताशया ॥१९॥
अथासीत्क्षुत्परिक्षामजनप्रेतकुलाकुलः । प्राकारो[1] निरयस्येव घोरो दुर्भिक्षविप्लवः ॥२०॥
पत्नीमार्तिं सुतस्नेहं पितृदाक्षिण्यमातुरः । कुक्षिंभरिः क्षुत्क्षामो विसस्माराखिलो जनः ॥२१॥

---

१. [1]) Thus corr. by $A_2$ from $A_1$ °शीःशृङ्ग°.—[2]) Thus corr. by $A_2$ from $A_1$ प्रतिगृह्णतः.—[3]) $A_4$ gloss अभ्यस्ता.
२. [1]) $A_2$ gloss शितेभिरवाणी. ४. [1]) $A_2$ gloss दुर्गाख्यम्. ६. [1]) $A_2$ स हर्षे भ्रम°; R G follow this reading and write °श्रितः.—[2]) $A_2$ विसंवादक°. १४. [1]) $A_2$ gloss कैम्. १५. [1]) $A_2$ °तपोल्बणे. १६. [1]) Thus $A_2$, also R G; $A_1$ °क्को.
१७. [1]) $A_2$ gloss देवैः कृतत्वाद्दैवानां संबन्धिनी दैवी. २०. [1]) Thus $A_1$; altered by $A_2$ into प्रकारो.

क्षुत्तापाद्विस्मरल्लज्जामभिमानं कुलोन्नतिम् । अधानाहंक्रियाप्रान्तो लोको[1] लक्ष्मीकटाक्षितः ॥२२॥
क्षामं कण्ठगतप्राणं याचमानं सुतं पिता । पुत्रो वा पितरं त्यक्त्वा चकार स्वस्य पोषणम् ॥२३॥
जात्वस्थिशेषे बीभत्से स्वदेहेऽहंक्रियावताम् । अभूद्भोज्यार्थिनां युद्धं प्रेतानामिव देहिनाम् ॥२४॥
25 रूक्षाभिभाषी क्षुत्क्षामो घोरो विश्वक्षिणी क्षिपन् । एक एको जगज्जीवैरियेष स्वात्मपोषणम् ॥२५॥
तस्मिन्महाभये घोरे प्राणिनामतिदुःसहे । ददृशे लोकनाथस्य तस्यैव करुणार्द्रता ॥२६॥
निवारितप्रतीहारः स रत्नौषधिशोभिना । दर्शनेनैव दीनानामलक्ष्मीक्रममच्छिनत् ॥२७॥
सपत्नीको निजैः कोशैः संचयैर्मन्त्रिणामपि । क्रीतान्नः स दिवारात्रं प्राणिनः समजीवयत् ॥२८॥
अटवीषु श्मशानेषु रथ्यास्ववसथेषु च । क्षुत्क्षामः क्ष्माभुजा तेन नहि कश्चिदुपेक्ष्यत[1] ॥२९॥
30 ततो निःशेषितधनः क्षीणान्नां वीक्ष्य मेदिनीम् । क्षपायामेकदा देवीमेवमूचे स[1] दुःखितः ॥३०॥
देव्यस्मदपचारेण ध्रुवं केनापि दुस्तरा । जाता निरपराधानां जनानां व्यापदीदृशी ॥३१॥
धिङ्मामधन्यं यस्याग्रे लोकोऽयं शोकपीडितः । पश्यन्नशरणामुर्वीमनुप्राप्तो विपद्यते ॥३२॥
प्रजा निःशरणा एता अन्योन्यं बान्धवोज्झिताः । अरक्षतो भयेऽमुष्मिन्किं कार्यं जीवितेन मे ॥ ३३ ॥
यथा कथंचिल्लोकोऽयं दिनान्येतानि यत्नतः । मयातिवाहितः सर्वो न च कोऽपि व्यपद्यत ॥३४॥
35 अतिक्रान्तप्रभावेयं कालदौरात्म्यपीडिता । निष्किंचनाथ संजाता पृथिवी गतगौरवा ॥३५॥
नदिमाः सर्वतो मग्ना दारुणे व्यसनार्णवे । उपायः कतमस्तावत्समुद्धर्तुं क्षमः प्रजाः ॥३६॥
निरालोको हि लोकोऽयं दुर्दिनग्रस्तभास्करः । कालरात्रिकुलैर्विश्वकपरीत इव वर्तते ॥३७॥
हिमसंघातदुर्लङ्घ्य[1]क्षितिभृद्रुद्धनिर्गमाः । बद्धद्वारकुलाय[2]स्थखगवद्विवशा जनाः ॥३८॥
शूराश्च मतिमन्तश्च विद्यावन्तश्च जन्तवः । कालदौरात्म्यतः पश्य जाता निहतयोग्यताः ॥३९॥
आशाः काञ्चनपुष्पकुड्मलकुलच्छन्ना न काः क्ष्मातले सौजन्यामृतवर्षिभिस्तिलकितं केऽर्थैर्न किं मण्डलम् ।
40 पन्थानः सुचिरोपचाररुचिरैर्व्याप्ता न कैः संस्तुतैस्तेषामेव वसन्ति निह्नुतगुणाः कालेन ये[3] मोहिताः ॥४०॥
तदेष गलितोपायो जुहोमि ज्वलने तनुम् । न तु द्रष्टुं समर्थोऽस्मि प्रजानां नाशमीदृशम् ॥४१॥
धन्यास्ते पृथिवीपालाः सुखं ये निशि शेरते । पौरान्पुत्रानिव पुरः सर्वतो वीक्ष्य निर्वृतान् ॥४२॥
इत्युक्त्वा करुणाविष्टो मुखमाच्छाद्य वाससा । निपत्य तल्पे निःशब्दं[1] रुरोद पृथिवीपतिः ॥४३॥
निवातस्तिमितैर्दीपैरुद्ग्रीवैः कौतुकादिव । वीक्षमाणाय तं देवी जगाद जगतीभुजम् ॥४४॥
45 राजन्प्रजानां सुकृतैः कोऽयं मतिविपर्ययः । येनेतर इव स्वैरमधीरोचितमीहसे ॥४५॥
यदसाध्यानि दुःखानि छेत्तुं न प्रभविष्णुता । तन्महीपाल महतां महत्त्वस्य किमङ्गनम् ॥४६॥
कः शक्रः कतमः स्रष्टा वराकः कतमो यमः । सत्यव्रतानां भूपानां कर्तुं शासनलङ्घनम् ॥४७॥
पत्यौ भक्तिर्व्रतं स्त्रीणामद्रोहो मन्त्रिणां व्रतम् । प्रजानुपालनानन्यकर्मता भूभृतां व्रतम् ॥४८॥

---

२२. [1]) $A_1$ लोकोऽलक्ष्मी°. २९. [1]) Thus corr. by $A_2$ from $A_1$ उपेक्षते. ३०. [1]) Thus corr. by $A_2$ from $A_1$ सु°. ३८. [1]) $A_3$ हिमसंघातदुर्लङ्घक्षिति°.—[2]) $A_2$ gloss नीडं ४०. [1]) $A_3$ प्रचुरी°.—[2]) $A_3$ संस्तुतैरेषां°, with gloss एषां शूरमतिमत्प्रभृतीनाम् निह्नुतगुणा ये शूराद्या अत्र अस्मिन्नेव देशे वसन्ति देशान्तरं न गच्छन्ति ते कालेन मोहिताः.—[3]) $A_2$ ते. ४३. [1]) Thus corr. by $A_2$ from $A_1$ °शङ्कं.

उत्तिष्ठ प्रतिमामश्य क विपद्येति मद्वचः । प्रजापाल प्रजानां ते नास्त्येव क्षुत्कृतं भयम् ॥४९॥
इति संरम्भतः प्रोक्ते तयानुध्याय देवता । प्रतिगेहं गतप्राणः कपोतनिवहोऽपतत् ॥५०॥ 50
प्रातस्तन्नृपतिर्वीक्ष्य व्यरंसीन्मरणोद्यमात् । प्रजाश्च प्रत्यहं मांसैः कपोतैर्जीवितं दधुः ॥५१॥
वस्त्वन्तरं किमपि तत्साध्वी नूनं ससर्ज सा । जनताजीवितावाप्त्यै न कपोतास्तु तेऽभवन् ॥५२॥
तादृशां नहि निर्व्याजप्राणिकारुण्यशालिनाम् । हिंसया धर्मचर्यायाः शक्यं क्वापि कलङ्कनम् ॥५३॥
अभवन्निर्मलं व्योम देवीकृत्या सह क्रमात् । साकं भूपालशोकेन दुर्भिक्षं च शमं ययौ ॥५४॥
सा भूमिविभवोद्गममग्रहारं द्विजन्मनाम् । सती कटीमुषं चक्रे रामुषं चापकल्मषा ॥५५॥ 55
वर्षैः षट्त्रिंशता शान्ते पत्यौ विरहजो ज्वरः । तत्यजे ज्वलनज्वालानलिनमध्यदे तया ॥५६॥
सा यत्र शुचिचारित्रा विपन्ने पतिमन्वगात् । स्थानं जनैस्तद्वाक्पुष्टाटवीत्यद्यापि[illegible]यते ॥५७॥
चारुचारित्रया तत्र तया सत्त्रेऽवतारिते । नानापथ्यागतानाथसार्थैरद्यापि भुज्यते ॥५८॥
आभ्यामभ्यधिकं कर्तुं शक्तिः कस्येति निश्चितम् । विचिन्त्यारोचकी धाता नापत्यं निर्ममे तयोः ॥५९॥
वेधाः परां धुरमुपैति परीक्षकाणामिक्षोः फलप्रजननेन कृतश्रमो यः ।
विस्मारितोद्धुरसुधारसयोग्यतां तं तस्मादुदेत्यं किमिवाभ्यधिकं विदध्यात् ॥६०॥ 60
दीर्घदुर्दिननष्टार्के राष्ट्रमात्मापचारतः । ज्ञात्वा राज्यमिसाद्देहे सा चकारेति केचन ॥६१॥
ततोऽन्यकुलजो राजा विजयोऽष्टावभूत्समाः । पत्तनेन परीतं यश्चकार विजयेश्वरम् ॥६२॥
सुतो महीमहेन्द्रस्य जयेन्द्रस्तस्य भूपतेः । क्ष्मामाजानुभुजो राजा बुभोजाथ पृथुप्रथः ॥६३॥
अलोलकीर्तिकल्लोलदुकूलवलनोज्ज्वलाम् । बभार यद्भुजस्तम्भो जयश्रीसालभञ्जिकाम् ॥६४॥
तस्याभूदद्भुतोदन्तभवभक्तिविभूषितः । राज्ञः संधिमतिर्नाम मन्त्री मतिमतां वरः ॥६५॥ 65
नास्त्युपायः स संसारे कोऽपि योऽपोहितुं क्षमः । भूपालमत्तकरिणामेषां चपलकर्णताम् ॥६६॥
अत्यद्भुतमतिः शङ्क्यः सोऽयमुक्तेति यद्विदैः । तस्मिन्धीसचिवे द्वेषस्तेनाधायत भूभुजा ॥६७॥ युग्मम् ॥
निवारितप्रवेशोऽथ सकोपस्तमहेतुकम् । निनाय हृतसर्वस्वं यावदायुर्दरिद्रताम् ॥६८॥
तस्य भूपतिविद्वेषभीष्मोष्मपरिशोषिणः । आश्रयं राजपुरुषा वार्तयापि न चक्रिरे ॥६९॥
गिरं गभीरो गृह्णाति क्ष्माभृद्यावत्तमग्रगाः । उक्तानुवादिनस्तावद्व्यक्तं प्रतिरवा इव ॥७०॥ 70
स तु राजविरुद्धत्वदारिद्र्याभ्यां न विव्यथे । गतस्पृहया प्रीतः प्राप्तया हरसेवया ॥७१॥
अथ भाव्यर्थमाहात्म्यात्प्रथमे प्रतिमन्दिरम् । राज्यं संधिमतेर्भावीत्यश्रुतापि सरस्वती ॥७२॥
नाचोदिता वाक्चरतीत्याप्तेभ्यः श्रुतवान्नृपः । ततः संभूतसंत्रासः कारावेश्मनि तं न्यधात् ॥७३॥

---

५०. [1]) $A_3$ देव्या. ५२. [1]) $A_1$ पतन. ५५. [1]) $A_2$ gloss कैमोह.—[2]) $A_2$ gloss रामोह. ६०. [1]) Thus $A_1$; $A_3$ वोञ्चतापल; G वोञ्चतापात. explained by वोञ्चकवासी गृहीत and subsequently corrected into वोञ्चता गु.—[2]) $A_2$ gloss उत्पादयित्वा. ६४. [1]) G आलोल°.—[2]) Thus corr. by $A_3$ from $A_1$ °श्री°.—[3]) $A_2$ gloss पुत्तलिकाम्. ६५. [1]) $A_2$ °सतो. ६८. [1]) $A_1$ कोपात्तम्. ७२. [1]) Thus corr. by $A_3$ from $A_1$ नवन°; $A_2$ had explained in margin the original reading by a note which has been struck out: राज्यं सन्धिमतो (sic) भावीत्यश्रुतापि सरस्वती एव नवमन्दिरं प्रथमे सन्धिमतेर्वैराजस्य विषमपूर्वकृत्यपरिपोषकरूपनवमन्दिरस्य नव्यात्कृतवान् श्रवणमभूदित्यर्थः येन च तदुपरि राजापीव क्रूरचेष्टोऽभूदिति भावः. ७३. [1]) Thus corr. by $A_2$ from $A_1$ सद्भूत°.—[2]) Thus corr. by $A_3$ from $A_1$ व्यधात्.

तत्र तस्योपनिगडैः पीडिताङ्गस्य शुष्यतः । पूर्णीभूद्दशमो वर्षो भूपतेश्चायुषोऽवधिः ॥७४॥

75 निष्पुत्रः स महीपालो मुमूर्षुर्दाहमाददे । रोगोत्थया पीडया च चिन्तया च तदीयया ॥७५॥

ऊष्मायमाणो विद्वेषवह्निना ज्वलतानिशम् । न विना तद्वधं मेने भवितव्यप्रतिक्रियाम् ॥७६॥

भाव्यर्थस्याबुधाः[1] कुर्युरुपायं स्थगनाय यम् । स एवापावृतं द्वारं श्रेयं दैवेन कल्पितम् ॥७७॥

दग्धाङ्गारकदम्बके विलुठतः स्तोकोन्मिषत्तेजसो वेधा वह्निकणस्य शक्तिमतुलामाधातुकामो हठात् ।
तन्निर्वापणमिच्छतः प्रतनुते पुंसः समीपस्थिते[1] संतापद्रुतभूरिसर्पिषि घटे पानीयकुम्भभ्रमम् ॥७८॥

अथ राजाज्ञया क्रूरैर्वधकर्माधिकारिभिः । निशि संधिमतिः शूले समारोप्य विपादितः ॥७९॥

80 प्रोतशूले मृते तस्मिञ्शोकशङ्कुर्महीपतेः । निरगाद्रोगभग्नस्य पूर्वं पश्चात्तु जीवितम् ॥८०॥

सप्तत्रिंशतिवर्षेषु यातेष्व[illegible]स्मिन्निरन्वये । प्रशान्तभूमिपालाभूत्कतिचिद्दिवसानि भूः ॥८१॥

अथ संधिमतिं बुद्ध्वा तथा व्यापादितं गुरोः । ईशानाख्यस्य हृदयं विवशं वशिनोऽप्यभूत् ॥८२॥

शिरीष इव संसारे सुखोच्छेदे मनीषिणाम् । हन्तानृशंस्यं तद्वृन्तमिवैकमवशिष्यते ॥८३॥

स श्मशानभुवं प्रायादनाथस्येव शुष्यतः । कर्तुं विपथिनस्तस्य स्वोचितामन्त्यसत्क्रियाम् ॥८४॥

85 तं चास्थिशेषमद्राक्षीत्कृष्यमाणं बलाद्वृकैः । शूलमूलावबद्धास्थिखण्डावष्टम्भनिश्चलम् ॥८५॥

समीरणसमाकीर्णमुण्ड[1]रन्ध्रामनिर्गतैः । ध्वनितैरनुशोचन्तमिवावस्थां तथाविधाम् ॥८६॥

हा वत्स प्रशुमीवृक्षे जीवाम्यद्येति वादिना । तस्याकृष्यत शूलान्तःप्रोतं तेनाथ कीकसम् ॥८७॥

वेष्टिताङ्गः शिरःशीर्णैस्तत्कचैर्धूलिधूसरैः । अनैषीत्तं स कङ्कालं वारयन्भषतो वृकान् ॥८८॥

उचितां सत्क्रियां कर्तुं ततस्तस्य समुद्यतः । भाले विधातृलिखितं श्लोकमेतमवाचयत् ॥८९॥

90 यावज्जीवं दरिद्रत्वं दश वर्षाणि बन्धनम् । शूलस्य पृष्ठे मरणं पुनो[1] राज्यं भविष्यति ॥९०॥

पादत्रयस्य दृष्टार्थः[1] श्लोकस्यासीत्स योगवित् । द्रष्टव्ये तुर्य[2]पादार्थे[3]ऽत्यये कौतुकान्वितः ॥९१॥

अचिन्तयच्च संभ्रान्तः कथमेतद्भविष्यति । उवाच च विधेः शक्तिमचिन्त्यां कलयं[1]श्चिरम् ॥९२॥

तत्तत्कर्मव्यतिकरकृतः पारतन्त्र्यानुरोधात्सज्ज्ञाः सर्वे व्यवसितहठोन्मूलनाय प्रयत्नात् ।
चित्रं तत्राप्युदयति विधेः शक्तिरत्यद्भुतेयं यन्माहात्म्याद्विविधघटनासिद्धयो निर्निरोधाः ॥९३॥

मणिपुरपुरे पार्थं निहतं समजीवयत् । फणिकन्याप्रभावेण सर्वाश्चर्यनिधिर्विधिः ॥९४॥

95 द्रोणपुत्रास्त्रनिर्दग्धं मातुर्गर्भे परीक्षितम् । जीवयन्कृष्णमाहात्म्याद्दाता धुर्योऽधिकारिणाम् ॥९५॥

कथं भस्मीकृतं दैत्यैर्नागांस्तार्क्ष्येण भक्षितान् । पुनर्जीवयितुं को वा दैवादन्यः प्रगल्भते ॥९६॥

इत्युक्त्वा भाविनोऽर्थस्य द्रष्टुं सिद्धिं समुद्यतः । तत्रैव बद्धवसतिः कङ्कालं स ररक्ष तम् ॥९७॥

अथार्धरात्रे निर्निद्रस्तस्यैवाद्भुतचिन्तया । धूपाधिवासमीशानो घ्रातवान्दिव्यमेकदा ॥९८॥

उच्चण्डलाडना[1]दण्डोद्घृष्टघण्टीघटांकृतैः । चण्डैर्डमरुनिर्घोषै[2]र्घर्घरं श्रुतवान्ध्वनिम् ॥९९॥

---

७७. 1) Thus corr. by later hand from A1 °र्थस्य बुधाः. ७८. 1) Another hand alters this to °स्थितेः. ८६. 1) A2 °समापूर्णमु° with gloss शिरः over मुण्ड. ९०. 1) Thus A1; A2 पुनराज्यं. ९१. 1) Thus corr. by later hand from A1 °दृष्टार्थे.— 2) A2 gloss चतुर्थ —3) Thus corr. by later hand from A1 °पादार्थे. ९२. 1) Thus corr. by A2 from A1 कार्यंचे°. ९९. 1) A2 gloss लाडना अन्तर्गता शलाका आण्डु इति भाषया.— 2) A2 °डमरुघोषैश्च.

उद्घाटिततमोरातिः स ततः पितृवनावनौ । ददर्श योगिनीस्तेजःपरिवेषान्तरस्थिताः ||१००|| 100

तासां संभ्रममालक्ष्य कङ्कालं चापवाहितम् । ईशानस्तां श्मशानोर्वीं भूतासिचकितो ययौ ||१०१||

अथापह्नवसंछन्नः शायितं मण्डलान्तरे । संधीयमानसर्वाङ्गं कङ्कालं योगिनीगणैः ||१०२||

बहलहरसंभोगवाञ्छा मद्यपदेवताः । वीरालाभात्तमन्विष्य कङ्कालं तमपादयन् ||१०३||

एकमेकं स्वमङ्गं च विनिधाय क्षणादथ । कुतोप्यानीय पुंलक्ष्म पूर्णाङ्गं तं प्रचक्रिरे ||१०४||

अथ पुर्यष्टकं भ्राम्यद्व्योमाक्रान्तान्यविग्रहम् । योगेनाकृष्य योगेश्वर्यस्तत्र संधिमतेर्व्यधुः ||१०५|| 105

ततः सुप्तोत्थित इव प्राप्तदिव्यविलेपनः । समभुज्यत ताभिः स यथेच्छं चक्रनायकः ||१०६||

ईशानस्तस्य देवीनां वितीर्णाङ्गाद्गतिं पुनः । क्षपायां क्षीयमाणायां चकितः पर्यशङ्कत ||१०७||

नर्दस्तत्क्षया धीरः स च तस्याममायवी । तत्र योगेश्वरीचक्रं छिन्नमन्तरधीयत ||१०८||

अथाश्रूयत वाक्तासां माभूदीशान भीस्तव । नास्त्यङ्गहानिरस्माकं धृते चास्मिन्न कञ्चुका ||१०९||

अस्मद्दत्तदिव्यवपुःसंधितः संधिमानसौ । आर्यत्वादार्यराजाख्यः ख्यातो भुवि भविष्यति ||११०|| 110

ततो दिव्याम्बरः स्रग्वी दिव्यभूषणभूषितः । ववन्दे संधिमान्प्राग्वत्प्राक्पूर्वस्मृतिर्गुरुम् ||१११||

ईशानोपि तमालिङ्ग्य स्वप्नेष्वपि सुदुर्लभम् । भूमिकामाललम्बे कामिति को वक्तुमर्हति ||११२||

असारं च विचित्रं च संसारं ध्यायतोर्मिथः । विवेकविशदा तत्र प्रावर्तत तयोः कथा ||११३||

अथ वार्तां विदित्वेमां कुतोपि नगरौकसः । सबालवृद्धाः सामात्यास्तत्र देशमाययुः ||११४||

पूर्वाकृतिविसंवादाद्भ्रमो नायं स इत्यथ । तैराच्छिद्यत संवादिनिखिलाम्पृच्छता भ्रमः ||११५|| 115

अथैनं शासितुं राष्ट्रं पौराणामपराजकम् । सोन्वमन्यत कृच्छ्रेण निःस्पृहः शासनाद्गुरोः ||११६||

प्राप्तव्योपवनोपान्तं तं दिव्याकृतिशोभिनम् । सतूर्यं स्नापयामासुरभिषेकाम्बुभिर्द्विजाः ||११७||

नवराजोचिताचारे न स शिक्षामपेक्षत । दृष्टकर्मा समस्तास्तु निस्तुषाः प्रक्रिया व्यधात् ||११८||

स राजोचितनेपथ्यः पौराशीर्घोषशोभिनीम् । सौधोन्मिषत्पताकास्रग्वी ससैन्यः प्राविशत्पुरीम् ||११९||

तस्मिन्विरजसि प्राज्यमाक्रामति नृपासनम् । आचक्राम प्रजा व्यापन्न दैवी न च मानुषी ||१२०|| 120

अहरन्वहयं तस्य शृङ्गाररहितविभ्रमाः । नितम्बिन्यो वनभुवः शामिनो न तु योषितः ||१२१||

वनप्रसूनसंपर्कपुण्यगन्धैस्तपस्विनाम् । कर्पूरधूपसुरभिः करैः स्पृष्टः स पिप्रिये ||१२२||

भूतेशवर्धमानेशविजयेशानपश्यतः । नियमो राजकार्येषु तस्याभूत्प्रतिवासरम् ||१२३||

हरायतनसोपानक्षालनाम्भःकणाङ्कितैः । संस्पृष्टः पवनैः सोभूद्रामम्लानस्पन्दविग्रहः ||१२४||

पूर्वपूजापनयने निराडम्बरसुन्दरः । तेनैव प्रद्युम्नजाथि वापितो विजयेश्वरः ||१२५|| 125

शिङ्गपीठलुठस्स्नानकुम्भाम्भःक्षोभमूर्छितैः । शयानस्याम्बुभूतस्य वल्लभो वल्लकीरवः ||१२६||

---

१००. [1]) A₂ gloss तमोरिः चाव् इति भाषया. १०३. [1]) Thus corr. by A₂ from A₁ मध्यमर्ष°; A₂ in margin मद्यमदेन ताः इत्य-ध्याहार्यं.—[2]) Thus corr. by A₂ from A₁ समुपाहरन्. १०४. [1]) Thus corr. by later hand from A₁ ततो.—[2]) Thus corr. by A₂ from A₁ पुंलिङ्ग°. १०५. [1]) Thus corr. by A₁ from भ्राम्यन्नभ्रा°.—[2]) A₂ योगिन्यः. १०६. [1]) स supplied by A₂. १०७. [1]) Thus corr. by A₂ from A₁ ईशानस्तस्य. ११०. [1]) A₂ राजा. ११९. [1]) Thus corr. by A₂ from A₁ ससैन्यां. १२१. [1]) A₂ gloss शृङ्गेषु अरहितः न त्यक्तः वीनां पक्षिणां भ्रमः भ्रमणं याभिः ताः.—[2]) A₂ gloss शान्तस्य. १२५. [1]) Thus corr. by A₂ from A₁ विजय°



6

तापसैर्भस्मरुद्राक्षजटाजूटाङ्कितैर्बभौ । तस्य माहेश्वरी पर्षदिव भूमिपतेः सभा ॥१२७॥
शिवलिङ्गसहस्रस्य प्रतिष्ठाकर्मणि प्रभोः । प्रतिज्ञा प्रत्यहं तस्य नाभूद्विघटिता क्वचित् ॥१२८॥
प्रमादात्तदनिष्पत्तौ शिलामुत्कीर्य कल्पिता । सहस्रलिङ्गी तद्भृत्यैः सर्वतोद्यापि दृश्यते ॥१२९॥
130 तासु तासु स वापीषु लिङ्गव्याजादरोपयत् । स्वपुण्यपुण्डरीकाणां जन्मनेक्षपरंपराम् ॥१३०॥
स्थाने स्थाने जलान्तश्च बहुसंख्यैर्निवेशितैः । अनयन्नर्मदाभङ्गिं शिवलिङ्गैस्तरङ्गिणीः ॥१३१॥
प्रतिलिङ्गं महाग्रामाः प्रत्यपाद्यन्त तेन ये । पर्षदामद्य तद्भोगः कालेनात्यर्थमागतः ॥१३२॥
अकरोत्स महाहर्म्यैर्महालिङ्गैर्महावृषैः । महात्रिशूलैर्महतीं महामाहेश्वरो महीम् ॥१३३॥
कृत्वा संधीश्वरं देहसंधानपितृकानने । ईशानस्य गुरोर्नाम्ना व्यधादीशेश्वरं हरम् ॥१३४॥
135 थेदां च भीमादेवीं च देशांश्चान्यान्पदेपदे । स मन्त्रप्रतिमालिङ्गैर्हर्म्यैर्निन्ये महार्घताम् ॥१३५॥
स्वयंभूमिव तीर्थैश्च पूतं भक्त्याविभूषितैः । स एव भोक्तुमश्रासीत्प्राशः कश्मीरमण्डलम् ॥१३६॥
जातस्य निर्झराम्भोभिः पुष्पलिङ्गार्चनोत्सवे । राज्ञस्तस्य वनोर्वीषु मासः पुष्पाकरो ययौ ॥१३७॥
स चातिरम्यः काश्मीरो ग्रीष्मस्त्रिदिवदुर्लभः । हिमलिङ्गार्चनैः प्रायाद्वनान्तेषु कृतार्थताम् ॥१३८॥
फुल्लाब्जषण्डरुद्धाशाः प्राप्य पुष्करिणीतटीः । लक्ष्मीसखः स खण्डेन्दुचूडध्यानपरोभवत् ॥१३९॥
140 नीलोत्पलवतीर्वापीरगस्त्योदयनिर्विषाः । अवगाह्य हरार्चाभिः शरदं निर्विवेश सः ॥१४०॥
सार्धं तपोधनैस्तैस्तैर्भजतो जागरोत्सवान् । तस्याभूवन्भुवो भर्तुरमोघा माघरात्रयः ॥१४१॥
अत्यद्भुतं राज्यलाभमित्थं सफलयन्कृती । पञ्चाशतं त्रिवर्षोनामत्यक्रामत्स वत्सरान् ॥१४२॥
शमव्यसनिनस्तस्य राज्यकार्याण्यपश्यतः । तस्मिन्काले प्रकृतयो विरागं प्रतिपेदिरे ॥१४३॥
अन्वैष्यत नृपस्ताभिः कश्चिद्राज्याय भुभुजे । राजपुत्रो जिगीषुश्च श्रीमान्योधिष्ठिरे कुले ॥१४४॥
145 जुगोप गोपादित्याख्यं कश्मीरेन्द्रजिगीषया । युधिष्ठिरप्रपौत्रं हि गान्धाराधिपतिस्तदा ॥१४५॥
वसन्नप्राप्तसाम्राज्यः स तत्र तनयं क्रमात् । अवाप लक्षणैर्दिव्यैरमोघं मेघवाहनम् ॥१४६॥
स तत्र पितुरादेशाद्वैष्णवान्वयजन्मनः । राष्ट्रं प्राग्ज्योतिषेन्द्रस्य ययौ कन्यास्वयंवरे ॥१४७॥
तत्र तं वारुणं छत्रं छायया राजसंनिधौ । भेजे वरस्रजा राजकन्यका चामृतप्रभा ॥१४८॥
तेन तस्य निमित्तेन वृद्धिमागामिनीं जनाः । अजानन्नम्बुवाहस्य पाश्चात्त्येनेव वायुना ॥१४९॥
150 राज्ञा हि नरकेणैतद्वरुणादुष्णवारणम् । आनीतमकरोच्छायां न विना चक्रवर्तिनम् ॥१५०॥
तमन्तिकं पितुः प्राप्तं पत्न्या लक्ष्म्या च संश्रितम् । भुवा निमन्त्रयामासुर्मन्त्रिणो वंशयोग्यया ॥१५१॥
अथार्यराजो विज्ञाय स्वराज्यं भेदजर्जरम् । प्रतिचक्रे न शक्तोपि तस्थौ तु त्यक्तुमुत्सुकः ॥१५२॥
अचिन्तयच्च सख्यं मे संप्रीतो भूतभावनः । सिद्धिविघ्नानमून्दीर्घानपाकर्तुं समुद्यतः ॥१५३॥
कृत्ये बहुनि निष्पाद्ये प्रमात्कौसीद्यमाश्रयन् । प्रावृषीवाध्वगो दिष्ट्या मोहितोस्मि न निद्रया ॥१५४॥
155 स्वकाले त्यजता लक्ष्मीं विरक्तां बन्धकीमिव । हठनिर्वासनक्रीडा दिष्ट्या नासादिता मया ॥१५५॥

१३०. 1) Thus corr. by $A_2$ from $A_1$ °पुण्डरीकाणाम°. १३४. 1) The *aksharas* श्वरं supplied by $A_2$ in space left by $A_1$.— 2) $A_2$ gloss ईशब्रारु इति प्रसिद्धस्थले. १३६. 1) $A_2$ °विशेषतः.— 2) Thus $A_3$; $A_1$ प्राज्ञः.— 3) Thus corr. by later hand from $A_1$ काश्मीर°. १३९. 1) Thus corr. by later hand from $A_1$ चूडाब्जा°. १४५. 1) Thus corr. by $A_1$ from °[illegible]. १४६ 1) Thus $A_2$; $A_1$ वसन्नपास्तसा°. १४७. 1) $A_2$ पुत्रः. १५४. 1) $A_2$ glosses आलस्यम् and [illegible] न कर्म कौसीद्य.— 2) Thus corr. by $A_2$ from $A_1$ °श्रयन्. १५५ 1) Thus $A_1$; $A_2$ स्वकुले.— 2) Thus corr. by $A_2$ from $A_1$ सरक्ताम्.

शैलूषस्येव मे राज्यरङ्गेस्मिन्नल्पमस्थिरम् । निर्व्यूढमपि वैरस्य द्दृष्टा न प्रेक्षका गताः ॥१५६॥
विरुद्धा सदैव वैमुख्यमुद्वेगोपप्लवभिया । त्यागक्षणे न भीतोस्मि विकत्थन इवाहवे ॥१५७॥
इति संचिन्तयन्नन्तः सर्वत्यागोन्मुखो नृपः । मनोराज्यानि कुर्वाणो दरिद्र इव पिप्रिये ॥१५८॥
अन्येद्युः प्रकृतीः सर्वाः संनिपात्य सभान्तरे । ताभ्यः प्रत्यर्पयन्न्यासमिव राज्यं सुरक्षितम् ॥१५९॥
अभिहितं स्वेच्छया तस्य प्रयत्नेनापि नाशकत् । तं स्वीकारयितुं कश्चित्फणीन्द्रमिव कञ्चुकम् ॥१६०॥ 160
अर्धाजिनमुपादाय सोथ प्रायादुदङ्मुखः । धौतवासा निरुष्णीषः पद्भ्यामेव प्रजेश्वरः ॥१६१॥
तस्य पादार्पितदृशो व्रजतो मौनिनः प्रभोः । पश्चान्न जगृहुः पौरा निःशब्दरुदवस्त्रवः ॥१६२॥
स विलङ्घितगव्यूतिरुपविश्य तरोरधः । जनमेकैकमुद्बाष्पं न्यवर्तयत सान्त्वयन् ॥१६३॥
पथि शिखरिणां मूले मूले विलम्ब्य जहज्जनान्वितपरिकरो गच्छन्नूर्ध्वं क्रमात्स्वमदृश्यत ।
वहनवसुधाः संपूर्णोर्वीर्भ्रजन्स निजात्पदादिव विनिर्यातः स्तोकैः कृतानुगमो[1] जनैः ॥१६४॥
निःशेषं निकटास्तलोकमटवीमध्ये निरुन्धन्पदं शोकावेशसबाष्पगद्गदपदं संमान्य चोत्सार्य च ।
भूर्जत्वक्[2]परिरोधमर्मरमरु[3]त्त्राणसिद्धाध्वगश्रेणीमौलिमणिप्रभोज्ज्वलगुहागेहं जगाहे वनम् ॥१६५॥ 165
अथ वनसरसीतटद्रुमाधः पुटकघटोदरसंभृताम्बुपूराम् ।
वसतिमकृत वासरावसाने शुचितरुपल्लवकल्पितोरुतल्पाम् ॥१६६॥
शृङ्गासक्तसितातपाः शबलितच्छायाभुवः शाद्वलैरुत्फुल्ला[1]मलमल्लिकातलमिलत्सुप्तप्रजस्त्रीजनाः ।
संध्याना वनपालवेणु[2]रणितोन्मिश्रैः प्रपाताम्बुभिः श्रान्तं दृक्पथमागतास्तमनयन्विश्राममुर्वाद्रयः ॥१६७॥
वनकरि[1]रसितैः पदे पदे स प्रतिभटतां पटहध्वनेर्दधानैः ।
अमनुत रटितैश्च कर्कटेटोः परिगलितां गमनोन्मुखस्त्रियामाम् ॥१६८॥
अन्येद्युर्विधिवदुपास्य पूर्वसंध्यामासन्ने नलिनसरस्यपास्तनिद्रः ।
क्ष्मापालः परिचितसोदराम्बुतीर्थं नन्दीशाध्युषितमवाप भूतभर्तुः ॥१६९॥
नन्दिक्षेत्रे त्रिभुवनगुरोः सोपतस्तत्र यावत्तस्थौ तावत्स्वयमभिमताश्रामये जायते स्म ।
भस्मस्मेरः सुघटितजटाजूटबन्धोक्षसूत्री रुद्राक्षाङ्को जरठमुनिभिः सस्पृहं वीक्ष्यमाणः ॥१७०॥ 170
आरण्यश्रीकण्ठवनव्रतजनितमहासत्क्रियो भैक्ष्यहेतोर्भिक्षाद्रामोद्यताल्लु प्रतिमुनिनिलयं संभ्रमात्तापसीषु ।
वृक्षैर्भिक्षाकपाले शुचिफलकुसुमश्रेणिभिः पूर्यमाणे मान्यो वैराग्ययोगेप्यनुपनतपरप्रार्थनालाघवोभूत् ॥१७१॥

६ ॥ १७१ ॥ आदितः ४३ ॥ सं ५४३ ॥

इति श्रीकाश्मीरिकमहामात्यश्रीचण्पकप्रभुसूनोः कल्हणस्य कृतौ राजतरङ्गिण्यां द्वितीयस्तरङ्गः ॥

शतत्रये वत्सराणामष्टाभिः परिवर्जिते । अस्मिन्नितीये व्याख्याताः षट्प्रख्यातगुणा नृपाः ॥

---

१५६. [1]) Thus $A_1$; the *v. l.* of $A_2$ निर्व्यूढावपि has been struck out again; G R निर्व्यूढमपि. १६०. [1]) Thus corr. by later hand from $A_1$ सं च. १६४. [1]) Thus corr. by $A_3$ from $A_1$ स्तोकानुगमो. १६५. [1]) Thus $A_2$; $A_1$ निरुन्धन्पदं.—[2]) Thus corr. by later hand from $A_1$ भूर्जत्वक्त्व°.—[3]) Thus corr. by $A_3$ from $A_1$ मर्मर°.—[4]) The *akshara* त्र supplied by $A_3$ in space left by $A_1$.—[5]) The gloss श्रीनगरीतो, written by $A_4$ at the foot of the page, probably refers to this word. १६७. [1]) Thus corr. by $A_2$ from $A_1$ शाद्वलैराकाल°; the latter reading repeated in margin by $A_3$.—[2]) Thus G *sec. manu* and P; A R C °पालैर्गु°.—[3]) $A_2$ gloss पर्वताः. १६८ [1]) $A_3$ वनकरि° —[2]) Thus corr. by later hand from $A_1$° ध्वनेर्द°.— १७०. [1]) $A_1$ यावत्तस्थौ; supplemented as above by $A_2$. १७१. [1]) $A_3$ आरण्यश्री°.—[2]) Thus corr. by $A_3$ from $A_1$ °योग्यो°. [3]) $A_1$ writes °प्यनुपनत°, with figures indicating transposition.

## ॥ तृतीयस्तरङ्गः ॥

मुग्धेभाजिनमस्त्वं कुम्भकुहरे मुक्ताः कुचाभोचिताः किं भालज्वलनेन कज्जलमतः स्त्रीकार्यमक्ष्णोः कृते ।
संधाने वपुरर्धयोः प्रतिवदत्येवं निषेधेऽवहैः कर्तव्ये मिथयोत्तरानुसरणोद्युक्तो हरः पातु वः ॥१॥
अथोल्लसत्प्रभुप्रायमानिन्युर्मेघवाहनम् । गान्धारविषयं गत्वा सचिवाधिष्ठिताः प्रजाः ॥२॥
रक्तप्रजस्य भूभर्तुः पश्चाल्लोकानुरञ्जनम् । तस्याश्रायि जनैर्धौतक्षौमक्षालनसंनिभम् ॥३॥
स पुनर्बोधिसत्त्वानामपि सत्त्वानुकम्पिनाम् । चर्यामुदात्तचरितैरत्यशेत महाशयः ॥४॥
तस्याभिषेक एवाज्ञां धारयन्तोधिकारिणः । सर्वतोमारमर्यादापटहानुदघोषयन् ॥५॥
कल्याणिना प्राणिवधे तेन राज्ञानिवारिते । निष्पापां प्रापिता वृत्तिं स्वकोशात्सौनिकादयः ॥६॥
तस्य राज्ये जिनस्येव मारविद्वेषिणः प्रभोः । क्रतौ घृतपशुः पिष्टपशुर्भूतबलावभूत् ॥७॥
स मेघवननामानमग्रहारं विनिर्ममे । मयुष्टग्रामकृत्पुण्यज्येष्ठं मेघमठं तदा ॥८॥
भोगाय देश्यभिक्षूणां वल्लभास्यामृतप्रभा । विहारमुच्चैरमृतभवनाख्यमकारयत् ॥९॥
देशैकदेशाल्लोनाम्नः प्राप्तस्तस्याः पितुर्गुरुः । स्तुन्पां तद्भाषया प्रोक्तो लोस्तोन्पास्तूपकार्यकृत् ॥१०॥
चक्रे नड्वने राज्ञो यूकदेव्यभिधा वधूः । विहारमद्भुताकारं सपत्नीस्पर्धयोद्यता ॥११॥
अर्धे यद्भिक्षवः शिक्षाचारास्तत्रार्पितास्तया । अर्धे गार्हस्थ्यगर्ह्याश्च सस्त्रीपुत्रपशुश्रियः ॥१२॥
अथेन्द्रदेवीभवनमिन्द्रदेव्यभिधा व्यधात् । विहारं सचतुःशालं स्तूपं भूपप्रियापरा ॥१३॥
अन्याभिः खादनासम्माप्रमुखाभिर्निजाख्यया । देवीभिस्तस्य महिता विहारा बहवः कृताः ॥१४॥
अर्वाक्कालोद्भवस्यापि राज्यकालोस्य भूपतेः । न्यक्कृतादिनृपोदन्तैर्वृत्तान्तैरद्भुतोभवत् ॥१५॥
स बहिर्विहरञ्जातु भूभृच्छीतैरुदीरितम् । चौरश्चौरोयमित्याराद‌शृणोत्क्रन्दितध्वनिम् ॥१६॥
कः कोत्र बध्यतां चौर इत्युक्ते तेन सक्रुधा । शशामाक्रन्दितध्वानो न च चौरो व्यभाव्यत ॥१७॥
पुर्याद्वित्रैर्दिनैस्तस्य निर्गतस्याग्रतस्ततः । अभवन्नभयार्थिन्यो द्विश्रा दिव्यप्रभाः स्त्रियः ॥१८॥
ताः संपृष्टेप्सितास्तेन रक्षार्थेन कृपालुना । अभ्यभाषन्त सीमन्तपुञ्जिताञ्जलयो वचः ॥१९॥
देव दिव्यप्रभावेण भुवने भवता धृते । अपरस्माद्भयं जातु कस्य स्यात्करुणानिधे ॥२०॥
तदानीं तोयदा भूत्वा छादयन्तो नभस्तलम् । अकाण्डकरकापातशङ्किभिः कार्षकैर्नृप ॥२१॥
पक्वशालिवनस्फीतिरक्षाक्षुभितमानसैः । नागास्त्वत्कोपवैरम्यभूमितां[2] गमिताः प्रभो ॥२२॥

२. [1]) $A_2$ gloss हमत्व. ५. [1]) $A_2$ gloss अमार अहिंसा. ८. [1]) $A_3$ °ज्येष्ठी.—[2]) $A_3$ तथा. ९. [1]) Thus $A_3$; $A_1$ चैत्य°.
१०. [1]) Thus $A_1$; corr. by later hand into देशैक°.—[2]) $A_1$ स्तुन्पा. ११. [1]) $A_3$ यूक°. १४. [1]) $A_2$ gloss भुक्तीनि.
२२. [1]) A °स्फाति°.—[2]) $A_3$ भूमि ते.

तेस्माकं पततश्चौरश्चौर इत्यार्तभाषितम् । श्रुत्वा देवेन बध्यन्तामित्यवादि यदा क्रुधा ॥२३॥
तदा त्वदाज्ञामात्रेण न्यपतन्पाशवेष्टिताः । प्रभावः क्रियतां तेषामस्मत्करुणयाधुना ॥२४॥ चक्रलकम् ॥
तदाकर्ण्याथ दयाज्ञा प्रसादविशदाननः । सर्वे ते बन्धनान्नागास्त्यजन्त्वामिति शासितः ॥२५॥
तथा तस्याज्ञया राज्ञो नागा विधुतबन्धनाः । प्रणम्य चरणौ नृपे प्रययुः सपरिग्रहाः ॥२६॥
अथ माहयितुं भूपानाज्ञां हिंसानिवृत्तये । स दिग्जयाय निर्व्याजधर्मचर्यो विनिर्ययौ ॥२७॥
अभूदभीतजनतावेक्षणश्लाघ्यविक्रमः । स्पृहणीयो जनस्यापि तदीयविजयोद्यमः ॥२८॥
प्रभावविजितान्कृत्वा सोऽहिंसादीक्षितान्नृपान् । अर्णसां पत्युरभ्यर्णमवापापार्णवर्जितः ॥२९॥
तत्र तालीवनच्छायासुखविश्रान्तसैनिकः । शुक्तिद्वीपान्तराक्रान्तौ क्षणमन्तर्व्यचिन्तयत् ॥३०॥
अथ वेलावनोपान्तात्तेनार्ताक्रन्दितध्वनिः । मेघवाहनराज्येऽपि हतोऽहमिति शुश्रुवे ॥३१॥
तमायःशङ्कुनेवान्तर्मर्मणितः स द्रुतं ततः । संचारिणातपत्रेण सह तां वसुधामगात् ॥३२॥
अपश्यदथ केनापि चण्डिकायतनमागतः । नरं शबरसेनान्या हन्यमानमधोमुखम् ॥३३॥
अनात्मज्ञ धिगेतत्ते कुकर्मेति महीभुजा । तर्जितः स भयादेवं शबरस्तं व्यजिज्ञपत् ॥३४॥
शिशुर्मुमूर्षुर्मे राजन्नयं रोगार्दितः सुतः । कर्मैतद्दैवतैरुक्तमस्य भेषजमाहरम् ॥३५॥
उपहारनिरोधेन सद्य एवं विपद्यते । बन्धुवर्गमशेषं च विश्वयेतज्जीवजीवितम् ॥३६॥
अरण्यगहनालब्धमनाथं देव रक्षसि । बहुलोकाभयं बालं कथमेतमुपेक्षसे ॥३७॥
अथाभ्यधान्महात्मा स वचोभिः शबरस्य तैः । वध्यस्य दृष्टिपातैश्च विक्लवैर्विवशीकृतः ॥३८॥
किरात कातरो मा भूः स्वयं संरक्ष्यते मया । बहुबन्धुस्तव सुतो वध्योऽयमबान्धवः ॥३९॥
उपहारीकरोम्येष चण्डिकायै स्वविग्रहम् । मयि प्रहर निःशङ्कं जीवत्वेतज्जनद्वयम् ॥४०॥
तदद्भुतमहासत्त्वचित्तोदात्तत्वविस्मितः । उन्मिषद्रोमहर्षस्तं ततः स शबरोऽभ्यधात् ॥४१॥
अतिकारुण्यमिषतस्तवायं पृथिवीपते । कश्चिन्मतिविपर्यासप्रकारो हृदि रोहति ॥४२॥
त्रैलोक्यजीवितेनापि यो रक्ष्यो हेलयैव तम् । पृथिवीभोगसुभगं कथं कायमुपेक्षसे ॥४३॥
न मानं न यशो भार्याश्च दाराश्च बान्धवान् । न धर्मं न सुतान्भूपा रक्षन्ति प्राणतृष्णया ॥४४॥
तत्प्रसीद प्रजानाथ मा वध्येऽस्मिन्कृपां कृथाः । शिशुश्चैष प्रजाश्चैता जीवन्तु त्वयि जीवति ॥४५॥
उपाजिहीर्षुरात्मानं दन्तद्योतार्घडम्बरैः । अर्चयन्निव चामुण्डामथोवाच स पार्थिवः ॥४६॥
सदाचारसुधास्वादे के भवन्तो वनौकसः । जाह्नवीमज्जनप्रीतिं न जानन्ति मरुस्थिताः ॥४७॥
ध्रुवापायेन कायेन क्रीणतः कीर्तिमव्ययाम् । ममाभीष्टं प्रमार्ष्टुं ते मूढ कोऽयमाग्रहः ॥४८॥
मा वोचः किंचिदपरं प्रहर्तुं चेद्घृणा तव । न किं निजः कृपाणो मे शक्तः प्रक्रान्तसिद्धये ॥४९॥
इत्युक्त्वा स स्वयं देहमुपहर्तुं समुद्यतः । खण्डनाय स्वमुण्डस्य विकोशं शस्त्रमादधे ॥५०॥
ततः प्रहर्तुकामस्य तस्य द्युकुसुमैः शिरः । करश्च दिव्यवपुषा रुद्धः केनाप्यजायत ॥५१॥

३०. ¹) Thus corr. by later hand from A₁ °कैः. ३३. ¹) A R G here and elsewhere शवर°. ३६. ¹) A₂ एव. ४८. ¹) Thus corr. by later hand from A₁ °भीष्टं.

अथापश्यत्तथाभूतः कंचिद्दिव्याकृतिं पुरः । न चण्डिकां न तं बभ्रुं न किरातं न तारकम् ॥५२॥
स तं दिव्यस्तदावादीन्मां त्वं तस्ववशीकृतम् । विद्धि मध्यमलोकेन्दो वरुणं करुणानिधे ॥५३॥
यदेतत्त्वामुपास्तेव छत्रं तन्मत्पुरात्पुरा । महाबलोदरङ्क्षीमः पुराणश्वशुरस्तव ॥५४॥
55 रसातलैकतिलकं माहात्म्यवदिदं विना । उपद्रवाः प्राणहराः पौराणां नः पदे पदे ॥५५॥
तदिदं प्राप्तुकामेन स्वबौदार्यं परीक्षितुम् । कारुण्यमत्र मायेयं निरमायि मयेदृशी ॥५६॥
त्वदादिर्यो व्यधाज्जन्मुन्व्यसुन्वसुकुलात्मजः । प्रायश्चित्तममारेण चरसीव तदेनसः ॥५७॥
भयस्पृहाजनकयोर्धरणीधारणोचिते । शेषदेवे विषोद्गारफणारत्नौषधयोरिव ॥५८॥
तमःप्रकाशावहयोस्तेजःक्रान्तदिगन्तरे । उषर्बुधे धूमजालज्वालापल्लवयोरिव ॥५९॥
60 क्षमाप्यायक्रियाभाजो रुद्रतेजस्विमण्डले । प्रावृड्ढ्योदच्छयोर्हि संतापासारयोरिव ॥६०॥
द्वयोरालोकितं चित्रं जन्मैकस्मिन्महाकुले । तस्य त्रिकोटिहन्तुश्च तथाहिंसस्य च प्रभोः ॥६१॥ चक्कलकम् ॥
नम्रः समाकर्ण्यैवं स वदतो यादसां प्रभोः । चकार पूजां स्तोत्रेण छत्रेण च कृताञ्जलिः ॥६२॥
तं च स प्रतिगृह्णन्तं प्रणयात्पुण्यचारणम् । जगाद गुणिनामग्र्यो वरुणं धरणीधरः ॥६३॥
कल्पद्रुमाश्च सन्तश्च नार्हन्ति समशीर्षिकाम् । अर्थिनां प्रार्थिताः पूर्वे फलन्त्यन्ये स्वयं यतः ॥६४॥
65 अवालम्बिष्यत छत्रं कथं नः पुण्यपण्यताम् । तत्प्रार्थयिष्यत न चेदार्तोपकृतये भवान् ॥६५॥
वदान्यः[1] संविभाग्येभ्यः[2] पूर्णं कुर्यादनुग्रहम् । छाययाप्याययन्नर्थांल्फलान्यपि महीरुहः ॥६६॥
तदेतं[1] विहितोदात्तसंविभागाभिचोदितः । जनोयं भगवन्किंचिदपरं प्रार्थयते परम् ॥६७॥
वशीकृतेयं पृथिवी कृत्स्ना भवदनुग्रहात् । जेतुं द्वीपान्कथ्यतां तु युक्तिः पाथोधिलङ्घने ॥६८॥
इत्यर्थ्यमानोकथयद्भूमिपालं जलेश्वरः । तितीर्षा भवति स्तम्भं नीयतेम्भो मयाम्बुधेः ॥६९॥
70 ततो महान्प्रसादोयमित्युक्ते पृथिवीभुजा । तिरोबभूव भगवान्वरुणः सोष्णवारणः ॥७०॥
अन्येद्युर्विस्मयस्मेरैर्बलैः सीमन्तयञ्जलम् । प्रभावस्तम्भितक्षोभं प्रोत्ततार स वारिधिम् ॥७१॥
गुणरत्नाकरः शैलं स रत्नाकरशेखरम् । नानारत्नाकरं सैन्यैरारुरोहाथ रोहणम् ॥७२॥
तत्र तालीतरुवनच्छायाध्यासितसैनिकम् । प्रीत्या लङ्काधिराजस्तमुपतस्थे बिभीषणः ॥७३॥
समागमः स शुशुभे नरराक्षसराजयोः । वन्दिमादावभुतान्योन्यमथमालापसंभ्रमः ॥७४॥
75 अथ रक्षःपतिर्लङ्कां नीत्वालंकरणं क्षितेः । अमर्त्यसुलभाभिस्तं विभूतिभिरुपाचरत् ॥७५॥
यदासीत्पिशिताशा इत्यन्वर्थं नाम रक्षसाम् । तदा तदाज्ञाग्रहणे प्रापि तद्भृत्यशब्दताम् ॥७६॥
रक्षःशिरःप्रतिच्छन्दैः[1] स्थिरप्रणतिसूचकैः । समाचशिखरान्प्रादात्तस्मै रक्षःपतिर्ध्वजान् ॥७७॥
पाराहारिनिभेः प्राप्ताः कश्मीरेष्वद्युनापि ये । राज्ञां यात्रासु निर्यान्ति ख्याताः पारध्वजाः पुरः ॥७८॥
इत्थमाराक्षसकुलं प्राणिहिंसां निषिध्य सः । स्वमण्डलं प्रति कृती न्यवर्तत नराधिपः ॥७९॥

---

५७. 1) The *aksharas* ज्जन्मुन्व्यसुकु and मारेण चरसीव तदेनसः supplied by $A_2$ in spaces left by $A_1$. ५८. 1) भयस्पृहाजन supplied by $A_2$, as above. ६५. 1) त supplied by $A_2$. ६६. 1) Emended; A R G वदन्य:.—2) $A_1$ gloss आर्थिभ्यः.—3) Thus corr. by $A_2$ from $A_1$ छायात. ६७. 1) Thus corr. by $A_2$ from $A_1$ तदर्थं. ६९. 1) Thus $A_1$, $A_2$ आर्त. ७४. 1) स supplied by $A_2$.—2) न्योन्य supplied by $A_2$ in space left by $A_1$. ७७. 1) $A_1$ gloss प्रतिमाभिः.

ततः प्रभृति तस्याज्ञा सार्वभौमस्य भूपतेः । हिंसाविरतिरूपा सा न कैश्चिदुदलङ्घत ॥८०॥ 80

क्षुद्रैर्झषादिभिर्नाप्सु सिंहाद्यैर्गहने न च । न श्येनप्रमुखैर्व्योम्नि तद्राज्ये जन्तवो हताः ॥८१॥

अतिक्रामति कालेथ कोपि शोकाकुलो द्विजः । पुत्रं गदार्तमादाय द्वारि चक्रन्द भूपतेः ॥८२॥

दुर्गया प्रार्थितं राजन्पश्वाहारं विनैव मे । अनन्यसंततेः सूनुर्ज्वरेणाद्य विपद्यते ॥८३॥

यद्यहिंसाग्रहेणेमं क्षितिपाल न रक्षसि । एतद्विपत्तौ तत्कोन्यो निमित्तं प्रतिभाति मे ॥८४॥

निर्णयो वर्णगुरुणा त्वयैवैष प्रदीयताम् । ब्राह्मणस्य पशोर्वा स्यात्प्राणानां कियदन्तरम् ॥८५॥ 85

तपःस्थानपि ये जघ्नुर्ब्राह्मणप्राणलब्धये । क्व यातास्तेधुना भूमे प्रजापालास्तिरोहिताः ॥८६॥

इति ब्रुवति साक्षेपं शोकरूक्षाक्षरं द्विजे । आपन्नार्तिहरो राजा चिरमेवं व्यचिन्तयत् ॥८७॥

न वध्याः प्राणिन इति प्राङ्मया समयः कृतः । विप्रार्थमपि किं कुर्यां स प्रतिज्ञातविप्लवम् ॥८८॥

निमित्तीकृत्य मामद्य विपद्येत द्विजो यदि । तत्राप्यत्यन्तपापीयानर्थः संकल्पविप्लवः ॥८९॥

नैति मे संशयभ्रान्तमेकपक्षावलम्बनम् । संभेदावर्तपतितं प्रसूनमिव मानसम् ॥ ९०॥ 90

तत्स्वदेहोपहारेण दुर्गां तोषयता मया । प्रतिज्ञया समं न्याय्यं रक्षितुं जीवितं द्वयोः ॥९१॥

इति संचिन्त्य सुचिरं देहदानोद्यतो नृपः । श्वः प्रियं तव कर्तास्मीत्युक्त्वा विप्रं व्यसर्जयत् ॥९२॥

क्षपायां क्ष्मापतिमथ स्वमुपाहर्तुमुद्यतम् । निषिध्य दुर्गा व्यधित प्रकृतिस्थं द्विजन्मजम् ॥९३॥

इत्याद्यद्यतनस्यापि चरितं तस्य भूपतेः । पृथग्जनैरसंभाव्यं वर्णयन्तस्त्रपामहे ॥९४॥

अथवा रचनानिर्विशेषमार्गेण वर्त्मना । प्रस्थितां नानुरुन्धन्ति श्रोतृचित्तानुवर्तनम् ॥९५॥ 95

तस्मिन्नस्तंगते भुक्त्वा क्ष्मां चतुस्त्रिंशतं समाः । अनादित्यमिवाशेषं निरालोकमभूज्जगत् ॥९६॥

अथ क्ष्माभृद्ररक्ष क्ष्मां श्रेष्ठसेनस्तदात्मजः । आहुः प्रवरसेनं यं तुञ्जीनं चाञ्जसा जनाः ॥९७॥

दोःस्तम्भसंभृतासक्तौ कृपाणमणिदर्पणे । संक्रान्तेवोन्मुखी यस्य भुवनश्रीर्व्यभाव्यत ॥९८॥

समातृचक्रं निर्माय यः पूर्वं प्रवरेश्वरम् । पुण्याः पुराणाधिष्ठाने प्रतिष्ठा विविधा व्यधात् ॥९९॥

गृहाङ्गनमिव क्षोणीं गणयन्वशवर्तिनीम् । त्रिगर्तोर्वीं ग्राममध्ये प्रवरेशाय यो ददौ ॥१००॥ 100

ईशो नृपाणां निःशेषक्ष्माकेदारकुटुम्बिनाम् । स समास्त्रिंशतं भूभृदनिस्त्रिंशाशयोभवत् ॥१०१॥

हिरण्यतोरमाणाख्यौ व्यधत्तामथ तत्सुतौ । साम्राज्ययुवराजत्वभाजने रञ्जनं क्षितेः ॥१०२॥

बलाहृतानां प्राचुर्ये विनिवार्यासमञ्जसम् । तोरमाणेन दीनाराः स्वाहताः संप्रवर्तिताः ॥१०३॥

मामवज्ञाय राजेव कस्मादेतेन वल्गितम् । इति तं पूर्वजो राजा कोपनो बन्धने व्यधात् ॥१०४॥

चिरंस्थितित्यक्तभुवस्तत्र तस्याञ्जनाभिधा । ऐक्ष्वाकस्यात्मजा राज्ञी वज्रेन्द्रस्यास्त गुर्विणी ॥१०५॥ 105

आसन्नप्रसवा भर्त्रा सा त्रपार्तेन बोधिता । गुप्तं प्रविश्य प्रासोष्ट कुलालनिलये क्वचित् ॥१०६॥

स कुम्भकारगेहिन्या काक्येव पिकशावकः । पुत्रीकृतो राजपुत्रः पर्याप्ते पर्यवर्धत ॥१०७॥

---

८०—८१. ¹)—¹) These two verses have been supplied in margin by A₂. ८३. ¹) A₁ राजन्नुपहारं. ८८. ¹) A₁ प्राग्वोस्मि समकल्पयम्. ९९. ¹) This verse is supplied by A₂ in margin.—²) A₁ gloss अगाः. १००. ¹) Thus A₂; A₁ °सकलै. १०३. ¹) Thus A; G R Edd. प्राज्य°.—²) A₁ gloss सुवर्णमया रजतताम्रमयाश्च.—³) A₁ gloss स्वाहताः स्वनामाक्षरमुद्राङ्कणेन आहताः संप्रवर्तिताः व्यवहारविषयाः कृताः. १०४. ¹) A₁ gloss तोरमाणेन. १०६. ¹) A₁ gloss त्रपार्तेन सलज्जेन.

जनयित्र्याः कुलाल्याथ रक्षिष्यता विवितोभवत् । रत्नसूतेर्भुजंग्याथ प्रच्छन्न इव शेवधिः ॥१०८॥
पौत्रः प्रवरसेनस्य गिरा मातुर्नृपात्मजः । पैतामहेन नाम्नैव कुलाल्या ख्यापितोभवत् ॥१०९॥
110 वर्धमानः स संपर्कं न सेहे सहवासिनाम् । तेजस्विमैत्रीरसिकः शिशुः पद्म इवाम्भसाम् ॥११०॥
तं कुलीनैश्च शूरैश्च विद्याविद्भिश्च दारकैः । अन्वीतमेव ददृशुः क्रीडन्तं विस्मयाज्जनाः ॥१११॥
स्ववृन्दस्याप्युदारौजा राजा चक्रे स दारकैः । मृगेन्द्रशावः क्रीडद्भिर्वने बालमृगैरिव ॥११२॥
संविभेजेनुजग्राह वशीचक्रे च सोर्भकान् । अराजोचितमाचारं नैव कंचिदसेवत ॥११३॥
भाण्डादि कर्तुं मृत्पिण्डं कुम्भकारैः समर्पितम् । स्वीकृत्य चक्रिरे तेन शिवलिङ्गपरंपराः ॥११४॥
115 तथा साश्चर्यचर्यः स क्रीडञ्जातु व्यलोक्यत । मातुलेन जयेन्द्रेण सादरं चाभ्यनन्द्यत ॥११५॥
आवेद्यमानं शिशुभिस्तं जयेन्द्रोयमित्यसौ । भूपालवत्सावहेलं पश्यन्नन्वमहीदिव ॥११६॥
संभाव्य सत्त्वावष्टम्भात्तमसामान्यवंशजम् । सादृश्याद्भगिनीभर्तुर्भागिनेयमशङ्कत ॥११७॥
सत्वरस्तत्त्वजिज्ञासारसेनानुससार तम् । प्राप्तस्तद्गृहमौत्सुक्यात्स्वसारं च व्यलोकयत् ॥११८॥
सा स चान्योन्यमुन्मन्यू पश्यन्तौ भ्रातरौ चिरात् । निःश्वासद्विगुणोष्माणि मुहुरश्रूण्यमुञ्चताम् ॥११९॥
120 कुलाल्या दारको मातः कावेताविति पृष्टवान् । अकथ्यतेयं वत्सैषा मातायं मातुलश्च ते ॥१२०॥
पितुर्बन्धेन सक्रोधं तं कालापेक्षयाक्षमम् । शिक्षयित्वा जयेन्द्रोथ कार्यशेषाय निर्ययौ ॥१२१॥
वस्त्रिश्लोत्पादनासज्जे तस्मिन्प्राप्ता यदृच्छया । बन्धात्त्यक्तो नृतरणिस्तोरमाणोस्तमाययौ ॥१२२॥
निवार्य मरणोद्योगं मातुर्निर्वेदखेदितः । ययौ प्रवरसेनोथ तीर्थौत्सुक्याद्दिगन्तरम् ॥१२३॥
रक्षित्वा दशमासोनाः क्ष्मामेकत्रिंशतिं समाः । तस्मिन्क्षणे हिरण्योपि शान्तिं निःसंततिर्ययौ ॥१२४॥
125 तत्रानेहस्युज्जयिन्यां श्रीमान्हर्षापराभिधः । एकच्छत्रश्चक्रवर्ती विक्रमादित्य इत्यभूत् ॥१२५॥
भूपमद्भुतसौभाग्यं श्रीर्बद्धरभसाभजत् । विहाय हरिवाहूंश्च चतुरः सागरांश्च यम् ॥१२६॥
लक्ष्मीं कृत्वोपकरणं गुणे येन प्रवर्धिते । श्रीमत्सु गुणिनोद्यापि तिष्ठन्त्युद्धुरकन्धराः ॥१२७॥
म्लेच्छोच्छेदाय वसुधां हरेरवतरिष्यतः । शकान्विनाश्य येनादौ कार्यभारो लघूकृतः ॥१२८॥
नानादिगन्तराख्यातं गुणज्ञसुलभं नृपम् । तं कविर्मातृगुप्ताख्यः सर्वास्थानस्थमासदत् ॥१२९॥
130 स गम्भीरस्य भूभर्तुरनुभावं महाद्भुतम् । त्रिविधास्थानसंवृद्धस्तस्याभ्यूह्य व्यचिन्तयत् ॥१३०॥
सोयमासादितः पुण्यैः क्षोणिपालो गुणिप्रियः । परभागोपलब्ध्याथ पूर्वेमुष्य महीभुजः ॥१३१॥
यस्मिन्नाजनि तत्त्वज्ञैः सूरिभिः संभृतश्रुतैः । नाञ्जलिर्दीयते जातु मानाय च गुणाय च ॥१३२॥
भङ्ग्यामुष्मिन्विदधती स्वाभिप्रायप्रकाशनम् । वैदग्ध्यवन्ध्यतां नैति बुद्धिः कुलवधूरिव ॥१३३॥
खिलीकृतखलालापे युक्तायुक्तविवेककारि । नायाति सेव्यमानेस्मिन्स्वगुणोनर्थकारिताम् ॥१३४॥
135 अनाप्नुवद्भिः सावज्ञदुर्विदग्धसमर्थीर्षिकाम् । जीवन्मरणमस्याग्रे गुणिभिर्नानुभूयते ॥१३५॥

१०८. ¹) $A_3$ gloss भूमेः ११२ ¹) $A_3$ gloss अतिशयेन उदारं ओजः यस्य. ११३. ¹) Thus corr. by later hand from A किंचिद°. ११६. ¹) $A_1$ gloss प्रवरसेनः. १२२. ¹) Thus $A_1$; $A_1$ has given a *varia lectio* in margin of which only वस्त्रिश्लो-हास- is legible (उच्छ्रिश्लोल्हासनासज्जे ?) $A_3$ वस्त्रिश्लोत्पादने सज्जे, with gloss कुम्भकुम्भस्य कोलाहले सज्जे सति. १२७. ¹) G Edd. गुणो येन प्रवर्धते. १२८. ¹) $A_3$ gloss कार्किनाशः १२९. ¹) G *sec. manu* and Edd. सर्वास्था°. १३२. ¹) $A_3$ अविकल°.

संभावनानुसारेण प्रवृत्तोस्माद्विवेकिनः । शोच्यते नाभिलोषास्ते प्रीतिदायो महाशयैः ॥१३६॥
गृह्णन्यथागुणं स्वान्तमुचितप्रतिपत्तिभिः । अन्तरज्ञः समस्तानामयमुत्साहवर्धनः ॥१३७॥
सेवया दृष्टकष्टस्य दाक्षिण्योत्पादने श्रमः । अस्य यो न स भृत्यानां हिमाद्रौ हिमविक्रयः ॥१३८॥
मिथ्याख्यातगुणो नाप्तो नामास्य कलहप्रियः । असत्यसंधः स्थेयो वा नास्थानेस्य महीपतेः ॥१३९॥
अश्लीलालापिनोन्योन्यं नर्मोक्त्या मर्मभेदिनः । अन्यप्रवेशासहनाः संहता नास्य सेवकाः ॥१४०॥ 140
छन्दानुवर्तिनामेव निजविज्ञानवञ्चिनाम् । सर्वज्ञंमन्यतान्धानां मुखप्रेक्षी न पार्थिवः ॥१४१॥
अनेन सह संजातः संलापो विपुलोदयः । लभ्यते नान्तराच्छेत्तुं दुर्जातैर्जातु दुर्जनैः ॥१४२॥
सर्वदोषोज्झितं सेव्यं नृपमेवमिमं मम । समासादयतः पुण्यैरदूरे स्वार्थसिद्धयः ॥१४३॥
गम्भीरश्च गुणज्ञश्च स्थिरबुद्धिश्च पार्थिवः । एष क्लेशमपि त्यक्त्वा निषेव्यः प्रतिभाति मे ॥१४४॥
न चास्माद्धनमादाय रञ्जितादन्यराजवत् । आत्मनो [illegible]मुष्मिन्सेव्योन्यः प्रतिभाति मे ॥१४५॥ 145
इति संचिन्त्य सुदृढं स नवामिव तां सभाम् । नार[illegible]ास्ते स्म गुणिगोष्ठीषु मध्यगः ॥१४६॥
मृदुपूर्वं गुणानेवं दर्शयन्तं विशांपतिः । विशिष्टयोग्यताज्ञाने विवेदाराधनोन्मुखम् ॥१४७॥
अचिन्तयच्च नायं स्याद्गुणिमात्रं महाशयः । वरार्हं सत्क्रियार्हत्वं वदत्यस्य गभीरता ॥१४८॥
इति संचिन्त्य राज्ञापि ज्ञातुं तस्यान्तरं मतेः । नाक्रियन्त परीक्षार्थं यथावसरसत्क्रियाः ॥१४९॥
स तेनानुपचारेण तमुदात्ताशयं नृपम् । स्वीकर्तारं विदन्धीमान्सिषेवे प्रीतिमाश्रितः ॥१५०॥ 150
क्रमोपचीयमानेन सेवाभ्यासेन धीमतः । तस्य नोद्वेगमगमत्स्वकाय इव पार्थिवः ॥१५१॥
नातीव स्वल्पया स्थित्या नातीवाप्यथ दीर्घया । शरद्विशालगेनेव राज्ञो निन्ये प्रसन्नताम् ॥१५२॥
नर्मभिर्गर्भचेटानां द्वाःस्थानां विक्रियाक्रमैः । मिथ्यास्तवैर्विटानां च न स क्षोभमनीयत ॥१५३॥
प्रसन्नालापसंप्राप्तौ छायापद इवाचलः । प्रतिस्पर्धीव च क्रुध्यदावज्ञायामभूत्प्रभोः ॥१५४॥
वीक्षणं राजदासीनां राजद्विष्टैः सहासनम् । राजाग्रे च कथां नीचैः कालविन्नाचचार सः ॥१५५॥ 155
स्वभावाद्राजपुरुषैः सजनै राजनिन्दकैः । नास्मात्संभोगपालम्भो लेभे पैशुन्यजीविभिः ॥१५६॥
वदद्भिरादरास्थैर्यं वैफल्याद्यप्यहं प्रभोः । निन्ये नोत्साहशैथिल्यं सेवोत्साहासहिष्णुभिः ॥१५७॥
अन्योत्कर्षामपि वदन्यक्क्रमेण निरामयः । स्वविद्याद्योतकः सोभूत्सभ्यानां हृदयंगमः ॥१५८॥
एवं स सेवमानस्तमुद्योगेन बलीयसा । आनिर्विण्णो मातृगुप्तः षडृतूनत्यवाहयत् ॥१५९॥
अथ तं कृशसर्वाङ्गं धूसरं जीर्णवाससम् । बहिर्जातु विनिर्यातो राजा वीक्ष्य व्यचिन्तयत् ॥१६०॥ 160
वैदेशिको निःशरणो गुणवान्बान्धवोज्झितः । हार्दं [illegible] कष्टं सोयमायासितो मया ॥१६१॥
कोस्याश्रयः किमशनं कानि प्रावरणानि वा । इत्यैश्वर्यविमूढेन मया हन्त न चिन्तितम् ॥१६२॥
वसन्तेनेव न मया शोभच्छायापि योजितः । शीतवातातपैः शुष्यन्नयं पुरुषपादपः ॥१६३॥

---

१३६. ¹) संभावनानुसा supplied by A₂ in space left by A₁. १३७. ¹) A₂ gloss प्रतिपत्तिः सत्कारः सत्क्रिया पूजनं माननमिति यावत्. १४५. ¹) Thus corr. by A₂ from A₁ आम्नती. १४६. ¹) Thus corr. by A₂ from A₁ नारक्षत°. १५२. ¹) A₂ gloss राजा चन्द्रोपि.—²) A₂ gloss चन्द्रमुखेन. १५५. ¹) A₂ gloss राजशत्रुभिः. १५६. ¹) A₂ gloss मातृगुप्तात्. १५९. ¹) Thus corr. by A₂ from A₁ अनिर्विण्णो.

अस्य ग्लानस्य भैषज्यं निर्विण्णस्य विनोदनम् । श्रान्तस्य वा श्रमच्छेदं को विदध्यादसंपदः ॥१६४॥

165 नास्मै चिन्तामणिं दध्यां नामृतं वा निषेचितः । मया वदयमेतावद्व्यामूढेन परीक्ष्यते ॥१६५॥

तदमुष्य गुणित्वस्य तीव्रसेवाश्रमस्य च । प्रतिपत्त्या कतमया तावदानृण्यमाप्नुयाम् ॥१६६॥

इति चिन्तयतस्तस्य राज्ञस्तं सेवकं प्रति । स्वप्रसादोचिता काचित्सत्यभावैव सत्क्रिया ॥१६७॥

ततः प्रावर्तत स्फारनीहारलब्धाहिभिः । दहद्भिरङ्गं प्रालेयपवमानैर्हिमागमः ॥१६८॥

संततध्वान्तमिषतस्तीव्रशीतवशीकृताः । आशाश्चकाशिरे नीलनिचोलाच्छादिता इव ॥१६९॥

170 शीतार्त्या द्युमणावौर्वदहनोष्माभिलाषतः । द्रुतं यातीव जलधिं दिनानि लघुतां ययुः ॥१७०॥

अथ दीपोज्ज्वले धाम्नि लसद्दीप्रहसन्तिके । कदाचिन्नृपतिर्दैवादर्धरात्रे व्यबुध्यत ॥१७१॥

स हेमन्तानिलैर्भूरिझांकारपरुषैः पुरः । दीपान्प्रकम्पितानीषत्प्रविष्टैर्धाम्नि दृष्टवान् ॥१७२॥

तानुज्ज्वलयितुं भृत्यानन्विष्यन्नभ्यधात्ततः । [illegible]केषु बहिः सज्जः को वर्तत इति स्फुटम् ॥१७३॥

सुखसुप्तेषु सर्वेषु बाह्यकक्ष्यान्तरात्ततः । राज[illegible]महं मातृगुप्त इत्यशृणोद्वचः ॥१७४॥

175 प्रविशेति स्वयं राज्ञा दत्तानुज्ञस्ततो गृहम् । लक्ष्मीसांनिध्यरम्यं तदपृष्टोऽन्यैर्विवेश सः ॥१७५॥

दीपानुज्ज्वलयेत्युक्तो निष्पाद्य चतुरैः पदैः । बहिर्यियासुरूचेयं क्षणं तिष्ठेति भूभुजा ॥१७६॥

स भयद्विगुणीभूतशीतकम्पः प्रभोः पुरः । किं स्विद्वक्ष्यतीति विमृशन्नातिदूरेऽभ्युपाविशत् ॥१७७॥

अथ पप्रच्छ भूपालः कियत्यस्ति निशेति तम् । सोऽभ्यधाद्देव यामिन्या यामः सार्धोऽवशिष्यते ॥१७८॥

ततो भूभृद्बभाषैनं कथं सम्यङ्निशाक्षणः । त्वयावधारितो निद्रा कथं नाभूच्च ते निशि ॥१७९॥

180 अथ कृत्वा क्षणाच्छ्लोकमेतं तं स व्यजिज्ञपत् । अवस्थावेदनादाशां दैन्यं वा त्यक्तुमुद्यतः ॥१८०॥

शीतेनोद्धूषितस्य माषशिमिवच्चिन्तार्णवे मज्जतः शान्ताग्निं स्फुटिताधरस्य धमतः क्षुत्क्षामकण्ठस्य मे ।
निद्रा क्वाप्यवमानितेव दयिता संत्यज्य दूरं गता सत्पात्रप्रतिपादितेव वसुधा न क्षीयते शर्वरी ॥१८१॥

तदाकर्ण्य महीपालः साधुवादैः परिश्रमम् । अभिनन्द्य कवीन्द्रं तं पूर्वस्थानं व्यसर्जयत् ॥१८२॥

अचिन्तयच्च धिङ्मां यः सगुणाखिन्नचेतसः । दुःखोत्तप्तं वचः शृण्वन्नेवमेवाधुना स्थितः ॥१८३॥

निरर्थकान्साधुवादानन्यस्येव विदन्मम । अयमज्ञातहृदयो दुःखमास्ते ध्रुवं बहिः ॥१८४॥

185 चिरं चिन्तयतो यत्नात्सदृशीमस्य सत्क्रियाम् । देयं महार्हमद्यापि न किंचित्प्रतिभाति मे ॥१८५॥

अथ वास्यैव सूक्तेन स्मारितोऽस्म्यधुना यथा । वर्तते राजरहितं काम्यं कश्मीरमण्डलम् ॥१८६॥

पात्रायास्मै मही तस्मात्सा मया प्रतिपाद्यते । अवधीर्य महीपालान्महतोऽप्यर्थनापरान् ॥१८७॥

इति निश्चित्य चतुरं क्षपायामेव पार्थिवः । गूढं व्यसर्जयद्दूतान्काश्मीरीः प्रकृतीः प्रति ॥१८८॥

आदिदेश च तान्यो वो दर्शयेच्छासनं मम । मातृगुप्ताभिधो राज्ये निःशङ्कं सोऽभिषिच्यताम् ॥१८९॥

190 अथ दूतेषु यातेषु लेखयित्वा स्वशासनम् । क्ष्मापतिस्तं क्षपाशेषं कृतकृत्योऽत्यवाहयत् ॥१९०॥

---

१६५. [1]) A₂ gloss अनेन इत्यर्थः. १६६. [1]) A₂ gloss सत्क्रियया. १६७. [1]) A₂ gloss चित्तविषयं न गता इत्यर्थः. १७१. [1]) A₂ gloss हसान्तिका मन्दाग्निका. १७४. [1]) A₂ gloss रात्रिजागरेषु पुरुषेषु. १७५. [1]) A₂ तददृष्टो. १७६. [1]) Thus corr. by A₂ from A₁ °रूचे च. १८०. [1]) A₂ gloss अवस्थायाः आवेदनं तस्मात्. १८३. [1]) A₂ gloss [illegible]. १८८. [1]) A₂ gloss सचिवान् प्रति.

मातृगुप्तस्तु नृपतेः संलापमपि निष्फलम् । आयत्नगृहीतनैराश्यस्तस्थकमार इवाभवत् ॥१९१॥
अन्तर्दध्यौ च कर्तव्यं कृतं प्राप्तोऽद्य संशयः । आशापिशाचिकात्यक्तधारिष्याम्यधुना सुखम् ॥१९२॥
गतानुगतिकत्वेन कोऽयमासीन्मम भ्रमः । जनप्रवादाद्दातृत्वं येनास्य ज्ञातवानहम् ॥१९३॥
भुञ्जानाः पवनं सरीसृपगणाः प्रक्वापिता भोगिनो गायद्भृङ्गनिवारका निगडिता विस्तीर्णकर्णा गजाः ।
बधाभ्यन्तरसंभृतोष्मविकृतिः प्रोक्तः शमी स द्रुमो लोकेनेति निरर्गलं प्रलपता सर्वं विपर्यासितम् ॥१९४॥
अथ वा विद्यतेऽमुष्य न काप्यनभिगम्यता । लक्ष्मीप्रणयिनो येन कृताः प्रणयिनां गृहाः ॥१९५॥ 195
त्यागिनो निष्कलङ्कस्य को दोषोऽस्य महीपतेः । ममापुण्यं तु तद्विन्द्यां यच्छ्रेयःप्रतिबन्धकम् ॥१९६॥
रत्नोज्ज्वलाः प्रविकिरल्लहरीः समीरैरब्धिः क्षिपेत यदि रत्नतटाभिमुख्यः ।
दोषोऽर्थिनः स खलु भाग्यविपर्ययाणां[1] दातुर्मनागपि न तस्य तु दातृतायाः ॥१९७॥
उत्तानफललुब्धानां वरं राजोपजीविनः । न तु तत्स्वामिनस्तीव्रपरिक्लेशैः फलन्ति ये ॥१९८॥
तिष्ठन्ति ये पशुपतेः किल पादमूले संप्राप्यते झटिति तैर्महि भस्मनोऽन्यत् ।
ये तन्नृपस्य तु समुज्ज्वलमानकल्पमाल्या न कानि सुदिनानि सदैव तेषाम् ॥१९९॥
चिन्तयन्नपि पश्यामि न कंचिद्दोषमात्मनः । यातो विरक्तिं यं ज्ञात्वा सेव्यमानोऽप्ययं नृपः ॥२००॥ 200
अथ वा नादृतोऽन्येन संप्राप्तोऽन्तिकमाप्नुयात् । कः फलेनाभिसंबन्धं गतानुगतिकात्प्रभोः ॥२०१॥
अन्तर्ये सततं लुठन्त्यगणितास्तानेव पाथोधरैरात्तानापततस्तरङ्गवलयैरालिङ्ग्य गृह्णन्नसौ ।
स्वच्छं[1] मौक्तिकरत्नतां जलकणान्संप्रापयत्यम्बुधिः प्रायोऽन्येन कृतादरो लघुरपि प्राप्तोऽर्च्यते[2] स्वामिभिः ॥२०२॥
इदं संचिन्तयन्सोऽभूत्सेव्ये तस्मिन्निरादरः । खिन्नस्य हि विपर्येति तत्त्वज्ञस्यापि शेमुषी ॥२०३॥
प्रभातायां विभावर्यामथास्थानस्थितो नृपः । आकार्यतां मातृगुप्त इति क्षत्तारमादिशत् ॥२०४॥
ततः प्रधावितानेकप्रतीहारप्रवेशितः । प्रविवेश महीभर्तुस्त्यक्ताश इवान्तिकम् ॥२०५॥ 205
तस्मै कृतप्रणामाय मुहूर्तादेव पार्थिवः । भूसंज्ञितेन व्यतरल्लेखं लेखाधिकारिणा ॥२०६॥
स्वयं च तमुवाचाङ्ग कश्मीरान्वेत्सि किं भवान् । गत्वा तत्राधिकारिभ्य एतच्छासनमर्प्यताम् ॥२०७॥
स शापितोऽस्मदेवेन यो लेखं वाचयेत्पथि । संविदेषा प्रयत्नेन विस्मर्तव्या न जातु चित् ॥२०८॥
अविज्ञाताशयो राज्ञस्तामाज्ञां क्लेशशङ्कितः । सोऽबुद्ध दहनज्वालां न तु रत्नाङ्कुरद्युतिम् ॥२०९॥
यथादेशस्तथेत्युक्त्वा मातृगुप्ते विनिर्गते । निर्गर्वः पूर्ववद्राजा तस्थावाप्तैः सहालपन् ॥२१०॥ 210
अथाक्लेशोचितं[1] क्षाममपाथेयमबान्धवम् । दृष्ट्वा यान्तं मातृगुप्तं निनिन्देति नृपं जनः ॥२११॥
अहो नरेश्वरस्येयं यत्किंचनविधायिता । कृपणजनोचिते कर्मण्यर्हतो निदधाति यः ॥२१२॥
दुराशया धृतक्लेशं सेवमानमहर्निशम् । ध्रुवं क्लेशार्हमेवैनं ज्ञातवानबुधो नृपः ॥२१३॥
यथार्थं यं[1] पुरस्कृत्य सेवते सेवकः प्रभुम् । अनन्तरज्ञस्तेनैव योग्यं तं किल मन्यते ॥२१४॥

१९७ [1]) $A_2$ °पर्ययेण. १९८. [1]) $A_1$ glosses राजोपजीविनः सुखा°, तत्स्वामिनः तेषां स्वामिनः कर्तारः न वरं. २०२. [1]) Thus corr. by later hand from $A_1$ सुरभि च°. — [2]) Thus $A_2$; $A_1$ °र्ध्यते. २०४. [1]) $A_1$ gloss द्वास्थं. २०८ [1]) $A_2$ gloss शिरसा. २११. [1]) Thus corr. by later hand from $A_1$ अथ क्ले°. २१२. [1]) $A_2$ gloss कृपणाद. २१४. [1]) Doubtful emendation; on account of an ink blot only the following is legible in the handwriting of $A_1$: यथार्थ—— स्कृत्य. $A_4$ reads यथार्थनं पुरस्कृत्य; this reading is found also in R. G and Edd. read यथार्थं तं.

सुखार्थी नागारिप्रतिभयशमाशंसुत सुखं जहौ शेषस्तल्पीकृततनु निवेश्यासुररिपुम् ।

215 यतस्तेनामुष्मिन्नधिगतपदा क्लेशसहतां भ्रमादापि न्यस्तं निरवधि धराभारवहनम् ॥२१५॥

अथमेतद्गृहीतेषु गुणवत्सु गुणाधिकम् । आत्मानं गुणवान्पश्यन्नास्थयैनमशिश्रियत् ॥२१६॥

अनन्तरज्ञः कोन्योस्माद्गुणान्दर्शयतेधिकान् । अस्मै गुणवते पूजां यश्चकार किलेदृशीम् ॥२१७॥

यो नानाद्युतिमत्पदार्थरसिकोसारेपि शक्रायुधे सप्रेमा स विलोक्य बर्हमिह मे किं किं न कुर्यात्प्रियम् ।

इत्याविष्कृतबर्हराजि नटते यो बर्हिणोम्भोलवानान्यन्मुञ्चति तं विहाय जलदं कोन्योस्ति शून्याशयः ॥२१८॥

गच्छतो मातृगुप्तस्य निर्दैन्यस्यैव वर्त्मसु । नाभूद्राज्यर्यमाहात्म्याद्विकल्पः कोपि चेतसि ॥२१९॥

220 अहंपूर्विकयोद्यद्भिर्निमित्तैः शुभशंसिभिः । स वितीर्णकरालम्ब इव न भ्रममाददे ॥२२०॥

अपश्यत्स फणाकोटौ खञ्जरीटमहेः पथि । स्वप्ने प्रासादमारुह्य स्वं चोल्लङ्घितसागरम् ॥२२१॥

अचिन्तयच्च शास्त्रज्ञो निमित्तैः शुभशंसिभिः । एतैर्भूभर्तुरादेशो ध्रुवं मे स्याच्छुभावहः ॥२२२॥

फलं मम तनीयोपि कश्मीरेषु भवेद्यदि । अनर्घदेशमाहात्म्यात्किं किं नातिशयेत तत् ॥२२३॥

अकृच्छ्रलङ्घ्याः पन्थानो वल्लभातिथयो गृहाः । उपानमन्गच्छतोस्य सत्क्रियाश्च पदे पदे ॥२२४॥

225 इत्थं विलङ्घिताध्वा स लोलानोकहशाद्वलम् । मङ्गल्यदधिपात्राभं ददर्शाग्रे हिमाचलम् ॥२२५॥

सरलस्यन्दसुभगा गङ्गाशीकरवाहिनः । प्रत्युद्ययुस्तं मरुतः पाल्यायाः संस्तुता भुवः ॥२२६॥

क्रमवर्ताभिधाने स प्रदेशे प्राप्तवांस्ततः । ठक्कं काम्बुवनामानं योत्र शूरपुरे स्थितः ॥२२७॥

नानाजनपदाकीर्णे स्थाने तत्राश्च शुश्रुवान् । काश्मीरिकान्महामात्यान्स्थितान्केनापि हेतुना ॥२२८॥

मलोपनीतप्राग्वेषः प्रावृतो धवलांशुकैः । स जगामान्तिकं तेषां दातुं नृपतिशासनम् ॥२२९॥

230 तं प्रयान्तं समुद्यद्भिः शकुनैः सूचितोदयम् । पान्थाः केप्यन्वयुर्द्रष्टुं निमित्तानां फलोद्गमम् ॥२३०॥

श्रुत्वाथ विक्रमादित्यदूतः प्राप्त इति द्रुतम् । द्वाःस्थाः काश्मीरमन्त्रिभ्यस्तमासन्नं न्यवेदयन् ॥२३१॥

आगच्छत प्रविशतेत्युच्यमानोथ सर्वतः । स तान्समस्तसामन्तानाससादानिवारितः ॥२३२॥

यथाप्रधानं सचिवैर्विहितोचितसत्क्रियः । ततः परार्ध्यमध्यास्त तन्निदर्शितमासनम् ॥२३३॥

कृतार्हणैरथामात्यैराज्ञां पृष्टो महीभुजः । शनैस्तच्छासनं तेभ्यो लज्जमान इवार्पयत् ॥२३४॥

235 तेभिवन्द्य प्रभोर्लेखमुपांशु मिलितास्ततः । उन्मुच्य वाचयित्वैतमवोचन्विनयान्विताः ॥२३५॥

मातृगुप्त इति श्लाघ्यं भवतामेव नाम किम् । एवमेवैतदित्यूचे सोपि तान्विहितस्मितः ॥२३६॥

कः कोत्र संनिधातॄणामित्यभूयत वाक्ततः । राज्याभिषेकसंभारो दृश्यते स्म च संभृतः ॥२३७॥

ततः कलकलोत्तालभूरिलोकसमाकुलः । प्रदेशः क्षणमात्रेण सोभूत्क्षुभ्यन्निवार्णवः ॥२३८॥

अथ प्राङ्मुखसौवर्णभद्रपीठप्रतिष्ठितः । संनिपत्य प्रकृतिभिर्मातृगुप्तोभ्यषिच्यत ॥२३९॥

240 तस्य विन्ध्यतटव्यूढवक्षसः परिनिर्लुठत् । सशब्दमभिषेकाम्बु रेवास्रोत इवाबभौ ॥२४०॥

अथ स्नातानुलिप्ताङ्गं सर्वाङ्गामुक्तभूषणम् । व्याजिज्ञपंस्तं राजानं क्रान्तराजासनं प्रजाः ॥२४१॥

---

२१७. ¹) $A_2$ gloss मूर्खपुरुषः. २१८. ¹) $A_2$ विलोक्य जलदमित्यन्वयतर्कः. २२५. ¹) Thus $A_1$; corr. by $A_3$ into °नीकह°, as also in G R. २२६. ¹) $A_1$ gloss पाल्याया इति प्रभूभवितव्यता तैर्वैवर्त्यर्थः. २३५. ¹) $A_1$ gloss परैर्न श्रूयते यथा उपांशु परिकीर्तितम् $A_3$ adds मन्त्रकरणे. २४०. ¹) Thus $A_3$; $A_1$ °स्रोत, corr. by later hand into °स्रव.

अर्थितेन स्वयं शास्तुं विक्रमादित्यभूभुजा । निर्दिष्टः स्वसमानस्त्वं शाधि नः पृथिवीमिमाम् ॥२४२॥
मण्डलानि विलभ्यन्ते येनामेन प्रतिक्षणम् । मा मंस्था मण्डलं राजन्विलब्धं तदिदं परैः ॥२४३॥
कर्मभिः स्वैरवाप्तस्य जन्मनः पितरौ यथा । राज्ञां तथान्ये राज्यस्य प्रवृत्तावेव कारणम् ॥२४४॥
इत्थं स्थितेपरं कंचित्त्वदीयोस्मीति शंसता । न नेया भवता राजन्व्यर्थमात्मा च लाघवम् ॥२४५॥ 245
इति तैस्तथ्यमुक्तोपि संस्मरन्स्वामिसत्क्रियाम् । मातृगुप्तो महीपालः क्षणमासीत्कृतस्मितः ॥२४६॥
दानेन सुदिनं कुर्वन्नवराज्यार्जितेन सः । तथैव मङ्गलोदर्कं तदहो निरवर्तयत् ॥२४७॥
पुरप्रवेशायाभ्येत्य प्रार्थ्यमानोथ मन्त्रिभिः । अद्भुतप्राभृतं दूतं राज्यदातुर्व्यसर्जयत् ॥२४८॥
वैदग्ध्यस्यानुसारेण स्पर्धामिव च तां विदन् । स्वामिनो मनसि प्रीतः सागसं स्वममन्यत ॥२४९॥
अथाहूयापरान्भृत्यान्वक्तुं सेवास्मृतिं प्रभोः । अल्पार्घाण्यपि सात्म्यानि प्राहिणोत्प्राभृतानि सः ॥२५०॥ 250
असामान्यान्गुणांस्तस्य स्मरन्पर्याकुलोन्मनः । स्वयं लिखित्वा श्लोकं च स्वकमेकं व्यसर्जयत् ॥२५१॥
आकारमुद्वहसि नैव विकत्थसे त्वं दित्सां न सूचयसि मुञ्चसि सत्फलानि ।
निःशब्दवर्षणमिवाम्बुधरस्य राजन्संलक्ष्यते फलत एव तव प्रसादः ॥२५२॥
ततः प्रविश्य नगरं सैन्यैः पिहितदिक्तटैः । क्रमागतामिव महीं यथावत्पर्यपालयत् ॥२५३॥
त्यागे वा पौरुषे वापि तस्यौचित्योन्नतात्मनः । क्ष्माभुजस्तर्कुकस्येव नाभूत्परिमितेच्छता ॥२५४॥
कर्तुं यज्ञान्धृतोद्योगस्त्यागी विततदक्षिणान् । पशुबन्धमनुध्याय करुणाकूणितोभवत् ॥२५५॥ 255
अमारमादिदेशाथ यावद्राज्यं स्वमण्डले । चूर्णीकृत्य सुवर्णादि प्रददौ च करम्भकम् ॥२५६॥
करम्भके कीर्यमाणे मातृगुप्तेन भूभुजा । वैतृष्ण्यमुन्मिषल्लोभो न को नाम न्यषेवत ॥२५७॥
गुणी च दृष्टकष्टश्च वदान्यश्च स पार्थिवः । विक्रमादित्यतोप्यासीदभिगम्यः शुभार्थिनाम् ॥२५८॥
विशेषज्ञतया तस्य श्लाघ्यया सुरभीकृताः । लक्ष्मीविलासाः क्ष्माभर्तुरशोभन्त मनीषिषु ॥२५९॥
हयग्रीववधं मेण्ठस्तदग्रे दर्शयन्नवम् । आसमाप्ति ततो नापत्साध्वसाध्विति वा वचः ॥२६०॥ 260
अथ ग्रथयितुं तस्मिन्पुस्तकं प्रस्तुते न्यधात् । लावण्यनिर्याणभिया तदधः स्वर्णभाजनम् ॥२६१॥
अन्तर्ज्ञतया तस्य तादृश्या कृतसत्कृतिः । भर्तृमेण्ठः कविर्मेने पुनरुक्तं श्रियोर्पणम् ॥२६२॥
स मातृगुप्तस्वाम्याख्यं निर्ममे मधुसूदनम् । कालेनाहत यद्ग्रामान्मम्मः स्वश्वशुरसद्मने ॥२६३॥
इत्यासादितराज्यस्य शासतः क्ष्मां क्षमापतेः । त्रिमासोना ययुस्तस्य सैकाहाः पञ्च वत्सराः ॥२६४॥
कृतार्थतां तीर्थतोयैराञ्जनेयोनयत्पितॄन् । जातं तादृशमश्रौषीत्स्वस्मिन्देशे पराक्रमम् ॥२६५॥ 265
पितृशोकार्द्रता तस्य क्रोधेनान्तरधीयत । तरोरिवार्कतापेन नैशाम्बुलवसिक्तता ॥२६६॥
श्रीपर्वते पाशुपतव्रतिवेषस्तदागतम् । अश्वपादाख्यः सिद्धः कन्दाशनं ददत् ॥२६७॥

२४३. ¹) ²) $A_1$ indicates the *vv. ll.* विलीयन्ते and विलग्नं. २४५. ¹) Thus $A_2$; $A_1$ राजा. २४६. ¹) Thus corr. by later hand from $A_1$ °गुप्त°; G R as above. २४७. ¹) $A_2$ gloss अस्मदादवसरे. २५०. ¹) Thus $A_1$; $A_2$ स्वारस्यानि, also G R: Edd. साध्यानि. २५२. ¹) तव supplied by $A_2$. २५७. ¹) Thus corr. by later hand from $A_1$ °मिरलौल°.—²) $A_2$ gloss आचचक्षेव. २५५. ¹) Thus A; G R °कूणितो; Edd. °कुञ्चितो. २५८. ¹) Emended: A R G वदन्यश्च. २६०. ¹) $A_2$ gloss काव्यं. २६१. ¹) $A_2$ राजाग्रे. २६३. ¹) $A_1$ gloss स्वश्वशुराय. २६५. ¹) $A_2$ gloss प्रवरसेन.—²) $A_2$ पराभवम्. २६७. ¹) $A_2$ gloss प्रवरसेनं.

जन्मान्तरे लब्धसिद्धिस्त्वामस्त्युपरि साधकम् । याच्ञामपृच्छ राज्यार्थमभिलाषस्तु तमगात् ॥२६८॥
सयत्नं तव कर्तुं तन्मनोरथमनन्यथा । अथ मामित्थमादिक्षत्स्वपरमगणेश्वरः ॥२६९॥
270 गणोऽयं मामकः सिद्धो यस्तवोपरि साधकः । जन्मान्तरेऽस्य राज्येच्छां कुर्यामहमनन्यथा ॥२७०॥
आर्य भवस्तद्व्रतो भगवान्दत्तदर्शनः । साफल्यं नेष्यतीत्येवमभिधाय तिरोदधे ॥२७१॥
साम्राज्येच्छोः समामेकां तत्र तस्थे तपस्यतः । लब्धस्मृतिः सिद्धगिरा प्रददौ दर्शनं शिवः ॥२७२॥
प्रतिवेद्य तमादिष्टवाञ्छितार्थसमर्पणम् । स जगद्विजयोचितं नरेन्द्रत्वमयाचत ॥२७३॥
उपेक्ष्य मोक्षं किं क्ष्माभृद्भोगानिच्छसि भङ्गुरान् । इति जिज्ञासुना भावं शंभुना सोऽभ्यधीयत ॥२७४॥
275 स तं बभाषे शंभुं त्वां बुद्ध्वा व्याजतपोधनम् । अन्यथाभिदधद्धा त्वं न स देवो जगद्गुरुः ॥२७५॥
महान्तो ह्यर्थिताः स्वल्पं फलन्त्यल्पेतरं स्वयम् । उदन्यया वदान्योऽदादुग्धाब्धिं स पयोर्थिने ॥२७६॥
अस्य वैकल्यकैवल्यलाभनिश्चलचेतसः । को वेत्त्यभिजनस्याभिभूतिं मर्मव्यथावहाम् ॥२७७॥
जगत्परिवृढः प्रौढप्रीतिस्तं सफलार्थनम् । कृत्वा प्रादुष्कृतवपुस्ततो भूयोऽभ्यभाषत ॥२७८॥
मज्जतो राज्यसौख्येषु सायुज्यावाप्तिदूतिकाम् । महाश्रयाभ्रपादस्ते संज्ञां काले करिष्यति ॥२७९॥
280 इत्युक्त्वान्तर्हिते देवे स कृतव्रतपारणः । आगच्छदभ्रपादं तमापृच्छ्याभिमतां भुवम् ॥२८०॥
ततो विदितवृत्तान्तो मातृगुप्ताभिषेचनात् । निषिध्य सचिवांस्तानमात्यानब्रवीद्वचः ॥२८१॥
विक्रमादित्यमुत्सिक्तमुच्छेत्तुं यतते मनः । मातृगुप्तं प्रति न नो रोषेणाकलितं मनः ॥२८२॥
अप्रियैरपि निष्पिष्टैः किं स्यात्क्लेशासहिष्णुभिः । ये तदुन्मूलने शक्ता जिगीषा तेषु शोभते ॥२८३॥
यान्त्यस्ताभ्युदयं क्षिपन्ति शशिनः कोऽन्यस्ततोऽसंमतस्तान्निर्माथिकरीन्द्रदन्तदलनं यत्राम कोऽयं नयः ।
सामर्थ्यप्रथनाय निष्प्रमसमैः स्पर्धां विधूयोज्झता ये तेषु प्रभवन्ति तत्र जहति व्यक्तं प्ररूढा रुषः ॥२८४॥
285 त्रिगर्तानां भुवं जित्वा स व्रजन्नथ भूपतिः । विक्रमादित्यमशृणोत्कालधर्ममुपागतम् ॥२८५॥
तस्मिन्नहनि भूभर्त्रा शोकाविःश्वसतानिशम् । नाशायि नाशि नास्नायि स्थितेनावनताननम् ॥२८६॥
अन्येद्युर्भुवमुत्सृज्य कश्मीरेभ्यो विनिर्गतम् । शुश्राव मातृगुप्तं स नातिदूरे कृतस्थितिम् ॥२८७॥
कैश्चिन्निर्वासितो मा स्विन्मदीयैरिति शङ्कितः । ययौ प्रवरसेनोऽस्य पार्श्वं मितपरिच्छदः ॥२८८॥
कृतार्हणं सुखासीनं ततः पप्रच्छ तं शनैः । विनयावनतो राजा राज्यत्यागस्य कारणम् ॥२८९॥
290 बभाषे तं क्षणं स्थित्वा सं निःश्वस्य विहस्य च । गतः स सुकृती राजन्येन भूमिभुजो वयम् ॥२९०॥
यावन्मूर्ध्नि रवेः पादास्तावद्द्योतयते दिशः । द्योतते नान्यथा किंचिद्ग्रावैव तपनोपलः ॥२९१॥

---

२६८. [1]) यस्तु supplied by $A_2$ in space left by $A_1$. २६९. [1]) [2]) $A_2$ glosses आदिदेश and ईश्वरः. २७१. [1]) $A_2$ gloss अन्यथा. २७२. [1]) $A_2$ gloss प्रवरसेनस्य.—[2]) Thus $A_1$; corr. by later hand into °स्थले:, as found also in R. २७६. [1]) $A_1$ gloss स्वल्पमर्थिता बहु फलन्ति महान्तः.—[2]) $A_1$ gloss उदन्यया पिपासया.—[3]) Emended: A R G वदन्यो.—[4]) $A_2$ gloss शिवः. २७७. [1]) $A_2$ gloss पराभवं. २७८. [1]) $A_2$ gloss प्रभुः.—[2]) Thus corr. by $A_2$ from $A_1$ स फलार्थिनम्. २७९. [1]) Thus $A_1$; corr. by later hand into सांयुज्या°. २८०. [1]) $A_2$ अगच्छ°. २८१. [1]) स supplied by $A_2$ in space left by $A_1$.—[2]) $A_2$ gloss निराकृत्य. २८४. [1]) $A_2$ gloss सिंहः.—[2]) $A_2$ gloss धीरैः. २८५. [1]) Emended; A विश्रुत°. २८८. [1]) $A_2$ gloss प्रवरसेन. २९०. [1]) $A_2$ gloss मातृगुप्त.—[2]) Thus corr. by later hand from $A_1$ निश्वस्य.—[3]) $A_2$ gloss विक्रमादित्यः. २९१. [1]) Thus $A_1$; corr. by $A_2$ into द्योततेनान्यथा किं न which reading is found also in G R Edd.—[2]) $A_2$ gloss सूर्यकान्तः.

अथ राजाभ्यधात्केन राजन्नपकृतं तव । यस्त्वमप्यपचिकीर्षावान्नमीशमनुशोचसि ॥२९२॥
मातृगुप्तस्ततोवादीत्कोपस्मितसिताधरः । अस्मानुत्सहते कश्चिन्नापकर्तुं बलाधिकः ॥२९३॥
नयता गण्यतामस्माननन्तरशेन तेन हि । न भस्मनि हुतं सर्पिर्नोप्तं वा सस्यमूषरे ॥२९४॥
उपकारं स्मरन्तस्तु कृतज्ञत्ववशंवदाः । पदवीमुपकर्तॄणां यान्ति निश्चेतना अपि ॥२९५॥ 295
निर्वाणमनुनिर्वाति तपनं तपनोपलः । इन्दुमिन्दुमणिः किं च शुष्यन्तमनुशुष्यति ॥२९६॥
पुण्यां वाराणसीं गत्वा तस्माच्छमसुखोन्मुखः । इच्छामि सर्वसंन्यासं कर्तुं द्विजजनोचितम् ॥२९७॥
मणिदीपनिवेशं तमन्तरेणान्धकारिताम् । बिभेमि द्रष्टुमप्युर्वीं भोगयोगे कथैव का ॥२९८॥
इत्यौचित्यनिधेस्तस्य वाणीमाकर्ण्य विस्मितः । धीरः प्रवरसेनोपि व्याजहारोचितं वचः ॥२९९॥
सत्यं विश्वंभरा देवी भूपते रत्नसूरियम् । उत्पत्त्या द्योतते धन्यैः कृतज्ञैर्या भवादृशैः ॥३००॥ 300
अन्तरज्ञतया श्लाघ्यः कोन्यस्तस्मान्महीभुजः । इत्थं जडे जगत्येकस्त्वां यथावद्विवेद यः ॥३०१॥
चिरं खलु खिलीभूताः कृतज्ञत्वस्य वीथयः । धीर त्वयैव न स्यासु संचारो यदि दर्श्यते[2] ॥३०२॥
पाकश्चेत्तरुमस्य मेघ तदसौ प्रागेव नादात्किमु स्वार्थश्चेन्न मयास्य किं न भजते दीनान्धबन्धूनयम् ।
मत्तो रन्ध्रदृशोस्य भीर्यदि न तल्लुब्धः किमेष त्यजेदित्यन्तः पुरुषाधमः कलयति प्रायः कृतोपक्रियः ॥३०३॥
अत्युदात्तगुणेष्वेषा कृतपुण्यैः प्ररोपिता । शालशाखीभवत्येव यावन्मात्रापि सत्क्रिया ॥३०४॥
तत्त्वं गुणवतामध्यस्तत्त्वज्ञैश्चाभिनन्दितः । परीक्षितो मणिरिव व्यक्तं बहुमतः सताम् ॥३०५॥ 305
तस्मादनुगृहाणास्मान्मा स्म त्याक्षीर्नरेन्द्रताम् । ममापि ख्यातिमायातु गुणवत्पक्षपातिता ॥३०६॥
पूर्वं तेनाथ चरमं मयापि प्रतिपादिताम् । भवान्प्रतिप्रणयिनीं विदधातु पुनर्भुवम् ॥३०७॥
अथौदार्यैकधुर्यस्य श्रुत्वेति नृपतेर्वचः । कृतस्मितो मातृगुप्तः शनैर्वचनमब्रवीत् ॥३०८॥
यान्यक्षराण्यन्तरेण वाक्यं वक्तुं न पार्यते । का गतिस्तदुपादाने मर्यादोल्लङ्घनं विना ॥३०९॥
अतः परुषमप्यत्र किंचिदेव मयोच्यते । अव्याजार्जवमप्येतदार्यत्वमवधीर्यते ॥३१०॥ 310
सर्वः स्मरति सर्वस्य प्रागवस्थासु लाघवम् । आत्मैव वेत्ति माहात्म्यं वर्तमाने क्षणे पुनः ॥३११॥
पूर्वावस्था मदीया ते त्वदीया या च मे हृदि । ताभ्यां विमोहितावावां न विद्वोन्योन्यमाशयम् ॥३१२॥
राजा भूत्वा कथं मादृक्प्रतिगृह्णातु संपदः । कथमेकपदे सर्वमौचित्यं परिमार्जतु ॥३१३॥
असाधारणमौदार्यमाहात्म्यं तस्य भूपतेः । भोगमात्रकृते मादृक्किं साधारणतां नयेत् ॥३१४॥
अपि च स्पृहयालुः स्यां भोगेभ्यो यदि भूपते । ध्रियमाणेभिमाने मे केन ते[1] विनिवारिताः ॥३१५॥ 315
यन्ममोपकृतं तेन तद्विना प्रत्युपक्रियाम् । जीर्णमेवाधुनाङ्गेषु प्रभवत्वेष निश्चयः ॥३१६॥
या गतिर्भूभुजोमुष्य मया तामनुगच्छता । पात्रापात्रविवेकत्वख्यातिर्नेया प्रकाश्यताम् ॥३१७॥
एतावत्येव कर्तव्ये यातेस्मिन्कीर्तिशेषताम् । भोगमात्रपरित्यागाद्विदध्यां सत्यसंधताम् ॥३१८॥

२९२. [1]) Thus corr. by later hand from A1 °पचिकुप°. २९४. [1]) A2 gloss तेन हर्षेण. २९५. [1]) A2 °वशीकृताः. २९८. [1]) A2 gloss विक्रमादित्यं. ३०१. [1]) A2 gloss हर्षेणात्. ३०२. [1]) A2 gloss वीथीषु.—[2]) दर्श्यते supplied by A2 in space left by A1. ३०७. [1]) Thus A1; A2 °न्प्राणिन°. ३०९. [1]) Thus corr. by A2 from A1 याम्यक्षरा°. ३१०. [1]) This verse has been omitted by A1 and supplied in margin by A2; found in R G. ३१५. [1]) A2 gloss ते भोगा इत्यर्थः. ३१८. [1]) A2 gloss विक्रमादित्ये.

इत्युक्त्वा विरते तस्मिञ्जगाद जगतीपतिः | त्वदीया न मया स्पृश्यास्त्वयि जीवति संपदः ||३१९||

320 अथ वाराणसीं गत्वा कृतकाषायसंग्रहः | सर्वं संन्यस्य सुकृती मातृगुप्तोभवद्यतिः ||३२०||

राजा प्रवरसेनोपि काश्मीरोत्पत्तिमञ्जसा | निखिलां मातृगुप्ताय प्राहिणोदृढनिश्चयः ||३२१||

स हठापतितां लक्ष्मीं भिक्षाभुक्प्रतिपादयन् | सर्वार्थिभ्यः कृती वर्षान्दश प्राणानधारयत् ||३२२||

अन्योन्यं साभिमानानामन्योन्यौचित्यशालिनाम् | त्रयाणामपि[1] वृत्तान्त एष त्रिपथगापयः ||३२३||

राजा प्रवरसेनोथ नमयन्नवनीधरान् | अकृच्छ्रलङ्घ्याः ककुभो वृद्धस्य यशसो व्यधात् ||३२४||

325 पीताब्धिर्लङ्घितोर्वीभृत्कुम्भयोनिरिवानयत् | तस्य प्रतापः प्रभवन्भुवनानि[1] प्रसन्नताम् ||३२५||

भुज्यत्तमालपत्राणि शीर्णताडीदलानि च | तत्सेनार्णवतीराणि चक्रेरिस्त्रीमुखानि च ||३२६||

स गङ्गालिङ्गिताङ्गस्य पूर्ववारिनिधेर्व्यधात् | सैन्येभमदनिष्यन्दैः कालिन्दीसंगमश्रियम् ||३२७||

रोधस्यपरपाथोधेः कटकैः स्पृष्टदिक्तटैः | चकारोत्पाट्य सौराष्ट्रानसौ राष्ट्रविपाटनम् ||३२८||

यशोर्थिनः पार्थिवेषु द्वेषरागबहिष्कृतः | ववृधे धर्मविजयस्तस्य क्षितिशतक्रतोः ||३२९||

330 वैरिनिर्वासितं पित्र्ये विक्रमादित्यजं न्यधात् | राज्ये प्रतापशीलं स शीलादित्यापराभिधम् ||३३०||

सिंहासनं स्ववंश्यानां तेनाहितहृतं ततः | विक्रमादित्यवसतेरानीतं स्वपुरं पुनः ||३३१||

हेतुमुदीर्य विविधानमन्वानं पराजयम् | सप्त वारान्स[1] तत्याज जित्वा मुम्मुनिं[2] भूभुजम् ||३३२||

धाष्टर्यादथाष्टमे वारे हेतुमाख्यातुमुद्यतम् | धिक्प्रभून्बध्यतां सोयमित्यूचे नृपतिः क्रुधा ||३३३||

अबध्योहं प्रभुत्वेन वीरेत्युक्ताभयोत्सुकः | मध्येसभं नमतोस्य सोनुकुर्वन्कलापिनम् ||३३४||

335 नृत्तं केकां च शिखिनो[1] दृष्ट्वास्मै त्रविगं नृपः | अभयेन समं प्रादात्तालावचरणोचितम्[2] ||३३५||

वसतोस्य दिशो जित्वा प्रभुः पैतामहे पुरे | कर्तुं पुरं स्वनामाङ्कं प्रथते स्म मनोरथः ||३३६||

रात्रौ क्षेत्रं च लग्नं च दिव्यं ज्ञातुमथैकदा | स वीरो वीरचर्यायां निर्ययौ पार्थिवार्यमा ||३३७||

गच्छतः क्ष्मापतेस्तस्य मौलिरत्नप्रतिबिम्बितः | बभार ताराप्रकरो[1] रक्षासर्षपविभ्रमम् ||३३८||

अथानन्तचितालोकस्पष्टभीमतटद्रुमाम् | श्मशानप्रान्ततटिनीं पर्यटन्नाससाद[1] सः ||३३९||

340 ततस्तस्य सरित्पारे मुक्तसंरावमग्रतः | ऊर्ध्वबाहु महद्भूतं प्रादुरासीन्महौजसः ||३४०||

नृपतिस्तस्य दृक्पातैर्ज्वलद्भिः कपिशीकृतः | उल्काज्योतिःकृताश्लेषः कुलाद्रिरिव दिद्युते ||३४१||

तमथ प्रतिशब्देन घोरेणापूरयन्दिशः | अभ्यासं विहसन्नुच्चैरुवाच क्षणदाचरः ||३४२||

संत्यज्य विक्रमादित्यं सत्त्वोद्रिक्तं च शूद्रकम् | त्वां च भूपाल पर्याप्तं धैर्यमन्यत्र दुर्लभम् ||३४३||

वसुधाधिपते वाञ्छासिद्धिस्तत्र विधीयते | सेतुमेतं समुत्तीर्य पार्श्वमागम्यतां मम ||३४४||

345 इत्युदीर्य निजं जानु रक्षः पारात्प्रसारयत् | तन्महासरितो वारि सेतुसीमन्तितं व्यधात् ||३४५||

अङ्केन रक्षःकायस्य ज्ञात्वा सेतुं प्रकल्पितम् | वीरः प्रवरसेनोथ विकोशां क्षुरिकां दधे ||३४६||

---

३२३. [1]) $A_1$ gloss त्रयाणां विक्रमादित्यमातृगुप्तप्रवरसेनानाम्. ३२५. [1]) $A_3$ gloss जलान्यपि. ३३२. [1]) $A_3$ gloss प्रवरसेन.—[2]) Doubtful emendation. मुंमु has been supplied by $A_3$ in space left by $A_1$; $A_3$ has marked a different division of the words, जित्वाऽमुं | मुनिभूभुजम्, which is also indicated by the interlinear gloss of $A_3$ प्रतापशीलं; C reads मुम्मुनिं°. For the name मुम्मुनि see iv. 167; v. 516; viii. 2180 (C.).—३३५. [1]) $A_3$ gloss शिखिवन्नृत्तं.—[2]) Thus $A_1$; $A_3$ तालार्धचरणो°. ३३८. [1]) Thus $A_3$; $A_1$ °प्राक°. ३३९. [1]) Thus apparently $A_1$; $A_3$ °चन्.

स तयोत्कृत्य तन्मांसं कृतसोपानपद्धतिः । अतटयत्र तत्स्थानं क्षुरिकाबलं[1] उच्यते ॥३४७॥
पार्श्वस्थं तं तमभ्युक्त्वा प्रातर्मत्सूत्रपातनम् । दृष्ट्वा पुरं विधेहीति वदन्भूतं तिरोदधे ॥३४८॥
देव्या शारिकयाङ्गेन यक्षेणाधिष्ठिते[1] च सः । ग्रामे शारीटके[2]ऽपश्यत्सूत्रं वेतालपातितम् ॥३४९॥
भक्त्या प्रतिष्ठां प्राक्तस्मिन्निनीषी प्रवरेश्वरम् । जयस्वामी स्वयं पीठे भित्त्वा बन्धमुपाविशत् ॥३५०॥
वेतालावेदितं लग्नं जानतो जगतीभुजा । स्थपतेः स जयाख्यस्य नाम्ना प्रख्यापितोऽभवत् ॥३५१॥
नगराप्रातिलोम्याय भक्त्या तस्य विनायकः । प्रत्यङ्मुखः प्राङ्मुखतां भीमस्वामी स्वयं ययौ ॥३५२॥
सद्भावश्र्यादिका देव्यस्तेन श्रीशम्बलाङ्किताः । पञ्च पञ्चजनेन्द्रेण पुरे तस्मिन्निवेशिताः ॥३५३॥
वितस्तायां स भूपालो बृहत्सेतुमकारयत् । ख्याता ततः प्रभृत्येव तादृङ्नौसेतुकल्पना ॥३५४॥
श्रीजयेन्द्रविहारस्य बृहद्बुद्धस्य च व्यधात् । मातुलः स नरेन्द्रस्य जयेन्द्रो विनिवेशनम् ॥३५५॥ 355
बुभोज सिंहलादीन्यो द्वीपान्स सचिवोऽकरोत् । मोराकनामा मोराकभवनं भुवनाद्भुतम् ॥३५६॥
षट्त्रिंशद्गृहलक्षाणि पुरे तत्प्रथमे पुरा । यस्यास्तां वर्धनस्वामी विश्वकर्मा च सीमयोः ॥३५७॥
दक्षिणस्मिन्नेव पारे वितस्तायाः पुरा किल । निर्मितं तेन नगरं विभक्तैर्युक्तमापणैः ॥३५८॥
ते तत्राभ्रंलिहाः सौधा यानद्याप्यत्र दृश्यते । वृष्टिस्निग्धं निदाघान्ते चैत्रे चोत्कुसुमं जगत् ॥३५९॥
तद्विना नगरं कुत्र पवित्राः सुलभा भुवि । सुभगाः सिन्धुसंभेदाः क्रीडावसथवीथिषु ॥३६०॥ 360
दृष्टः क्रीडानगोऽन्यत्र न मध्येनगरं क्वचित् । यतः सर्वौकसां लक्ष्मीः संलक्ष्या क्षुपथादिव ॥३६१॥
वैतस्तं वारि वास्तव्यैर्बृहत्तु[1]हिनशर्करम् । ग्रीष्मोष्मच्छित्स्ववेश्माप्तं क्व ततोऽन्यत्र लभ्यते ॥३६२॥
प्रतिदेवगृहं कोशास्ते तस्मिन्नर्पिता नृपैः । सहस्रशः शक्यते यैः क्रेतुं भूः सागराम्बरा ॥३६३॥
पुरे निवसतस्तस्मिंस्तस्य राजप्रजासृजः । शनैः साम्राज्यलाभस्य षष्टिः संवत्सरा ययुः ॥३६४॥
ललाटे शूलमुद्राङ्के जराशुक्लाः शिरोरुहाः । तस्य शंभुभ्रमासङ्गिगङ्गाम्भोविभ्रमं वपुः ॥३६५॥ 365
अथाश्वपादेनेशाननिदे[1]शात्तत्क्षणागतः । काश्मीरिको जयन्ताख्यो द्विजन्मायोजि पार्श्वगः ॥३६६॥
भ्रान्तोऽस्यध्वन्य नान्यस्माद्देशात्तेऽभिमतं भवेत् । राज्ञे प्रवरसेनाय लेख एष प्रदर्श्यताम् ॥३६७॥
इत्युक्त्वार्पितलेखोऽसावसमर्थः पथः पृथून् । गन्तुं प्रस्थानखिन्नोऽस्मि सद्यस्तेनेत्यगद्यत ॥३६८॥
आद्यथ तावत्त्वं स्पृष्टो द्विजः कापालिना मया । उक्त्वेति तेन क्षिप्तोऽसावासन्ने दीर्घिकाजले ॥३६९॥
उन्मीलितेक्षणोऽद्राक्षीत्स्वं स्वदेशादथोत्थितम् । तस्युपधावने राज्ञो भृत्यान्व्यपाज्जलाहृती ॥३७०॥ 370
स्वमावेदयितुं तथा नीयमाने नृपान्तिकम् । भव्याक्षिप्तोऽक्षिपल्लेखं स स्नानकलशे ततः ॥३७१॥
प्रवरेशं स्नापयता स्रस्तं तत्कलशात्पुनः । राज्ञा लेखं वाचयित्वा जयन्तः प्रापितोऽन्तिकम् ॥३७२॥
कृतं कृत्यं महद्दत्तं भोगा भुक्ता वयो गतम् । किमन्यत्करणीयं ते एहि गच्छ शिवालयम् ॥३७३॥
ततस्तं बुद्धसंकेतः संतोष्याभिमतार्पणात् । भित्त्वा तमश्मप्रासादं जगाहे विमलं नभः ॥३७४॥
जनैः स ददृशे गच्छन्कैलासतिलकां दिशम् । विशदे घटयन्व्योम्नि द्वितीयतपनोदयम् ॥३७५॥ 375

---

३४७. ¹) Thus corr. by $A_3$ from $A_1$ °आल ; G °बाल. ३४९. ¹) Thus corr. by later hand from $A_1$ °हिते.—²) $A_2$ gloss ग्रामद्. ३५१. ¹) स्व supplied by $A_3$. ३५४. ¹) Thus corr. by $A_3$ from $A_1$ तश. ३५५. ¹) A gloss स्थापनम्. ३६२. ¹) $A_3$ °बृहत्तु°. ३६६. ¹) Thus corr. by $A_3$ from $A_1$ °निर्दे°.

जयन्तेनाद्भुतोदन्तहेतुनावाप्य संपदः । स्वनामाङ्कमहारादिकर्मभिर्निर्मलाः कृताः ॥३७६॥
एवं स भुवनैश्वर्यं भुक्त्वा भूमिभृतां वरः । अनेनैव शरीरेण भेजे भूतपतेः सभाम् ॥३७७॥
प्रासादे प्रवरेशस्य सिद्धिक्षेत्रे क्षमापतेः । स्वर्गद्वारप्रतिभटं द्वारमद्यापि लक्ष्यते ॥३७८॥
तस्य रत्नप्रभादेव्यां जातो राजा युधिष्ठिरः । अपासीन्नवमासोनाः क्ष्मां चत्वारिंशतिं समाः ॥३७९॥
380 सर्वरत्नजयस्कन्दगुप्तशङ्खाङ्किताभिधाः । आसन्विहारचैत्यादिकृत्यैस्तत्सचिवा वराः ॥३८०॥
भत्रच्छेदाभिधं ग्रामं स्तुत्यं चैत्यादिसिद्धिभिः । यो व्यधात्सोस्य वज्रेन्द्रोप्यासीन्मन्त्री जयेन्द्रजः ॥३८१॥
दिक्कामिनीमुखोत्कीर्णकीर्तिचन्दनचित्रकाः । आसन्कुमारसेनाद्यास्तस्यान्येप्यग्र्यमन्त्रिणः ॥३८२॥
पश्चात्तस्यां सुतस्तस्य नरेन्द्रादित्य इत्यभूत् । लःखणापरनामा यो नरेन्द्रस्वामिनं व्यधात् ॥३८३॥
वज्रेन्द्रतनयौ वज्रकनकौ यस्य मन्त्रिणौ । अभूतां सुकृतोदन्तौ राज्ञी च विमलप्रभा ॥३८४॥
385 स विधायाधिकरणं लिखितस्थितये निजम् । द्यां त्रयोदशभिर्वर्षैरारुरोह महाभुजः ॥३८५॥
तस्यानुजो धरणिभृद्रणादित्यस्ततोभवत् । तुञ्जीनापरनामानं यं जनाः प्राहुरञ्जसा ॥३८६॥
जगद्विलक्षणं यस्य शङ्खमुद्राङ्कितं शिरः । अपूर्वशार्वरीशान्तर्लीनभानुश्रियं दधे ॥३८७॥
रिपुकण्ठाटवीष्वासीद्यस्य धाराधरः पतन् । तद्वधूनेत्रकुण्डैस्तु जलाधिक्यमधार्यत ॥३८८॥
अपूर्वो यत्प्रतापाग्निः प्रविश्योर्वीं द्विषां न्यधात् । नारीनेत्रेषु नीरोर्मीन्मन्दिरेषु तृणाङ्कुरान् ॥३८९॥
390 यस्य पाणिप्रणयितां कृपाणे समुपागते । कबन्धेभ्यः परो नृत्तं न व्यधत्त द्विषद्बले[1] ॥३९०॥
तस्याव्यपोढमाहात्म्या देवी दिव्याकृतेः प्रिया । विष्णुशक्तिः क्षितिं प्राप्ता रणारम्भाभिधाभवत् ॥३९१॥
स हि जन्मान्तरे पूर्वं द्यूतकारोभवत्किल । कदापि प्राप निर्वेदं सर्वस्वं कितवैर्जितः ॥३९२॥
देहत्यागोद्यतोप्यासीत्प्राप्यं किंचिद्विचिन्तयन् । न पर्यन्तेप्युपेक्षन्ते कितवाः स्वार्थसाधनम् ॥३९३॥
अनन्यदर्शनां विन्ध्ये देवीं भ्रमरवासिनीम् । द्रष्टुमिच्छन्वराकाङ्क्षी निर्व्यपेक्षः स्वजीविते ॥३९४॥
395 भ्रमरैः शङ्कुपुच्छाग्रैः खण्ड्यमानस्य देहिनः । तदास्पदं हि विख्याता दुर्लङ्घ्या पञ्चयोजनी ॥३९५॥
स वज्रशङ्कुपुच्छानां धीमांस्तेषां प्रतिक्रियाम् । देहेवश्यपरित्याज्ये मन्वानोभूददुष्कराम् ॥३९६॥
प्रागयोवर्मणा देहं ततो महिषचर्मणा । तेन छादयता दत्तो मृल्लेपोथ सगोमयः ॥३९७॥
अथ भानुकरोच्छुष्कमृल्लेपाम्रेडिताङ्गकः । स लोष्ट इव संचारी प्रतस्थे क्रूरनिश्चयः ॥३९८॥
सरलां सरणिं त्यक्त्वा जीवितस्पृहया समम् । गुहा तेन ततः सान्द्रतमोभीमा व्यगाह्यत ॥३९९॥
400 अथोदतिष्ठन्गर्तेभ्यो घोरा भ्रमरमण्डलाः । पक्षशब्दैः श्रुतिं घ्नन्तो मृत्युतूर्यरवैरिव ॥४००॥
ते तमुच्छुष्कमृल्लेपरेणुव्रणितलोचनाः । सहसा नाक्रमन्ते स्म प्रहरन्तोपि बाधितुम् ॥४०१॥
रेणुभिर्येन्धितदृशस्ते न्यवर्तन्त षट्पदाः । तेखण्डयंस्तु मृल्लेपं न्यपतन्ये नवा नवाः ॥४०२॥
तैः खण्ड्यमानमुद्दण्डैर्व्रजतो योजनत्रयीम् । क्रमान्मृत्कवचं तस्य पथि संक्षयमाययौ ॥४०३॥
ततो मुहुः प्रहरतां तेषां महिषचर्मणि । घोरश्चटचटाघोषः प्रादुरासीद्भयंकरः ॥४०४॥

३७७. [1]) Thus $A_2$; $A_1$ त्यक्त्वा. ३७८. [1]) $A_3$ च्छिद्रं. ३७९. [1]) Thus corr. by $A_3$ from $A_1$ चतुर्विंशतिं. ३८१ [1]) $A_1$ gloss भौछी. ३८३. [1]) $A_1$ ल × खणा°. ३९०. [1]) $A_3$ indicates a *varia lectio* in the marginal note अन्यत्र कबन्धेभ्यः परं नृत्तं न व्यधत्त द्विषद्बलम्; over the last word the gloss कर्तृ by the same hand.

चतुर्थयोजनस्यार्धमतिक्रम्य विवेद सः । रणत्कारैर्द्विरेफांस्तानयोवर्मनिपातिनः ॥४०५॥ 405

धावंस्ततोतिवेगेन खण्ड्यमानेन षट्पदैः । स शस्त्रवर्मणामोचि चित्तं¹ धैर्येण नो पुनः ॥४०६॥

गव्यूतिमात्रमासन्ने देवीधामनि धैर्यवान् । धुन्वन्कराभ्यां मधुपान्धावति स्म स धीरधीः ॥४०७॥

अथ त्वगस्थिशेषाङ्गो लूनमांसः षडङ्घ्रिभिः । कराभ्यामक्षिणी रक्षन्देव्यायतनमासदत् ॥४०८॥

प्रशान्ते भृङ्गसंपाते प्रकाशमवलोकयन् । स देव्याः पादयोरग्रे पपातोत्क्रान्तजीवितः ॥४०९॥

स्तोकावशेषप्राणं तं देव्याश्वासयितुं ततः । अभिरामं वपुः कृत्वा पस्पर्शाङ्गेषु पाणिना ॥४१०॥ 410

दिव्येन पाणिस्पर्शेन तेन पीयूषवर्षिणा । स क्षिप्रासादितस्वास्थ्यो दिक्षु चिक्षेप चक्षुषी ॥४११॥

प्रविष्टमात्रः प्रैक्षिष्ट सिंहविष्टरसीम्नि याम् । घोराकारां स तां देवीं तदाद्राक्षीन्न तां पुनः¹ ॥४१२॥

ददर्श पुनरुद्यानलतावासे विलासिनीम् । स्थितां पुष्करिणीतीरे श्यामां पुष्करलोचनाम् ॥४१३॥

गृहीतहारमुक्तार्घां¹ वक्त्रां पीनस्तनाञ्जलिम् । महद्भिः कान्तिकुसुमैर्यौवनेनार्चिताङ्गकाम् ॥४१४॥

यावकाहारिणौ पादौ दधतीं कृच्छ्रचारिणौ । स्तनच्छद्ममुखे द्रष्टुं तपस्यन्ताविवान्वहम् ॥४१५॥ 415

भास्वद्बिम्बाधरां कृष्णकेशीं सितकराननाम् । हरिमध्यां शिवाकारां सर्वदेवमयीमिव ॥४१६॥

तां विभाव्यानवद्याङ्गीं निर्भरं यौवनोर्जिताम् । निन्ये¹वारितवामेन स कामेन विधेयताम् ॥४१७॥

दधती रूपमाधुर्यपुरच्छायामधृष्यताम्¹ । अप्सराः प्रत्यभात्तस्य सा हि चित्ते न देवता ॥४१८॥

कृपामृदुरवादीत्तं व्यथितोसि चिरं पथि । मुहुः सौम्य समाश्वस्य प्रार्थ्यतामुचितो वरः ॥४१९॥

स तां बभाषे शान्तो मे भवत्या दर्शनाच्छ्रमः । अदेवी किं तु भवती वरं दातुं कथं क्षमा ॥४२०॥ 420

देवी जगाद तं भद्र कोयं ते मनसि भ्रमः । देवी वा स्यामदेवी वा वरीतुं त्वां तु शक्नुयाम् ॥४२१॥

इति सोभीष्टसंप्राप्तौ कारयित्वा प्रतिश्रवम् । दूरमुत्क्रान्तमर्यादः संगमं तामयाचत ॥ ४२२॥

तमभ्यधात्सा दुर्बुद्धे कोयं तेनुचितो विधिः । प्रार्थयस्वेतरद्यस्मात्साहं भ्रमरवासिनी ॥४२३॥

देवीं तां जानतोप्यस्य नाभूदवहितं मनः । निरुद्धा वासनाः केन जन्मान्तरनिबन्धनाः ॥४२४॥

स तामुवाच सत्यां¹ चेद्देवि त्वां गिरमिच्छसि । प्रमाणीकुरु मद्वाणीमहमन्यन्न कामये ॥४२५॥ 425

पूर्वमेव हि जन्तूनां योधिवासो निलीयते । तिलानामिव तेषां स पर्यन्तेपि न शीर्यते ॥४२६॥

देवी वा भव कान्ता वा भीमा वा शोभनापि वा । यादृशीं पूर्वमद्राक्षं तादृश्येवावभासि मे ॥४२७॥

तमित्थं कथयन्तं सा ज्ञात्वा निश्चलनिश्चयम् । एवं जन्मान्तरे भावीत्यभ्यधादनुरोधतः ॥४२८॥

उत्सहन्ते हि संस्प्रष्टुं न दिव्यां¹ मर्त्यधर्मिणः । तद्गच्छ क्रूरसंकल्पेत्युक्त्वा सान्तर्दधे ततः ॥४२९॥

अभून्यजन्मा भूयासं तया देव्येति चिन्तयन् । प्रयागवटशाखाग्रादहासीत्स वपुस्ततः ॥४३०॥ 430

सोजायत रणादित्यो रणारम्भा च सा भुवि । मर्त्यभावेपि या नैव जहौ जन्मान्तरस्मृतिम् ॥४३१॥

रतिसेनाभिधश्चोलराजः सज्जोब्धिपूजने । तां तरङ्गान्तराल्लेभे रत्नराजिमिवोज्ज्वलाम् ॥४३२॥

---

४०६. ¹) $A_2$ चित्त. ४१२. ¹) Thus $A_1$ ; $A_3$ G पुरः; R and Edd. read पुनः. ४१४. ¹) Thus $A_1$ ; altered by $A_2$ to °मुक्तार्घाम्बुजा. $A_2$ reads in margin गृहीतहारमुक्तार्घां वक्त्रपीनस्तनाञ्जलिम्, with gloss मुक्ता एवार्घाः G and R follow $A_1$. ४१७. ¹) $A_1$ writes ऽ after निन्ये. ४१८. ¹) This division of the words is indicated by $A_1$. ४२५. ¹) Thus corr. by later hand from $A_1$ सत्यं ; सत्यां also in G and R. ४२९. ¹) $A_3$ देव्यौ.

आ बाल्याद्व्यक्तदिव्योक्तिं तामलंकृतयौवनाम् । दिव्यार्हां पृथिवीशेभ्यो नार्थिभ्योपि ददौ नृपः ॥४३३॥
रणादित्यनृपामात्ये दूत्यायाते तथैव ताम् । प्रत्याख्यानेच्छुमाचख्यौ सैव तद्वरणं वरम् ॥४३४॥
435 तदर्थमेव कथितस्वोत्पत्तिं तां ततः पिता । श्रुतं कुन्तलभूभर्तुः सुहृदः प्राहिणोद्गृहान् ॥४३५॥
प्रहृष्टो विप्रकृष्टं तं देशं गत्वा व्यधत्त ताम् । परिणीय रणादित्यः शुद्धान्तस्याधिदेवताम् ॥४३६॥
मर्त्यसंस्पर्शभीरुः सा महादेवी भवन्त्यपि । तं मायया मोहयन्ती न पस्पर्श कदाचन ॥४३७॥
व्यधान्मायामयीं राज्ञस्तल्पे स्वसदृशीं स्त्रियम् । स्वयं सा भ्रमरीरूपा निर्जगाम बहिर्निशि ॥४३८॥
स नाम्ना स्वस्य देव्याश्च कृत्वा सुरगृहद्वयम् । माहेश्वरः शैललिङ्गे कारयामास कारुभिः ॥४३९॥
440 श्वः प्रतिष्ठाप्रसङ्गेऽथ सज्जे तल्लिङ्गयोर्द्वयम्[1] । देशान्तरागतः कश्चिद्दूषयामास दैववित् ॥४४०॥
स दृष्टप्रत्ययः शश्वत्तयोर्घटितलिङ्गयोः । अश्मखण्डैः समण्डूकैर्बभाषे गर्भमावृतम् ॥४४१॥
किंकर्तव्यतया मूढं प्रतिष्ठाविघ्नविह्वलम् । दिव्यदृष्टिः स्वयं देवी ततो राजानमब्रवीत् ॥४४२॥
राजन्गिरिसुतोद्वाहे पौरोहित्यं पुरा भजन् । स्वमर्चादेवमादत्त[1] पूजाभाण्डात्प्रजापतिः ॥४४३॥
तां विष्णोः प्रतिमां वीक्ष्य पूजितां तेन धूर्जटिः । शून्यामिव तदा मेने शक्तिरूपां विना शिवम् ॥४४४॥
445 निमन्त्रितैर्ढौकितानि रत्नान्यथ सुरासुरैः । पिण्डीकृत्य स्वयं चक्रे लिङ्गं भुवनवन्दितम् ॥४४५॥
तां विष्णुप्रतिमां तच्च लिङ्गमीशानपूजितम् । स्वयं प्रजासृजः पुण्यं कालेनादत्त रावणः ॥४४६॥
तेनाप्यभ्यर्च्यमानं तल्लङ्कायामभवच्चिरम् । देवद्वयं रावणान्ते नीतमासीच्च वानरैः ॥४४७॥
तिर्यक्तया ते कपयो मुग्धा हिमनगौकसः । शान्तौत्सुक्याः शनैर्देवौ न्यधुरुत्तरमानसे ॥४४८॥
प्रागेव सरसस्तस्मात्कुशलैः शिल्पिभिर्मया । तावुद्धृतौ प्रातरत्र प्राप्तौ द्रक्ष्यस्यसंशयम् ॥४४९॥
450 तयोः प्रतिष्ठा क्रियतामित्युक्त्वा पृथिवीभुजम् । देवी प्रयाता शुद्धान्तं सिद्धान्सस्मार खेचरान् ॥४५०॥
ते[1] ध्यातमात्रा[2] संप्राप्ता देव्यादेशेन पाथसः[3] । उद्धृत्य नृपतेर्धाम्नि देवौ हरिहरौ न्यधुः[4] ॥४५१॥
दिव्यैः प्रसूनैः संवीतौ हरनारायणौ जनः । प्रातर्नृपगृहे दृष्ट्वा परं विस्मयमाययौ ॥४५२॥
सज्जे प्रतिष्ठालग्नेऽथ[1] माहेश्वरतया नृपः । रणेश्वरप्रतिष्ठायां पूर्वं यत्नात्समुद्यतः ॥४५३॥
रणारम्भानुभावेन तावद्देवाद्भुतावहः । स्वयं पीठे रणस्वामी भित्त्वा यन्त्रमुपाविशत् ॥४५४॥
455 कर्तुं प्रभावजिज्ञासां राज्ञ्या[1] दत्तधनस्ततः । स स्वयंभूः स्वयं भक्तांस्तांस्तान्ग्रामानदापयत्[2] ॥४५५॥
कुम्भदासतया छन्नः सिद्धो ब्रह्माभिधो वसन् । परिज्ञाय तयोर्देव्या[1] प्रतिष्ठाकर्म कारितः ॥४५६॥
स दृष्टप्रत्यभिज्ञः सन्प्रतिष्ठाप्य रणेश्वरम् । व्योम्ना व्रजन्[1]रणस्वामिप्रतिष्ठां गूढमादधे ॥४५७॥
जनास्त्वलक्षयन्यत्र स्वयं पीठमवातरत् । इति केषामपि हृदि प्रवादोऽद्यापि वर्तते ॥४५८॥
सा[1] ब्रह्मप्रतिमं सिद्धं देवी ब्रह्मविदां वरम् । अकारयत्समुद्दिश्य परार्ध्यं[2] ब्रह्ममण्डपम्[3] ॥४५९॥
460 रणारम्भास्वामिदेवौ दंपतिभ्यां व्यधीयत । मठः पाशुपतानां च ताभ्यां प्रद्युम्नमूर्धनि[1] ॥४६०॥

४४०. [1]) $A_3$ gloss शिवलिङ्गद्वयम्. ४४३. [1]) Thus $A_3$; $A_1$ °धत्त ४५१. [1])[2])[3]) Thus corr. by later hand from $A_1$ तं, °मात्र, पायस.—[4]) Thus $A_3$; $A_1$ न्यधुः. ४५३. [1]) Thus $A_1$; $A_3$ °लिङ्गे. ४५५. [1]) Thus corr. by $A_3$ from $A_1$ राज्ञा.—[2]) Thus $A_3$; $A_1$ भक्तैस्तां°. ४५६. [1]) $A_3$ gloss हरिहरयोः. ४२८. [1]) Thus $A_3$; $A_1$ प्रवजौ. ४५९. [1]) Thus corr. by later hand from $A_1$ स.—[2]) Thus corr. by $A_3$ from $A_1$ पराध्यं.—[3]) Thus $A_3$; $A_1$ °मण्डम्. ४६०. [1]) $A_3$ gloss प्रद्युम्नमूर्धनि शारिकागिरौ.

आरोग्यशाला निरमाप्युल्लाघत्वाय रोगिणाम् । तेन सेनामुखीदेवीभवशाल्ये च कारिता ॥४६१॥
ख्यातिं रणपुरस्वामिसंज्ञया सर्वतो गतम् । स सिंहरोत्सिकाग्रामे मार्तण्डं प्रत्यपादयत् ॥४६२॥
अमृतप्रभया तस्य राज्ञः पत्न्यान्यया कृतः । रणारम्भरणेशस्य पार्श्वे देवोमृतेश्वरः ॥४६३॥
मेघवाहनभूभर्तृपत्न्या भिन्नाख्यया कृते । विहारेपि तया बुद्धबिम्बं साधु निवेशितम् ॥४६४॥
राज्ञे देव्यनुरक्ताय सानुक्रोशाय सैकदा । पातालसिद्धिदं मन्त्रं प्रददौ हाटकेश्वरम् ॥४६५॥ 465
मा भून्मोघास्य मत्प्रीतिरिति मत्वा तयार्पितम् । असाधयत्स तं प्राप्य वर्षान्ते वत्सरान्बहून् ॥४६६॥
कृत्वेष्टिकापथे कष्टं तपो नन्दिशिलां गतः । भूरिभिर्वत्सरैर्मन्त्रसिद्धेः प्रणयितां ययौ ॥४६७॥
स्वप्नेथ सिद्धिलिंगेथ जाताभङ्गुरनिश्चयः । चन्द्रभागाजलं भित्त्वा नमुचेः प्राविशद्विलम् ॥४६८॥
बिलेपावृततां याते दिवसान्येकविंशतिम् । प्रविश्य पौरास्तामन्ये दैत्यस्त्रीभोगभोगिताम् ॥४६९॥
एवं स भूपतिर्भुक्त्वा भुवं वर्षशतत्रयम् । निर्वाणशान्त्यनिर्व्यूढि पातालैश्वर्यमासदत् ॥४७०॥ 470
सानुगे नृपतौ याते दैतेयदयितान्तिकम् । देवी सा वैष्णवी शक्तिः श्वेतद्वीपमगाहत ॥४७१॥
राजवंशेष्वनेकेषु राज्ञोर्वंशद्वये परम् । द्वयोरेवात्र निर्व्यूढिं प्रजावात्सल्यमागतम् ॥४७२॥
रणादित्यस्य गोनन्दवंशे रामस्य राघवे । लोकान्तरमुखस्यापि ययोरंशभुजः प्रजाः ॥४७३॥
विक्रमाक्रान्तविश्वस्य विक्रमेश्वरकृत्सुतः । तस्यासीद्विक्रमादित्यस्त्रिविक्रमपराक्रमः ॥४७४॥
राजा ब्रह्मगल्लूनाभ्यां सचिवाभ्यां समं महीम् । सोपासीद्वासवसमो द्वाचत्वारिंशतिं समाः ॥४७५॥ 475
चक्रे ब्रह्ममठं ब्रह्मा गल्लूनो लूनदुष्कृतः । रत्नावल्याख्यया वध्वा विहारं निरमापयत् ॥४७६॥
राज्ञोनन्तरजस्तस्य राजाभूत्तदनन्तरम् । नापितारातिभूपालो बालादित्यो बलोर्जितः ॥४७७॥
लवणार्णवपानेन तर्वोरकर्षमिवोद्वहन् । यत्प्रतापो रिपुस्त्रीणां सनेत्राम्भोभजन्मुखम् ॥४७८॥
आसन्धैरिमनोगाधबोधदण्डा इवाहताः । यस्याद्यापि जयस्तम्भाः सन्ति ते पूर्ववारिधौ ॥४७९॥
प्रभावाङ्केन वङ्गाल्लाञ्छित्वा येन व्यधीयत । काश्मीरिकनिवासाय कालम्ब्याख्यो जनाश्रयः ॥४८०॥ 480
कश्मीरेषु धनोदयमग्रहारं द्विजन्मनाम् । राजा मडवराज्ये यो भेडराख्यमकारयत् ॥४८१॥
विशां विपाटितारिष्टमरिष्टोत्सादनं व्यधात् । वल्लभा यस्य बिम्बोष्ठी बिम्बा बिम्बेश्वरं हरम् ॥४८२॥
भ्रातरौ मन्त्रिणस्तस्य खखो मडसुरीकसौ । सेतोश्च कारका आसन्खङ्गशत्रुघ्नमाल्लवाः ॥४८३॥
बभूव तस्य भूभर्तुर्भुवनाद्भुतविभ्रमा । तनयानङ्गलेखाख्या शृङ्गारोदधिकौमुदी ॥४८४॥
तां वीक्ष्य लक्षणोपेतां मृगाक्षीं पितुरन्तिके । अमोघप्रत्ययो व्यक्तं व्याजहारेति दैववित् ॥४८५॥ 485
भविता तव जामाता जगतीभोगभाजनम् । स्वदन्तमेव साम्राज्यं गोनन्दान्वयजन्मनाम् ॥४८६॥
सुतासंतानसाम्राज्यमनिच्छन्नथ पार्थिवः । दैवं पुरुषकारेण जेतुमासीत्कृतोद्यमः ॥४८७॥

---

४६६. 1) Thus A; R G वंशान्ते; Edd. वत्सरान्. ४६७. 1) Thus $A_3$; $A_1$ तपो. ४६८. 1) Thus corr. by later hand from $A_1$ स्वप्ने°. ४७०. 1) Thus corr. by $A_2$ from $A_1$ भुक्त्वा.—2) Thus $A_2$; $A_1$ °स्वर्गम्. ४७३. 1) $A_1$ gloss वंशे.—2) $A_2$ gloss ययोः रामरणादित्ययोः. ४७९. 1) Emended; A R G °वहुता°. ४८०. 1) The words from कालम्ब्याख्यो to कारका in verse 483 have been supplied by $A_1$ at a later date and in a smaller handwriting, partly in space left for this purpose, partly in margin. ४८१. 1) Thus corr. by $A_2$ from $A_1$ भेदरा°. ४८२. 1) $A_2$ gloss रहीसावे. ४८३. 1) See note to verse 480 above.

अराजान्वयिने दत्ता नेयं साम्राज्यहारिणी । मत्वेति प्रददौ कन्यां न कस्मैचन भूभुजे ॥४८८॥
हेतुं स रूपतामात्रं कृत्वा जामातरं नृपः । अथाश्वघासकायस्थं चक्रे दुर्लभवर्धनम् ॥४८९॥
490 मातुः कार्कोटनागेन सुजातायाः समीयुषा । राज्यायैव हि संजातो राज्ञा नाज्ञायि तेन सः ॥४९०॥
निश्चिन्वते हि शंसन्त्या यमेवायोग्यमामहात् । जिगीषयेव तत्रैव निदधाति विधिः शुभम् ॥४९१॥
मात्सर्येण जहद्गृहान्विसदृशे धूमध्वजे योग्यतां ज्ञात्वा स्वां निदधात्त्विषं दिनपतिर्दास्यः प्रशान्त्युन्मुखः ।
दैवं वेत्ति न यः शिखी तु परतो नामास्तु तत्संभवाः स्युर्दीपा अपि यद्वशेन जगतस्तिग्मांशुविस्मारकाः ॥४९२॥
धिया भाग्यानुगामिन्या चेष्टमानो नयोचितम् । अभूत्सर्वस्य वश्युण्यः स तु दुर्लभवर्धनः ॥४९३॥
प्रज्ञया द्योतमानं तं प्रज्ञादित्य इति प्रथाम् । कौबेरभाग्यस्वाम्यं च शनकैः श्वशुरोऽनयत् ॥४९४॥
495 पित्रोः प्रेयस्तयोदृप्तां तारुण्यादिमदेन च । राजपुत्री यथावत्तु गणयामास नैव तम् ॥४९५॥
स्वैरिणीसंगमो भोगा युवानोऽपि पितुर्गृहम् । पत्युर्मृदुत्वमित्यस्याः किं नाभूच्छीलविप्रकृत् ॥४९६॥
सा नित्यदर्शनाभ्यासाच्छनकैर्विहिता मनः । अनङ्गलेखा खङ्खेन संप्रायुज्यत मन्त्रिणा ॥४९७॥
छन्नप्रेमसुखाभ्यासनष्टह्रीभीतिसंभ्रमा । धाष्ट्यं दिनादिनं यान्ती ततस्तन्मयतां ययौ ॥४९८॥
स मन्त्री दानमानाभ्यां वशीकृतपरिच्छदः । अन्तःपुरे यथाकामं विजहार तया सह ॥४९९॥
500 उपलेभे च शनकैस्तस्यास्तं शीलविप्लवम् । विरागलिङ्गैर्दयितैर्धीमान्दुर्लभवर्धनः ॥५००॥
सखीमध्ये रहः स्मेरा विवर्णा भर्तृदर्शने । अकाण्ड एव प्रोत्थाय पश्यन्ती सस्मितं पथः ॥५०१॥
पत्युः कोपे कृतावज्ञा भ्रूनेत्रचिबुकाञ्चनैः । तदप्रियं भाषमाणे सस्मितं न्यस्तलोचना ॥५०२॥
तत्तुल्यगुणनिर्विण्णा तद्विपक्षस्तुतौ रता । रिरंसां तस्य संलक्ष्य सखीभिर्बद्धसंकथा ॥५०३॥
तच्चुम्बने भुग्नकण्ठी तदाश्लेषसहाङ्गका । तत्संभोगे त्यक्तहर्षा तत्तल्पे व्याजनिद्रिता ॥५०४॥
505 भवेद्धि प्रायशो योषित्प्रेमविक्रीतचेतना । निवेदयन्ती दौःशील्यपिशाचावेशवैकृतम् ॥५०५॥ कुलकम् ॥
निगूढदारदौरात्म्यचिन्ताकृशवपुस्ततः । शुद्धान्तमविशज्जातु निशि दुर्लभवर्धनः ॥५०६॥
सोपश्यत्सुरतक्लान्तिसुलभस्वापनिःसहाम् । दुर्जारभर्तुरङ्गेषु प्रसुप्तामिव वल्लभाम् ॥५०७॥
श्वासैरपलितावेगैः कम्पयद्भिः कुचाङ्कुरौ । निवेदयन्तीं तत्कालमेव निर्वहणं रतेः ॥५०८॥
अन्यस्यापि क्रुधो हेतुं पुनरप्यक्षमावहाम् । तां तथावस्थितां वीक्ष्य स प्रजज्वाल मन्युना ॥५०९॥
510 प्रजिहीर्षुः स रोषेण विमर्शेन निवारितः । प्रहरस्येव प्रहरस्येत्र निकृन्तं स्वममन्यत ॥५१०॥
ततस्तथाविधः क्षुभ्यत्क्रोधावेशसागरः । विचारवेलया तस्य बलाच्छममनीयत ॥५११॥
नमस्तस्मै ततः कोऽन्यो गण्यते वशिनां धुरि । जीर्यन्ते येन पर्याप्ता ईर्ष्याविषविषूचिकाः ॥५१२॥
सोऽचिन्तयदहो कष्टाश्चेष्टा रागानुगा इमाः । विचारवन्ध्याः क्षिप्यन्ते क्षिप्रं याभिरधो नराः ॥५१३॥

---

४८८. [1]) $A_2$ gloss न्यूनकुलीकरणाय दत्ता. ४८९. [1]) कृत्वा जामा supplied by $A_2$ in space left by $A_1$. ४९०. [1]) Thus corr. by $A_2$ from $A_1$ समेयुषा.—[2]) Thus corr. by $A_2$ from $A_1$ सा. ४९२. [1]) Emended; A R G जहद्य°.—[2]) Thus $A_2$; $A_1$ स.—[3]) $A_2$ gloss दूरे इत्यर्थः. ४९५. [1]) $A_2$ gloss गर्वांपितमर्यादा. ४९७. [1]) Emended; A संप्रयु°. ४९९. [1]) $A_2$ सलम्. ५००. [1]) The text from मान्दुर्लभवर्धनः to the end of verse 507 below has been supplied by $A_2$, partly in space left by $A_1$, partly in margin. ५०४. [1]) Emended with Edd.; A °निद्रता. ५०७. [1]) $A_2$ दुर्जात°, with v. l. as above.—[2]) See note to verse 500 above. ५०८. [1]) Thus corr. by $A_2$ from $A_1$ °यन्ती. ५११. [1]) Thus corrected by $A_2$ from $A_1$ कष्टाः चेष्टा°.

क्षीणि नामेन्द्रियार्थोयमिन्द्रियार्थो यथा परे । तथैव सर्वसामान्या वशिनामत्र काः क्षुधः ॥५१४॥
निसर्गतरला नारीः को नियन्त्रयितुं क्षमः । नियन्त्रणेन किं वा स्याद्यत्सतां स्मरणोचितम् ॥५१५॥
यः शुनोरिव संघर्ष एकार्थाभिनिविष्टयोः । रागिणोर्यदि मानः स कोवमानस्ततः परः ॥५१६॥
ममकारो मृगाक्षीषु क इवायं सचेतसाम् । स्वदेहेनुपपन्नोपि यः सोन्यत्र कथं मतः ॥५१७॥
उद्वेगोत्पादनादेषा वध्या चेत्प्रतिभाति मे । रागस्तद्धि स्मृतः कस्मान्मूलमुद्वेगशाखिनः ॥५१८॥
सप्तपातालनिक्षिप्तमूलो रागमहीरुहः । भूमिभूतमनुत्पाट्य द्वेषमुन्मूल्यते कथम् ॥५१९॥
द्वेषो नामैव दुर्धर्षो जितो येन विवेकिना । क्षणार्धेनैव रागस्य तेन नामापि नाशितम् ॥५२०॥
वीक्ष्यैतद्विष्यता वृष्ट्या रागिणां वाच्यमौषधम् । ईर्ष्या जेया ततो रागः स्वयमाशाः पलायते ॥५२१॥
इति ध्यात्वालिखद्वर्णान्खङ्गस्यांशुकपल्लवे । बध्योपि न हतो यस्त्वं स्मर्तव्यं तत्त्वयेत्यसौ ॥५२२॥
जनैरलक्ष्यमाणोथ याते दुर्लभवर्धने । त्यक्तनिद्रः स मन्त्री तं दृष्ट्वा वर्णानवाचयत् ॥५२३॥
दाक्षिण्यात्प्राणदस्यास्य खड्गः स मनसा तदा । विसस्मारानङ्गलेखां दध्यौ तु प्रत्युपक्रियाम् ॥५२४॥
तस्योपकर्तुरुचितं प्रतिकारमिच्छोश्चिन्ताविशश्च तु मनः स्मरबाणपंक्तिः ।
दृग्गोचरे परिचयप्रणयं प्रपेदे निर्भिद्यता न तु कदाचन राजपुत्री ॥५२५॥
भुक्त्वा सप्तत्रिंशतिमब्दान्स चतुर्भिर्मासैर्वन्ध्यां मूर्धनि रत्नं नृपतीनाम् ।
तस्मिन्काले लोकप्रतापोज्ज्वलकृत्यो बालादित्यो बालशशाङ्काङ्कितमौलेः ॥५२६॥
पूर्वं विपन्नतनयेभिजनस्य शेषे गोनन्दसंततिरजायत तत्र शान्ते ।
प्राग्दन्तिभग्ननलिनाथ हठप्रविष्टतोयौघपाटितबिसा नलिनीव दीना ॥५२७॥
अथ शिथिलितमुख्यामात्यवैमत्यविघ्नः कनकघटविमुक्तैः पावनं तीर्थतोयैः ।
कथमपि स कृतज्ञो राजजामातुरन्वैर्व्यधित विधिवदिष्टं मूर्ध्नि राज्याभिषेकम् ॥५२८॥
कार्कोटप्रभवः प्रभुः स मुकुटप्रत्युप्तमुक्ताकणद्योतश्रेणिफणाङ्कुराङ्कितबृहद्राढूर्महीमुद्वहन् ।
शान्तिप्रीतिसतोषशेषफणभृत्संफुल्लदृक्पद्मवन्यासावर्जकनाडकाब्जपटलस्रग्धामशोभोभवत् ॥५२९॥
अथ विगलिता गोनन्दोर्वीभुजोभिजनाच्छुचेरतिशुचिनि भूः कार्कोटाहेः कुले व्यधित स्थितिम् ।
चिरपरिचितात्स्वर्गाभोगाध्वनः पतनं श्रिता त्रिभुवनगुरोः शंभोर्मौलाविवामरनिम्नगा ॥५३०॥

१० ॥ ५३६ ॥ आश्विनः ५३ ॥ सं १०६९॥
इति श्रीकाश्मीरिकमहामात्यश्रीचण्पकप्रभुसूनोः कल्हणस्य कृतौ राजतरङ्गिण्यां तृतीयस्तरङ्गः ॥[1]

---

५१६. [1]) $A_3$ gloss विरोधः. ५२२. [1]) Thus corr. by $A_2$ from $A_1$ °न्खङ्गस्या°. ५२३. [1]) मन्त्री स supplied by $A_2$ in space left by $A_1$. ५२४. [1]) तदा वि supplied by $A_2$ in space left by $A_1$. ५२६. [1]) Thus $A_1$; altered by $A_2$ to सप्तार्धि°.— [2]) $A_3$ gloss कृतानित्यार्थैः. ५२७. [1]) $A_3$ gloss तस्मिन्. ५२८. [1]) $A_3$ gloss खड्ग. ५२९. [1]) Thus corr. by $A_2$ from $A_1$ कार्कोट°. *Colophon.* [1]) $A_1$ adds here लिखितमेव मया राजानकरत्नकण्ठेन.

## ॥ चतुर्थस्तरङ्गः ॥

तद्वीतव्यतिरेकमद्वितयावेशेन भिन्नीभवद्भित्त्यस्थूलमिह व्यपोहतु वपुः स्थाणोरभद्राणि वः ।
वेण्या भोगिवधूशरीरकुटिलश्यामत्विषा वेष्टिता जूटाहेरपि यत्र भाति दयितामूर्त्यैव पृक्ता तनुः ॥१॥
स महीं राजकन्यां च प्राप्तवानेकतः कुलात् । रत्नानां च सुतानां च राजाभूद्भाजनं शनैः ॥२॥
पतिगोपितदौःशील्या तुल्यसौभाग्यगौरवा । अनङ्गभवनं चक्रे विहारं नृपतिप्रिया ॥३॥
शिशुर्देवायुषोल्पत्वं दैवज्ञोक्तं विचिन्तयन् । राज्ञः सुतो मल्हणाख्यो मल्हणस्वामिनं व्यधात् ॥४॥
पारेविशोककोटादौ प्रदत्तप्रतिपत्तिना । अदीयत द्विजेन्द्रेभ्यश्चन्द्रग्रामः क्षमाभुजा ॥५॥
श्रीनगर्यां प्रतिष्ठाप्य दुर्लभस्वामिनं हरिम् । षट्त्रिंशता स वर्षाणां क्ष्मावृषास्तमुपाययौ ॥६॥
अनङ्गदेव्यां संभूतस्तस्य दुर्लभकः सुतः । शशास वासवसमस्ततो वसुमतीं कृती ॥७॥
मातामहस्य यो मात्रा दौहित्रस्तनयीकृतः । प्रतापादित्य इत्याख्यां तत्कुलानुगुणां दधे ॥८॥
औडैनैडबिडाख्यामभिया यन्मन्त्रिणा कृताः । अग्रहारा हनुमता पुण्यानुमतसंपदा ॥९॥
प्रतापतापितारातिः प्रतापपुर[1]पत्तनम् । मघवन्नगरस्पर्धि दीर्घबाहुर्व्यधत्त सः ॥१०॥
नानादिगन्तरायाततत्तक्रयिकसंकुले । नोणाभिधोवसत्तस्य देशे रौहीतको वणिक् ॥११॥
रौहीतदेशे जातानां निवेशाय[1] द्विजन्मनाम् । महागुणो नोणमठं पुण्यज्येष्ठं चकार सः ॥१२॥
स जातु राजभवने राज्ञा प्रीत्या निमन्त्रितः । पूजितोभवदेकाहमुपचारैर्नृपोचितैः ॥१३॥
प्रातः सुखासिकां प्रेम्णा पृष्टोथ पृथिवीभुजा । शीर्षव्यथामकथयत्प्रजातां[1] दीपकज्जलैः ॥१४॥
ततः क्रमेण नृपतिस्तेन जातु कृतार्थनः[1] । वसंस्तदास्पदेद्राक्षीत्क्षपायां मणिदीपकान् ॥१५॥
विलासित्वेन लक्ष्म्या च तादृशया तस्य विस्मितः । अथ द्वित्राण्यहान्यासीत्तत्रैव स कृतार्हणः ॥१६॥
एकदा तेन तत्कान्ता व्यलोकि ललिताकृतिः । श्रीनरेन्द्रप्रभा नाम हर्म्ये हिमकरानना ॥१७॥
उरोजपूर्णकुम्भाङ्का सद्भ्रूर्वाहितविभ्रमा । मूर्तिमन्मङ्गलमिव स्मरस्य[2] च गृहस्य च ॥१८॥
हर्म्यस्य निर्जनतया स निःशङ्कविहारिणीम् । तां विलोक्यानवद्याङ्गीमभिलाषेण पस्पृशे ॥१९॥
सापि दर्शितमालीभिः किंचित्साचीकृतानना । अपश्यत्काश्यपीकान्तं श्रोत्रविश्रान्तया दृशा ॥२०॥
प्राग्जन्मप्रेमबन्धाढ्या निदेशाढ्या[1] मनोभुवः । सपक्षपातं सा तस्य दृष्टैव विदधे मनः ॥२१॥
क्षणादलब्धस्पर्शोपि तां सौभाग्यसुधामयीम् । मज्जानमपि[1] संस्पृश्य स्थितामिव विवेद सः ॥२२॥

---

१०. [1]) A₂ gloss तापर्. १२. [1]) A₂ gloss स्थितये. १४. [1]) Thus corr. by A₂ from A₁ प्रजाता. १५. [1]) Thus corr. by A₂; A₁ seems to have read कृतानन:. १८. [1]) A₁ gloss सन्ती च तावूक सबूक ताभ्यां आहितो विभ्रमो यया.—[2]) च स्मरस्य supplied by A₂ in space left by A₁. २१. [1]) Thus corr. by A₂ from A₁ निर्देशाढ्या. २२. [1]) Thus corr. by later hand from A₁ मज्जामामपि.

हर्म्यस्तम्भच्छन्नगात्री क्षणं भूत्वा जगाम सा । व्यावर्त्य वक्त्रं पश्यन्ती पार्थिवं तं मुहुर्मुहुः ॥२३॥
गृहीतहृदयस्तन्व्यास्तयैव महीपतिः । स चिन्ताजिह्मनयनो राजधानीं शनैर्ययौ ॥२४॥
अथ तस्य तदाकारध्यानावहितचक्षुषः । सममन्तःपुरप्रीत्या प्रपेदे तानवं तनुः ॥२५॥ 25
आचिन्तयच्च धिक्कष्टं क्लीबोयमशुभावहः । अस्मिन्मे मानसोद्याने रागनामा विषद्रुमः ॥२६॥
अहो नु दुर्भगा रागवृत्तिश्चित्तं विजित्य या । विवेकादीन्व्यधाद्दूरे सुहृदः परिपन्थकान् ॥२७॥
आढ्यं कौलीनशीलेन येन भूमिभृता सता । तस्य मे दुःसहः कोयं सदाचारविपर्ययः ॥२८॥
यत्र दारापहरणं राजैव कुरुते विशाम् । परः को नाम तत्रास्तु शासिता नीत्यतिक्रमे ॥२९॥
विमृशन्निति भूपालो विस्मर्तुमभवत्क्षमः । न पद्धतिं साधुसेव्यां न च तां दीर्घलोचनाम् ॥३०॥ 30
तमथ प्रथितास्वास्थ्यं नेदीयोमरणं वणिक् । स जनाज्ज्ञातवृत्तान्तः सुजनो विजनेऽब्रवीत् ॥३१॥
इमामवस्थां प्राप्नोसि किं धर्मेण निरुध्यसे । न प्राणसंशये जन्तोरकृत्यं नाम किंचन ॥३२॥
यन्मतानि प्रतीक्ष्यन्ते विबुधैर्धर्मसंशये । तेषामपीदृशे कृत्ये भूयते संयमव्ययः ॥३३॥
यशोनुरोधादुचितं नापि देहमुपेक्षितुम् । स्वकीर्तिर्न परासूनां कीर्तौ कर्णरसायना ॥३४॥
माभून्मदनुरोधस्ते त्वत्प्रियार्थं हि पार्थिव । प्राणा अपि न मे गण्या इन्द्रियार्थेषु का कथा ॥३५॥ 35
एवमुक्तोपि नादत्से तां चेत्तत्तां सुरास्पदात् । गृह्णतो नर्तकीभूत्वा नृत्तज्ञस्वाम्यथार्पिता ॥३६॥
तेनेति प्रथमाणः स बलिना च मनोभुवा । प्राग्लज्जामथ जग्राह कथंचित्तां सुलोचनाम् ॥३७॥
कृत्यैरुदात्तैः सापास्ततादृक्चारित्रलाञ्छना । नरेन्द्रमहिषी चक्रे श्रीनरेन्द्रेश्वरं हरम् ॥३८॥
क्रमेण च प्रजापुण्यैश्चन्द्रापीडाभिधं सुतम् । प्रासोष्ट पार्थिववधूर्निधानमिव मेदिनी ॥३९॥
तस्याभिजनमालिन्यं स्वच्छैरच्छेदि तद्गुणैः । शाणाश्मकषणैः कार्ष्ण्यमाकरोत्थं मणेरिव ॥४०॥ 40
धूमाद्वार्दमलीमसात्क्वचि पयः सूते घनस्योद्गमो लोहस्यातिशितस्य जातिरमलात्कुण्डाश्ममालामयात् ।
किंचात्यन्तजडाज्जलाद्द्युतिमतो ज्वालाध्वजस्योद्भवो जन्मावन्त्यनुकारिणो न महतां सत्यं स्वभावाः क्वचित् ॥४१॥
तारापीडोपि तनयः क्रमात्तस्यामजायत । अविमुक्तापीडनामा मुक्तापीडोपि भूपतेः ॥४२॥
वज्रादित्योदयादित्यललितादित्यसंज्ञकाः । प्रतापादित्यजाः ख्याताश्चन्द्रापीडादयोपि ते ॥४३॥
वर्षान्पञ्चाशतं भुक्त्वा भुवं दुर्लभभूपतिः । पुण्यनिःश्रेणिभिः पुण्यामारुरोह दिवं शनैः ॥४४॥
राजचूडामणिः श्रीमांश्चन्द्रापीडस्ततोभवत् । पीडितेन्दुत्विषा कीर्त्या कलेः पीडां चकार यः ॥४५॥ 45
एकपादाकृतिर्धर्मः समस्तैर्योज्झितो नृपैः । शुद्धश्लोककृता येन पादैः संयोजितस्त्रिभिः ॥४६॥
यं क्षमाविक्रममुखाः परस्परविरोधिनः । सिषेविरे गुणास्तुल्यं दिव्योद्यानमिवर्तवः ॥४७॥
स्थाने स्थाने यदीया श्रीस्तुल्यमाप्याययन्त्यभूत् । द्रुमानुद्यानकुल्येव निखिलाननुजीविनः ॥४८॥
दोषांस्त्यक्त्वान्यभूपेषु यं शुद्धा श्रीरशिश्रियत् । मार्गाद्रिस्रोतकालुष्यं हित्वा सिन्धुरिवार्णवम् ॥४९॥

२८. 1) चार supplied by $A_2$ in space left by $A_1$. २९. 1) शासिता supplied by $A_2$ in space left by $A_1$. ३०. 1) साधुसे supplied by $A_2$ in space left by $A_1$. ३४. 1) Thus corr. by $A_2$ from $A_1$ °कुर्वि.—2) Thus corr. by $A_2$ from $A_1$ कीर्त्य°. ३६. 1) $A_2$ सता.—2) $A_2$ gloss देवगृहात्. ४०. 1) $A_2$ gloss कुलदोषं.—2) Thus corr. by $A_2$ from $A_1$ °कषणैः. ४१. 1) Thus corr. by $A_2$ from धूमोद्गार°.—2) Thus corr. by $A_2$ from $A_1$ °श्यामली°—3) Thus $A_1$ with $A_2$ gloss भूमि. R G Edd. wrongly जन्मावन्त्य°.

50 कार्यज्ञो यो न तच्चक्रे यत्फलेभूद्धितैषिधीः । परे समाचरंस्तुल्यं स्तूयमानस्त्रपां दधे ॥५०॥
व्यनीयत न योमात्यैर्विनयं तान्स्वशिक्षयत् । वर्त्म न भिद्यते कैश्चिन्नैरयन्वाग्मिणीस्तु तत् ॥५१॥
यथ्योऽधर्मभयादासीत्संत्याज्यो धर्मसंशये । निजोपि पक्षः कुलिशत्रासादिव गरुत्मतः ॥५२॥
न्याय्यं दर्शयता वर्त्म तेन राज्ञा प्रवर्तिताः । स्थितयो वीतसन्देहा भास्वतेव दिनक्रियाः ॥५३॥
नियन्त्रिता यद्गणितिस्तद्गुणोदीरणादियम् । अतिप्रसङ्गभङ्गात्तत्रैयत्तावाप्तितः पुनः ॥५४॥
55 तस्य त्रिभुवनस्वामिप्रासादारम्भकर्मणि । चर्मकृत्कोपि न प्रादात्कुटीं क्षेत्रोपयोगिनीम् ॥५५॥
शश्वत्प्रतिश्रुतार्थानां नवकर्माधिकारिणाम् । नैसर्गिकाग्रहग्रस्तः सूत्रापातं न चक्षमे ॥५६॥
विज्ञापितोथ तैरेत्य तमर्थं पृथिवीपतिः । तानेव सागसो मेने चर्मकारं न तं पुनः ॥५७॥
सोभ्यधात्तान्धिगेतेषामप्रेक्षापूर्वकारिताम् । प्रागेव यैरपृष्ट्वा तं प्रविष्टं नवकर्मणि ॥५८॥
नियम्यतां विनिर्माणं यद्वान्यत्र विधीयताम् । परभूम्यपहारेण सुकृतं कः कलङ्कयेत् ॥५९॥
60 ये द्रष्टारः सदसतां ते धर्मविगुणाः क्रियाः । वयमेव विदध्मश्चेद्यातु न्याय्येन कोऽध्वना ॥६०॥
इत्युक्तवति भूपाले प्रेषितो मन्त्रिपर्षदा । पार्श्वात्पादुकृतस्तस्य दूतः प्राप्तो व्यजिज्ञपत् ॥६१॥
इच्छति स्वामिनं द्रष्टुं स च ब्रूते न चेन्मम । युक्तः प्रवेश आस्थाने बाह्यालयवसरेस्तु तत् ॥६२॥
अन्येद्युरथ भूपेन स बहिर्दत्तदर्शनः । पुण्यकर्मणि नो विघ्नः किं त्वमेवेत्यपृच्छ्यत ॥६३॥
प्रतिभाति गृहं तच्चेद्रम्यं तव ततोधिकम् । तदर्थ्यतां धनं वापि भूयैवं चाभ्यधीयत ॥६४॥
65 तूष्णीं स्थितं ततो भूपं चर्मकारो व्यजिज्ञपत् । दन्तांशुसूत्रैस्तत्सत्त्वमानं ज्ञातुमिवोद्यतः ॥६५॥
राजन्विज्ञाप्यते किंचिद्यदस्माभिर्यथाशयम् । न स्थेयमवलिप्तेन तत्र द्रष्टा सता त्वया ॥६६॥
नाहमूनः शुनो नास्ति काकुत्स्थात्पार्थिवः पृथुः । क्षुभ्यन्तीवाद्य तत्सभ्याः संलापेस्मिन्किमावयोः ॥६७॥
जातस्य जन्तोः संसारे भङ्गुरः कायकञ्चुकः । अहंताममताख्याभ्यां शङ्कुभ्यामेव बध्यते ॥६८॥
कङ्कणाङ्गदहारादिशोभिनां भवतां यथा । निष्किंचनानामस्माकं स्वदेहेहंक्रिया तथा ॥६९॥
70 देवस्य राजधान्येषा यादृशी सौधहासिनी । कुटी घटमुखानद्धमोरिस्तादृशी मम ॥७०॥
आ जन्मनः साक्षिणीयं मातेव सुखदुःखयोः । मटिका, लोठ्यमानाद्य नेक्षितुं क्षम्यते मया ॥७१॥
नृणां यद्वेश्महरणे दुःखमाख्यातुमीश्वरः । तद्विमानच्युतोमर्त्यो राज्यभ्रष्टोथ पार्थिवः ॥७२॥
एवमप्येत्य मद्वेश्म सा चेद्देवेन याच्यते । सदाचारानुरोधेन दातु तदुचितं मम ॥७३॥
इति तेनोत्तरे दत्ते भूभृद्गत्वा तदास्पदम् । कुटीं जग्राह वित्तेन नाभिमानः शुभार्थिनाम् ॥७४॥
75 अथाह चर्मकारस्तं तत्र स व्यञ्जिताञ्जलिः । राजन्धर्मानुरोधेन परवत्ता तवोचिता ॥७५॥
श्वविग्रहेण धर्मेण पाण्डुसूनोः पुरा यथा । धार्मिकत्वं तथा तेद्य मयास्पृश्येन वीक्षितम् ॥७६॥
स्वस्ति तुभ्यं चिरं स्थेया धर्म्या वृत्तान्तपद्धतीः । दर्शयन्नीदृशीः शुद्धाः श्रद्धेया धर्मचारिणाम् ॥७७॥

५०. [1]) Thus $A_3$, $A_1$ °चरंस्तुल्यं. ५१. [1]) Thus $A_3$; $A_1$ वाग्मिभिर्नि° G R Edd. follow $A_g$.—[2]) $A_3$ gloss रक्षी. ५२. [1]) Thus corr. by $A_1$ from $A_1$ वस्य थ°.—[2]) Thus $A_3$, $A_1$ °स्मता. ५३. [1]) $A_1$ gloss मन्त्रेष्टा नाम राजसचिवोत्पाद्य. ५४. [1]) $A_3$ gloss अस्मादि°. ६१. [1]) $A_1$ gloss चर्मकारस्य. ६६. [1]) $A_3$ विज्ञप्यते.—[2]) Thus corr. by $A_1$ from यथाशयम्. ६७. [1]) $A_3$ नास्ति. ७३. [1]) $A_3$ उपेत्य.—[2]) Thus corr. by later hand from $A_1$ देव च; $A_3$ gloss नृपेण. ७५. [1]) $A_3$ ततः. ७६. [1]) $A_1$ मया ऽस्पृश्येन; $A_3$ gloss अधमेन.

भ्रमयन्क्षेपणीयं स क्षिप्ताश्मानं तदान्तरे । सोयं हतो मया जज्ज इत्यमोघक्रियोऽवदत् ॥४७७॥
सोहायकाय राज्ञोऽथ वार्तामीस्युक्तार्पितार्पनः । मातुर्वैसन्त्या जज्जस्य प्रतिज्ञायायसौ वधम् ॥४७८॥
अश्मसंचूर्णभीमास्यं मुमूर्षुं पतितं हयात् । विवेष्टमानं मेदिन्यां जज्जं त्यक्त्वा ययुर्निजाः ॥४७९॥
480 स समर्थीहिताघातचिन्तासततदुःस्थितः । द्रोहार्जितैर्न राज्येन त्रिभिर्वर्षैर्व्ययुज्यत ॥४८०॥
न्यासापहाराहरणजा वेश्यानां कामिवञ्चनात् । द्रोहाच्चोपनता राज्ञामस्थिरा एव संपदः ॥४८१॥
हते जज्जे जयापीडः प्रत्याहृत्य निजां श्रियम् । जग्राह दोष्णा भूभारं कृत्स्नेन च सतां मनः ॥४८२॥
प्रपेदे यत्र कल्याणं स विरोधिवधान्नृपः । देशे कल्याणपुरकृत्तत्र कल्याणदेव्यभूत् ॥४८३॥
राजा मल्हाणपुरकृच्चक्रे विपुलकेशवम् । कमला तां स्वनाम्नापि कमलाख्यं पुरं व्यधात् ॥४८४॥
485 महाप्रतीहारपीडाधिकारं प्रतिपद्य सः । कल्याणदेवीदाक्षिण्यादकरोदधिकोन्नतिम् ॥४८५॥
उत्पत्तिभूमौ देशेऽस्मिन्दूरदूरतिरोहिता । कश्यपेन वितस्तेव तेन विद्यावतारिता ॥४८६॥
वचोमूर्खोऽयमित्येव कस्मैचिद्वदते स्फुटम् । सर्वज्ञानान्ददच्चक्रे सर्वान्विद्याभियोगिनः ॥४८७॥
देशान्तरादागमय्य व्याचक्षाणान्क्षमापतिः । प्रावर्तयत विच्छिन्नं महाभाष्यं स्वमण्डले ॥४८८॥
क्षीराभिधाच्छब्दविद्योपाध्यायात्संभृतश्रुतः । बुधैः सह ययौ वृद्धिं स जयापीडपण्डितः ॥४८९॥
490 भूपतेरात्मना स्पर्धां चक्षमे न स कस्यचित् । आत्मनस्तु बुधैः स्पर्धां शुद्धधीर्बह्वमन्यत ॥४९०॥
तावत्पण्डितशब्देऽभूद्राजशब्दादपि प्रथा । तैस्तैर्दोषैर्न तु म्लानिं कालान्तरवशाद्ययौ ॥४९१॥
नृपतौ विद्वदायत्ते राजसांमुख्यकाङ्क्षिभिः । गृहा बभूवुर्विदुषां व्याप्ताः सेवागतैर्नृपैः ॥४९२॥
समपदीत्तथा राजा सोऽन्विष्य निखिलान्बुधान् । विद्वद्भिक्षमभवद्यथान्यनृपमण्डले ॥४९३॥
अध्यक्षो भक्तशालायां शुक्रदन्तस्य मन्त्रिणः । विप्रस्तथा थक्कियाख्यस्तेन स्वीकृत्य वर्धितः ॥४९४॥
495 विद्वान्दीनारलक्षेण प्रत्यहं कृतवेतनः । भट्टोऽभूदुद्भटस्तस्य भूमिभर्तुः सभापतिः ॥४९५॥
स दामोदरगुप्ताख्यं कुट्टनीमतकारिणम् । कविं कविं बलिरिव धुर्यं धीसचिवं व्यधात् ॥४९६॥
मनोरथः शङ्खदत्तश्चटकः संधिमांस्तथा । बभूवुः कवयस्तस्य वामनाद्याश्च मन्त्रिणः ॥४९७॥
स स्वप्ने पश्चिमाशायां लक्षयन्नुदयं रवेः । देशे धर्मोत्तराचार्यं प्रविष्टं साध्वमन्यत ॥४९८॥
सचेताः संस्तवव्यक्ताविव कृत्स्नो बभूव सः । भावानां भुज्यमानानामास्वादान्तरवित्नृपः ॥४९९॥
500 अपश्यद्भिर्महास्वादान्भावान्स्वादुविवेकिभिः । किं श्रेयमशनादन्यत्स्मार्यैरन्धैरिवोक्षभिः ॥५००॥

---

४७८. ¹) $A_2$ indicates by asterisks and the marginal note मण्डले साहायकाय, a different reading in which this verse followed after verse 474.—²) Thus $A_2$; $A_1$ वितावान:. ४७९. ¹) Thus $A_1$; $A_2$ °संतीर्य°. ४८०. ¹) Thus $A_2$; $A_1$ द्रोहार्जितेन. ४८१. ¹) Thus corr. by $A_2$ from $A_1$ °चोपहता. ४८४. ¹) $A_1$ gloss मलरी इति भाषया.—²) Doubtful: thus $A_2$; $A_1$ चिरलके°; $A_2$ मरलकेशवम्.—³) Thus corr. by $A_2$ from $A_1$ स्वा.—⁴) $A_2$ gloss कलमपुरं. ४८५. ¹) Thus corr. by $A_2$ from $A_1$ °पेडाधि°. Cf. महाप्रतीहारपीडा iv. 142.—²) Thus $A_1$; $A_2$ °देवी and °नताम्. ४८६. ¹) Thus G B Edd.; A °हिती. ४८७. ¹) देशान्तरा supplied by $A_2$ in space left by $A_1$. ४८८. ¹) $A_2$ gloss प्रापय्य.—²) Thus $A_2$; $A_1$ °चक्षाण:, ४८९. ¹) $A_2$ gloss क्षीरस्वामिन:. ४९२. ¹) Thus corr. by $A_1$ from राजस°. ४९४. ¹) Thus corr. by later hand from $A_1$ थाकथा°. ४९५. ¹) $A_2$ gloss महोद्भट आलङ्कारिक:. ४९६. ¹) $A_2$ °कारणम्.—²) $A_2$ gloss मुख्य°. ४९८. ¹) Thus $A_2$; $A_1$ सुस्वप्नं.—²) Thus according to marginal note of $A_2$ देशे धर्मोत्तराचार्यमित्यन्यादर्शे; $A_1$ देशे धर्मोत्तराचार्ये. ५००. ¹) Thus corr. by $A_2$ from $A_1$ °रन्धैरि°.

आक्रन्दस्य चितां कृतानुमरणोद्योगप्रियालिङ्गनं पुण्ड्रेशुद्रवपानमुल्बणमहामोहप्रलुप्तस्मृतेः ।
वीताचोरवलंसमाल्यवलयामोदश्च यामत्रयेऽप्याशानां सुभगः स्वभावमहिमा निश्चेतसस्तादृशः ॥५०१॥
मन्त्रिविक्रमयोस्तस्य द्वयोर्दर्पणयोरिव । एकैव बिम्बिता मूर्तिः सहस्रगुणतां ययौ ॥५०२॥
आंकुर्वन्विगुणामाज्ञां लङ्केन्द्रोऽस्य च राक्षसान् । तेनानयेति जगदे दूतो जातु पुरः स्थितः ॥५०३॥
सांधिविग्रहिकः सोऽथ पञ्चकपोताच्च्युतोऽम्बुधौ । प्राप पारं तिमिग्रासं तिमिमुत्पाट्य निर्गतः ॥५०४॥
नियमस्थो रामभक्त्या नृपाज्ञालेखवाचिनम् । स्वदेशमनयत्तं रक्षोभिस्तं विभीषणः ॥५०५॥ 505
दूतं वित्तैः पूरयित्वा सरोगार्थं च राक्षसैः । चक्रे जयपुरं कोट्टं त्रिविष्टपसमं नृपः ॥५०६॥
बुद्धत्रयं महाकारं विहारं च विधाय सः । नगरान्तर्जयादेवीं पुण्यकर्मा स निर्ममे ॥५०७॥
तत्पुरे चतुरात्मा च शेषशायी च केशवः । विष्णुलोकस्थितिं त्यक्त्वा ध्रुवं भाति संनिधिम् ॥५०८॥
अन्यत्कर्मान्तरं किंचित्कारयित्वा स राक्षसान् । व्यधात्खातमिरेवाम्भ इति शंसन्ति केचन ॥५०९॥
स हि स्वप्ने जलान्तर्मे कुरु द्वारवतीमिति । उक्तः कंसारिणा चक्रे विनिर्माणं तथाविधम् ॥५१०॥ 510
श्रीद्वारवत्यधिष्ठानं बाह्यं कोट्टं तथा वशी । अभ्यंतरं जयपुरं ब्रूतेऽद्याप्यखिलो जनः ॥५११॥
मन्त्री पञ्चमहाशब्दभाजनं जगतीभुजः । तस्मिञ्जयपुरे कोट्टे जयदत्तो व्यधान्मठम् ॥५१२॥
राजसूनुः प्रमोदस्य जामाता मथुरापतेः । आचाभिधो व्यरचयच्छुचिराचेश्वरं हरम् ॥५१३॥
पुनः संभृतसामर्थ्यो दिग्जयाय विनिर्ययौ । बलैर्जलधिवेलाद्रीन्द्रावयन्नघुद्विपैः ॥५१४॥
संप्रविष्टापि पूर्वाब्धिमविच्छिन्ना हिमाचले । भगीरथस्य गङ्गेव रेजे तस्यानुगा चमूः ॥५१५॥ 515
सार्धं प्रचण्डैश्चण्डालैरटन्तः कटकाद्बहिः । तस्यासन्यामिका रात्रौ मुम्मुनिप्रमुखा नृपाः ॥५१६॥
नामान्यद्विनयादित्य इति प्रख्यापयन्नृपः । पूर्वाशां विनयादित्यपुरेणालंकृतां व्यधात् ॥५१७॥
अत्युत्सेकेन महसां साहसाध्यवसायिनाम् । भीरारोहति संदेहं महतामपि भूभृताम् ॥५१८॥
भीमसेनाभिधानस्य स दुर्गं पूर्वदिक्पतेः । निःशब्दो व्रतिभिः सार्धं व्रतिलिङ्गी विवेश यत् ॥५१९॥
तं रन्ध्रान्वेषिणं तत्र परिज्ञाय चिरस्थितः । भ्राता जज्जस्य सिद्धाख्यो गत्वा राज्ञे न्यवेदयत् ॥५२०॥ 520
भूपतिं भीमसेनोऽथ राजाकस्माद्बबन्ध तम् । नहुषाजगरो भीममिव भीमपराक्रमम् ॥५२१॥
तस्मिन्वीरे तथा बद्धे धुर्ये पुरुषकारिणाम् । पौरुषद्वेषिणा जाने दैवेनोन्नमितं शिरः ॥५२२॥
जयापीडस्त्वसंमूढो व्यसनेऽप्यतिदारुणे । तांस्तान्संचिन्तयन्नासीदुपायानुदयोन्मुखः ॥५२३॥
अत्रान्तरे नरपतेः पौराणामतिदुस्तरा । लूतामयकृता व्यापदुदपाद्यत मण्डले ॥५२४॥

५०१. 1) A2 note in margin: आक्रन्दस्येत्यादिस्थाने चण्डस्यीन्मदवालपकु अनुलीपीनस्तनालिङ्गनमित्यपि पाठो रम्यः. ५०३. 1) The original reading of A1, अकुर्वन्वि°, has been corrected into आंकुर्वन्वि° by a later hand, probably A2; A2 explains the latter reading by the gloss विगुणामपि आज्ञामांकुर्वन् ओं अङ्गीकारे. A2 gives the interlinear note अकुर्वन्विगुणामित्यन्यादर्शे, and explains this reading in margin: दूतः किं कुर्वन् आज्ञां राजसम्बन्धिनीं विगुणां निष्फलां अकुर्वन् न विरचयन् मानयन्नाज्ञामित्यर्थः.—2) Thus corr. by A2 from A1 लङ्केन्द्रात्पञ्च. ५०४. 1) Thus corr. by later hand from A1 °प्रहक. ५०७. 1) बुद्ध supplied by A2 in space left by A1; found also in G R; C बुर°. ५११. 1) Thus A R G; C राज्यं.—2) A gloss अन्तर्कोट इति भाषया. ५१३. 1) Thus corr. by A2 from A1 मथुरा°. ५१५. 1) Thus corr. by A2 from A1 °ष्टि. ५१८. 1) Thus A2; A1 सहसा.—2) Thus corr. by A2 from A1 सहसाध्यवसायिनाम्; A2 gloss साहसेन हिताहितानपेक्षेण कर्मणा अध्यवसायी येषां. ५१९. 1) Thus A2; A1 °भूपतेः. ५२१. 1) Thus corr. by A2 from A1 °पतिर्भीम°. ५२४. 1) A2 gloss ऊर्णनाभो रक्तवर्णः पिङ्गलाकृतिर्विसर्पः तत्स्पर्शात् च त्वचि दीर्घविशेषः लूताख्यः रोगः इति प्रसिद्धः.

525 आमयः स्पर्शसंचारी[1] तत्र व्यापादकश्च सः । देशाद्दोषादतो जन्तुर्लूताव्याप्तो विवर्ज्यते ॥५२५॥
तदाकर्ण्य जयापीडो ज्ञातोपायप्रयुक्तधीः । स्वभृत्येनोपयुक्तानि द्रव्याण्यानीतवानदः ॥५२६॥
तैः पित्तोद्रेककैर्मुक्तैर्ज्वलत्पित्तोग्रहज्ज्वरम् । वटवृक्षपयश्चाङ्गे क्षिप्त्वा सपिटकोभवत् ॥५२७॥
तं लूताव्याप्तमाकर्ण्य विपक्षो रक्षिणां मुखात् । विपत्स्यते ध्रुवमिति ध्यात्वा देशाद्बहिर्व्यधात् ॥५२८॥
एवं स्वमतिमाहात्म्यात्संतीर्णो विपदर्णवात् । व्याप्तव्योमामहीभुजं यशश्च परिपन्थिनः ॥५२९॥
यः सर्वकालमबुधैः परिहस्यमानो मूलाङ्कुराद्यपि न जातु पुरस्करोति ।
530 व्यापत्सु शास्त्रविटपी स फलं प्रसूय पुंसः किलैकपद एव लुनात्यलक्ष्मीम् ॥५३०॥
तमिच्छन्नभिसंधातुं विद्याविक्रमसंयुतः । मायाव्यरमुडिर्नाम राजा नेपालपालकः ॥५३१॥
अकृतप्रणतिस्तस्य प्रविष्टस्य स्वमण्डलम् । अयात्सुदूरमध्वानं ससैन्योऽपससार सः ॥५३२॥
जिगीषोस्तस्य तु तथा तत्पार्थिवनिर्जयः । पृथक्प्रयत्ननिर्वर्त्यो माभूत्तदनुसारिणः ॥५३३॥
भग्नं क्वापि क्वचिद्दृश्यं प्रतिदेशं स वैरिणम् । श्येनः कपोतं कक्ष्यान्तरिवान्विष्यञ्जगाम सः ॥५३४॥
535 ततो निःशेषितापाये तस्मिन्कुर्वन्स दिग्जयम् । आसन्नाब्धेस्तटे सिन्धोः[1] समुपावेशयद्बलम् ॥५३५॥
प्रतस्थे दिवसैर्द्वित्रैरथ पूर्वार्णवोन्मुखः । कर्षन्वेलानिलस्पर्शोत्सृष्टध्वजपटाश्चमूः ॥५३६॥
ततस्तस्मिन्सरित्पारे दक्षिणस्मिन्समापतेः । तस्थावरमुडिः सैन्यं स्वच्छत्राङ्कं प्रकाशयन् ॥५३७॥
भूरिभेरीरवोद्गारि प्रबलं वीक्ष्य तद्बलम् । प्रजज्वाल जयापीडः पीतसर्पिरिवानलः ॥५३८॥
स जानुदघ्नं निर्विघ्नं पश्यन्नग्रे सरिज्जलम् । अपूर्वत्वादभूमिज्ञः क्रुद्धस्तर्तुं[1] व्यगाहत ॥५३९॥
540 मध्यं प्राप्ते नृपे पूर्णा वेलया वर्धमानया । अकालेऽभूदगाधाम्भाः सार्णवाभ्यर्णगा सरित् ॥५४०॥
नरनागाश्वबहुलं तथा सैन्यं महीपतेः । प्रवृद्धया प्लाव्यमानं क्षणात्संक्षयमाययौ ॥५४१॥
नृपतिर्वीचिसंमर्दभ्रंशिताभरणांशुकः । बाहुभ्यां लहरीच्छिन्नच्छत्रैर्दूरमनीयत ॥५४२॥
एकस्य करुणाक्रन्दैः सैन्यस्यान्यस्य गर्जितैः । सरित्तरङ्गघोषैश्च बभूवुस्तुमुला दिशः ॥५४३॥
क्षिप्रकारी सदृतिभिः संनद्धैः सरितोन्तरात् । स चाकृष्य जयापीडं बबन्ध विहितोत्सवः ॥५४४॥
दैवस्याम्बुमुचश्च नास्ति नियमः कोऽप्यानुकूल्यं प्रति व्यक्तं यः प्रियमुत्कटं घटयते जन्तोः क्षणादप्रियम् ।
54 क्षिप्रं दीर्घनिदाघवासरविपत्संतापनिर्वापणं प्रादुष्कृत्य वनस्पतेः प्रकुरुते विद्युद्विसर्गं च यः ॥५४५॥
स कालगण्डिकातीराभ्यासस्थाश्ममवेश्मनि । निचिक्षेप जयापीडमाप्तानां[1] रक्षिणां करे ॥५४६॥
तथा काश्मीरिको राजा निमग्नो व्यसने पुनः । स किंकर्तव्यतामूढः शुचा गूढमदह्यत ॥५४७॥
कलावत्त्व शशाङ्कोपि तेजस्वित्वमर्यमापि तम् । न ददर्श यथा धीमान्स ररक्ष तथा नृपः ॥५४८॥
अपश्यन्निर्गतः[1] किंचिदालोकन्यस्तलोचनः[2] । आसन्नां तटिनीमासीदुपायांश्च स चिन्तयन् ॥५४९॥

---

५२५. 1) Thus corr. by $A_1$ from सर्वसं°. ५३२. 1) $A_4$ gloss अरमुडिः.—2) $A_4$ gloss जयापीडस्य.—3) Thus $A_1$; $A_2$ अयात्सु°; G R have both readings. ५३३. 1) $A_4$ gloss जयापीडस्य. ५३४. 1) $A_3$ gloss श्येनः कपोतं भक्षयतीति प्रसिद्धिः.—2) Emended; A G R °न्वेष्य°. ५३५. 1) $A_2$ gloss सरितः. ५३७. 1) Thus corr. by $A_2$ from $A_1$ तस्थावुरमुडेः. ५३९. 1) Thus corr. by $A_2$ from $A_1$ °स्तर्त. ५४२. 1) Thus corr. by $A_2$ from $A_1$ °मर्न°. ५४४. 1) $A_2$ gloss दृतिः जलोत्तरणार्थं भस्त्रा इति प्रसिद्धा. ५४६. 1) Thus corr. by $A_2$ from $A_1$ °पीडं समानां. ५४९. 1) Thus corr. by later hand from $A_1$ निर्वतः.—2) $A_3$ gloss आलोक्यतेनेनेत्यालोकं वातायनं । तस्मिन् न्यस्ते लोचने येन सः.

अथस्यावेदकास्तत्र पठिताः पृथिवीभुजा । आक्रान्तःकरणैः श्लोकाः स्वर्गमन्येनापि सूरिभिः ॥५५०॥ 550

तथा तस्मिन्स्थिते मानी देवशर्मैव मन्त्रिषु । चिन्तयन्स्वामिसंमानमनिशं पर्यतप्यत ॥५५१॥

भर्तुः स्वदेहत्यागेन स हितं कर्तुमुद्यतः । दूतैररमुडेश्चक्रे प्रियवाग्भिः प्रलोभनम् ॥५५२॥

जयापीडभिया सार्कं राज्यं कश्मीरमण्डले । दास्यामि तुभ्यमित्यस्य दूतैः स आशितोभवत ॥५५३॥

ग्रामेषु प्रतिहूतेषु पूर्णायामथ संविदि । गृहीतकटको मन्त्री नेपालविषयं ययौ ॥५५४॥

स कालगण्डिकासिन्धोरर्वाचि कटकं तटे । स्थापयित्वा परं पारं ययौ मितपरिच्छदः ॥५५५॥ 555

सामन्तैरममायातैस्तां सभां संप्रवेशितम् । सत्कृत्यारमुडिः प्रह्वं न्यवेशयत विष्टरे ॥५५६॥

अध्वभ्रान्त इति क्षिप्रं प्रतिमुक्तः क्षमाभुजा । तद्दिष्टोपचारस्तत्रिनायावसथे दिनम् ॥५५७॥

स चारमुडिभूभृच्च पीतकोशौ परस्परम् । आसतां निर्जनेन्येद्युः कर्तव्यकृतनिश्चयौ ॥५५८॥

नृपमूचेथ सचिवो जयापीडार्जितं धनम् । अस्ति सैन्ये तदाप्तानां तस्य वा विदितं च तत् ॥५५९॥

दानेन भविता मोक्षस्तवेत्युक्त्वा विमोहयन् । तस्मात्तं प्रष्टुमिच्छामि क्व वस्तु न्यस्तमित्यहम् ॥५६०॥ 560

अत एव मया सैन्यं संहतं न प्रवेशितम् । यदेतन्मध्यगाः शक्या न वक्तुं न्यासधारिणः ॥५६१॥

तस्मादेकैकमाहूय तेषु बद्धेषु सैनिकाः । कोपमज्ञातहृदया न यास्यन्ति विपक्षवः ॥५६२॥

एवं विमोहितात्तस्मात्प्राज्ञोनुज्ञां स लब्धवान् । बद्धस्य प्रययौ पार्श्वं जयापीडमहीभुजः ॥५६३॥

तदालोकनजं शोकं गोपयन्धैर्यसागरः । गृहं तन्निर्जनं कृत्वा क्षिप्रं पप्रच्छ तं नृपम् ॥५६४॥

अपि त्वया निजं तेजो भित्तिभूतं न हारितम् । तस्मिन्हि सति सिध्यन्ति साहसालेख्यकल्पनाः ॥५६५॥ 565

स तं बभाषे निःशस्त्रो मन्त्रिन्नेवं व्यवस्थितः । अद्भुतं कर्म किं कुर्यां ध्रियमाणेन तेजसा ॥५६६॥

मन्त्री तमूचे तेजश्चेद्राजन्न निसृतं तव । जानीहि तत्क्षणेनैव लङ्घितं विपदर्णवम् ॥५६७॥

अपि वातायनादस्मात्पतित्वा निम्नगाम्भसि । पारं गन्तुं समर्थोसि सैन्यं यत्र निजं तव ॥५६८॥

राजा जगाद तं नास्मात्पतितव्योत्थीयतेम्भसः । विना दृतिं दृतिश्चात्र दुरपाताद्विदीर्यते ॥५६९॥

तस्मान्नायमुपायोत्र न च नाम विमानितः । बहु मन्ये तनुत्यागमनिर्मथ्यापकारिणम् ॥५७०॥ 570

ततो निश्चित्य सोमात्यस्तमवादीन्महीपते । बहिः केनाप्युपायेन वहेस्त्वं नालिकाद्वयम् ॥५७१॥

प्रविश्यैकाकिनैवाद्य दृढदः संभृतो मया । सरिदुत्तरणोपायः सोनुष्ठेयोप्यशङ्कितम् ॥५७२॥

श्रुत्वेति निर्गतो गत्वा पादक्षालनवेश्म सः । सविलम्बं बहिर्वेलां तदुक्तामत्यवाहयत् ॥५७३॥

एकाकी संप्रविष्टोथ तं ददर्श च्युतं क्षितौ । विपन्नं गलमुद्बध्य दृढया चेलचीरया ॥५७४॥

---

५५०. [1]) $A_2$ gloss कम्पनीह्यपि. ५५१. [1]) Thus corr. by later hand from $A_1$ °न्स्थितो. ५५२. [1]) न supplied by $A_2$.—[2]) Emended; $A_1$ °रारमुडेश्चक्रे, changed by later hand to °मुडेश्चक्रे.—[3]) Thus corr. by later hand from $A_1$ °प्रिय-विलोभनम्. ५५६. [1]) Thus corr. by $A_2$ from $A_1$ °डेः. ५५७. [1]) Thus $A_1$; $A_2$ प्रतिक्षिप्तः. ५५८. [1]) $A_2$ gloss पीतकोशौ कृतशौचिकाविथर्थः; to शौचिका° $A_2$ adds the note शपथः. ५६१. [1]) Thus corr. by $A_2$ from $A_1$ यदि तन्म°; $A_2$ gloss कृतन्यासाः संहतसैन्यमध्यगाः इत्यर्थः.—[2]) Thus corr. by $A_2$ from $A_1$ बन्धुं. ५६३. [1]) Thus $A_2$; $A_1$ प्राज्ञोप्याज्ञां; R G follow $A_2$. ५६४. [1]) Thus corr. by $A_2$ from $A_1$ धैर्य° ५६९. [1]) Thus corr. by $A_2$ from $A_1$ दृति.—[2]) Thus corr. by later hand from $A_1$ बहुत्वं; $A_2$ gloss बहिः गमयेत्यर्थ.—[3]) $A_2$ gloss घटिकाद्वयमित्यर्थः. ५७३. [1]) Thus corr. by $A_2$ from $A_1$ पाद°.—[2]) $A_2$ gloss घटिकाद्वयकल्पां.

575 सद्यो व्यापादिततनुः श्वासापूरितविग्रहः । अभेद्योहं तव दृतिर्मामारुह्य तरापगाम् ॥५७५॥
आरोढुरूर्वन्धाय स्वोर्वोरुष्णीषपट्टिकां । बद्धा मया तां प्रविश्य क्षिप्रमेव पताम्भसि ॥५७६॥
नखनिर्भिन्नगात्राक्तलिखितामिति संविदम् । दृष्ट्वा वाचावसत्कण्ठनिबद्धांशुकपल्लवे ॥५७७॥ तिलकम् ॥
विस्मयखेदयोः पश्चात्पूर्वं स सरितस्ततः । प्रवाहे पतितो राजा परं पारं समासदत् ॥५७८॥
प्राप्तसैन्यः प्रविश्याथ क्षणेनैव निनाय सः । तमशेषं सभूपालं नेपालविषयं क्षयम् ॥५७९॥
580 रक्षिणोपि न यावत्तमजानन्बन्धनाच्युतम् । तावदेव कथाशेषं विषयं तं चकार सः ॥५८०॥
नृत्यत्कबन्धः स्वर्गस्त्रीमुक्तसत्तूर्यघोषवान् । भूपतेर्बन्धनान्मोक्षे बभूव समरोत्सवः ॥५८१॥
दावानलोल्बणभुवो गिरयो निदाघे यत्रैव दूरमितरे परिवर्जनीयाः ।
तत्रैव संभवति सान्द्रहिमद्रवार्द्रश्चित्रं तुषारशिखरी नितरां निषेव्यः ॥५८२॥
अज्जादीनां क्षणे यत्र जन्म स्वामिद्रुहामभूत् । तत्रैव मन्त्रिणश्चित्रं कृतिनो देवशर्मणः ॥५८३॥
नाभूद्धि सदृशः सूनुः स पितुर्मित्रशर्मणः । तमोमयो भास्वरस्य भानोरिव शनैश्चरः ॥५८४॥
585 रत्नाकरोपमे तस्मिन्सन्निवेसमुपागते । प्राप्तामपि श्रियं मेने नृपतिर्हारितामिव ॥५८५॥
तस्य दिग्विजयस्यान्ते मानम्लानिर्विनिर्ययौ । मानसात्पृथिवीभर्तुर्नामास्योपक्रिया पुनः ॥५८६॥
चित्रं जितवतस्तस्य स्त्रीराज्ये मण्डलं महत् । इन्द्रियग्रामविजयं बहुमन्यन्त भूभुजः ॥५८७॥
कर्णश्रीपटमाबध्य स्त्रीराज्यान्निर्जिताहृतम् । धर्माधिकरणाख्यं च कर्मस्थानं विनिर्ममे ॥५८८॥
द्वितीयं चलगञ्जाख्यं कर्मस्थानमपि व्यधात् । उपयुक्तं प्रयाणेषु गञ्जे दूरस्थिते निजे ॥५८९॥
590 किमन्यत्तद्भुजावासनिवासिन्या जयश्रियः । चत्वारोम्बुधयोभूवन्विलासमणिदर्पणाः ॥५९०॥
पुनः प्रविश्य कश्मीरान्स भूपैः परिवारितः । चिराय बुभुजे राजा विजयोपार्जितां श्रियम् ॥५९१॥
तं कदाचिन्नृपं स्वप्ने सर्वाशाविजयोर्जितम् । पुमान्दिव्याकृतिः कोपि व्याजहार कृताञ्जलिः ॥५९२॥
सुखं त्वद्विषये राजन्वसत्यस्मि सबान्धवः । नागेन्द्रोहं महापद्मनामा त्वां शरणं श्रितः ॥५९३॥
द्राविडो मान्त्रिकः कश्चिन्मामितो नेतुमुद्यतः । जलाकाङ्क्षिणि वित्तेन विक्रेतुं मरुमण्डले ॥५९४॥
595 तस्माद्रक्षसि मां तत्ते स्वर्णधातुभवं गिरिम् । त्वद्देशे दर्शयिष्यामि स्फीतोपकृतिकारिणः ॥५९५॥
राजा स्वप्ने निशम्येति दिक्षु संप्रेरितैश्चरैः । कुतोपि प्राप्तमानीय तं पप्रच्छ चिकीर्षितम् ॥५९६॥
दत्ताभयः स नागोक्तं यथावत्सर्वमुक्तवान् । सविस्मयेन भूभर्त्रा स्वयं भूयोप्यपृच्छ्यत ॥५९७॥
भूरियोजनविस्तीर्णात्सरसोभ्यन्तरास्त्वया । नागः प्रभावोत्कृष्टः स निष्क्रष्टुं शक्यते कथम् ॥५९८॥
स तं व्याजिज्ञपद्राजन्नचिन्त्या मन्त्रशक्तयः । ताश्चेद्दिदृक्षसे क्षिप्रमेतदाश्चर्यं विलोक्यताम् ॥५९९॥
600 अथानुगम्यमानः स राज्ञा प्राप्तः सरोन्तिकम् । अभिमन्त्र्योज्झितैर्बाणैर्व्याशोषयज्जलम् ॥६००॥

---

५७५. 1) $A_2$ gloss सद्यो व्यापादिततनुरित्यादि पताम्भसीत्यन्ता शिक्षा राज्ञः कृते नखनिर्भिन्नस्वशरीररक्तेन लिखिता तेन कृतसैन्यविशेषेण स्वकीयकण्ठनिबद्धे वस्त्रखण्डे.—2) $A_2$ gloss अत एव दृतिवदित्यर्थः —3) $A_1$ originally दृतेर्मा°; to this reading refers the gloss of $A_2$. दृतेः सकाशादप्यभेद्योहमित्यर्थः On altering the reading to दृतिर्मा°, $A_2$ has struck out the first gloss and added a fresh one: अहमभेद्यो दृतिरस्मि.—4) $A_2$ gloss मां दृतिरूपं. ५७६. 1) Thus corr. by later hand from $A_1$ °रूढ-बन्धाय.—2) $A_2$ gloss उष्णीषपट्टिका वेष्टमाशुलहयपट्टिकेत्यर्थः. ५८३. 1) Thus corr. by later hand from $A_1$ अर्ज. ५८४. 1) Thus A R G; C नाभूद्धिसदृश.—2) Thus $A_1$; $A_2$ भास्वरस्य. ५९६. 1) Thus $A_1$, $A_2$ °प्रेषितैश्च°.

राजापश्यच्चतः पङ्क्तौ तुरुष्कं मानुषाननम् । विलासिवेश्मसुरगं भूरिहस्त्योरणान्वितम् ॥६०१॥
मन्त्रसंकोचितं राजन्कृशाब्यमुमिति ब्रुवन् । मा पक्षीरिति भूपेन सोभिधायं न्यषिध्यत ॥६०२॥
मूर्ने राजाज्ञया तेन मन्त्रवीर्येण संहृते । सरोभूत्पाणवस्थं तत्पुनर्ग्राहविवर्जितम् ॥६०३॥
द्राविडं द्रविणं दत्त्वा विसृज्याचिन्तयन्नृपः । कथाकाथयाप्यसौ नागः कथं स्वर्णाकरं गिरिम् ॥६०४॥
ध्यायन्तमेव तं स्वप्ने ततः प्रोवाच पन्नगः । केनोपकारेण गिरिः स्वर्णसूस्तव दर्श्यते ॥६०५॥ 605
स्वदेशोऽयं विदेशोऽयमिति बुद्धेः प्रवर्तकः । अन्वयव्यतिरेकाभ्यां स्थित्यभ्यासः शरीरिणाम् ॥६०६॥
शरणं त्वामहमगाममवमानभयात्पुनः । शारण्येन सता तत्तु भवतैव प्रदर्शितम् ॥६०७॥
उद्दन्तानिव योऽक्षोभ्यो शायते सिभितैः प्रभुः । का श्रीस्ततोऽन्या सौन्दर्यमेषामप्यनुभूयते ॥६०८॥
याभिरन्याभिभूताभिरीक्षितस्त्रातुमक्षमः । तासां केनाभिमानेन स्त्रीणां द्रक्ष्याम्यहं मुखम् ॥६०९॥
येऽकारणसधर्माणो ध्यामूढस्य भवाम ते । विडम्ब्यमानाः क्रीडार्थं ते वयं प्राकृता इव ॥६१०॥ 610
अथ वा श्रीमदान्धानामप्रेक्षापूर्वकारिणाम् । यत्किंचनविधायित्वं पार्थिवानां किमद्भुतम् ॥६११॥
मन्यन्ते क्ष्माभुजः क्रीडामुद्यतानां विमाननाम् । यावज्जीवं तु सन्धासं मरणं तां विदन्ति ते ॥६१२॥
उपेक्ष्यपक्षे भूपानां मानः स्वार्थस्य सिद्धये । स तु प्राणानुपेक्ष्यापि मान्यपक्षे मनस्विनाम् ॥६१३॥
महतो येऽवमन्यन्ते घटन्ते च विमानितैः । मनःस्वरूपाभिज्ञत्वं तेषां केनानुमीयते ॥६१४॥
भवन्त इव तथापि न वयं व्यर्थदर्शिनः । ताम्रधातुरसस्यन्दी दृश्यते तद्गिरिस्तव ॥६१५॥ 615
इत्युक्त्वा संविदं तस्मै स्वप्न एव स तां ददौ । यथा प्रबुद्धः प्रत्यूषे प्राप ताम्राकरं गिरिम् ॥६१६॥
स तस्मात्क्रमराज्यस्थात्ताम्रमाकृष्य निर्ममे । शतं दीनारकोटीनामेकोनं स्वाभिधाङ्कितम् ॥६१७॥
पूर्णं कोटिशतं कुर्याद्यः स मां निर्जयेदिति । दर्पभङ्गाय भूपानां समयं स्थापयन्नृपः ॥६१८॥
समस्ता इव स क्ष्माभृत्सावशेषैर्विचेष्टितैः । विशेषं तुल्यनिर्माणकुण्डत्वावेति भूभृताम् ॥६१९॥
अथाकस्मान्महीपालः प्रजाभाग्यविपर्ययैः । त्यक्त्वा पैतामहं मार्गं ययौ पित्र्येण सोऽध्वना ॥६२०॥ 620
किं दिग्जयादिभिः क्लेशैः स्वदेशादर्ज्यतां धनम् । इत्यर्थ्यमानः कायस्थैः स्वमण्डलमदण्डयत् ॥६२१॥
शिवदासादिभिर्लुब्धैर्धनस्थानाधिकारिभिः । प्रविवर्धितवित्तेच्छः सोऽभूल्लोभवशंवदः ॥६२२॥
काश्मीरिकाणामुत्पन्नं निजाज्ञाव्यवधायकम् । कायस्थवक्त्रमोक्षित्वं ततः प्रभृति भूभृताम् ॥६२३॥
मन्त्रस्तस्य महीभर्तुर्योऽभूत्तत्संनुपमहे । वास्तव्यबन्धचिन्तायां स एव स्थैर्यमाययौ ॥६२४॥
यस्तां प्रशममाधायि पापस्योपादिदेश तत् । जयापीडस्य पाण्डित्यं प्रजापीडनशौण्डताम् ॥६२५॥ 625
स सौदास इवानेकलोकप्राणापहारकृत् । वस्तुत्यकृत्यसौहित्यं स्वप्नेऽपि न समाययौ ॥६२६॥
कुर्मः किल्बिषमेतदेव हृदये कृत्वेति कौतूहलात्स्वैरिण्यः क्षितिपाश्च चिक्कणताः क्रौर्यं च कुर्युः सकृत् ।
पापाक्रान्तधियो भवन्त्यथ तथा नाम्यान्त्यग्राम्योऽपि ता दूयन्ते न च ते यथा स्वपतिरौ प्रान्तोऽपि शान्तव्रताः ॥६२७॥

६०२. [1]) Emended; A सोऽभ्यधाय. ६०३. [1]) Thus corr. by $A_2$ from $A_1$ वारी. ६०८. [1]) Thus corr. by $A_2$ from $A_1$ °भूतये. ६१०. [1]) $A_2$ येऽकारण°. ६१२. [1]) Thus corr. by later hand from $A_1$ विमानिनाम्. ६१३. [1]) $A_2$ gloss स्वाङ्क. ६१७. [1]) Thus $A_1$; $A_2$ दीनार°. ६२२. [1]) Thus corr. by $A_2$ from $A_1$ °कारिभिः. ६२३. [1]) Thus corr. by $A_2$ from $A_1$ कायस्थका°. ६२७. [1]) Thus $A_2$; $A_1$ यथा.

लोभाभ्यासात्तथा क्रौर्ये स ययौ वत्सरत्रयम् । सह कार्यक्रमाणेन यथाहार्षीत्करस्कलम् ॥६२८॥
लुब्धस्यध्वस्तधीर्भूभृत्स्वल्पवित्तलवमहान् । सर्वस्वहारिणो मेने कायस्थान्हितकारिणः ॥६२९॥
सामुद्रास्तिमयो नृपाश्च सदृशा एके हतार्हम्भसः स्वस्मादेव क्षणाद्धनस्य जहतो जानन्ति ये हातृताम् ।
630 सर्वस्मात्स्फुटलुण्ठिताहितरतो लेशान्विलान्येपि ये दुष्कायस्थकुलस्य हन्त कलयन्त्यन्तर्हिताधायिताम् ॥६३०॥
सर्वकालं ब्राह्मणानामहो धैर्यमकुण्ठितम् । निस्त्रिंशस्य बभूवुर्ये तस्यापि परिपन्थिनः ॥ ६३१ ॥
देशान्तरं प्रयातेभ्यो ये शेषास्ते व्यरंसिषुः । विक्रोशन्तो न मरणाद्धरणाच्चापि पार्थिवं ॥६३२॥
विप्राणां शतमेकोनमेकाह्नेन विपद्यते । निवेद्यमेतदित्यूचे क्रौर्याक्रान्तोथ पार्थिवः ॥६३३॥
विपर्यस्तचरित्रस्य तस्य क्रूरस्य भूपतेः । एवं स्तुतिविपर्यासः काव्येष्वपि बुधैः कृतः ॥६३४॥
635 नितान्तं कृतकृत्यस्य गुणवृद्धिविधायिनः । श्रीजयापीडदेवस्य पाणिनेश्च किमन्तरम् ॥६३५॥
भाष्यव्याख्याक्षणे श्लोकैर्वैलक्षण्यवदैः कृतः । सोयं तस्य विपर्यासो बुधैरेव प्रवर्तितः ॥६३६॥
कृतविप्रोपसर्गस्य भूतनिष्ठाविधायिनः । श्रीजयापीडदेवस्य पाणिनेश्च किमन्तरम् ॥६३७॥
तुलमूल्यापवर्ते च चन्द्रभागातटे स्थितः । विप्राणां शतमेकोनमभूणोत्तज्जले मृतम् ॥६३८॥
ततोग्रहारहरणादेव प्रविरतोभवत् । वास्तव्यानां हर्ता भूमिं न तु निःशेषतो जहौ ॥६३९॥
640 अथ विज्ञप्तिसमये तुलमूल्यौकसो द्विजाः । मुकुमुर्जातु तस्याग्रे प्रतीहारकराहताः ॥६४०॥
मनुमान्धातृरामाद्या बभूवुः प्रवरा नृपाः । अन्वभावि तदग्रेपि ब्राह्मणैर्न विमानना ॥६४१॥
सेन्द्रं स्वर्गं सशैलां क्ष्मां सनागेन्द्रं रसातलम् । निर्दग्धुं हि क्षणेनैव विप्राः शक्ताः प्रकोपिताः ॥६४२॥
तदाकर्ण्यास्त सामन्तस्यक्तपृष्ठः क्षमापतिः । उल्लासितैकभ्रूलेखो दर्पाद्वचनमब्रवीत् ॥६४३॥
भिक्षाकणभुजां कोयं शठानां वो मदज्वरः । येनर्षय इव ब्रूथ प्रभावख्यापकं वचः ॥६४४॥
645 भीमभ्रूभङ्गभीतेषु तेषु तूष्णीं स्थितेष्वथ । इट्टिलाख्यस्तमाह स्म ब्रह्मतेजोनिधिर्द्विजः ॥६४५॥
राजन्युगानुरूप्येण भावाभावानुवर्तिनः । शासितुस्तेनुसारेण न कस्मादृषयो वयम् ॥६४६॥
आह स्म विश्वामित्रो वा वसिष्ठो वा तपोनिधिः । त्वमगस्त्योथ वा किं स्या इति दर्पेण तं नृपः ॥६४७॥
ज्वलन्निव ततः स्फूर्जत्तेजोदुष्प्रेक्ष्यविग्रहः । स फणीवोत्फणस्ताम्यन्कोपान्नृपतिमब्रवीत् ॥६४८॥
भवान्यत्र हरिश्चन्द्रस्त्रिशङ्कुर्नहुषोपि वा । विश्वामित्रमुखेभ्योहं तत्रैको भवितुं क्षमः ॥६४९॥
650 विहस्योवाच तं राजा विश्वामित्रादिकोपतः । हरिश्चन्द्रादयो नष्टास्त्वयि क्रुद्धे तु किं भवेत् ॥६५०॥
पाणिना ताडयन्नुर्वीं ततः क्रुद्धोभ्यधाद्द्विजः । मयि क्रुद्धे क्षणादेव ब्रह्मदण्डः पतेन्न किम् ॥६५१॥
तच्छ्रुत्वा विहसन्राजा कोपाद्ब्राह्मणमब्रवीत् । पततु ब्रह्मदण्डोसौ किमद्यापि विलम्बते ॥६५२॥
नन्वयं पतितो जाल्मेत्यथ विप्रेण भाषिते । राज्ञः कनकदण्डोङ्के वितानस्खलितोपतत् ॥६५३॥

---

६३०. [1]) Thus $A_1$; $A_2$ हतान°.—[2]) Thus $A_1$; $A_2$ °तान्वि°. ६३३. [1]) Thus $A_1$; $A_2$ °काह्ने चेति°. ६३६. [1]) Thus $A_1$; $A_2$ सोके वै°.—[2]) Thus corr. by $A_2$ from $A_1$ विपर्यासि —[3]) Thus corr. by $A_2$ from $A_1$ विवर्तितः. ६३७. [1]) $A_2$ gloss निष्ठावक इह नाशवाची. ६३८. [1]) Thus corr. by $A_2$ from $A_1$ तूलमूला°. ६४०. [1]) Thus $A_2$; $A_1$ तूलमूली°. $A_2$ gloss तूलमूलाख्यो ग्रामः ६४४. [1]) Thus corr. by $A_2$ from $A_1$ °ख्यापकं. ६४५. [1]) Thus corr. by $A_2$ from $A_1$ तूर्णीं.—[2]) Thus corr. by $A_2$ from $A_1$ हट्टिला°. ६४६. [1]) $A_2$ विप्रा भूपानुवर्तिनः इत्यन्वारवी. ६४८. [1]) Thus $A_1$; $A_2$ दुष्प्रेक्ष°. ६४९. [1]) $A_2$ gloss भवान्किमसीति विश्वामित्रशापाद्धरिश्चन्द्रो भ्रष्टः स्वपदात् वसिष्ठशापात्त्रिशङ्कुर्भ्रष्टः अगस्त्यशापाच्च नहुषो भ्रष्ट इति तद्दृष्टान्तोऽयं वचः.

कृतव्रणः स तेनाङ्के विसर्पक्लिन्नविग्रहः । कीर्यमाणक्रिमिकुलः क्रकचैर्दारितैरभूत् ॥६५४॥
अनुभाव्य व्यथां भ्रान्तिनिरयक्लेशवार्णिकाम् । गणरात्रेण तं प्राणाः काङ्क्षितापगमा जहुः ॥६५५॥
असद्दण्डकृतं दण्डं भुक्त्वा दण्डधराधिपः । अकाण्डदण्डसृष्टाय ययौ दण्डधरान्तिकम् ॥६५६॥
तस्याविरतवित्तस्य त्रिंशतं परिवत्सरान् । एवं प्रतापिनः सैकाब्दभूभोगो भूपतेरभूत् ॥६५७॥
तथा भूभुग्मनस्या द्रविणकलुषाम्भःकृततृषः स्थितिं स्वामुज्झन्तो विदधति कुमार्गानुसरणम् ।
क्रियन्ते कालान्तानुगविकृतकैवर्तनिवहैर्यथा झषास्तेकस्मात्स्थिरनिरयजालप्रणयिनः ॥६५८॥
कृतपापं तमुद्दिश्य विपन्नममृतप्रभा । मृतोद्धाराय तन्माता व्यधत्तामृतकेशवम् ॥६५९॥
ललितापीडनामाभूत्ततो वसुमतीपतिः । देव्यां दुर्गाभिधायां यो जयापीडादजायत ॥६६०॥
बभूव रागिणो राज्ये राज्यकार्याण्यपश्यतः । यस्य वाराङ्गनाभोज्यं राज्यं दुर्नयदूषितम् ॥६६१॥
दुष्कृतेनार्जितं वित्तं पित्रा निरयभागिना । यं चारणादिषु न्यस्यन्ननुरूपं व्ययं व्यधात् ॥६६२॥
बन्धकीबन्धुभावेन प्राप्तराजगृहाश्रयाः । तं पौंश्चलीयविद्यानामन्तरङ्गं व्यधुर्विटाः ॥६६३॥
केशान्स्त्रीदशनच्छिन्नान्वक्षस्तलनखलाञ्छितम् । वपुषो मण्डनं मेने किरीटकटकोज्झितः ॥६६४॥
यो यो वेश्याकथाभिज्ञो यो यो नर्मविचक्षणः । स स तत्प्रियतां लेभे न शूरो न च पण्डितः ॥६६५॥
अतृप्तः स्त्रीभिरल्पाभिरुग्ररागः स पार्थिवः । जडं मेने जयापीडं स्त्रीराज्यान्निर्गतं जितात् ॥६६६॥
दिग्विजयव्यसनिनः पूर्वभूपाञ्जहास सः । गणिकाभोगसुखितः स्वसामयिकमध्यगः ॥६६७॥
संकोचकारिणो वृद्धान्नर्मोत्सर्गोद्वेज्य वारयन् । तस्माद्विटजनो लेभे संप्रीतात्पारितोषिकम् ॥६६८॥
अङ्गचेट इव स्पष्टपरिहासविचक्षणः । सोऽलज्जयन्मन्त्रिवृद्धानास्थाने गणिकासखः ॥६६९॥
बन्धकीपादमुद्राङ्कं चारु प्रावरणादि सः । गौरवार्हान्गुरोदारः सचिवान्पर्यधापयत् ॥६७०॥
मानी मनोरथो मन्त्री पर्व परिजहार तम् । अशक्नुवन्नमवितुं मध्यपातपराङ्मुखः ॥६७१॥
कुकृत्यं योगराहित्यं वैधुर्यं शोचवृत्तिता । ······ दुर्वृत्तस्य प्रभोरन्यत्परिहाराय भेषजम् ॥६७२॥
सुवर्णपार्श्वं विप्रेभ्यो दत्तस्फलपुरं तथा । भूभृत्स लोचनोत्सं च द्वादशाब्दानभूद्विभुः ॥६७३॥
कल्याणदेव्यां संजातो जयापीडमहीभुजः । संग्रामापीडनामाथ बभूव भुवनेश्वरः ॥६७४॥
पृथिव्यापीड इत्यन्यन्नाम बिभ्रत्स भूपतिः । समाप्तिं सप्तभिर्वर्षैः साम्राज्यस्य समासदत् ॥६७५॥
श्रीचिप्पटजयापीडो बृहस्पत्यपराभिधः । ललितापीडजो राजा शिशुर्देशस्ततोऽभवत् ॥६७६॥
रागप्रगृहीतस्य ललितापीडभूपतेः । वेश्यायां कल्यपाल्यां यो जयादेव्यामजायत ॥६७७॥
उत्पाद्यस्यारबुवग्रामकल्यपालस्य तां सुताम् । रूपलुब्धोऽवरुद्धात्वमनैषीत्स हि भूपतिः ॥६७८॥
पद्मोत्पलककल्याणमम्मधर्मैः स मातुलैः । बालकैः पाल्यमानोऽभूल्लक्ष्मीभोगभागिभिः ॥६७९॥

६५४. 1) Thus corr. by A₂ from A₁ विसर्प°. ६५८. 1) Thus corr. by A₂ from A₁ स्थितिं. ६६२. 1) A₁ seems to have read व्यधा°; corrected by A₂. ६६५. 1) Thus corr. by A₂ from A₁ °कथाविज्ञो. ६७१. 1) Thus corr. by A₂ from A₁ तम्. ६७२. 1) Thus corr. by A₂ from A₁ योगवाहित्यं.—2) Here seems to be a *lacuna* in the text. ६७३. 1) A₂ gloss सुमपार्श्व.—2) A₂ gloss परिहासपुरसमीपे. ६७८. 1) A₂ gloss कल्यां सुतां पालयतीति कल्यपालः कलवाल इति भाषया.—2) Thus corr. by A₂; two aksharas of A₁, corresponding to रुद्धा, are illegible on account of an ink blot. A₂ gloss अवरुद्धा उपरुद्धा इति भाषया. ६७९. 1) Thus A₁; A₂ °धर्मैः.

680 तस्य पञ्च महाशब्दाञ्छ्रावयानुत्पलकोऽग्रहीत् । अन्ये जगृहिरेऽन्यानि कर्मस्थानानि[1] मातुलाः ॥६८०॥

आयत्तीकृतसाम्राज्यैर्भ्रातृभिर्बन्दिताशया । भूभृज्जनन्या विदधे जयादेव्या जयेश्वरः ॥६८१॥[1]

राज्ञां कृपणवित्तैर्यत्प्रविष्टैर्दुर्व्ययं धनम् । अचिराच्चीयते शान्तिमपूर्वैः कैश्चिदेव तत् ॥६८२॥

जयापीडस्य यत्किंचित्सूनुना हि व्ययीकृतम् । सूनुस्यालैरशेषं तत्तैः क्रमेण हृतं वसु ॥६८३॥

भगिनीभगसौभाग्यसंभवैर्विभवैः कृताः । तेऽभङ्गुराणां भोगानां भोक्तारो भाग्यभागिनः ॥६८४॥

685 निरङ्कुशं चेष्टमानाः शनकैस्त्यक्तवीडयात् । ते स्वकीयान्नृपान्नाशमकुलीनाः शशङ्किरे ॥६८५॥

अथाभिचारक्रियया मिथः संमन्त्र्य पापिभिः । राज्येच्छया तैः स्वकीयः स्वामी च स नृपो हतः ॥६८६॥

भुक्तासिनी द्वादशाब्दांस्तस्मिन्व्यापादिते तथा । नैच्छन्नेकस्य ते राज्यं परस्परमहंकृताः ॥६८७॥

तेषामाक्रान्तदेशानां[1] नाममात्रमहीपतीन् । तांस्तान्कर्तुमनामान्यान्[2]विरोधोऽन्योन्यमुद्ययौ[3] ॥६८८॥

अथ मेघावलीदेव्यां जातो वप्पियभूपतेः । ज्येष्ठोऽप्यबालिकतया योऽभूद्राज्यविवर्जितः ॥६८९॥

690 सोऽयं त्रिभुवनापीडो जयादेव्यामजीजनत् । राजानमजितापीडं तं बलादुत्पलोऽव्यधात् ॥६९०॥ युग्मम्[1] ॥

ड्रोङ्गादिगण्यनास्थाननिष्पन्दोऽस्याप नृपाय ते । पञ्चमाङ्गणनास्थानाद्दशनाच्छादने ददुः ॥६९१॥

एकसंभाषणात्स्वेदं यास्वन्येषु दिने दिने । पञ्च तुल्यमुखान्वैश्चन्द्रःस्यो राजा तदाश्रितः ॥६९२॥

ते राजन्यजितापीडे राज्योत्थस्वपहारिणः । पुरदेवगृहादीनां प्रतिष्ठाकर्म चक्रिरे ॥६९३॥

सापत्न्यास्ते बुभुजिरे राज्यं स्वामिविवर्जितम् । निर्जने महिषं शान्तं मिथः सेर्ष्या वृका इव ॥६९४॥

695 उत्पलेनोत्पलस्वामी तथोत्पलपुरं कृतम् । पद्मस्य पद्मस्वाम्याख्ये कृतिः पद्मपुरं तथा ॥६९५॥

वधूर्धर्मस्य पद्मस्य गुणादेवी गुणोज्ज्वला । मठमेकमधिष्ठाने श्रितीर्थ विजयेश्वरे ॥६९६॥

धर्मो धर्मोद्यमी हेतुर्धर्मस्वामिविनिर्मितेः । कल्याणवर्मा सत्कर्मा कल्याणस्वामिकेशवे ॥६९७॥

दीनाराणां सहस्राणि पञ्चोपकरणं कृती । एकैकस्याः सुधीर्धेनोः कृत्वा मम्मो महाधनः ॥६९८॥

पञ्चाशीतिसहस्राणि गवां दत्त्वा प्रकल्पयन् । कुम्भप्रतिष्ठासंभारं यो मम्मस्वामिनं व्यधात् ॥६९९॥

700 तस्यैकस्यैव सामर्थ्यं कः संख्यां कर्तुमर्हति । भ्रातॄणां किं पुनस्तेषां सर्वेषां भूरिसंपदाम् ॥७००॥

द्रोहार्जितास्तु वा लक्ष्मीः सुकृतोपार्जिताथ वा । सर्वेषां स्पृहणीयैव तेषां दातृतया तया ॥७०१॥

कृता देवगृहास्तैर्ये तत्पार्श्वेऽन्यसुरास्पदैः । विङ्गातङ्कसमीपस्थकलभौपम्यमाश्रितम् ॥७०२॥

एकोननवते वर्षे स्वकीये शान्तिमागते । निर्विघ्नभोगास्तेऽभूवन्षड्विंशाब्दास्ययावधि ॥७०३॥

अथ मम्मोत्पलकयोरभूद्दारुणो रणः । रक्तप्रवाहा यत्रासीद्वितस्ता सुभटैर्हतैः ॥७०४॥

705 कविर्बुधमनःसिन्धुशशाङ्कः शङ्कुकाभिधः । यमुद्दिश्याकरोत्काव्यं भुवनाभ्युदयाभिधम्[1] ॥७०५॥

---

६८० [1]) A₂ gloss कर्मस्थानानि कारखान इति प्रसिद्धानि. ६८१. [1]) A₂ glosses ललितापीडेन and पद्मोत्पलकादिभिः. ६८८. [1]) Thus corr. by A₃ from A₁ °देशानां.—[2]) A₁ wrote °मसामान्यादि°; A₂ altered this to °मसम्मत्वा; A₃ has struck out the reading of A₂ and has written above °मसामान्यान्वि°.—[3]) Thus corr. by A₃ from A₁ °माययौ. ६९०. [1]) युग्मम् added by A₃. ६९१. [1]) Thus corr. by a later hand from A₁ डेड्ग°; R Edd. देड्ग°; G डेड्ग°. Cf. viii. 578 (C.).—[2]) A₂ gives the marginal note डालस्थूलं नामस्थानकं मिथान नवमामावि एषां चतुर्णां सम्बन्धी एकोत्पत्तिप्रवेशः स पञ्चमगणनास्थानमिति लोकाचारः. ६९२. [1]) Thus A₁; A₂ °मुखान्यै° ६९९ [1]) To this verse seems to refer the gloss of A₂: मधुमावां. ७०५. [1]) A₂ gloss श्रीशङ्कुकाभिधः प्रसिद्ध आलङ्कारिकः यस्य मतं रसनिरूपणे काव्यप्रकाशे चतुर्थोल्लासे श्रीमम्मटाचार्येण निरूपितम्.

मम्मस्त्वनुर्यशोवर्मा संग्रामाग्रे व्यपाहरत् । स यत्र तेजः शूराणां नक्षत्राणामिवार्यमा ॥७०६॥
अथोत्पाट्याजितापीडं संग्रामापीडसंभवः । अनङ्गापीडनामाभूत्कृतो मम्मादिभिर्नृपः ॥७०७॥
मम्मोत्पलासहिष्णुत्वात्संभृतामर्षवैकृतः । तस्य राज्यं त्रिवर्षासीत्सुखवर्मोत्पलात्मजः ॥७०८॥
वर्षत्रयेणोत्पलके ततः प्रशममागते । स चकारोत्पलापीडमजितापीडजं नृपम् ॥७०९॥
तेषामाश्वयुजीराजसदृशानां महीभुजाम् । भूत्वापि भृत्याः कृतिनो विभूतिं केपि लेभिरे ॥७१०॥ 710
सांधिविग्रहिकस्तस्य रत्नो नाम विभूतिभाक् । तस्मिन्कालेपि यश्चक्रे रत्नस्वामिसुरास्पदम् ॥७११॥
भेजुर्दार्वाभिसाराद्रीन्देशानुत्सृज्य भूपताम् । विमलाद्या ग्रामभुजो नराद्या व्यवहारिणः ॥७१२॥
राज्ञां कार्कोटवंश्यानां क्षीणप्रायमभूत्कुलम् । वंशस्तूत्पलकुल्यानां भुवि वैपुल्यमाययौ ॥७१३॥
सामर्थ्योपनतप्रायपार्थिवत्वो व्यपद्यत । विद्वेषात्सुखवर्माथ शुक्काख्येन स्वबन्धुना ॥७१४॥
ततः शूराभिधो मन्त्री सुखवर्मात्मजेकरोत् । राज्ययोग्योयमित्यास्थां सगुणेवन्तिवर्मणि ॥७१५॥ 715
एकत्रिंशे स वर्षेथ प्रजाविप्लवशान्तये । विनिवार्योत्पलापीडं तमेव नृपतिं व्यधात् ॥७१६॥
यत्कृते विफलक्लेशा आसन्पितृपितामहाः । पौत्रेण हेलया प्राप्ता सा सिद्धिः पुण्यकर्मणा ॥७१७॥
कुम्भाः पयोनिधिपयोहरणप्रवृत्ता नित्यं वहन्ति किल ये विफलश्रमत्वम् ।
चित्रं क्षणादिह तदेकसमुद्भवेन संदर्शिता निखिलवारिधिपानलीला ॥७१८॥
अभृत तदनु मूर्ध्नि राजलक्ष्मीघटितकटाक्षकृतादिपट्टबन्धे ।
कनकघटमुखाम्बवाभिषेकं झटिति पतन्तमवन्तिवर्मदेवः ॥७१९॥
संग्रामावुपदेष्टुमिन्दुतपनावुक्तं स्ववंशोद्भवैर्भूपालैर्नवराज्यतन्त्रमिव स श्रोत्रद्वये धारयन् ।
राजा मण्डनकुण्डलद्वयमिषात्स्वच्छातपत्रच्छलाल्लक्ष्मीविष्टरपुण्डरीकघटितच्छायोदयो दिद्युते ॥७२०॥ 720

[1]इति श्रीकाश्मीरिकमहामात्यचण्पकप्रभुसूनोः कल्हणस्य कृतौ राजतरङ्गिण्यां चतुर्थस्तरङ्गः ॥
समाशतद्वये षष्टियुते मासेषु षट्सु च । निर्दशाहेषु कार्कोटवंशे सप्तदशाभवन् ॥

---

७०९. [1]) $A_4$ gloss सुखवर्मा. ७१०. [1]) Thus corr. by $A_1$ from °युजो मासस[2]; $A_2$ gloss आश्वयुजे मासि यथर्धयं ये निर्गच्छन्ति ते हेयारक्षा इति प्रसिद्धास्तत्सदृशानां.—[2]) Thus $A_2$; $A_1$ कतिका. ७१६. [1]) $A_4$ gloss अवन्तिवर्माणम्. ७१९. [1]) Thus corr. by $A_2$ from $A_1$ तदुह. ७२०. [1]) Thus $A_1$; $A_2$ °तपनौ युक्तं. *Colophon.* [1]) $A_2$ inserts before this the following note: रा १० सं ७१६ आदितः राजान ७० सं १७८९

## ॥ पञ्चमस्तरङ्गः ॥

काव्येतेषु[1] रुचिः कचेषु फणिनां पुंस्कोकिलस्येव ते गोभिः कण्ठतटस्य दुष्यति पुरो दृक्पदय चक्षुःश्रुतेः ।
संधानेऽभिनवे मिथो भगवतोर्जिह्वापृथक्स्पन्दिनी[2] भिन्नार्थी सदृशाक्षरामपि वदन्त्येवं गिरं पातु वः ॥१॥

अवन्तिवर्मा साम्राज्यं प्राप्य पातितकण्टकः । चकार चरितैश्चित्रं सतां कण्टकितं वपुः ॥२॥

आसतां क्षितिपामात्यौ तौ द्वावपि परस्परम् । आज्ञादाने[1] परिवृढौ भृत्याचाज्ञापरिग्रहे ॥३॥

कृतज्ञः क्षान्तिमान्क्ष्माभृन्मन्त्री भक्तः स्मयोज्झितः । अभङ्गुरोऽयं संयोगः सुकृतैर्जातु दृश्यते ॥४॥

5 विवेक्ता प्राप्तराज्यः स क्ष्माभृद्वीक्ष्य नृपश्रियम् । अविलुप्तस्मृतिर्धीमानस्मरेवमचिन्तयत् ॥५॥

गोभुजां वल्लभा लक्ष्मीर्मातङ्गोत्सङ्गलालिता । सेयं स्पृहां समुत्पाद्य दूषयत्युन्नतात्मनः ॥६॥

स नास्ति कश्चित्प्रथमं यः प्रदर्श्यानुकूलताम् । संताप्यते न चरमं नीचप्रीत्येव नानया ॥७॥

चपलाभिः प्रवृद्धेयं स्ववेश्याभिः सहाम्बुधौ । तदेकचारिणीवृत्तमनया शिक्षितं कुतः ॥८॥

निःस्नेहा नान्वगात्कांश्चित्सुचिरं संस्तुताप्यसौ । परलोकाध्वगान्भूपानपाथेयानबान्धवान् ॥९॥

10 हेमभोजनभाण्डादि भाण्डागारे यदर्जितम् । कस्मादस्य न नाथास्ते लोकान्तरगता नृपाः ॥१०॥

अन्योच्छिष्टेषु पात्रेषु भुक्तेषु महीभुजः । कस्मान्न लज्जामवहञ्शौचचिन्तां न वा बुधः ॥११॥

स्थूलेषु राजतस्थालकपालेष्ववलोकितैः । प्रेतभूपालनामाङ्कैः शङ्का कस्य न जायते ॥१२॥

कृष्टाः प्रविष्टे ये कालपाशे कण्ठान्मुमूर्षताम् । अशस्ता अपवित्राश्च ते हाराः कस्य हारिणः ॥१३॥

संदूष्य बाष्पैर्दुःखोष्णैस्त्यक्तान्पूर्वैर्मुमूर्षुभिः । स्पृशन्नेतानलंकारान्न कः संकोचमाप्नुयात् ॥१४॥

या वारिराशिसलिलान्तरसंनिधानसंसेवयापि सततं मलिनैव लक्ष्मीः ।
15 पात्रेषु रोरशिखिभागिषु सा विमुक्ता वैमल्यमेति हरिणीव हुताशशौचा ॥१५॥

---

१. [1]) $A_3$ gloss: काव्येतेषु इति । एतेषु प्रत्यक्षविषयेषु फणिनां सर्पाणां कचेषु बन्धनेषु ते कापि रुचिः कश्चिदभिलाषोऽस्ति । अहो जूटकक्ष्याविबन्धनार्थमत्यन्तं सर्पानभिलषसीति देवीवचनम । बन्धनस्थानानां कण्ठप्रकोष्ठकक्ष्यादीनां बहुत्वाद्बन्धानामपि बहुवचनम । एतेषु कचेषु केशेषु फणिनां सम्बन्धिनी अर्थान्तरकारिणी कापि रुचिरनिर्वचनीया कान्तिस्तवास्ति तव केशानामजगराणामिव दर्शननामीव मोहो जायते इति महादेववचनम । पुंस्कोकिलस्येव तव कण्ठतटस्य गोभिर्ध्वनैः चक्षुःश्रुतेः सर्पस्य दृक् नेत्रं दुष्यति मोदते । कोकिलरुतमिव तव कण्ठध्वनिं श्रुत्वा सर्पस्य दृग्हर्षः सर्पाणां चक्षुरेव श्रवणस्थानीयमित्यतो दृक् दुष्यतीत्युक्तम् । गीतप्रियो हि सर्पः । यदुक्तम । हिमुर्वैर्हि पशुर्वेत्ति वेत्ति गीतरसं फणी । साहित्यामृतसारस्य शङ्करो वेत्ति वा न वेत्ति ॥ इति महादेववचनम ॥ देवीवचनं तु । तव कण्ठतटस्य कोकिलस्येव करैः पुरोमे नेत्रं दुष्यति । गोभिः किरणैः । कोकिलतुल्यवर्णकण्ठतटनैल्यदर्शनेन सर्पस्य दृग्हर्षः दृग्विकासः कोकिलरुतं श्रुत्वा सर्पाणां नेत्रविकासो जायते शीतसमये तु संकोच इति लौकिकाः ॥.—[2]) Thus $A_2$; $A_1$° स्पर्धिनी. ३. [1]) Thus corr. by $A_2$ from $A_1$ °धाने. ७. [1]) Thus corr. by later hand from $A_1$ °कूल्यताम्. १०. [1]) न supplied by $A_2$. १५. [1]) $A_2$ gloss रोर: दारिद्र्यं.—[2]) $A_1$ °शौचे altered by later hand to °शौचा; $A_2$ glosses: अभिशोचाणां मृगाणां अभिना लोमशुद्धिः अभिशौचवसनवत्, and हुताशेनाग्निना शौचं शुद्धिर्यस्याः सा हुताशशौचा । हरिणी मृगी इव यथा सा अग्नौ प्रक्षिप्तदेहा सती शुद्धलोमा भवति तद्वत्.

इति निर्ध्याय नृपतिर्नीत्वा स्वर्णादि चूर्णताम् । निजैरञ्जलिभिः प्रादाद्द्विजन्मभ्यः करम्भकम् ॥१६॥
साधु भूपेति सत्कण्ठे हर्षाशीर्गौरवं द्विजः । साध्वसान्निःस्विति वदन्नेकः प्रापाञ्जलीन्बहून् ॥१७॥
लक्ष्मीं कृत्वार्थिसात्कृत्स्नां कृतिनावन्तिवर्मणा । विभूतिश्चामरच्छत्रमात्रशेषा व्यधीयत ॥१८॥
अनन्तसंपत्संपन्नभूरिगोत्र नविद्रुते । राजश्रीर्दुर्जरा तस्य नवत्वे भुभुजोऽभवत् ॥१९॥
विभुतान्समरे भ्रातॄन्भ्रातृव्यांश्च विजित्य सः । चकार भूरिभिर्वीरै राज्यं विगतकण्टकम् ॥२०॥
राज्यं निष्पाद्य निर्विघ्नमथ वात्सल्यपेशलः । विभज्य बन्धुभृत्येषु बुभुजे पार्थिवः श्रियम् ॥२१॥
भ्राता द्वैमातुरस्तेन शूरवर्माभिधः सुधीः । शान्तिप्रियेण वितते यौवराज्येऽभ्यषिच्यत ॥२२॥
स्वाधूयांहस्तिकर्णाख्याग्रहारौ प्रदाय यः । शूरवर्मस्वामिनं च गोकुलं च विनिर्ममे ॥२३॥
संपूर्णः पूर्णमहिमामर्त्यमाहात्म्यमन्दिरम् । पञ्चहस्तामदश्चक्रे मठं सुकृतकर्मठः ॥२४॥
भ्राता ऽयथस्य नृपतेरपरः समराभिधः । केशवं चतुरात्मानं समरस्वामिनं तथा ॥२५॥
द्वौ शूरावरजौ धीरविप्रपाख्यौ निजाख्यया । व्यधत्तां विबुधावासौ शावन्यौ गणनापती ॥२६॥
भूत्वा वातुलतांच्छन्नप्रभावानुभवौ भुवि । गतौ सविभ्रमावेव हरावासाप्रसभ्यताम् ॥२७॥ युग्मम् ॥
राजदौवारिकः श्रीमाञ्शूरस्यासीन्महोदयः । महोदयस्वामिनो यः प्रतिष्ठां समपादयत् ॥२८॥
रामटाख्यमुपाध्यायं ख्यातव्याकरणश्रमम् । व्याख्यातृपदकं चक्रे स तस्मिन्सुरमन्दिरे ॥२९॥
अमात्येन महीभर्तुः श्रीप्रभाकरवर्मणा । कृतं प्रभाकरस्वामिनाम्नो विष्णोर्निकेतनम् ॥३०॥
आयातेन भुजैः सार्धं दत्त्वा गृहभुजेन यः । मुक्ताः प्राप्य प्रतिष्ठायां चक्रे ख्यातां मुक्तावलीम् ॥३१॥
विच्छिन्नप्रसरा विद्या भूयः शूरेण मन्त्रिणा । सत्कृत्य विदुषः सभ्यान्देशेऽस्मिन्नवतारिता ॥३२॥
युग्यैः क्षितिभुजां योग्यैरुह्यमाना महर्द्धयः । बुधाः प्रवृद्धसत्कारा विविशुर्भूपतेः सभाम् ॥३३॥
मुक्ताकणः शिवस्वामी कविरानन्दवर्धनः । प्रथां रत्नाकरश्चागात्साम्राज्येऽवन्तिवर्मणः ॥३४॥
आस्थाने कृतमन्दारो बन्दी शूरस्य मन्त्रिणः । संकल्पस्मृतिमाधातुमिमामार्यां सदापठत् ॥३५॥
अयमवसर उपकृतये प्रकृतिचला यावदस्ति संपदियम् । विपदि सदाभ्युदयिन्यां पुनरुपकर्तुं कुतोऽवसरः ॥३६॥
कृतः सुरेश्वरीक्षेत्रे बहुगेहविधायिना । शिवयोर्मिभयोस्तेन प्रासादः सोऽव्ययस्थितिः ॥३७॥
शूरेश्वरं प्रतिष्ठाप्य स्ववेश्मैव समुन्नतम् । चक्रे शूरमठं धीमान्स भोगाय तपस्विनाम् ॥३८॥
स्वकृते पत्तनवरे तेन शूरपुराभिधे । क्रमवर्तमदेशस्थो ढक्कोऽभूद्विनिवेशितः ॥३९॥
सुरेश्वरीप्राङ्गनतश्चक्रे भूतेश्वरं हरम् । मठं शूरमठान्तश्च शूरजो रत्नवर्धनः ॥४०॥
काव्यदेव्यभिधा शूरवधूः शुद्धान्वया व्यधात् । सदाशिवं सुरेश्वर्यां काव्यदेवीश्वराभिधम् ॥४१॥

---

१६. ¹) $A_2$ gloss आविष्कर्षेन मौक्तिकादेः परिग्रहः.—²) $A_2$ glosses हस्तं and करम्भं व्यामिश्रं खिचडु इति भाषया. १७. ¹) $A_2$ gloss कुचसोवर.—²) $A_2$ gloss व्याघ्राश्रमे प्रागहामे.—³) $A_2$ विभाव. २४. ¹) Thus $A_1$; $A_2$ सपूर्णकुम्भमहिमा.— ²) Thus $A_1$; $A_2$ मन्मथा°.—³) $A_2$ gloss पाञ्चध. २५. ¹) $A_2$ gloss पाम्पामप्रामे समरंशोग. २७. ¹) तू written above the line by $A_2$; corresponding letter of $A_1$ smeared over. $A_2$ gloss इमौ वातूलाकुम्भतावित्ति स्वस्व सत्राश्रमिव विधाय लोकविषये गोपितनिजप्रभावावित्यर्थः.—²) Thus corr. by $A_2$ from $A_1$ सुरौ. २८. ¹) $A_2$ gloss मञ्जवाश्रमे. ३१. ¹) सार्धं supplied by $A_2$ in space left by $A_1$.—²) Thus corr. by later hand from $A_1$ मयातमुक्ता°. ३४. ¹) $A_2$ gloss आनन्दवर्धनः काव्यालंकारध्वनिप्रबन्धकारः.—²) $A_2$ gloss रत्नाकरः हरविजयकारः. ३६. ¹) Thus corr. by $A_2$ from $A_1$ समाभ्यु°. ३८. ¹) $A_2$ gloss शूरपुरे. ३९. ¹) $A_2$ gloss कामेलनकोट्टस्य.—²) $A_2$ gloss द्रङ्गः

निर्मत्सरोवन्तिवर्मा सोदरेभ्योनपायिनीम् | शूराय च सपुत्राय नृपतिप्रक्रियां ददौ ||४२||

छन्दानुवर्ती भूपालो दैवतस्येव मन्त्रिणः | आ बाल्याद्वैष्णवोप्यासीच्छैवतामुपदर्शयन् ||४३||

क्षेत्रे त्रिभ्रैकसाराख्ये[1] मृतानामपवर्गदे | भूरिभोगास्पदं राज्ञा[2] तेनावन्तिपुरं कृतम् ||४४||

45 अवन्तिस्वामिनं तत्र प्राग्राज्याधिगमात्कृती | विधाय प्राप्तसाम्राज्यश्चक्रेवन्तीश्वरं तदा ||४५||

त्रिपुरेश्वरभूतेशविजयेशेषु भूभृता | स्नानद्रोण्या रूप्यमय्या तेन पीठत्रयं कृतम् ||४६||

शूरस्यापि नरेन्द्रं तं ध्यायतः स्वाधिदैवतम् | तत्प्रियार्थमुपेक्ष्योभूद्धर्मः प्राणाः श्रुतोपि वा ||४७||

तथा चार्चयितुं जातु[1] यातो भूतेश्वरं नृपः | विभवानुगुणे स्वस्मिन्पूजोपकरणेर्पिते ||४८||

ददर्श पीठे देवस्य पूजकैरुपपादितम् | वन्यमुत्पलशाकाख्यं तिक्तशाकमवस्थितम् ||४९||

50 तत्रस्थाः क्ष्माभुजा पृष्टास्तन्निवेदनकारणम् | व्यजिज्ञपन्क्षितिन्यस्तजानुमाञ्जलयस्ततः ||५०||

डामरो धन्वनामास्ति लहरे[1] विषये बली | शूरस्य मन्त्रिणो देव सेवको यः सुतोपमः ||५१||

हृतेषु तेन ग्रामेषु निरवग्रहशक्तिना | निवेद्यमेतदेवास्मै भूतेशाय निवेद्यते ||५२||

अकाण्डशूलजनितां पार्थिवः कथयन्व्यथाम् | श्रुतमश्रुतवत्कृत्वा त्यक्तपूजोथ निर्ययौ ||५३||

पूजां संत्यज्य गमनं शूलं चाकस्मिकं प्रभोः | सहेतुकं विदञ्शूरो वृत्तान्तान्वेषकोभवत् ||५४||

55 ज्ञाततत्त्वस्ततस्तूर्णं भूतेशाभ्यर्णवर्तिनः | क्रुद्धः समातृचक्रस्य[1] भैरवस्याविशद्गृहम् ||५५||

निषिद्धजनबाहुल्याद्भूत्वा[1] विरलपार्श्वगः | प्राहिणोद्धन्वमानेतुं ततो दूतान्पुनः पुनः ||५६||

स क्षितिं पत्तिपृतनासंमर्देन प्रकम्पयन् | अप्रकम्पतनुः प्राप क्रूरः शूरान्तिकं शनैः[1] ||५७||

तस्य प्रविष्टमात्रस्य शस्त्रिणः शूरचोदिताः | मुण्डं सजीवितस्यैव चिच्छिदुर्भैरवाग्रतः ||५८||

आसन्ने सरसि क्षिप्त्वा रुधिरोद्गारि तद्वपुः | क्ष्मापतेः क्षालितामर्षो धीरः शूरो विनिर्ययौ ||५९||

60 तस्य श्रुत्वा[1] शिरश्छेदं स्वपुत्रस्येव मन्त्रिणा | क्षीणमन्युः क्षितिपतिः सवैलक्ष्य इवाभवत् ||६०||

शूरोथ पृष्टकुशलो निर्व्यथोस्मीति भाषिणम् | उत्थाप्य तल्पात्तं देवं पूजाशेषमकारयत् ||६१||

इत्थं समस्तकृत्येषु भावज्ञः स महीपतेः | अनुक्तैव हितं तत्प्राणांस्त्यक्त्वाप्यसाधयत् ||६२||

परस्परमनुत्पन्नमन्युकालुष्यदूषणौ | न दृष्टौ न श्रुतौ वान्यौ तादृशौ राजमन्त्रिणौ ||६३||

श्रीमेघवाहनस्येव साम्राज्येवन्तिवर्मणः | अशेषप्राणिनामासीदमारो दश वत्सरान् ||६४||

65 अलं ग्रहद्भिः शिशिरं तटानेत्याकुतोभयैः | तत्कालं सेवितः पृष्ठे पाठीनैः शरदातपः ||६५||

अनुग्रहाय लोकानां भट्टश्रीकल्लटादयः | अवन्तिवर्मणः काले सिद्धा भुवमवातरन् ||६६||

चरित्रे बहुवक्तव्ये येषामेकस्य पावनः | अयं प्रासङ्गिकः कश्चिद्वृत्तान्तो वर्णयिष्यते ||६७||

देशः प्रबलतोयोयं महापद्मसरोजलैः | कुलिनीभिश्च शबलः स्वल्पोत्पत्तिः सदाभवत् ||६८||

ललितादित्यभूभर्तुरुद्योगेन बलीयसा | किंचिदाकृष्टसलिलः प्रापोत्पत्तिं मनाक्ततः ||६९||

---

४४. [1]) $A_2$ gloss त्रिभ्रैकसाराख्ये भारसो इति भाषे.—[2]) Thus corr. by later hand from $A_1$ राज्ञा. ४८. [1]) Thus corr. by later hand from $A_1$ जातो. ५१. [1]) $A_2$ gloss लार् इति प्रसिद्धे राष्ट्रे. ५५. [1]) $A_2$ separates स from the following and gives the gloss शूर: to स. ५६. [1]) Thus $A_1$; $A_2$ °बाहुल्यो भूत्वा. ५७. [1]) Thus $A_2$; $A_1$ शुरः. ६०. [1]) Thus corr. by $A_2$ from $A_1$ श्रव°.

जयापीडे क्रमायाते स्वल्पवीर्येषु राजसु । सलिलोपप्लवैरासीत्पुनरेवावृता क्षितिः ॥७०॥ 70

दीनाराणां द्विशती पञ्चाशत्यधिकाभवत् । धान्यखारीक्रये हेतुर्देशे दुर्भिक्षविक्षते ॥७१॥

अवन्तिवर्मणः पुण्यैर्जन्म सञ्जीवयितुं ततः । स्वयमन्नपतिः श्रीमान्सुय्यः क्षितिमवातरत् ॥७२॥

यस्याविज्ञातसंभूतेस्तुर्ये कालेपि निश्चितम् । अयोनिजत्वं कृतिनश्चरितैर्भुवनाद्भुतैः ॥७३॥

पुरा रथ्यारजःपुञ्जं संमार्जन्ती पिधानवत् । सुय्याभिधाना चण्डाली मृद्भाण्डं प्राप नूतनम् ॥७४॥

तस्मिन्पिधानमुद्धृत्य सापश्यन्मध्यशायिनम् । बालं कमलपत्राक्षं धयन्तं स्वकराङ्गुलीः ॥७५॥ 75

मात्रा कयापि त्यक्तोसौ दुर्भरो मन्दभाग्यया । अथेति चिन्तयन्त्यासीत्सा स्नेहात्प्रस्नुतस्तनी ॥७६॥

अदूषयन्त्यर्भं स्पर्शेन धात्र्याः शूद्रस्त्रियो गृहे । तया विहितवृत्तिः स शिशुर्वृद्धिमनीयत ॥७७॥

स सुय्यनामा मतिमान्प्रवृद्धः शिक्षिताक्षरः । कस्याप्यासीद्गृहपतेरर्भकाध्यापको गृहे ॥७८॥

व्रतस्नानादिनियमैस्तं सतां हृदयंगमम् । गोष्ठीषु विशदप्रज्ञं विदग्धाः पर्यवारयन् ॥७९॥

तेषां कथाव्यवस्थासु निन्दतां जलविप्लवम् । धीरस्ति मे निरर्थस्तु किं कुर्यामिति सोब्रवीत् ॥८०॥ 80

उन्मत्तस्येव वदतस्तस्य तद्वियमाहृतः । निशम्य भूभृच्चारेभ्यश्चिरमासीत्सविस्मयः ॥८१॥

ततस्तमानीय नृपः किं ब्रूष इति पृष्टवान् । धीरस्तीत्यादि राजानमवोचत्सोप्यसंभ्रमः ॥८२॥

वातूलोसाविति निजैरुक्तोप्यथ महीपतिः । धियं दिदृक्षुर्विदधे तस्यायत्तं निजं धनम् ॥८३॥

कोशाद्दीनारभाण्डानि बहून्यादाय हेलया । ययौ मडवराज्यं स नावमारुह्य रंहसा ॥८४॥

ग्रामे तत्र प्रवृद्धाम्बुनिमग्ने नन्दकाभिधे । एकं निक्षिप्य दीनारभाण्डं व्यावर्तत द्रुतम् ॥८५॥ 85

सत्यं वातूल एवासौ सभ्येष्वपि वदत्स्वपि । वार्तां निशम्य तां राजा तच्चेष्टान्वेषकोभवत् ॥८६॥

क्रमराज्यं स संप्राप्य देवो यक्षदराभिधे । अञ्जलिभ्यां निचिक्षेप दीनारान्सलिलान्तरे ॥८७॥

यत्र तीरद्वयालम्बिशैलनिर्लुठिताः शिलाः । चक्रुर्वितस्तां निष्पीड्य पयः प्रतिपथोन्मुखम् ॥८८॥

दुर्भिक्षोपहता ग्राम्या दीनारान्वेषिणस्तदा । शिलाः प्रवाहादुद्धृत्य वितस्तां समशोधयन् ॥८९॥

एवं दिनानि द्वित्राणि पयो युक्त्या विकृष्य तत् । वितस्तामेकतः स्थानात्कर्मकृद्भिरबन्धयत् ॥९०॥ 90

पाषाणसेतुबन्धेन सुय्येनाद्भुतकर्मणा । सप्ताहमभवद्बद्धा निखिला नीलजा सरित् ॥९१॥

अधः प्रवाहं संशोध्य कुण्डवाहप्रतिक्रियाम् । कृत्वा बद्धैः शिलाबन्धैः सेतुबन्धमपाटयत् ॥९२॥

चिरकालनिरोधेन सोत्कण्ठेवाम्बुधिं प्रति । ततः प्रावर्तत जवाद्गन्तुं सागरगामिनी ॥९३॥

जम्बालाङ्का स्फुरन्मीना भूर्बभौ सलिलोज्झिता । व्यक्तकाञ्च्या सनक्षत्रा निर्मेघेव नभःस्थली ॥९४॥

यत्र यत्र चिरेरोधवेधे सलिलविप्लवे । तत्र तत्र वितस्तायाः प्रवाहान्नूतनान्व्यधात् ॥९५॥ 95

मूलस्रोतोऽपनिष्ठ्यूतभूरिस्रोता बभौ सरित् । एकभोगाभवानेकफणेवासितपन्नगी ॥९६॥

वामेन सिन्धुस्त्रिग्राम्या वितस्ता दक्षिणेन तु । यान्त्यौ ये समगंसातां प्राग्वैन्यस्वामिनोन्तिके ॥९७॥

वर्तेतेद्य महानद्योः कल्पापायेष्वनश्वरः । संगमो नगरोपान्ते स सुय्योपक्रमस्तयोः ॥९८॥

---

७१. [1]) Thus $A_1$; $A_2$ पञ्चाशदपि?.—[2]) Thus corr. by $A_2$ from $A_1$ °खारि. ७३. [1]) $A_2$ gloss चतुर्थे युगे. ७४. [1]) Thus $A_1$; $A_2$ सुय्याभि°. ७७. [1]) Thus corr. by later hand from $A_1$ °स्वया. ८९. [1]) Thus corr. by $A_2$ from $A_1$ °सन्वयत्, ८०. [1]) $A_2$ gloss चारणकारणे. ९०. [1]) समर्थं supplied by $A_2$ in space left by $A_1$.

अथाप्यास्तां फलपुरपरिहासपुरस्थितौ । विष्णुस्वामी संगमस्थ वैन्यस्वामी च तीरगौ[1] ॥९९॥

100 सुन्दरीभवनाभ्यर्णग्रामस्यायतनस्य तु । योगशायी हृषीकेशः सुय्यस्याभ्यर्चितस्तटे ॥१००॥

दृश्यन्तेऽद्यापि सरितां पूर्वस्रोतस्तटोद्गताः[1] । निषादाकृष्टनौरज्जुरेखाङ्का जीर्णपादपाः ॥१०१॥

स्फुरत्तरङ्गजिह्वाः स नदीर्मार्गमजिग्रहत् । तास्ताः स्वेच्छानुसारेण मान्त्रिकः पन्नगीरिव ॥१०२॥

बद्ध्वा शैलमयान्सेतून्वितस्तां सप्तयोजनीम् । महापद्मसरोवारि स चकार नियन्त्रितम् ॥१०३॥

महापद्मसरःकुण्डाद्वितस्ता येन योजिता । जवान्निर्याति[1] कोदण्डयन्त्रादिषुरिवाध्वना ॥१०४॥

105 उद्धृत्य सलिलादुर्वीमिवमादिवराहवत् । अनेकजनसंकीर्णान्ग्रामान्नानाविधान्व्यधात् ॥१०५॥

पालीभिरम्भः संरोध्य यान्कुण्डसदृशान्व्यधात् । कुण्डलानीति सर्वांस्तान्समृद्धान्ब्रुवते जनाः ॥१०६॥

उत्खातकीलनिवहान्नद्योऽद्यापि शरत्कृशाः । व्यञ्जन्ति जलगन्धेभबन्धनस्तम्भसंनिभान् ॥१०७॥

दीनारभाण्डान्यञ्जीत्स[1] यदगाधजलान्तरे । नन्दके निर्गतजले स्थलात्तान्यदलभ्यत ॥१०८॥

अदेवमातृकान्ग्रामान्परीक्ष्य विविधाः क्षितीः । संविभेजे विभक्तेन नादेयेन स वारिणा ॥१०९॥

110 असिञ्चच्च जलैर्ग्रामान्ग्रामान्मृदमुपादताम् । या यावता क्षणेनागाच्छोषं तां तावता हृदि ॥११०॥

कालेन मत्वा सेकार्हां प्रतिग्रामं जलप्लुतेः । परिमाणं विभागं च परिकल्प्य निरत्ययम् ॥१११॥

चकार चानूलाद्याभिः सिन्धुभिः सर्वतो दिशः । सत्फलोदारकेदारसंपत्संपन्नविभ्रमाः ॥११२॥ तिलकम्[1] ॥

न कश्यपेनोपकृतं न यत्संकर्षणेन वा । हेलया मण्डलेऽमुष्मिंस्तत्सुय्येन स्वकर्मणा ॥११३॥

भूमेर्जलादुद्धरणं द्विजक्षेत्रे तथार्पणम् । सेतुबन्धोऽश्मभिस्तोये दमनं कालियस्य च ॥११४॥

115 चतुर्षु सिद्धमिति[1] यद्विष्णोः सत्कर्मजन्मसु । सुय्यस्य तत्पुण्यराशेरेकस्मिन्नेव जन्मनि ॥११५॥ युग्मम्[2] ॥

यस्मिन्महाद्भिक्षेषु दीनाराणां शतद्वयी । धान्यखार्याः[1] प्राभिहेतुरा स्वर्गादभवत्पुरा ॥११६॥

ततः प्रभृति तत्रैव चित्रं कश्मीरमण्डले । षट्त्रिंशता[1] धान्यखारी दीनारैरुचितः क्रयः ॥११७॥

निर्गतायां[1] महापद्मसलिलात्स्वर्गसंनिभम् । वितस्तायास्तटे चक्रे स्वनामाङ्कं स पत्तनम्[2] ॥११८॥

स्वकृता स्थापिता तेन सरसि व्याघ्रदिक्तटे । आसंसारं स्थितामार[1]मर्यादा झषपक्षिणाम् ॥११९॥

120 सुय्या[1]कुण्डलनामानं ग्रामं कृत्वा द्विजातिसात् । सुय्यामु[2]द्दिश्य तन्नाम्ना सुय्यां[3]सेतुं स निर्ममे ॥१२०॥

तेनोद्धृतासु सलिलाद्भूषु ग्रामाः सहस्रशः । अवन्तिवर्मप्रमुखैर्जयस्थलमुखाः कृताः ॥१२१॥

ईदृशैर्धर्म्यवृत्तान्तैः प्रवर्तितकृतोदयः । अवन्तिदेवः पातिस्म मान्धातेव वसुंधराम् ॥१२२॥

प्राणप्रयाणसोद्योगरोगग्रस्तस्ततो ययौ । क्षेत्रं स त्रिपुरेशाद्रिनिष्ठज्येष्ठेश्वराश्रितम् ॥१२३॥

आत्मनस्तत्र निधिल्य त्रिपर्सि चिरगोपिताम् । प्राणान्ते प्राञ्जलिः सूरो वैष्णवत्वमदर्शयत् ॥१२४॥

125 तेनान्ते भगवद्गीताः शृण्वता भावितात्मना । ध्यायता वैष्णवं धाम निरमुच्यत जीवितम् ॥१२५॥

---

९९. [1]) Emended; $A_1$ अभ्यच्छा°, altered by later hand to अथच्छा°. १०१. [1]) Thus G and Edd.; A °द्गताः. १०४. [1]) Thus G and Edd.; A °र्योन्ति. १०८. [1]) Emended; A °भाण्डानी°. ११२. [1]) Supplied by $A_2$. ११५. [1]) Thus corr. by $A_1$ from $A_1$ चसिद्ध°.—[2]) युग्मम् supplied by $A_2$. ११६. [1]) Thus corr. by $A_1$ from खारी. ११७. [1]) $A_2$ gloss द्वात्रिंशदीनाराणां चाहयन्त्रे इति कश्मीरदेशभाषया परिगणने षट्त्रिंशद्दीनाराः त्रिकाहगन्ध इति शेषाः. ११८. [1]) Thus corr. by $A_2$ from $A_1$ निर्गता वा.—[2]) $A_2$ gloss सुय्यपुराख्यम्. ११९. [1]) Thus corr. by $A_2$ from $A_1$ स्थिरसमार°. १२०. [1]) Thus corr. by later hand from $A_1$ सुय्यकु°.—[2]) Emended; A सय्या°.—[3]) Thus corr. by later hand from $A_1$ सय्या°. १२१. [1]) $A_2$ gloss स्थितम्.

आषाढशुक्लपक्षस्य तृतीयस्यां क्षमापतिः[1] । वर्षे एकोनषष्टे स क्ष्माभृपास्तमुपाययौ ॥१२६॥
तस्मिन्प्रशान्ते प्रत्येकं विभवोत्सिक्तचेतसाम् । तुल्यमुत्पलवंश्यानां राज्येच्छा भूयसामभूत् ॥१२७॥
ततश्चक्रे प्रतीहारः प्रथमाद्रत्नवर्धनः । नृपं शंकरवर्माणमवन्तिनृपतेः सुतम् ॥१२८॥
कर्णपो विक्रमामात्यस्तनूजं शूरवर्मणः[2] । तद्वेषात्सुखवर्माख्यं यौवराज्येप्ययोजयत् ॥१२९॥
अनल्पघोरभूद्वैरं क्षितीशयुवराजयोः । यस्मिन्क्षणे क्षणे राज्यमासीद्दोलामिवाश्रयत् ॥१३०॥ 130
शिवशक्त्यादयो वीराः स्वामिकार्योज्झितासवः । यत्राभूवन्स्वसत्त्वस्य परीक्षाक्षणलाभिनः ॥१३१॥
कुर्वतां स्वामिशत्रूणां दानमानप्रतिश्रवम् । सत्त्वैकाभ्यात्र ते यस्मादानुकूल्यमशिश्रयन् ॥१३२॥
पिण्डस्पृहां परित्यज्याहंकृताः शिक्षिताः क्वचित् । तावन्त वीततमसः श्ववृत्तिमनुजीविनः ॥१३३॥
कथंचिदथ निर्जित्य युवराजं महौजसम् । प्राज्यः स्वविजयोंकारश्चक्रे शंकरवर्मणा ॥१३४॥
समाट्समरवर्माद्यैर्वितीर्णसमरोत्सकृत् । कीर्तिं श्रिया प्रणयिनीं लब्धयाधिविवेद सः ॥१३५॥ 135
अथ निर्जित्य दायादांल्लब्ध्वा लक्ष्मीं क्षितीश्वरः । जिष्णुर्दिग्विजयं कर्तुं श्रीमानासीन्महोद्यमः ॥१३६॥
तस्य कालबलादेशे प्रक्षीणजनसंपदि । लक्षाणि नव पत्तीनां द्वाराभिष्कामतोभवन् ॥१३७॥
स्वपुरस्योपकण्ठेपि योभूत्कुण्ठितशासनः । स एव रत्नोत्तंसेषु राज्ञामाज्ञां न्यवेशयत् ॥१३८॥
गच्छन्नाम्नायविच्छेदसंप्रदायः ककुब्जये । स्वप्रज्ञया समुन्नीतो राज्ञा शंकरवर्मणा ॥१३९॥
तत्सेना नरनाथानां पृतनाभिः पदे पदे । कुलापगेव कुल्याभिर्विशन्तीभिरवर्ध्यत ॥१४०॥ 140
दार्वाभिसार[1]राजेन[2] त्रस्यतां समुपाश्रिताः । अद्रिद्रोण्यो न वाहिन्यस्तत्सेनानादमादधुः ॥१४१॥
जनोल्बणैर्हरिगणैर्गृह्णन्हरिगणं क्षणात् । अनासादितदुर्गं स चक्रे दुर्गान्तरातिथिम् ॥१४२॥
लक्षाणि नव पत्तीनां वारणानां शतत्रयी । लक्षं च वाजिनामासीद्यस्य सेनापुरःसरम् ॥१४३॥
स गूर्जरं जयव्यग्रः स्वपराभवशङ्किनम् । त्रैगर्तं[2] पृथिवीचन्द्रं निन्ये तमसि हास्यताम् ॥१४४॥
पुत्रं भुवनचन्द्राख्यं नीविं[1] प्रागेव दत्तवान् । स प्रभूत्प्रणतिं कर्तुं तस्याभ्यर्णमुपागतः ॥१४५॥ 145
अथ तत्कटकं भ्राम्यद्धरिमण्डलनायकम् । वीक्ष्य संमुखमायान्तं महार्णवमिवोल्बणम् ॥१४६॥
समागमक्षणे यस्माच्छङ्कमानः स्वबन्धनम् । पलाय्य प्रययौ दूरं निर्वाणौजोग्निजृम्भितः ॥१४७॥ तिलकम्॥
यमप्रतिमसौन्दर्यमथाप्याहुः पुराविदः । तमेवाप्राक्षुदञ्चस्ता नृपाः कालमिवोल्बणम् ॥१४८॥
[illegible]लक्षानस्य संख्ये गूर्जरभूभुजः । बद्धमूलां क्षणाल्लक्ष्मीं भुवं दीर्घमरोपयत् ॥१४९॥
तस्मै दत्त्वा टक्कदेशं विनयादङ्गुलीमिव । स्वशरीरमिवापासीन्मण्डलं गूर्जराधिपः ॥१५०॥ 150
हृतं भोजाधिराजेन स साम्राज्यमदापयत् । प्रतीहारतया भृत्यीभूते थक्कियकान्वये ॥१५१॥

---

१२६. [1]) Thus corr. by $A_2$ from $A_1$ °पतेः. १२९ [1]) Thus $A_2$; $A_1$ °पापत्व°.—[2]) $A_4$ gloss अवन्तिवर्मभ्रातुः. १३४. [1]) $A_4$ gloss सुखवर्माणम्. १३९. [1]) Thus $A_1$; altered by later hand to °विच्छेद. १४१. [1]) $A_2$ gloss दार्वाभिसारः दाम वालौ इति भाषया.—[2]) $A_4$ gloss नरवाहननामा.—[3]) $A_2$ आम्यता.—[4]) $A_4$ gloss दार्वाभिसारनृपस्य सेनाः. १४४. [1]) $A_2$ gloss गुर्जरेति अथ गूर्जरः लघुगोज्वरात इति प्रसिद्धो देशः.—[2]) $A_2$ gloss त्रिगर्तौ नगरकोट तत्पतिः. १४५. [1]) $A_1$ writes in margin the gloss : नीविः । वेष इति देशभाषया प्र, which $A_2$ continues with सिद्धः यः स्वप्रतिनिधिः न्यूनबलेन माण्डलिकेनाधिकबलस्य राज्ञः प्रतीत्यर्थं समर्प्यते ॥. १४७ [1]) नि supplied by $A_2$ in space left by $A_1$. १५०. [1]) $A_2$ gloss तद्देशः अट्टिनदीतटे टाकरी नाम गुर्जरेशाद्दूरं वर्तमानो बीजनरिधातिलेन.

दरत्तुरुष्काधिपयोर्यः केसरिवराहयोः । हिमवद्विन्ध्ययोरासीदार्यावर्त इवान्तरे ॥१५२॥

उदभाण्डपुरे तस्थुर्यदीये निर्भया नृपाः । पक्षच्छेदभयाभ्यस्ता महार्णव इवाद्रयः ॥१५३॥

नक्षत्रेष्विव भूपेषु नभसीवोत्तरापथे । यस्यैव विपुला ख्यातिर्मार्तण्डस्येव मण्डलम् ॥१५४॥

155 स श्रीमांल्लल्लियः शाहिरलखानाभयः क्रुधा । निराकरिष्णोः साम्राज्यात्तस्य सेवां न लब्धवान् ॥१५५॥

एवं दिग्विजयं कृत्वा प्राप्तः स्वं निजमण्डलम् । प्रदेशे पञ्चसत्राख्ये स्वनाम्ना विदधे पुरम् ॥१५६॥

तस्यां श्रीस्वामिराजस्य तनयोदकपथप्रभोः । पूर्णिमेव क्षपाशम्भोः सुगन्धाख्याभवत्प्रिया ॥१५७॥

तथा समं पुरवरे सुरराजोपमो नृपः । तस्मिञ्शंकरगौरीशसुगन्धेशौ विनिर्ममे ॥१५८॥

द्विजस्तयोर्नायकाख्यो गौरीशशूरसद्मनोः । चातुर्विद्यः कृतस्तेन वाग्देवीकुलमन्दिरम् ॥१५९॥

160 परकाव्येन कवयः परद्रव्येण चेश्वराः । निर्लोठितेन स्वकृतिं पुष्णन्त्यद्यतने क्षणे ॥१६०॥

स्वल्पसत्त्वो नरपतिः स्वपुरख्यापनाय सः । वारापहारमकरोत्परिहासपुरस्य यत् ॥१६१॥

ख्यातिहेतुः पट्टवानं पशूनां क्रयविक्रयौ । इत्यादि यत्पत्तनेस्ति तत्तस्मिन्हि पुरेभवत् ॥१६२॥

राज्यप्रदेन नृपते रत्नवर्धनमन्त्रिणा । श्रीरत्नवर्धनेशाख्यो व्यधीयत सदाशिवः ॥१६३॥

चित्रं नरद्विपाः पूतमूर्तयः कीर्तिनिर्झरैः । भवन्ति व्यसनासक्तिपांसुस्नानमलीमसाः ॥१६४॥

165 अथ क्रमेण नृपतिर्लोभाभ्यासेन भूयसा । आधीयमानचित्तोभूत्प्रजापीडनपण्डितः ॥१६५॥

आरब्धैर्व्यसनैर्भूत्वा क्षीणकोशः क्षणे क्षणे । देवादीनां स सर्वस्वं जहारायासयुक्तिभिः ॥१६६॥

कर्मस्थाने पुरगृहग्रामादिधनहारिणा । तेनाट्टपतिभागाख्यगृहकृत्याभिधे कृते ॥१६७॥

धूपचन्दनतैलादिविक्रयोत्थं समाददे । द्रविणं देववेश्मभ्यः क्रयमूल्यकलाच्छलात् ॥१६८॥

प्रत्यवेक्षां मुखे दत्त्वा विभक्तैरधिकारिभिः । चतुःषष्टिं सुरगृहान्मुमोषेतरदञ्जसा ॥१६९॥

170 ग्रामान्देवगृहग्राह्यान्राजा प्रतिकरेण सः । स्वयं स्वीकृत्य चोत्पत्तिं क्ष्मां कार्षक इव व्यभात् ॥१७०॥

तुलां कृत्वा विभागीनां वर्षदेयां स पर्षदे । भुक्तिकम्बलमूल्यादिदम्भादभ्यधिकं ददौ ॥१७१॥

दिगन्तरस्थो ग्रामीणानूढभारानना गतान् । षडंशार्धभारमूल्यं वर्षमेकमदण्डयत् ॥१७२॥

वर्षेपरस्मिन्निखिलान्भारमूल्यं निरागसः । तथैव संख्यया ग्राम्यान्प्रतिग्राममदण्डयत् ॥१७३॥

इत्येषा रूढभारोढिः प्रथमं तेन पातिता । दारिद्र्यदूती ग्रामाणां या ययोदशधा स्थिता ॥१७४॥

175 स्कन्दकग्रामकायस्थग्रासवृत्त्यादिसंग्रहैः । अन्यैश्च विविधायासैर्व्यधाद्ग्रामान्स निर्धनान् ॥१७५॥

तुलापहारोपचयग्रामदण्डादिसंग्रहैः । इत्येष तेन संवाहो गृहकृत्ये प्रवर्तितः ॥१७६॥

व्यधत्त पञ्च दिविरांस्तस्मिन्भिन्नकर्मणि । षष्ठं तथा गञ्जवरं शाकवं लवटाभिधम् ॥१७७॥

---

१५३. [1]) This verse is added in margin by $A_2$; found in G R. १५४. [1]) $A_1$ विपुलख्यातिर्मा°; $A_2$ has altered this to विपुला ख्यातिर्मा°, but has subsequently restored the reading of $A_1$. G follows $A_1$, R reads as $A_2$. १५५. [1]) Thus corr. by $A_2$; $A_1$ °ल्लिय:.—[2]) Thus corr. by $A_1$ from °रिष्णु:; R G °रिष्णोः. १५६. [1]) $A_2$ gloss चक्रधरम्. —[2]) $A_2$ gloss चक्रधरे. १५७. [1]) $A_2$ gloss चक्रवर्मण:.—[2]) $A_2$ gloss कन्या. १५८. [1]) Emended; A गौरिश°. १६६. [1]) Thus corr. by $A_2$ from $A_1$ जयेशनाम°. १६८. [1]) Thus $A_1$; $A_2$ °मवेश्म°.—[2]) Thus corr. by later hand from $A_1$ °मूल्ये.—[3]) $A_2$ gloss कलान्तरम:. १६९. [1]) Thus $A_2$; $A_1$ मुमोषेत°. १७१. [1]) Thus $A_1$; $A_2$ भुक्त°.—[2]) कृत्वा supplied by $A_2$ in space left by $A_1$. १७७. [1]) Thus $A_1$. Cf. vi. 130; vii. 111, 119; misread विविराञ्च in R G Edd.

आत्मनो निरयं मूढः सोऽङ्गीकृत्यैवमुत्क्रियाम् । भाविनामकरोद्राज्ञां पापी वर्त्म नियोगिनाम् ॥१७८॥
निर्मिते मण्डलेऽमुष्मिन्सविद्यानामनादरे । राज्ञो प्रतापहानौ च नान्यः शंकरवर्मणः ॥१७९॥
मुख्येन गुणिनां राज्ञा धनहान्या प्रजापदः । मूर्खेण येन कायस्था दास्याः पुत्राः प्रवर्तिताः ॥१८०॥ 180
तथा कायस्थभोज्या भूर्जाता तस्यस्यवैक्षया । यथा संजायतेऽर्थानां हरणादिव भूभुजाम् ॥१८१॥
तस्मिन्घोरे प्रजादुःखे कृपार्द्रः पृथिवीपतिम् । पुत्रो गोपालवर्माख्यः कदाचिदिदमब्रवीत् ॥१८२॥
मदानुस्तात भवतः पूर्वं न्यासीकृतः स्थितः । वरो यः सत्यसंधस्य सोऽधुना प्रार्थ्यते मया ॥१८३॥
कायस्थप्रेरणाहेतैर्देवेनाद्य प्रवर्तितैः । आयासैः श्वासशेषेव प्राणवृत्तिः शरीरिणाम् ॥१८४॥
न च नामास्ति तातस्य काचिल्लोकद्वयोचिता । मनागपि हितप्राप्तिरेतया जनपीडया ॥१८५॥ 185
अदृष्टविषयां वार्तां गहनां विवृणोति कः । दृष्टस्त्वनिष्टादन्यत्र कर्मणानेन दृश्यते ॥१८६॥
एकतो व्याधिदुर्भिक्षप्रमुखा विपदोऽखिलाः । प्रजानामेकतस्त्वेका लुब्धता वसुधापतेः ॥१८७॥
भूभुजोऽभ्यस्तलोभस्य श्रीः कैश्चिन्नाभिनन्द्यते । अकालकुसुमस्येव फलसंभावनोज्झिता ॥१८८॥
दानं च सूनृता सूक्तिर्विश्रम्भजननं प्रभोः । लोभः पूर्वं तयोरेव विनाशाय महोद्यमः ॥१८९॥
प्रतापमायतिं शोभां हेमन्ताहस्य वारिदः । स्मृतिशेषां करोत्येव लोभश्च पृथिवीभुजाम् ॥१९०॥ 190
दायादा व्ययभीरुतापरिहतारब्धैर्भवन्त्युन्नता भृत्याः प्रत्युपकारकातरमतेः कुर्युर्न केऽपि प्रियम् ।
राशीभूतधनस्य जीवितहती शश्वत्तेदस्विजा भूभर्तुः क्रियते द्विषेव रभसाल्लोभेन किं नाप्रियम् ॥१९१॥
राजसंवाहनामार्थं नवायासो जनाद्धरत् । तदेष लोभप्रभवः प्रजानाथ निवार्यताम् ॥१९२॥
श्रुत्वेति राजपुत्रस्य सौजन्येनोज्ज्वलं वचः । स्मितधौताधरो राजा शनैर्वचनमब्रवीत् ॥१९३॥
तथाकृत्यविसंवादि वचः सौजन्यपेशलम् । स्मारयत्यद्य मामेतच्चित्तवृत्तिं पुरातनीम् ॥१९४॥
कुमारभावे पूर्वं मे तवेवार्द्रान्तरात्मनः । प्रजावत्सलता यस्य पर्याप्ता पर्यवर्धत ॥१९५॥ 195
सोऽहं धर्मे महद्धर्मे शीते दत्त्वावकर्मकुम् । पदातिरपपाद्वः पित्रा संचारितोऽभवम् ॥१९६॥
मृगव्यादौ हयैः सार्धमटन्तं कण्टकक्षतम् । अन्तर्बाष्पं मां विलोक्य तमस्यविपुरप्रगाः ॥१९७॥
स तानुवाच सामान्यो भूत्वाहं राज्यमाप्नुयाम् । काले काले सेवकानां जाने सेवापरिश्रमम् ॥१९८॥
ईदृग्दुःखमयं भुक्त्वा शास्यत्यन्यव्यथां ध्रुवम् । प्राप्तैश्वर्यो भवेन्मूढो गर्भेश्वरतयान्यथा ॥१९९॥
उपायैरीदृशैर्योऽहं कृतः पित्रा सुशिक्षितः । तेनापि प्राप्तराज्येन मयैव पीडिताः प्रजाः ॥२००॥ 200
गर्भवासव्यथां जातः शरीरी विस्मरेद्यथा । प्राप्तराज्यस्तथा राजा नियतं पूर्वचिन्तनम् ॥२०१॥
त्वयैव तस्मादेकोऽद्य वरो मह्यं प्रदीयताम् । प्राप्तराज्यः प्रजापीडां मा कार्षीस्त्वमतोऽधिकाम् ॥२०२॥
साध्वयमिति तेनोक्तः कृतान्योन्यस्मितैर्विटैः । राजाभिवीक्षितश्चासीत्कुमारो ह्रीनताननः ॥२०३॥
त्यागभीरुतया तस्मिन्गुणिसङ्गपराङ्मुखे । आसेवन्तावरा वृत्तीः कवयो भल्लटादयः ॥२०४॥
निर्वेतनाः सुकवयो भारिकौ लवटस्त्वभुत् । प्रसादात्तस्य दीनारसहस्रद्वयवेतनः ॥२०५॥ 205

---

१७८. ¹) Thus A; *varia lectio* in R G वार्षीयस्त्वा.—²) Thus corr. by $A_3$ from $A_1$ विधीयि°. १८१. ¹) $A_2$ gloss अपचयः. १९१. ¹) Thus $A_3$; $A_1$ °स्वचीयनं°. १९७. ¹) Thus corr. by $A_3$ from $A_1$ °रुन्तः. २००. ¹) Thus corr. by $A_3$ from $A_1$ °शिवाः. २०१. ¹) $A_3$ °चिन्तितम्.

कल्यपालकुले जन्म तत्तेनैव प्रमाणितम् । क्षीबोचितापभ्रंशोक्तेर्दैवी वाग्यस्य नाभवत् ॥२०६॥
वेष्टितश्मश्रुरुष्णीषो घ्राणस्याग्रे प्रदेशिनी । ध्यामैकाक्षा दृगित्यासीत्सुखराजस्य मन्त्रिणः ॥२०७॥
योयमार्योचितो वेषो दुर्नयासेविनः प्रभोः । छन्दानुवृत्त्या स प्राप नटस्येव विडम्बनाम् ॥२०८॥ युग्मम्॥
सोनुगैः सह निर्द्रोहं जघान द्रोहशङ्कया । भूरं दार्वाभिसारेशं शर्वर्यां नरवाहनम् ॥२०९॥
210 प्रजाभिशापे पतिते नृपस्योन्मार्गवर्तिनः । विंशाहिंशाः सुतास्तस्य व्यपद्यन्तामयं विना ॥२१०॥
वंशः श्रीर्जीवितं दारा नामापि पृथिवीभुजाम् । क्षणादेव क्षयं याति प्रजाविप्रियकारिणाम् ॥२११॥
इत्युक्तं वक्ष्यते चाग्रे व्यक्तमेतत्तु चिन्त्यताम् । प्रनष्टं तस्य नामापि यथा क्रूरेण कर्मणा ॥२१२॥
नाम्ना पत्तनमित्येव प्रख्यातं स्वपुरं कृतम् । कस्यान्यस्याभिधाध्वंसि यथा शंकरवर्मणः ॥२१३॥
स्वकीयः सुखराजस्य तेन द्वाराधिपः कृतः । वीरानकाभिधे स्थाने प्रमादावासदद्बंधम् ॥२१४॥
215 तत्कोपात्तु स्वयं राजा दत्तयात्रो मदोर्जितः । वीरानकं समुन्मूल्य प्रविवेशोत्तरापथम् ॥२१५॥
सिन्धुकूलाभयान्देशाञ्जित्वा भूरीन्भयातुरैः । कृतानतिर्महीपालैः प्रत्यावृत्तोभवत्ततः ॥२१६॥
उरशां विशतस्तस्य वास्तव्यैरौरशैः समम् । निकेतहेतोः सैन्यानामकस्मादुदभूत्कलिः ॥२१७॥
गिरिशृङ्गाधिरूढेन श्वपाकेन निपातितः । वेगवाही शरस्तस्य प्रमादादविशद्गलम् ॥२१८॥
मुमूर्षुरामान्कटकं संरक्ष्य नयतेति सः । उक्त्वा कर्णीरथारूढः स्थानात्तस्माद्विनिर्ययौ ॥२१९॥
220 हीनदर्शनसामर्थ्यः परिज्ञाय शनैर्गिरा । क्रन्दन्त्या वपुरालिङ्ग्य स्थितायाः क्षामभाषितः ॥२२०॥
पुत्रं गोपालवर्माख्यं न्यासीकृत्य च रक्षितुम् । शिशुदेश्यं महादेव्याः सुगन्धाया अबान्धवम् ॥२२१॥
फाल्गुणे कृष्णसप्तम्यां वत्सरे सप्तसप्ततौ । उत्स्वायमानविशिखो मार्ग एव व्यपद्यत ॥२२२॥ तिलकम् ॥
सुखराजादयः सैन्यं रक्षन्तः परभूमिषु । वृत्तान्तैर्गोपयन्तस्तं यान्त एवाभवन्पथि ॥२२३॥
तं यन्त्रसूत्रैस्ते मूर्ध्नो नम्रताजननावहैः । प्रतिप्रणामं ग्रामाणां सामन्तानामकारयन् ॥२२४॥
225 षड्भिर्दिनैर्निजे स्थाने प्राप्ते बोल्यासकाभिधे । चक्रिरे गतसंत्रासास्ततस्तस्यान्त्यसत्क्रियाम् ॥२२५॥
तिस्रः सुरेन्द्रवत्याद्या राज्ञ्यो राजानमन्वयुः । वेलावित्तः कृतज्ञश्च जयसिंहाह्वयः कृती ॥२२६॥
द्वौ लाडो वज्रसारश्च तं भृत्यावनुजग्मतुः । इति षड्भिश्चिताकुण्डैः सहसाक्रियताग्निसात् ॥२२७॥
ततो जुगोप गोपालवर्मा धार्मिकतोज्ज्वलः । सुगन्धया पाल्यमानः सत्यसंधो वसुंधराम् ॥२२८॥
मध्ये लालितकादीनां दुर्वृत्तानां वसन्नपि । अनतिक्रान्तबाल्योपि दुःसंस्कारान्न सोग्रहीत् ॥२२९॥
230 भूपालजननी भोगैर्वैधव्येप्यधिकमुन्मदा । सा प्रभाकरदेवाख्यमचीकमत मन्त्रिणम् ॥२३०॥
तया निर्भरसंभोगप्रीतया स व्यधीयत । सौभाग्यपट्टभृङ्गारमौलिचक्रत्रयाङ्कितः ॥२३१॥
कोशाध्यक्षेण राज्ञ्यास्तस्या लुण्ठितसंपदा । उदभाण्डपुरे तेन शाहिराज्यं व्यजीयत ॥२३२॥

२०७. [1]) Thus corr. by $A_2$ from $A_1$ °रागस्व. २१०. [1]) न supplied by $A_2$.—[2]) $A_1$ writes below this word ५०. २११. [1]) $A_2$ gloss पत्नम्. २१४. [1]) $A_2$ gloss द्वारविषयायां वीरानके.—[2]) $A_2$ gloss सुखराजस्वकीय. २१७. [1]) $A_2$ gloss उद्यु. २१९. [1]) Thus $A_2$; $A_1$ °रूढान्स्था°. २२०. [1]) Thus corr. by later hand from $A_1$ °लिङ्ग्या. २२३. [1]) $A_2$ gloss मन्त्रिणः.—[2]) Thus $A_1$; $A_2$ वृत्तान्तं गो°. २२५. [1]) Thus A R G; $A_2$ gloss वराहमूलसमीपे द्वारवरां. २२६. [1]) Emended: A R वालावित्त; G वालावित्तु. Cf. वेलावित्त vi. 73, 106, 324. २२९. [1]) $A_2$ gloss लालितकाः पशावयः. २३२. [1]) Thus corr. from $A_1$ उदभाण्ड° by $A_2$ which adds the gloss हैम्बक्; R G read as $A_2$. Cf. उदभाण्डपुरे v. 153.—[2]) Thus $A_1$; $A_2$ व्यधीयत; G R follow $A_2$.

आज्ञातिक्रमिणः शाहेः कृत्वा कमलुकाभिधाम् । तोरमाणाय स प्रादाद्राज्यं लल्लियसूनवे ॥२३३॥
प्रत्यावृत्तोऽथ नगरं विवेश विजयोर्जितः । शौर्यशृङ्गारवसतिः साभिमानः स्वविग्रहे ॥२३४॥
स राजजननीजारः साहंकारो जयार्जनात् । मानक्षतिमधिक्षेपैर्वीराणां व्यधितान्वहम् ॥२३५॥ 235
क्षुद्रेण कामिना वेश्यावेश्मनीव नृपास्पदे । तेनावृते संप्रवेशो नाभूदन्यस्य कस्यचित् ॥२३६॥
शनैर्विज्ञातवार्तस्य धनमानापहारकृत् । सोऽभूदक्षिगतोऽत्यर्थं राज्ञो गोपालवर्मणः ॥२३७॥
भिद्यते यत्र गङ्गेऽस्मिंस्तत्सर्वं शाहिविग्रहे । गतमित्यब्रवीद्भूपं स कोशगणनोद्यतम् ॥२३८॥
अथ गङ्गाधिपो राजभीतः क्षारोपवेदिनम् । रामदेवाह्वयं बन्धुमभिचारमकारयत् ॥२३९॥
तयाभिचारक्रियया भुक्तभूर्वत्सरद्वयम् । गोपालवर्मनृपतिर्जातदाहो व्यपद्यत ॥२४०॥ 240
व्यक्तीभूतकुकर्मा स राजदण्डभयाकुलः । रामदेवोऽवधीत्पापः स्वयमेव स्वविग्रहम् ॥२४१॥
रथ्यागृहीतो गोपालवर्मभ्राताथ संकटः । बभूव प्राप्तराज्यः स दशभिर्दिवसैर्व्यसुः ॥२४२॥
अथ वंशक्षये वृत्ते राज्ञः शंकरवर्मणः । प्रजाप्रार्थनया राज्यं सुगन्धा विदधे स्वयम् ॥२४३॥
गोपालपुरगोपालमठगोपालकेशवान् । सा पुरं च स्वनामाङ्कं विदधे धर्मवृद्धये ॥२४४॥
गोपालवर्मणो जाया नन्दानिन्द्यान्वयोद्भवा । शिशुरप्यभवन्नन्दामठकेशवधारिणी ॥२४५॥ 245
अन्तर्वत्न्याः क्षणे तस्मिन्पत्न्या गोपालवर्मणः । जयलक्ष्म्यां बबन्धास्थां श्वश्रूः संतानकाङ्क्षिणी ॥२४६॥
तस्यां विपन्नापत्यायां प्रसवान्तेऽतिदुःखिता । साभूदन्वयिने राज्यं कस्मैचिद्दातुमुद्यता ॥२४७॥
तस्मिन्काले महीपालनिग्रहानुग्रहक्षमम् । तत्र तन्त्रिपदातीनां कृतसंहत्यभूत्कुलम् ॥२४८॥
ततः समाश्रितैकाङ्गा स्वयं संवत्सरद्वयम् । सुगन्धा विदधे राज्यं सा मिथस्त्वेन तन्त्रिणाम् ॥२४९॥
योग्याय दातुं साम्राज्यं कस्मैचित्सा किलैकदा । मन्त्राय मन्त्रिसामन्तांस्तन्त्र्यैकाङ्गानढौकयत् ॥२५०॥ 250
अवन्तिवर्मवंशान्ते नप्तारं शूरवर्मणः । गग्गायाः स्वकुटुम्बिन्याः संजातं सुखवर्मणा ॥२५१॥
अनुव्रतो मे संबन्धिस्नेहादेवं भवेदिति । राज्ये निर्जितवर्माख्यं कर्तुं तस्या मनोऽभवत् ॥२५२॥ युग्मम् ॥
तथा तदुक्तं विषयव्यसनित्वेन जागरात् । रात्रौ दिवाशयतया योऽप्यनुत्थानदूषितः ॥२५३॥
नाम पङ्गुरिति प्राप राज्ये का तस्य योग्यता । इत्युदीर्याभवन्भिन्ना यावत्केचन मन्त्रिणः ॥२५४॥
संहतैर्भेदनिर्यातैस्तावन्निर्जितवर्मजः । दशवर्षः कृतो राजा पार्थस्तन्त्रिपदातिभिः ॥२५५॥ तिलकम् ॥ 255
ते गङ्गाधिपवाक्यानां सुगन्धोत्पाटनात्कृतम् । प्रायश्चित्तममन्यन्त मानक्षतिविधायिनाम् ॥२५६॥
सा राजधान्याः साम्राज्यपरिभ्रष्टा विनिर्ययौ । कृताधिकारा हारस्य पतितैर्बाष्पबिन्दुभिः ॥२५७॥
शरणं प्रत्यभाङ्क्ष्यो यो यस्तस्याः क्रमागतः । तं तमैक्षिष्ट निर्यान्ती विपक्षैः सह संगतम् ॥२५८॥
वर्षे एकाननवते संभूयैकाङ्गसैनिकाः । गत्वा सुगन्धामानिन्युः पुनर्हुष्कपुरस्थिताम् ॥२५९॥

२३३. [1]) Thus corr. by later hand from $A_1$ °भम्.—[2]) Thus $A_2$; $A_1$ तोमराणाय. २३५. [1]) Thus $A_2$; $A_1$ °जननीसङ्गात्साभिमानी.—[2]) Thus corr. by $A_2$ from $A_1$ मम:°. २३७. [1]) Thus corr. by $A_2$ from $A_1$ °भालाप°. २३९. [1]) $A_4$ gloss प्रभाकर-. २४३. [1]) $A_2$ gloss गोपालवर्मसङ्कटयोर्माता सुगन्धा.—[2]) Thus corr. by $A_2$ from $A_1$ पुरम्. २४४. [1]) $A_2$ gloss सुरीपुरम्. २४५. [1]) $A_2$ gloss नन्दीमठ. २४८. [1]) Thus corr. by $A_2$ from $A_1$ विग्रह°.—[2]) Thus $A_2$; $A_1$ तत्र. २४९. [1]) Thus emended; A G R समित्र°.—[2]) $A_2$ v. l. मन्त्रिणाम्; struck out. २५०. [1]) Thus $A_2$; $A_1$ °न्तासन्त्यै°. २५५. [1]) $A_2$ gloss निर्जितवर्मा. २५६. [1]) $A_2$ gloss कोटरवाः. २५७. [1]) Thus corr. by later hand from $A_1$ राज्य°.—[2]) Thus $A_2$; $A_1$ हता°. २५९. [1]) Thus $A_1$; $A_2$ एकोन°.—[2]) $A_2$ gloss वराहमूले.

260 तामापतन्तीमाकर्ण्य पार्थानुगतका भयात् । वैशाल्ये तन्त्रिणः सर्वे निर्ययुः समरोन्मुखाः ॥२६०॥
ते जित्वा नगरे सर्वे वैशाखे भिन्नसंहतीन् । एकाङ्गान्भूरिसंघातान्बबन्धुस्तौ पलायितान् ॥२६१॥
निष्पालकविहारान्तस्तैर्बद्धा सा व्यपद्यत । अनित्यपतनोच्छ्राया विचित्रा भाग्यवृत्तयः ॥२६२॥
अस्मिन्धनजनक्षैण्यनिमित्ते मण्डलोत्तमे । सर्वतोदिक्कमुत्तस्थावथानर्थपरंपरा ॥२६३॥
जनकः पालको भूत्वा पङ्गुर्बालस्य[1] भूपतेः । तामात्योपीडमाक्रोकमुत्कोचमहत्तरः ॥२६४॥
265 भूभुजो नामकायस्था इवान्योन्यविपाटनम् । इत्याधिकाधिकोत्कोचा विदधुस्तन्त्रिसेवया ॥२६५॥
यद्राजैः[1] कुल्यकुड्याद्या विलब्धास्तत्र मण्डले । तन्त्रिणां हुण्डिकादानाद्भूभुजां जीविकाभवत् ॥२६६॥
विष्णुः पुराणाधिष्ठाने[1] मेरुवर्धनमन्त्रिणा[2] । श्रीमेरुवर्धनस्वामिनामा येन व्यधीयत ॥२६७॥
तदात्मजाः[1] क्षणे तस्मिन्गहनद्रोहचाक्रिकाः । चक्रुर्निगूढराज्येच्छाः प्रजायासैर्धनार्जनम् ॥२६८॥ युग्मम् ॥
साधं सुगन्धादित्येन[1] गूढं शंकरवर्धनः । तेषां ज्येष्ठो बद्धसख्यो[2] बुभोज नृपमन्दिरम् ॥२६९॥
270 क्षीणप्रजे क्षणे तस्मिन्क्षारपात इव क्षते । उद्दीपः[1] प्लाविताशेषशरच्छालिरजृम्भत ॥२७०॥
खार्यां सहस्रक्रेयायां दुर्लभे भोजनेऽभवत् । वर्षे त्रिनवते[1] घोरे दुर्भिक्षेण जनक्षयः ॥२७१॥
शवैश्चिरमविश्राम्यत्सेकोच्छूनविमर्दितैः । वितस्ता सर्वतश्छन्ना दुर्लक्ष्यसलिलाभवत् ॥२७२॥
विश्वतोऽस्थिमये जाते[1] नैविडात्क्षितिमण्डले । सर्वभूतभयाराधि श्मशानैक्यमजायत ॥२७३॥
महार्ह[1]धान्यसंभारविक्रयप्राप्तसंपदः । मन्त्रिणः क्ष्मापतेः प्रापुस्तन्त्रिणश्च धनाढ्यताम् ॥२७४॥
275 आधेयः[1] क्ष्माभुजः सोऽभून्मन्त्री यस्तादृशीः प्रजाः । विक्रीय बाहयन्नासीत्तन्त्रिणां हुण्डिकाधनम् ॥२७५॥
अटव्यां वृष्टिसंपाते[1] बालबर्बरपङ्गुनम् । बहिः सर्वं जनं पश्यन्कश्चित्प्राप्तोष्णमन्दिरः ॥२७६॥
यथा तथा जनं दुःस्थं वीक्ष्य कापुरुषश्चिरम् । राजधानीस्थितः पङ्गुः स्वसुखं बहमन्यत ॥२७७॥ युग्मम् ॥
तुञ्जीनचन्द्रापीडादिप्रजापालप्रियाः प्रजाः । एवं तस्मिन्क्षणे नीताः संक्षयं राजराक्षसैः ॥२७८॥
प्रापुश्चिरमवस्थानं पार्थिवा न तदा क्वचित् । धारासंपातसंभूता बुद्बुदा इव दुर्दिने ॥२७९॥
280 पार्थः पितरमुत्पाद्य कदाचित्प्राभवत्स्वयम् । कदाचित्स तमुत्पाद्य तन्त्रिवशक्रियाप्यभूत् ॥२८०॥
अक्षीणयत्पङ्गुवधूवशामण्डलं युवा । सुगन्धादित्यबीजाभो[1] व्यवायविधिसेवया[2] ॥२८१॥
राज्यां बप्पटदेव्याः स निर्दयैः सुरतोत्सवैः । खण्डयामास कण्डूतिं साध्यस्यार्थेवणां धनैः ॥२८२॥
भगिनीभगसौभाग्यबद्धराज्याः स्वयं ददुः । यां पङ्गवे मनोज्ञाङ्गीं मेरुवर्धनसूनवः ॥२८३॥
सुगन्धादित्यमौत्सुक्यात्सापि देवी मृगावती । स्वयं संबुभुजेऽभ्यर्थ्य कान्ता कामितकामिनी ॥२८४॥
285 पर्यायेणाभवद्भृत्यः स तयोर्भोगवृद्धये । दरिद्रयोषितोरेकं भुक्तिपात्रमिवान्वहम् ॥२८५॥

२६४. [1]) A₂ gloss निर्जितवर्मा. २६६. [1]) Thus A₁; altered by later hand to यद्राजैः. २६७. [1]) A₂ gloss पांसकुलम् इति प्रसिद्धे ग्रामे.—[2]) A₄ gloss पङ्गुश्वशुरेण. २६८. [1]) A₂ gloss निर्जितवर्मणः तदात्मजाः चक्रवर्मा सूरवर्मा । शम्भुवर्धनः शंकरवर्धनः मेरुवर्धनपुत्राः २६९. [1]) A₂ gloss मन्त्रिणा.—[2]) A₄ सुगन्धादित्येन सह. २७०. [1]) Thus corr. by later hand from A₁ उद्दीपः; A₄ gloss द्वोपी (Kaśmīrī). २७१. [1]) A₄ gives the full date Saptarshi ३९९३. २७२. [1]) Thus A₁; altered by later hand to दुर्लक्ष्य°. २७३. [1]) जाते supplied by A₂ in space left by A₁. २७४. [1]) A₂ महार्घ°. २७५. [1]) Thus A₁; A₂ आवेशः. २७६. [1]) Thus corr. by A₂ from A₁ वृष्टि°. २८१. [1]) A₂ gloss मन्त्री.—[2]) A₂ gloss व्यवायः मैथुनम्. २८२. [1]) A₄ gloss चक्रवर्मणाद्युः. २८५. [1]) A₄ gloss सर्वोर्बप्पटदेवीमृगावत्यो पङ्गुपत्न्योः.

पुत्रयो राज्यलाभाय स्वर्धयाभ्यां स्वमन्त्रिणे । दत्ता निभुवनभट्टा धनशालै¹ः सदक्षिणा ॥२८६॥
अथ पार्थं समुत्थाप्य तत्पिता पङ्गुराश्रितः । तन्त्रिभिः सप्तनवते वर्षे पौषेऽभिषेचितः ॥२८७॥
गतेऽष्टानवते वर्षे सोऽभिषिच्य शिशुं सुतम् । चक्रवर्माभिधं राज्ये क्षीणपुण्यो व्यपद्यत ॥२८८॥
पैतृकं वाञ्छतो राज्यं पार्थस्यानुचरा व्यधुः । एकाङ्गैः सह संग्रामं तत्र तन्त्रिपदातयः ॥२८९॥
मातुर्बप्पटदेव्याः स कंचित्कालं शिशुर्नृपः । मातामह्याः क्षिञ्जिकायाः पाल्यस्त्वासीत्समा दश ॥२९०॥ 290
बाल्यादव्यवहारीःशील्ये तस्मिंस्तत्पालनं तयोः । निर्दोषमासीदण्डस्यफणिलालनसंनिभम् ॥२९१॥
जातः पङ्गोर्मृगावत्यां वत्समेव्येव तन्त्रिभिः । चक्रवर्माणमुत्पाद्य शूरवर्मा नृपः कृतः ॥२९२॥
निःस्नेहा मातुलामात्याः प्रययुः स्वार्थतत्पराः । अदत्त्वा तन्त्रिणां देयं तस्योत्पादनहेतुताम् ॥२९३॥
भर्तुर्नृपोऽपि स क्ष्माभृद्विना भूरिधनार्पणम् । गुणवानिव वेश्यानां तन्त्रिणां नाभवत्प्रियः ॥२९४॥
वर्षे गते समुत्थाप्य द्रुहोत्पशितया नृपम् । वत्सरार्धं पुनः पार्थं व्यधुस्तन्त्रिपदातयः ॥२९५॥ 295
अभूत्साम्बवती वेश्या साम्बेश्वरविधायिनी । पार्थप्रिया तन्त्रिपक्षसंपदे ज्ञातचक्रिका ॥२९६॥
कालापेक्षी चक्रवर्मा ततोऽप्यैच्छद्धनं बहु । एकादशाब्दस्याषाढे कृतो भूयोऽपि तन्त्रिभिः ॥२९७॥
पार्थादीन्यैः समुत्पाद्य भुक्ता चक्रिकया पुरा । तैस्तैः स्थानैश्च ये तेभ्यो जीवनान्युपलेभिरे ॥२९८॥
पितां भ्रातां च वैरस्यं राज्यादुत्पाटितोऽभवत् । संबन्धिभ्योऽपि पैतृभ्य कन्यां दत्त्वेतरेतरम् ॥२९९॥
अकरोद्वृद्धदोषाणां तेषामेव स नष्टधीः । मेरुवर्धनपुत्राणामधिकारसमर्पणम् ॥३००॥ तिलकम् ॥ 300
कृतोऽक्षपटलाधीशस्तेन शंकरवर्धनः । गृहकृत्येष्वसत्कृत्यो दाम्भिकः शंभुवर्धनः ॥३०१॥
पौषे तस्यैव वर्षस्य धनाभावात्स तन्त्रिणाम् । अदत्तकुण्डिकादेयः पलायिष्ट भयाकुलः ॥३०२॥
स्थिते मड्वराज्यान्तस्तस्मिञ्शंकरवर्धनः । राज्यार्थी तन्त्रिणां दूतं प्राहिणोच्छंभुवर्धनम् ॥३०३॥
आवर्जितैः स निखिलैरधिकोत्कोचवर्षया । वञ्चयित्वाग्रजं राज्ये तैः स्वमेवाभ्यषेचयत् ॥३०४॥
तीर्थस्थितः स्वकुलजांस्तिमिरत्ति भुङ्क्ते मौनी बकास्तिमिमुपेत्य वनान्तवासी ।
व्याधो निहन्ति तु बकं प्रभवन्ति ते ते पात्राण्युपर्युपरि वञ्चनचञ्चुतायाः ॥३०५॥ 305
भ्रष्टश्रीश्चक्रवर्माथ निशि श्रीढक्कवासिनः । एकदा डामराग्र्यस्य संग्रामस्याविशद्गृहम् ॥३०६॥
ज्ञात्वा कान्तिविशेषेण राजानं स कृताञ्जलिः । प्रणम्य ग्राहयामास संभ्रमान्निजमासनम् ॥३०७॥
राज्यभ्रंशादिवृत्तान्तमुक्त्वा साहाय्यकार्थिनम् । तं विपत्पेशलं प्रह्वो विचिन्त्योवाच डामरः ॥३०८॥
तन्त्रिणां वा तृणानां वा राजन्का गणना रणे । त्वत्सेवनार्थे सामर्थ्यं कस्मिन्न मम कर्मणि ॥३०९॥
प्राप्तोत्साहः पुनर्नूनमस्मानेव हनिष्यसि । विस्मरन्त्युपकारं हि कृतकार्या महीभुजः ॥३१०॥ 310
कर्णीरोहे च आलम्बहेतुर्भूभृच्छिन्नमपि तम् । कुठारिकस्तरुस्कन्धमिवाधोगमनोन्मुखः ॥३११॥
श्रीवैर्यादिप्रकर्षेण येनोपक्रियते नृपः । प्राप्तोदयः स तेनैव द्रष्टुं नेच्छत्युपकारिणम् ॥३१२॥

---

२८६. 1) $A_2$ reads धनशालैः. २९०. 1) Thus corr. by later hand from $A_1$ क्षिञ्जि°. २९२. 1) $A_4$ gloss मेरुवर्धनपुत्र्यां — 2) Thus $A_2$; $A_1$ तन्त्रिभिः. २९६. 1) $A_2$ gloss साम्बीरचभाडि. २९८. 1) $A_4$ gloss अथ सर्वेष चक्रवर्मेण मेरुवर्धनपुत्रपराक्रमः. — 2) $A_4$ पार्थादिभ्यः. २९९. 1) $A_4$ gloss पङ्गुः. — 2) $A_4$ gloss पार्थः शूरवर्मा वा. — 3) $A_4$ gloss चक्रवर्मेण. — 4) $A_4$ gloss कृपावती. — 5) $A_4$ gloss पङ्गुपते. ३०५. 1) Emended; A चुञ्चु°. ३१०. 1) Thus corr. by $A_2$ from $A_1$ °स्मानेव.

अस्मिन्स्थिते विपदमूदिति संचिन्त्य वर्ज्यते । मूढैः परिवृढैराप्तसेवको मङ्गलेच्छुभिः ॥३१३॥
संपद्यापत्सहायस्य विस्मृतोपक्रिया नृपाः । मध्ये प्रमादस्खलितमुत्पश्यं हृदि कुर्वते ॥३१४॥
315 आमयार्तिरिपुत्रासक्षुद्वादौ दृष्टवैकृतान् । लब्धोदया ह्रीभयेन क्ष्मापा घ्नन्त्यनुयायिनः ॥३१५॥
राज्ञः[1] सतोपि नाश्वासो यस्येभस्येव कर्णयोः । अविभुग्न[2]प्रकृतयो ध्वनन्ति मधुपा इव ॥३१६॥
दिवसे संनिधानेन पिशुनप्रेरणा प्रभोः । ईर्ष्यालुना स्वैरिणीव रक्षितुं यदि पार्यते ॥३१७॥
राजजम्बुपाध्यायो देवी यच्छिक्षयेद्रहः । तत्र प्रजागरः कर्तुमसर्वज्ञैर्न शक्यते ॥३१८॥
कथंचिदह्नि हृदये कुशलैर्धिनिवेशिता । शिक्षा गौर[1]खरेणेव राज्ञा विस्मार्यते निशि ॥३१९॥
320 न के लोभं[1] समुत्पाद्य जिह्वया स्निग्धदीर्घया । पिपीलका इव ग्रस्ताः क्ष्मापालैः शल्यकैरिव ॥३२०॥
जानाति हन्तुं हन्तव्यमासन्नं न तु दूरगम् । एको बकः परं[1] सत्यं द्रोहवृत्तिर्महीपतिः ॥३२१॥
न नाम कण्टकाकीर्णः कौटिल्यं लक्ष्यतां नयेत् । कालापेक्षी क्षितिपतिः शरीरमिव जाहकः[1] ॥३२२॥
नमन्नपि हरिर्हन्याद्दाक्षिण्यन्नपि पन्नगः । विहसन्नपि वेतालः स्तुवन्नपि महीपतिः ॥३२३॥
अद्रोहवृत्त्या तस्मात्त्वं द्रक्ष्यस्यस्मान्सदा यदि । ससैन्यस्ते तदेषोहं प्रातरेव पुरःसरः ॥३२४॥
325 तदाकर्ण्याब्रवीद्राजा लज्जास्मितसिताधरः । स्वात्मेव यूयं संरक्ष्या मम पूर्वोपकारिणः ॥३२५॥
ततो निक्षिप्य चरणं रक्ताक्ते मेषचर्मणि । कोशं[1] चक्रतुरन्योन्यं सखड्गौ नृपडामरौ ॥३२६॥
अथ संघटितासंख्यचण्डडामरमण्डलः । चक्रवर्माकरोद्यात्रां प्रत्यूषे नगरोन्मुखः ॥३२७॥
तस्मिन्क्षणे पुरस्कृत्य योद्धुं शंकरवर्धनम् । विनिर्ययुः सिताष्टम्यां चैत्रे तन्त्रिपदातयः ॥३२८॥
कालानुवृत्तिप्रच्छन्नं तेषां संभावनोज्झितम् । स तत्वरे पुरस्कर्तुं चक्रवर्मा स्वविक्रमम् ॥३२९॥
330 अथ प्रवृत्ते संग्रामे घोरे पद्मपुराद्बहिः । जघान प्रेरितहयः पूर्वं शंकरवर्धनम् ॥३३०॥
हते सेनाधिपे तत्र शतधा तन्त्रिवाहिनी । प्रययौ पवनाघातप्रेरिता[1] नौरिवार्णवे ॥३३१॥
पृष्ठानुसरणोद्युक्तो[1] नृपस्तेषामपाहरत् । गतिं तुरगवेगेन शिरःश्रेणिं तथासिना ॥३३२॥
भ्रमतः समरे[1] बभुर्वीरपट्टाञ्चलच्छटाः[2] । चक्रवर्ममृगेन्द्रस्य सटापटलविभ्रमम् ॥३३३॥
किमन्यत्पञ्चषाण्यासन्सहस्राणि रणाङ्गने । पतितानि क्षणादेव हतानां तत्र तन्त्रिणाम् ॥३३४॥
335 तन्त्रिणो रणसंरम्भपरिश्रान्ताः क्षमातले । गृध्रपक्षकृतच्छाये शायिताश्चक्रवर्मणा ॥३३५॥
विभुद्रवद्रथैर्गुणिभिर्निहतैः[1] संश्रितैः समम् । अभूषयद्वीरशय्यां शूरः शंकरवर्धनः ॥३३६॥
उदयं संहता एव संहता एव च क्षयम् । प्रयान्तः स्पृहणीयत्वं तन्त्रिणः कस्य नागमन् ॥३३७॥
माननीयानधृष्यांश्च महावंश्यान्महीपतीन् । अहीनिव खिलीकृत्य भिक्षयन्तः क्षणे क्षणे ॥३३८॥

३१६. [1]) $A_3$ note न विभुग्ना प्रकृतिर्येषां ते । अविभुग्नप्रकृतयः सूचकाः यस्य राज्ञः कर्णयोर्विषये ध्वनन्ति । तस्य सतोपि सार्वोरपि स्वयं नाश्वासः । इभस्येव । यथा हस्तिनः कर्णयोर्मलिना मधुपा ध्वनन्ति ॥—[2]) $A_2$ gloss कुटिलाः. ३१९. [1]) $A_3$ गौपस्व°. ३२०. [1]) $A_3$ भोगं. ३२१. [1]) Thus corr. by later hand from $A_1$ परं. ३२२. [1]) Thus $A_1$ and R, misread in G and Edd. आर्यकः; $A_3$ gloss आर्यको घूकमार्जारसदृशकैरण्डकास्तु चेति विश्व. ३२६. [1]) $A_3$ gloss दिव्यमित्यर्थः । तथो मैत्रीसम्बन्धार्थं रक्ताक्ते मेषचर्मणि (gloss भल्लायां) परस्परं पादप्रक्षेपं कुरुत इति शपथसंप्रदायः दिव्ये च कोशः पुष्पादिकुड्मलासिपेयामर्योरिति मङ्खः. ३३१. [1]) $A_3$ विशीर्णा. ३३२. [1]) Thus corr. by later hand from $A_1$ °सारणो°. ३३३. [1]) $A_2$ gloss अधारयन्.—[2]) $A_2$ gloss शिरस्त्राबन्धनार्थं दत्तो यो वीरपट्टः डोपट इति प्रसिद्धः तस्य अञ्चलच्छटाः फिते इति प्रसिद्धाः. ३३६. [1]) Thus $A_1$; altered by later hand to °हतः.

अनयन्कीदृशा क्रीडां मायन्तो जीविकाकृते । मागादितुण्डिकाः क्रूरा इव ये गर्भवृत्तयः ॥३३९॥
ते तन्त्रिणः क्षणादन्धा मूढवैरविधायिना । विमाननाविविधेन चक्रवर्ममहाहिना ॥३४०॥ तिलकम् ॥ 340
अथ द्वितीये दिवसे समानामपि तन्त्रिणाम् । वीरः संघटनां यावदकरोच्छंभुवर्धनः ॥३४१॥
तावन्मिलितसामन्तसचिवैकाकुलाकुलितः । सैन्यैर्नानापथायातैर्नदद्भिर्व्याप्तदिक्पथः ॥३४२॥
चलत्स्वध्येभवाराणां नृत्यतेवाश्ववाजिना । वल्गाकृष्टनोदस्तम्भं शिरस्त्रं वामपाणिना ॥३४३॥
सस्वेदवरहस्ताग्रवेष्टनोक्षतनत्सरुः । वज्रस्य विम्बितार्कस्य भाभिर्द्योतितकुण्डलः ॥३४४॥
कवचोत्क्षेपसंरब्धकण्ठायासेन ताम्यता । बद्धभ्रुकुटिबन्धेन वदनेन भयावहः ॥३४५॥ 345
तर्जयन्कृतहुंकारान्कुण्ठकान्कुण्ठितायुधान् । शिरोक्षिसंज्ञया सस्त्रवास्तव्यकृतसान्त्वनः ॥३४६॥
भेरीरवैः श्रुतिं भिन्दन्वीराशीर्घोषरोधिभिः । संग्रामजयशोभाढ्यश्चक्रवर्माविशत्पुरम् ॥३४७॥ कुलकम् ॥
तस्मिन्सिंहासनं प्राज्यमाक्रामति जयोर्जिते । बद्धा कुतश्चिदानिन्ये भूभटः शंभुवर्धनम् ॥३४८॥
राज्ञः पुरस्तात्तं शस्त्रपातभीमीलितेक्षणम् । भर्त्सि प्रदर्शयन्पापचण्डाल इव सोवधीत् ॥३४९॥
उज्झतां धर्ममर्यादां भृत्यानां जनकोपमाम् । हन्तुं नरेन्द्रान्द्रोहेण प्रारम्भः शंभुवर्धनः ॥३५०॥ 350
प्राप्य निष्कण्टकं राज्यं चक्रवर्मनृपः क्रमात् । अजायत धृतोत्सेको नृशंसविषमक्रियः ॥३५१॥
स्वविक्रमकथास्तोत्ररोमन्थप्रियताहतः । सोऽभवद्विटवन्द्यादिचाटुकारविधेयधीः ॥३५२॥
आत्मानं दैवतमिव स्तुतिमोहितचेतसः । जाताः प्राभवमत्तस्य विवेकविगुणाः क्रियाः ॥३५३॥
तस्मिन्प्रसङ्गे रङ्गाख्यः प्रख्यातो डोम्बगायनः । वैदेशिकोभवद्राज्ञा वितीर्णावसरो बहिः ॥३५४॥
ग्रामान्सचिवसामन्तान्निरस्यन्तो यथाक्रमम् । प्रतीहारा नृपस्याग्रमनयन्त विविक्तताम् ॥३५५॥ 355
विबभौ धवलोष्णीषा सभा दीपप्रभोज्ज्वला । शेषशय्येव मणिभिः कृतालोका फणोद्भवैः ॥३५६॥
कृतावरोधधम्मिल्लमालान्दोलनकेलिभिः । प्रदोषपवनैश्चक्रे शिशिरैर्घ्राणतर्पणम् ॥३५७॥
जातगीतदिदृक्षाणां गवाक्षावलयो बभुः । आसवामोदिभिर्वक्त्रैरवरोधमृगीदृशाम् ॥३५८॥
हारकङ्कणकेयूरपारिहार्यादिशोभिना । स्ववृन्देनानुयातोऽथ प्राविशड्डोम्बगायनः ॥३५९॥
हंसी नागलता चास्य सुते ललितलोचने । चक्रतुः कौतुकोद्ग्रीवां सभां चित्रार्पितामिव ॥३६०॥ 360
तयोर्विलासवलितैर्वलितापाङ्गविभ्रमैः । द्वितीयपुष्पप्रकरो व्यकीर्यत सभान्तरे ॥३६१॥
गायनैर्जय जीवेति कृतकोलाहलैरभूत् । सदः सशब्दं कुर्वद्भिस्तन्नृपगुणग्रहम् ॥३६२॥
भुक्तोत्तरोचितोदग्रतल्पसमस्थानधारिणः । वंशी रागविशेषस्य हसे स्थाने ततः शनैः ॥३६३॥
अविक्रियशिरःकम्पभ्रूनेत्रभ्रमशोभितः । अभिन्न इव गायन्त्योर्गीतिध्वनिरजृम्भत ॥३६४॥
अथ ताम्बूलरोमन्थत्यागनिश्चलमूर्तिना । जातं राजकुरङ्गेण प्रमोदास्पन्ददृष्टिना ॥३६५॥ 365
गायन्त्यौ[1] भावमालक्ष्य तस्य स्निग्धमगायताम् । अधिकोत्प्रेक्षिताभिख्यं विलासस्मितविभ्रमैः ॥३६६॥

---

३४४. [1]) Thus $A_1$; $A_2$ स वामेतर°. ३४५. [1]) $A_2$ संरब्ध°.—[2]) $A_2$ बद्धभ्रु°. ३४६. [1]) Thus corr. by $A_2$ from $A_1$ °कुण्ठकां°. ३४८. [1]) Thus $A_2$; $A_1$ °क्रामति. ३५०. [1]) $A_2$ °वर्धनात्. ३६२. [1]) Thus G Edd.; A °स्तत्तन्नृप°. ३६३. [1]) $A_2$ शनैः. ३६४. [1]) Thus corr. by later hand from $A_1$ गायन्त्योर्गीति°. ३६६. [1]) Thus corr. by later hand from $A_1$ गायन्त्यो.—[2]) $A_2$ gloss ज्ञात्वा.

राज्ञस्तयोश्च संसक्तचित्तयोरितरेतरम् । दृग्व्यापारैः स्वसंवेद्यैः संलाप इव पप्रथे ||३६७||

नृपं हारितचित्तं तं विज्ञायैकः प्रियो विटः । ततः प्रसङ्गे प्रोवाच प्रीतिवृद्धिकरं वचः ||३६८||

देव गीतमिदं ख्यातं संप्रार्थ्यते मनोरमे । कर्पूरपारीपतितं मैरेयमिव हारिताम् ||३६९||

870 गायन्त्योर्भासितामेतां रागाङ्कचतुष्किकाम् । अनयोः प्रतिमाव्याजाच्चुम्बतीव निशाकरः ||३७०||

करन्यस्तकपोलान्तमुन्नायन्त्याविमे भ्रुवम् । कटाक्षैः कुरुतो व्योम्नि वैमानिकविमोहनम् ||३७१||

जानत्या स्वाभ्यर्या चर्चामनयोरेकयानयोः । असूयास्मितगर्भोयं कटाक्षः पश्य पातितः ||३७२||

गायन्त्येकानतमुखी कर्णव्यालोलकुण्डला । विपरीतरतोद्रेककृतारम्भेव शोभते ||३७३||

सफलं तस्य तारुण्यमीदृश्यो निर्जने स्त्रियः । औत्सुक्याद्धिरहे यस्य गायन्त्येवंविधैः स्वरैः ||३७४||

875 उपपत्तिपरित्यक्तशास्त्रानुष्ठानमोहितैः । एकसार्थप्रयातेभ्यः कथमेको विवर्ज्यते ||३७५||

नेत्रस्य रूपं श्रोत्रस्य ध्वनिं संस्पृशतो न चेत् । तदङ्गस्यान्यकान्ताङ्ग स्पृशतो दुष्कृतं कुतः ||३७६||

अभिलाषाङ्कुरः सिक्त इव तैर्विटभाषितैः । राज्ञः स्वभावलोलस्य शतशाखत्वमाययौ ||३७७||

ये[1] विस्तारितवर्णसंकररुचः संदर्श्य गोत्रान्तकृद्बद्धावस्थितिचापलक्षणमलं पार्श्वे ध्वनन्त्युद्धताः ।
नीयन्ते विपथावपातपरतां लब्धोदयैस्तैः क्षणात्सिद्धा वारिधरैरमी च रभसान्नृपालकैर्हा विटैः ||३७८||

यस्तु क्षणादनुपपत्त्युपपत्तियुक्तं कृत्वा जडान्वदि विमोहयितुं समर्थाः ।
न स्युर्विटा अथ कुतर्कपथस्थिताश्च निस्योद्दसेषु निरयेषु मृगाश्चरेयुः ||३७९||

880 संतोष्य हारकेयूरकुण्डलैर्डोम्बमण्डलम् । अमार्गत्यागराधेयः शुद्धान्तमयमनृपः ||३८०||

कान्तोत्या: क्षितिवल्लभोयमभिधेत्युर्वीपतेरेकतो भूतेसार्वतिमण्डताण्डवयुतं डोम्बः स्वनामान्यतः ।
मध्ये यत्किमपीति गीतरचना काव्यं यदेतद्विदो यल्लक्ष्मीं क्षपयन्ति ताभिधगद्धुधान्कीर्त्यर्थिनः पार्थिवान्||३८१||

वेश्यानुरागस्य महेन्द्रचापधाम्नो हरिद्रारसरञ्जनस्य। उपाङ्गगीतस्य च हारिणोपि सौन्दर्यमस्थैर्यहतप्रकर्षम्||३८२|

दर्शनाभ्याससंवृद्धचक्षूरागः क्षमापतिः । विना श्वपाककन्ये ते न पुनः प्राप निर्वृतिम् ||३८३||

गायन्त्यौ शयनोपान्ते शनैर्विहितचुम्बनम् । नृपं रतिसुखाभिज्ञं तं हठात्ते प्रचक्रतुः ||३८४||

385 समागमेन नव्येन मद्योर्वैयात्यशोभिना । चक्रे क्षपितसामर्थ्यः स लज्जोद्दमाक्षमः||३८५||

रत्यन्तसुलभोद्रेकैर्निःसृतैः स्वेदबिन्दुभिः । भाग्योष्मसंक्षयजडं वपुस्तस्य व्यधीयत ||३८६||

रागान्धेन कृता हंसी महादेवी महीभुजा । भेजे राजवधूमध्ये वाल्यजनश्रीजनम् ||३८७||

---

३६८. [1]) A₂ तत्र ३६९. [1]) A₃ gloss हरति मन इति हारी तस्य भावः तया तां वासमिति सम्बन्धः. ३७०. [1]) Thus corr. by A₁ from A₁ गायन्त्यो.—[2]) Thus A₂; A₁ कमाद°.—[3]) A₃ gloss वन्तपाङ्क्तिचतुष्टयं. ३७६. [1]) A₃ gloss दुष्कृतं.—[2]) A₃ gloss स्वागिन्द्रियस्यैव. ३७८. [1]) A₃ gloss वारिधराः विटाश्च.—[2]) A₃ gloss वर्णाः नीलपीताद्याः ब्राह्मणाद्याश्च.—[3]) A₃ gloss गोत्रान्तकृति इन्द्रे बद्धा अवस्थितिर्येन स चासौ चापः धनुः इन्द्रचापः तस्य लक्षणं। गोत्रान्तकृद्भिः कुलक्षयकारिभिः पापिभिः बद्धा स्थितिर्यस्य। तत् चापलं मण्डलं ध्वनन्ति इति च वर्णं निविडं इति चापलविशेषणं.—[4]) Thus corr. by later hand from नीयन्ते.—[5]) A₂ कुपथाव°.—[6]) A₂ तरसा नृ°. ३७९. [1]) A₃ gloss नित्यन्धूर्ष्येषु. ३८०. [1]) A₃ gloss अपारवत्यायै कार्यः. ३८१. [1]) A₃ gloss अयं क्षितिवल्लभः राजा अस्याः कस्याश्चित्कान्तः अस्या विषयं अयं राजा लभः इत्यभिधा कथितमेकतः.—[2]) A₃ gloss डोम्बेनोच्चारिता उर्वीपतेः अभिधा नामधेयं एकतः इत्यस्ति इति कथमिति कान्तोत्या इति.—[3]) A₃ gloss उर्वीपतिः.—[4]) A₃ डाम्बस्य नामा°.—[5]) A₂ मध्येन्यत्किम°.—[6]) A₃ gloss यत्किमपीति। यत्किञ्चिद्गालजालमात्रं लौकिकं गीतं। तस्य रचना एव काव्यं.—[7]) A₃ gloss एतत् गीतिरचनाकाव्यं विदन्ति एतद्विदः.—[8]) A₃ gloss येषां पार्थिवानां लक्ष्मीः यल्लक्ष्मीः तां.—[9]) A₃ gloss अपहरन्ति.

तस्या वैमुख्यमुचितं ते यथा चक्रवर्मणः । नृपान्तराणामन्येषामप्यभूवन्समादरः ॥३८८॥
मन्त्रिणामग्रपदलम्भकप्रमुखाधिकारदा । प्रवृद्धिहेतुतां प्राप डोम्बस्यैव श्वपाकिका ॥३८९॥
नीचत्वावधितां केचिच्छ्वपाका न बभुः स्वयम् । केचित्त्वकुर्वतीतिज्ञा राजकार्याणि मन्त्रिवत् ॥३९०॥ 390
मन्त्रिणस्तत्कृता राज्ञी श्वपाकी श्वपचाः प्रियाः । किं न लोकोत्तरमभून्नृपतेश्चक्रवर्मणः ॥३९१॥
ऋतुस्नातार्तवाङ्कानि श्वपाकी स्वांशुकान्यदात् । तदाच्छादनतृप्तेच्छा मन्त्रिणः प्राविशन्सभाम् ॥३९२॥
केचित्क्षितिभुजा वैरमङ्गीकृत्यापि तत्क्षणम् । यैर्नाद्रि श्वपचोच्छिष्टं तेभूवन्सोमपैः समाः ॥३९३॥
मण्डलेस्मिन्नभावोधा न देवा न्यवसन्ध्रुवम् । तद्धामानि तदा नो चेच्छ्वपाकी प्राविशत्कथम् ॥३९४॥
तां रणस्वामिनं द्रष्टुं त्रिलक्षाख्यपदे गताम् । सामन्तेभ्यः साभिमाना नान्वगुर्डामराः परम् ॥३९५॥ 395
राजकौटुम्बवृत्तानां डोम्बानां निर्गता मुखात् । राजाभिख्याज्ञा दुर्लङ्घ्या न केनाप्युदलङ्घ्यत ॥३९६॥
राज्ञा प्रदत्ते रङ्गाय हेलुग्राममभिसारयत् । लिलेख पट्टोपाध्यायो न यदा शासनपट्टकम् ॥३९७॥
तदाक्षपटलं गत्वा रङ्गः कोपात्समब्रवीत् । रङ्गस्स हेलु दिण्णेति दासीसुत न लिख्यते ॥३९८॥
लिलेख सोथ संत्रासाद्रङ्गभूभङ्गतर्जितः । को न राजनि दुर्वृत्ते भवेन्नीतिव्यतिक्रमः ॥३९९॥
अन्त्यागमनपापस्य पापः पृच्छन्स निष्कृतिम् । विटैर्व्रात्यावहान्येव प्रायश्चित्तानि कारितः ॥४००॥ 400
हिमेनैव हिमं शाम्येदुष्णेनैव तु कुङ्कुमम् । सोनुशिष्टो विटैरेवं दधत्पामरसारताम् ॥४०१॥
पवित्रस्पर्शनोत्स्पृश्यास्पर्शपापं जिहीर्षुणा । तेनाभुज्यत विप्रस्य योषिन्मासोपवासिनः ॥४०२॥
ततोपि पापिनोभूवन्केपि तस्मिन्क्षणे द्विजाः । तस्मादग्रहारान्ये जगृहुर्गृहभोजिनः ॥४०३॥
चक्रे चक्रमठं सोपि पापः पाशुपताश्रयम् । तस्मिन्नतैर्धनिष्पन्नं तद्भूर्वर्मयोजयत् ॥४०४॥
पूर्वोपकारान्विस्मृत्य डामरांश्च निरात्मकः । नृपतिः श्वपचीकामी विश्वस्तांश्छलनावधीत् ॥४०५॥ 405
हन्तुं व्याजेन विश्वस्ताः केचिड्डामरतस्कराः । तत्पुत्रस्यान्तिके द्रोहच्छिद्रानेहःप्रतीक्षिणः ॥४०६॥
श्वपाकीशयनावासालयावस्करमन्दिरे । शौचस्थितं तं निःशस्त्रं ते रात्रौ प्रापुरेकदा ॥४०७॥
अथ तैः प्रासमस्यैरकस्मात्तस्य सर्वतः । क्षिप्तं न्यपात्यताशेषशातशस्त्रपरंपरा ॥४०८॥
क्षुभ्यत्तटाद्रे भ्रष्ट इव निद्रालसेक्षणः । प्रबुद्धः शस्त्रपातैः स व्यमुचद्भैरवारवान् ॥४०९॥
निःशस्त्रः शस्त्रमन्विच्छन्क्षरत्क्षतजनिर्झरः । अनुद्रुतोरिभिर्धावञ्छ्वपाक्यावेश्म विवेश तत् ॥४१०॥ 410
अप्राप्तेति क्रन्दन्त्या श्वपाक्यालिङ्गिताङ्गकम् । तत्कुक्षोत्सङ्गलग्नाङ्गं जघ्नुस्तेनुप्रविश्य तम् ॥४११॥
स्वैरेव प्रेरिता हारैस्ते तस्य नृपतेः किल । मुमूर्षोर्जानुनी स्वैरं शिलया समचूर्णयन् ॥४१२॥
त्रयोदशाब्दे ज्यैष्ठस्य शुक्लाष्टम्यां क्षपाक्षये । श्वपाकभोग्यः स श्वेतावस्करे तस्करैर्हतः ॥४१३॥
उन्मत्तावन्तिनामाथ पार्थसूनुर्दुराशयः । अभ्यषिच्यत वैरैस्तैः सचिवैः शर्वटादिभिः ॥४१४॥
श्वपाकीकामुके पापे निहते निशि तस्करैः । प्रजानां पाप्मना कोभूत्पापात्पापतरो नृपः ॥४१५॥ 415

३८९. ¹) A₂ gloss [illegible] इति केचित्. ३९२. ¹) A₂ gloss रजः. ३९५. ¹) A₂ gloss केवलं. ३९७. ¹) Thus corr. by later hand here and in following verse from A₁ हलु°. ²) A₂ gloss रङ्गस्य हेलुः दत्ता. ३९९. ¹) Thus corr. by A₂ from A₁ के.—²) Thus corr. by A₂ from A₁ भवन्नी°. ४०१. ¹) A₁ [illegible]. ४०४. ¹) Thus corr. by A₂ from A₁ °हेतो°; A₂ gloss मठं. ४१२. ¹) Thus A; G R Edd. शिलायां. ४१३. ¹) Thus G Edd.; A ज्येष्ठस्य.

स्खलिता तत्कथापापस्पर्शभीत्या सरस्वती । कथंचिच्चतुरश्वेव सैवं प्रस्ताव्यते मया ॥४१६॥
आसीत्पितृकुलं तस्य भक्ष्यं दुर्नृपरक्षसः । जीर्णाभिधस्य हर्म्याशविशेषस्येव जीवनम् ॥४१७॥
तस्यासंष्टङ्करावातसटांकारकरोटिकाः । प्राणस्कन्दादिवाध्यक्षाः सभायां मुख्यमन्त्रिणः ॥४१८॥
तेमास्वाधारणत्वेन निर्लज्जास्तमरञ्जयन् । कालान्तरेण यैरेव भूमिपालैर्भविष्यते ॥४१९॥
420 पर्वगुप्तोभवत्तस्य सर्वेभ्योप्यधिकं प्रियः । आस्थाने नर्तनं कुर्वन्नपाकृतकटीपटः ॥४२०॥
आ तन्त्रिविद्रवाद्दृष्ट्वा कीटप्रायान्महीपतीन् । पर्वगुप्तः सर्वदाभूद्राज्यावाप्तिकृतोद्यमः ॥४२१॥
तदा निगूढराज्येच्छः सख्यं मुख्यैः स मन्त्रिभिः । पीतकोशैः प्रविदधे पञ्चभिर्भूभटादिभिः ॥४२२॥
भूभटः शार्वटश्चोजः कुमुदः सोमृताकरः । पर्वगुप्तेन संबन्धं चक्रिरे कोशपीथिनः ॥४२३॥
गवाक्षासरसि प्राप्तश्रीजलोघागलद्विजः । संग्रामडामरगृहे यो रक्षः ख्यातपौरुषः ॥४२४॥
425 पदातिमात्रो भूपेन दृष्टशौर्यः स संयुगे । महोदरो महाकायः प्रापितो मुख्यमन्त्रिताम् ॥४२५॥
यादृशी तेन ददृशे देवी श्रीः सरसोन्तरे । तादृगर्कजयादेवीत्यभिधानेन निर्ममे ॥४२६॥
राज्यं निष्कण्टकं कृत्वा धूर्तेनापजिहीर्षुणा । प्रेरितः पर्वगुप्तेन भूभृच्चक्रे कुलक्षयम् ॥४२७॥
तेन लुण्ठितसर्वस्वः पार्थस्तस्थौ कलत्रवान् । श्रीजयेन्द्रविहारान्तः श्रमणैर्दत्तभोजनः ॥४२८॥
शिशूञ्शंकरवर्मादीन्भ्रातॄन्कारानिरोध्य सः । तत्र स्थितानन्नदानैरुत्क्रान्तासूनकारयत् ॥४२९॥
430 उद्यतः पितरं हन्तुं मन्त्रिणोनुमतप्रदान् । बद्धपट्टान्व्यधाद्रत्ननिगडानितरान्पुनः ॥४३०॥
एकदा मन्त्रिसामन्ततन्त्रिकायस्थसैनिकाः । पार्थं तदाज्ञामासाद्य निशायां पर्यवेष्टयन् ॥४३१॥
म्लानक्षीणाम्बरां पत्नीं रुद्धद्वारां निपात्य ते । आलिङ्ग्यमानां क्रन्दद्भिस्तर्णकैरिव दारकैः ॥४३२॥
केशानालम्ब्य कर्षन्तः शार्करोत्पाटिताङ्गकम् । विपन्नं गोकुलाक्रान्तमिव निर्हृत्य तं गृहात् ॥४३३॥
क्षुत्क्षामकण्ठं क्रन्दन्तं निजघ्नुर्नग्नविग्रहम् । चण्डाला इव निःशस्त्रं कुमुदाद्या नृपप्रियाः ॥४३४॥
435 पितरं निहतं श्रुत्वा राजा संजातकौतुकः । प्रातः स्वसचिवैः सार्धं गत्वा हृष्टोथ दृष्टवान् ॥४३५॥
अत्राङ्गेस्य प्रहारोयं मदत्त इति वादिनः । तस्याग्रे राजपुरुषाः शशंसुर्निजविक्रमम् ॥४३६॥
न्यक्कृत्य स्वीकृतो राज्ञा तदा तद्रक्षणोद्यतः । अमूमुचत्पर्वगुप्तो देवगुप्ताभिधं सुतम् ॥४३७॥
पार्थस्य निहतस्याङ्गे सोक्षिपत्क्षुरिकां ततः । रञ्जितो येन भूपालो जातहासोभवच्चिरम् ॥४३८॥
डामरैर्लुण्ठितो देशः प्रणाशे चक्रवर्मणः । उत्थाप्य पापान्कायस्थांस्तेन भूयोपि दण्डितः ॥४३९॥
440 संप्रेरितः कुसचिवैः शस्त्राभ्यासं चकार सः । पाटयन्क्षुरिकाघातैः कोटवीस्तनकोटरम् ॥४४०॥
गर्भिणीनां च जठरं गर्भान्द्रष्टुमपाटयत् । काठिन्यस्य परीक्षार्थमङ्गं कर्मकृतामपि ॥४४१॥
प्रतिमहामहाह्वेरायशा वधभयाद्द्विजाः । प्रत्यगृह्णन्प्रहारांस्तस्मादपि नृपाधमात् ॥४४२॥
क्रूरपापानुरूपेण क्षयरोगेण पार्थिवः । ततोनुबाध्यमानोभूदपर्यन्तव्यथातुरः ॥४४३॥
व्यथया तस्य तादृश्या प्रजा एव न केवलम् । तुतुषुर्निजभुक्तान्तमहिष्योपि चतुर्दश ॥४४४॥

४२६. [1]) Thus corr. by A₂ from A₁ तादृशक°. ४३२. [1]) Thus corr. by later hand from A₁ विपन्न. ४४०. [1]) Thus corr. by later hand from A₁ कौरवी°. ४४२. [1]) Thus corr. by later hand from A₁ द्विज·

अथान्तःपुरवासीभिर्यः कुतश्चिदुपाहृतः । क्षितिपालात्मजातोऽयमिति प्रख्यापितो मृषा ॥४४५॥ 445

तं शिशुं सूरवर्माख्यं विनिवेश्य नृपासने । हस्ते निक्षिप्य सामन्तसचिवैकाङ्गतन्त्रिणाम् ॥४४६॥

कम्पनाधिपतेर्बद्धवैरः कमलवर्धनात् । विध्वस्तडमरराज्यस्याशङ्कमरोत्पाटनक्षमात् ॥४४७॥

आसन्नमित्यवाप्तिः[1] पितृहा पार्थिवाधमः । भुक्त्वा पञ्चदशाब्दस्य प्रजापुण्यैः क्षयं ययौ ॥४४८॥ चक्कलकम् ॥

पितृघातिसुतो राजा जयस्वामिविरोचनम् । आषाढे[1] शुक्लसप्तम्यां शिशुर्द्रष्टुं विनिर्ययौ ॥४४९॥

तथा विरेजे राजश्रीर्बालस्य पृथिवीपतेः । कृपाणवेणिललिता छत्रचामरहासिनी ॥४५०॥ 450

अत्रान्तरे जयावाप्तैर्वीरै[1]रावेदितद्युतः । सामन्तैर्नगरोपान्तं प्राप्तः कमलवर्धनः ॥४५१॥

एकाङ्गतन्त्रिसामन्तस्याल्पहारकसादिभिः । नगरं प्रविशन्भ्रान्तः सम सैन्यैररुध्यत ॥४५२॥

विरुद्धडामरानीकान्युक्त्वा मार्गेषु निर्गतः । भ्रान्तोऽप्यसौ वैरिसेनामजयद्विक्रमोर्जितः ॥४५३॥

सहस्रमश्ववाराणां विद्राव्य तुरगैर्मितैः । राजधानीमसंरुद्धः प्रविवेश ततः क्षणात् ॥४५४॥

तं लब्धजयमाकर्ण्य सैन्यैस्त्यक्तं पलायितैः । एकाकिनं काप्यनयज्जननी शिशुभूपतिम् ॥४५५॥ 455

प्राक्कर्मभिर्मोहितो वा प्रेरितो वा कुमन्त्रिभिः । नाभूत्सिंहासनारूढो मूढः कमलवर्धनः ॥४५६॥

तदानीं स्वगृहान्यातो राज्यकामोऽन्यवासरे । संघट्टयन्[1]द्विजान्सर्वानबूबुधदनीतिवित् ॥४५७॥

प्रौढं शक्तं च कुरुत क्ष्मापं कंचित्स्वदेशजम् । मामेव कुर्युः सामर्थ्यादिति मूढः स चिन्तयन् ॥४५८॥

एकाकिनीं रहः क्षीबां लब्ध्वा दुर्लभयोषितम् । अप्रौढोऽनुपभुञ्ज्यान्यदिने दूत्यार्थयेत यः[1] ॥४५९॥

विभूतिं रभसावाप्तां यश्च संत्यज्य तत्क्षणम् । नीत्या कामयतेऽन्येद्युः शोच्यस्ताभ्यां परोऽस्ति कः ॥४६०॥ युग्मम् ॥ 460

अथोत्पल[1]कुले[2] क्षिप्ते स्थूलकम्बलवाहिनः । अशृङ्गोक्षनिभा विप्राः समगंसत गोकुले ॥४६१॥

धूमनिर्दग्धकूर्चानां राज्ञस्तांस्तांश्चिकीर्षताम् । राज्यप्रबन्धोपन्यासस्तेषां चिरमवर्धत ॥४६२॥

ऐकमत्येन मिथस्तेषां नान्यः कोऽप्यभ्यषिच्यत । कूर्चा[1] आपणनिक्षिप्तैः स्वकूर्चश्रीभिः परम् ॥४६३॥

राज्यार्होऽन्वेषिभिर्विप्रैः प्राप्तः[1] स्वस्मृतिक्रमये । अथार्यतेऽहकापातैर्मुग्धः कमलवर्धनः ॥४६४॥

पञ्चषाणि दिनान्येव यावत्तस्थुर्द्विजातयः । काहलाकांस्यतालादिनादकोलाहलाकुलम् ॥४६५॥ 465

उत्पताकध्वजच्छत्रशोभि युग्यार्पितशासनम्[1] । अशेषं पारिषद्यानां तावत्तत्रामिलद्दलम् ॥४६६॥ युग्मम् ॥

स्वपक्षां बन्धकीभूतामिवान्यवशवर्तिनीम् । वीक्ष्य राजश्रियं शोचन्नासीत्कमलवर्धनः ॥४६७॥

पितृघातिवधूः स्वपुत्रराज्यार्थिनी ततः । प्राहिणोद्राजपुरुषान्पार्श्वं प्रायोपवेशिनाम् ॥४६८॥

पिशाचकपुरग्रामे वीरदेवाभिधस्य यः । कुटुम्बिनः कामदेवनामा सूनुरजायत ॥४६९॥

स शिक्षिताक्षरो लब्ध्वा मेरुवर्धनमन्दिरे । बालाध्यापकतां ज्ञानशीलादिगुणभूषितः ॥४७०॥ 470

क्रमाद्गञ्जाधिकार्यासीदथ तस्यात्मजः शनैः । लेभे गञ्जाधिकारित्वं राज्ञः शंकरवर्मणः ॥४७१॥

---

४४८. [1]) Thus corr. by $A_2$ from $A_1$ °प्राप्तिः. ४४९. [1]) Thus corr. by $A_2$ from $A_1$ अषाढे. ४५१. [1]) वीरै supplied by $A_2$. ४५७. [1]) Thus $A_1$; $A_2$ संघट्य. ४५९. [1]) G *sec. manu* अप्रौढो नोपभुञ्ज्यादिने दूत्यार्थयेत यः. ४६१. [1]) $A_2$ अथो-त्पल°.—[2]) $A_2$ gloss उत्पली नाम कल्यपालः [illegible] । उत्पलकुले क्षिप्ते इति ।. ४६३. [1]) Thus $A_1$; $A_2$ कूर्चा°. ४६४. [1]) $A_2$ प्राप्तैः. ४६६. [1]) शासनम् supplied by $A_2$ in space left by $A_1$.

यः प्रभाकरदेवोपि सुगन्धाच्छकामुकः । तस्यां सरस्वतीदेवीदेहादेशविभ्रतोथ वा ॥४७२॥
विद्वान्यशस्करो नाम तत्पुत्रोस्यन्तदुर्गतः । सख्या फल्गुणकाख्येन समं देशान्तरं गतः ॥४७३॥
स्वप्नप्रदर्शनैः पीठदेव्याशीर्भिश्च हर्षुलः । तस्मिन्प्रसङ्गे सोत्साहः प्रत्यावृत्तो निजां भुवम् ॥४७४॥
475 पितृघातिवधूद्धूतैर्यातैर्बोधयितुं द्विजान् । मध्ये गृहीतो वाग्मित्वात्प्रविवेश तदन्तिकम् ॥४७५॥ कुलकम् ॥
दृष्ट्वैव तं दैववशादेकमत्यस्पृशो द्विजाः । ध्वनिं राजायमेवास्त्वित्युच्चकैरुदचारयन् ॥४७६॥
अथाभ्यषिच्यत क्षिप्रं विप्रैरेष यशस्करः । क्ष्माधृतिप्रौढसामर्थ्यैः[1] सानुमानिव तोयदैः ॥४७७॥
इत्थं वेणुवनं परस्परमहासंघर्षजेनाग्निना तन्मूलीकृतिरम्भसा क्षणधृतावेगेन संपादिता ।
वात्यावेगविपाटितं विटपिनं ग्रामं कुतश्चिद्दृढां कर्हि नेतुमहो महाद्रिकुहरे धात्रा न किं[1] सूचितम्[2] ॥४७८॥
भृत्यप्रेरणया वंशां पार्थजः स्वं न वेदयेत् । तत्पुत्रोत्पाटनं कुर्याच्च चेच्चक्रमलवर्धनः ॥४७९॥
480 अनुच्चकुलजातस्य[1] दरिद्रस्याटतः क्षितिम् । नयशस्करदेवस्य राज्यप्राप्तिः कथं भवेत् ॥४८०॥
पर्यां प्रजाभिरमुना ददृशे जनेन यत्तत्क्षणं निखिललोकसमानमूर्तिः[1] ।
साम्राज्यरम्यममुमीक्षितुमास नारीदृङ्नीरजस्तबकितो नरनाथमार्गः ॥४८१॥
नृपतिवसति प्रत्यागच्छन्यशस्करभूपतिः पुरमृगदृशामाशीर्मध्ये वचोपि विवक्षितम् ।
स्तिमितवलितापाङ्गं शृण्वन्निमीलदहंकृतिः कृतपरिकरस्तज्ज्ञैर्जज्ञे प्रजापरिपालने ॥४८२॥
प्रतिमितरविदीपोद्भासिभृङ्गातपत्रप्रचयरजतपात्राद्युद्धृतारात्रिकाश्रीः ।
अथ मुखरितमाशीर्मङ्गलैरङ्गनानामवनिहरिणधामा राजधाम[1] प्रपेदे ॥४८३॥

इति श्रीकाश्मीरिकमहामात्यचण्पकप्रभुसूनोः कल्हणस्य कृतौ राजतरङ्गिण्यां पञ्चमस्तरङ्गः ।
ऽ्यधिकायां समाशीतौ मासेषु च चतुर्ष्वगात् । कल्यपालाद्युके रथ्याहृतस्त्रीसचिवा अपि ॥

४७२. [1] Thus A.; A, °तो गतः. ४७७. [1]) A₂ gloss क्ष्मायाः भुवः धृतिः धारणं तस्मिन् प्रौढं सामर्थ्यं यस्य सः. ४७८. [1]) कि supplied by A₂.—[2]) A₂ दैवेन किं सूचितमित्यावर्त्यान्तरे पाठः. ४८०. [1]) A₂ gloss नीचकुलोत्पन्नस्य. ४८१. [1]) Thus A₂; A₁ °कीर्तिः. ४८३. [1]) A₂ glosses अवनौ भूमौ हरिणधामा चन्द्रः and राजासनं.

## ॥ षष्ठस्तरङ्गः ॥

नेदं पर्णसमीरणाशनतपोमाहात्म्यमुग्रोरगी पश्यैतावत एव संप्रति कृती तन्मात्रवृत्ती[1] बहिः[2] ।
प्रेम्णैवार्धमिदं चराचरगुरोः प्राप्तेयमात्मस्तुतीरेवं देववधूमुखाच्छ्रुतिसुखाः[3] शृण्वन्त्यपर्णा वनात् ॥१॥
इच्छन्नलङ्घनीयत्वमथ कक्ष्यां विलङ्घयन् । प्रतीहाराग्निजा दूरं वार्यन्तामिति सोऽन्वशात् ॥२॥
वेत्रिभिर्वार्यमाणांस्तु तान्कृताञ्जलिरब्रवीत् । राज्यप्रदाश्च पूज्याश्च यूयं नो दैवतैः समाः ॥३॥
राज्यदानाभिमानेन वर्तिष्यत मदोद्धताः । यत्कार्यकालादन्यत्र नागन्तव्यं मदन्तिकम् ॥४॥
तदाकर्ण्याखिलो लोकस्तमधृष्यममन्यत । अधमस्तत्सहसंवाससंभूतमपि लाघवम् ॥५॥
खिलीभूताः पूर्वराजव्यवस्थाः प्रतिभाबलात् । उज्जीवयामास सुकविः प्राक्विभक्तिक्रिया इव ॥६॥
अचौराभूत्तथा भूमिर्यथा रात्रौ वणिक्पथाः । अतिष्ठन्विवृतद्वारा मार्गाश्चाविघ्निताध्वगाः ॥७॥
प्रत्यवेक्षापदे तस्मिन्नासीत्सर्वापहारिणाम् । कृष्यध्यक्षत्वमुत्सृज्य कृत्यं नान्यन्नियोगिनाम् ॥८॥
ग्राम्याः कृषिपराधीना नापश्यन्राजमन्दिरम् । विप्राः स्वाध्यायसंसक्ता नाकुर्वञ्छस्त्रधारणम् ॥९॥
न विप्रगुरवः साम गायन्तो मदिरां पपुः । न तापसाः पुत्रदारपशुधान्यान्यढौकयन् ॥१०॥
न मूर्खगुरवो[1] मत्स्यापूपयागविधायिनः । चक्रिरे स्वकृतैर्ग्रन्थैस्तर्कागमपरीक्षणम् ॥११॥
मादृश्यन्त च गेहिन्यो गुरुदीक्षोत्थदैवताः । कुर्वाणा भर्तृशीलश्रीनिषेधं मूर्धधूननैः ॥१२॥
कार्तान्तिको भिषक्सभ्यो गुरुर्मन्त्री पुरोहितः । दूतः स्थेयो[1] लेखको वा न तदाभूदपण्डितः ॥१३॥
प्रायोपवेशाधिकृतैर्बोधितेन महीभृता । प्रायोपविष्टो निकटं प्रापितः कश्चिदब्रवीत् ॥१४॥
अहमाढ्योऽभवं पूर्वं वास्तव्योऽत्र महीपते । निष्किंचनत्वं शनकैरगच्छं दैवयोगतः ॥१५॥
उत्तमर्णैः पीडितस्य प्रवृद्धर्णस्य तस्य मे । निश्चयोऽभूदृणं छित्त्वा परिभ्रान्तुं दिगन्तरे ॥१६॥
अथ विक्रीय सर्वस्वमृणं शोधयता मया । महाधनाय वणिजे विक्रीतं निजमन्दिरम् ॥१७॥
भार्यामुद्दिश्य भर्तव्यामेक एव तु वर्जितः । सोपानकूपो विक्रीतान्महतो वेश्मनस्ततः ॥१८॥
निदाघे पुष्पताम्बूलीपर्णाच्छन्नातिशीतले । न्यस्याद्भिर्मालिकैर्[1]दत्तात्सा जीवेद्भाटकादिति[2] ॥१९॥
ततो दिगन्तराक्रान्त्या विंशत्या वत्सरैरहम् । लब्धाल्पवित्तः संप्राप्तो जन्मभूमिमिमां पुनः ॥२०॥
अन्विष्यता मया साध्वी स्ववधूर्ददृशेऽथ सा । विवर्णदेहा जीवन्ती प्रेष्यात्वेनान्यवेश्मसु ॥२१॥
किं ध्वस्तजीविकापि त्वमीदृशीं वृत्तिमाश्रिता । मयेति सा सदुःखेन पृष्टा स्वोदन्तमब्रवीत् ॥२२॥

---

१. [1]) A₂ gloss पर्णवातजीवनी.—[2]) A₂ gloss एवौ चराचरगुरुत्वा बहिः कृती इत्यन्वय..—[3]) Thus A₁; A₂ °तुल्याच्छ्रुत्य°.
११. [1]) Thus corr. by later hand from A₁ मूर्खा गु°. १३. [1]) A₂ gloss विवादपरिनिर्णेता स्थेयः. १४. [1]) A₂ gloss मृतावम [illegible] प्रायो बाहुल्ये सदृशी विधु इति कोशः. १९. [1]) A₂ gloss पौष्पिकैः.—[2]) A₂ gloss भाटी इति भाषया । प्रत्यहं वेतनं भाटी.

सोपानकूपं संप्राप्ता त्वयि याते दिगन्तरम् । लगुडैस्ताडयित्वाहं वणिजा तेन वारिता ॥२३॥
तदन्या कापि मे वृत्तिरित्युक्त्वा विरराम सा । तदाकर्ण्य निमग्नोऽहमन्तरे शोककोपयोः ॥२४॥
25 कृतमायोऽपवेश्यैव स्थेयैस्तैस्तैः पदे पदे । प्रत्यर्थिनो दत्तजयैः किमप्यस्मि पराजितः ॥२५॥
जडत्वाद्देव्यि न न्याय्यं न विक्रीतो मया पुनः । सोपानकूप इत्यस्मिन्नर्थे प्राणा इमे पणः ॥२६॥
सोऽहं विपद्ये क्षीणार्थो द्वारि शास्तुस्तव ध्रुवम् । वृजिनादस्ति चेद्भीतिर्वस्तु निर्णीयतां स्वयम् ॥२७॥
राजेति तेन विज्ञप्तो दत्त्वा धर्मासनं स्वयम् । संघट्याखिलान्स्थेयानासीत्तत्त्वं विचारयन् ॥२८॥
स्थेयास्तमूचुर्बहुशो विचार्यायं पराजितः । श्राद्धारगणयश्चायं दण्ड्यो लिखितदूषकः ॥२९॥
30 सोपानकूपसहितं विक्रीतं गृहमित्यथ । राजा विक्रयपत्रस्थान्स्वयं वर्णानवाचयत् ॥३०॥
ततोऽधिगतमित्येव सभ्येषु निगदत्स्वपि । अन्तरात्मा जगादेव नृपतेरर्थिनो जयम् ॥३१॥
मुहूर्तमिव संचिन्त्य राजान्याभिरभूच्चिरम् । कथाभिरतिचित्राभिर्मोहयन्सभ्यमण्डलम् ॥३२॥
कथान्तराले सर्वेभ्यो गृह्णन्रत्नानि वीक्षितुम् । हसन्प्रत्यर्थिनो हस्तादुपादत्ताङ्गुलीयकम् ॥३३॥
क्षणादेवाखिलैः स्थेयमित्यमेवेति सस्मितम् । वचो ब्रुवाणः प्रययौ पादक्षालनकैतवात् ॥३४॥
35 अभिज्ञानाय तत्रस्थः स वितीर्याङ्गुलीयकम् । भृत्यमेकं वणिग्वेश्म प्राहिणोद्दत्तवाचिकम् ॥३५॥
स वणिग्गणनाध्यक्षं ययाचे साङ्गुलीयकः । यत्राब्दे पत्रमुत्पन्नं गणनापत्रिकां ततः ॥३६॥
निर्णेया तया कृत्यमस्ति भाण्डपतेरिति । भृत्याद्गणनाध्यक्षस्तां गृहीताङ्गुलीयकः ॥३७॥
दीनाराणां¹ दशशतीं तस्यां भूभृदवाचयत् । व्ययमध्येऽधिकरणलेखकाय² समर्पिताम् ॥३८॥
तस्मै मितधनार्हाय बहुमूल्यार्पणान्नृपः । रेफे सकारं वणिजा कारितं निश्चिकाय सः ॥३९॥
सभायां तत्प्रदर्श्याथ पृष्ट्वा दत्त्वाभयं च तम् । आनीय लेखकं सभ्यान्संजातप्रत्ययान्व्यधात् ॥४०॥
सभ्यैरभ्यर्च्यमानेन राज्ञा सार्धं वणिग्गृहम् । वितीर्णमर्थिने देशात्प्रत्यर्थी च प्रवासितः ॥४१॥
कृताह्निकं भोक्तुकामं तं दिनान्ते च भूपतिम् । अकालावेदनाद्भिभ्यत्क्षत्ता जातु व्यजिज्ञपत् ॥४२॥
देवः समाप्तकृत्योऽद्य विज्ञप्ती भवतु क्षणम् । इत्युक्तो दर्शने प्राणत्यागी विप्रो बहिः स्थितः ॥४३॥
दत्तप्रवेशादेशोऽथ रुद्धसूदेन भूभुजा । द्विजः प्रविष्टः पृष्टश्च¹ तीव्रार्तिरिदमब्रवीत् ॥४४॥
45 सुवर्णरूपकशतं भ्रान्त्वा देशान्तरेऽर्जितम् । गृहीत्वा श्रुतसौराज्यः स्वदेशमहमागतः ॥४५॥
त्वयि राजनि निश्चौरैरध्वभिर्विशतः सुखम् । सोऽभवल्लवणोत्से मे दिनान्ते श्राम्यतः स्थितिः ॥४६॥
दीर्घाध्वक्लमक्रान्तस्तत्राहमकुतोभयः । मार्गारामतरोर्मूले त्रियामामत्यवाहयम् ॥४७॥
वेतनं ग्रन्थिबद्धं तदुत्थास्योरपतन्मम । अरघट्टसमीपस्थे कक्षयोगादलक्षिते¹ ॥४८॥

---

२८ ¹) Thus A. G has sec. manu the conjectural reading गत्वा. ३४. ¹) Thus A₂, A₁ °दिवा°. ३६. ¹) A₂ gloss गणत् वसूर् इति भाषया वही इति मध्यदेशीयाः. ३८. ¹) A₂ gloss दीनाराः थार् इति काश्मीरभाषया.—²) A₂ gloss यस्तत्रिधौ अर्थिप्रत्यर्थिनामुभौ भूमि क्रयविक्रयं कुरुत । येन यावत्तत्प्रमाणं क्रियते सोऽधिकरणलेखक. । अक्षरपरिमाणलेखपत्रकारी सराफ इति भाषया. ३९. ¹) A₂ gloss अधिकरणलेखकाय दीनारदशशतीदानात्.—²) A₂ gloss गृहविक्रयिणा वाडवेन विक्रयपत्रे लिखितं । सोपानकूपरहितं विक्रीतं गृहमिति । ततस्तेन लुब्धेन वणिजा प्रत्यर्थिना रेफविषये सकारः कारितः अधिकरणलेखकहस्तेन । उत्कोच दीनारदशशत्यात्मकं दत्त्वा कूपसहितं गृहं विक्रीतमिति लेखितं । ततोऽनन्तरं राज्ञानुमितं लेखपत्रवाचनार्थं किमर्थं दीनारदशशती । बहुमूल्यत्वादिति । रेफस्य सकार एव कृतोऽनेन इति ॥. ४१. ¹) A₃ gloss विज्ञप्तिकराय. ४२. ¹) A₂ gloss द्वास्थः. ४४. ¹) Thus corr. by later hand from A₁ पृष्टेय. ४८. ¹) Thus corr. by A₂ from A₁ °तद्धि.

तस्मिन्पुरवरोहेतिनिर्भग्नत्वाज्जरद्वपुः । सोऽहं हारितसर्वस्वः शोचमुग्धाधिरं जनैः ॥४९॥
एकोऽभ्यवसितः कोऽपि साहसे[1] पुरुषोऽब्रवीत् । मह्यं दापितवित्तार्थं[2] किं ददासीति मां ततः ॥५०॥
तमहमभ्यवोचं विपद्ग्रस्तस्यार्थस्यास्मि कः प्रभुः । तुभ्यं यद्रोचते मह्यं तत्ततो दीयतां त्वया ॥५१॥
अथशताधिकोऽथ रूपकेभ्यो द्वयं मम । स प्रादात्पश्चमेवाष्टानवतिं स्वीचकार तु ॥५२॥
व्यवहारा वचोनिष्ठा एव राज्ञि यशस्करे । निन्हन्व्यवस्थां तां लोकैर्न्यक्कृतोऽस्मीति वादिभिः ॥५३॥
उपकारोक्तिसारल्यच्छलहारितचेतनः । सोऽहं जहाम्यसून्द्वारे दुर्व्यवस्थापकस्य ते ॥५४॥
पुंसस्तस्य स राज्ञाथ पृष्टः प्रकृतिनामनी । वदनप्रत्यभिज्ञैव ममास्तीत्यभ्यभाषत ॥५५॥
प्रातस्त्वदीप्सितावाप्तिं करिष्यामीति भूभुजा । प्रतिज्ञाय कथंचित्स स्वपार्श्वे कारितोऽशनम् ॥५६॥
लवणोत्सेकवतां द्यूताहृतानां स विशां ततः । स्थितमन्तर्हितोऽन्येद्युस्तं राज्ञेऽदर्शयज्जरम् ॥५७॥
पृष्टः स राज्ञा विप्रेण यथैवोक्तं तथैव तत् । सर्वमूचे वाक्प्रतिष्ठं व्यवहारमुदीरयन् ॥५८॥
सत्यवाक्पारतन्त्र्यस्य वस्तुवृत्तस्य चान्तरम् । अलक्षयन्तः प्रैक्षन्त दोलाकुलधियो धराम् ॥५९॥
धर्मासनस्थो राजाथ रूपकाणामभाषत । तमष्टानवतेः पात्रं विप्रमन्यं द्वयस्य तु ॥६०॥
अनुयोक्तृप्रज्ञगाधापि दुःसंचिन्त्या महात्मनः । धर्मस्याधर्ममुद्वृत्तं निहन्तुं धावतो गतिः ॥६१॥
सायं हुताशं प्रविशत्प्रमयं[1] चेन्दुमण्डलम् । स्वतेजसा संविभजन्प्रदीपैर्ज्योत्स्नयाप्यसौ ॥६२॥
तदुत्थाय यथा भानुर्निहन्ति ध्वान्तमुद्धतम् । अनन्यकर्मा धर्मोऽयं तथाधर्मं व्यपोहति ॥६३॥ युग्मम् ॥
दुःसंलक्ष्यस्तु धर्मोऽसावधर्मं बाधतेऽञ्जसा । तिष्ठन्नित्यमधिष्ठाय[1] दारु काष्ठमिवानलः ॥६४॥
ददाति यज्ञवान्दत्तां तदित्याद्युक्तमुज्झतः । तुभ्यं रोचत इत्यादि वचोऽस्य निहतं तदा ॥६५॥
वञ्चितास्य बभूवाष्टानवतिर्लोभिनोऽस्य ताम् । नाददत्स्माय याचितं रूपकाणां द्वयं ददत् ॥६६॥
इत्यादिसूक्ष्मेक्षिकया धर्माधर्मान्तरं विदन् । प्रत्यवेक्षापरः क्ष्माभृद्व्यधात्कृतयुगोदयम् ॥६७॥
इत्थं जनं स विनयन्हास्योऽभूद्द्विजदुर्नयैः । परस्योपदिशन्पथ्यमपथ्याशीव रोगहृत् ॥६८॥
श्रोत्रियेणेव[1] तेनापि मृदम्भःशौचशालिना । डोम्बोच्छिष्टभुजो भृत्याः[2] पार्श्वान्न परिजह्रिरे ॥६९॥
यथोत्तरं संश्रितार्थैरन्योन्यं पृष्ठपातिभिः[1] । नगराधिकृतैश्चक्रे चतुर्भिः सोऽर्थसंग्रहम्[2] ॥७०॥
लेभिरे निधनं तस्मात्सत्यंकारात्पदातयः । श्रीरणेश्वरपीठाग्रन्यस्तखड्गादपि प्रभोः ॥७१॥
स ज्येष्ठे भ्रातरि मृते तथाभून्मुदितश्चिरम्[1] । तदुपज्ञं[2] यथा प्राक्सत्त्रोत्सर्पि[3] रसार्पणम्[4] ॥७२॥
नीतस्य मण्डलेशत्वं वेलावित्तस्य[1] भूभुजा । देवीः कामयमानस्य चक्रे गजनिमीलिका[2] ॥७३॥
रागाच्छुद्धान्तकान्तानां मूर्धानमधिरोपिता । लल्ला नामाभवत्तस्य वेश्या वैमत्यकारिणी ॥७४॥

---

५०. 1) Thus $A_1$; $A_2$ °श्री.—2) $A_2$ दापितलक्षार्थ. ५३. 1) $A_2$ gloss वचसि वाक्य एव निष्ठा येषां । न तु न्यायविचारणे इति व्यवस्थां निन्हवन्. ५४. 1) Thus corr. by later hand from $A_1$ °सारल्येच्छल°. ५५. 1) $A_2$ gloss वदनमेव केवलं तदीयं विदितं मम न तु नामप्रकृती इत्यर्थः. ६२. 1) $A_2$ gloss आत्मनं. ६४. 1) Thus corr. by $A_2$ from $A_1$ तिष्ठन्नित्य°. ६९. 1) Thus $A_1$; $A_2$ °णैव.—2) Thus corr. by $A_2$ from $A_1$ °भृत्याभ्या°. ७०. 1) $A_2$ gloss पृष्ठ्यानिभिः.—2) Thus corr. by $A_2$ from $A_1$ सौवर्ण°. ७२. 1) Thus $A_2$; $A_1$ °मुदित°.—2) Thus corr. by $A_2$ from $A_1$ तदुपदे; Edd. °ज्ञैर्यथा.—3) Emended; A R G °त्सोर्षि.—4) $A_2$ gloss मुखः. ७३. 1) $A_2$ gloss हस्तगमकसंविषयम्; हस्तगमक struck out again.—2) $A_2$ gloss उपेक्षा कृता इत्यर्थः.

75 अवकाशः सुवृत्तानां हृदयान्तर्न योषिताम् । इतीव विहितौ धात्रा सुवृत्तौ तद्बहिः कुचौ ॥७५॥
उत्तमाधमसंसक्तौ जानन्सदृशवृत्तिताम् । नारीणां शुचिकाशानामङ्कमात्स्यं व्यधाद्विधिः ॥७६॥
सा लालितापि राज्ञा वल्लभा ललितलोचना । चण्डालयामिकेनागाद्यामिनीषु समागमम् ॥७७॥ युग्मम् ॥
सुभगंकरणं किंचिच्चण्डालतरुणेऽभवत् । तं वश्यभावविवशा भेजे राजवधूरपि ॥७८॥
सा वा चण्डालकुलजा स वा कार्मणकर्मवित् । अन्यथा संगमः किं स्यादसंभाव्यस्तथाविधः ॥७९॥
80 सोऽभूत्केन प्रकारेण तया सह समागतः । इत्येव लेभे वृत्तान्तः प्रतिभेदं न कुत्रचित् ॥८०॥
केवलं प्रत्यभात्तादृक्स्वापिनोः प्रेम तत्तयोः । दृष्ट्वापारेक्षणात्क्षिप्रं ह्राडिनाडोऽधिकारिणः ॥८१॥
तमर्थमथ तथ्येन वीक्ष्य प्रणिधिभिर्नृपः । प्रायश्चित्तानुचरणक्षामः कृष्णाजिनं दधौ ॥८२॥
कुपितोऽपि स यन्नैनां न्यवधीद्रागमोहितः । तेनैवागात्पुरोभागिवितर्कातङ्कपात्रताम् ॥८३॥
डोम्बोच्छिष्टानुषासङ्गादशुचित्वं यशस्करे । संक्रान्तं कुष्ठिसंस्पर्शात्कुष्ठं दुःखमिवाभवत् ॥८४॥
85 सामान्येन सता कैश्चित्सदृशैः शुभकर्मभिः । जन्मान्तरीयैः साम्राज्यं मया प्रापीति चिन्तयन् ॥८५॥
साम्राज्यकामो नृपतिर्भाविष्वपि स जन्मसु । मुक्त्वा प्रादाच्चिरासक्तां राज्यलक्ष्मीं द्विजन्मने ॥८६॥
भुभुजा दानशौण्डेन पैतृके स्थण्डिले कृतः । छात्राणामार्यदेश्यानां तेन विद्यार्थिनां मठः ॥८७॥
मठाधिपतये तत्र छत्रचामरहासिनीम् । स नरेन्द्रश्रियं प्रादाद्भुक्तान्तःपुरवर्जिताम् ॥८८॥
वितस्तापुलिने राजा नानोपकरणान्वितान् । ब्राह्मणेभ्यः सोऽग्रहारान्पञ्चपञ्चाशतं ददौ ॥८९॥
90 अथ जातोदरव्याधिर्मज्ञातो नायमित्यसौ । भ्रातृसंग्रामदेवाख्यं परित्यज्य निजात्मजम् ॥९०॥
समर्प्य सचिवैकाङ्गसामन्तानभ्यषेचयत् । रामदेवात्मजं राज्ये वर्णटं प्रपितृव्यजम् ॥९१॥
शक्ये राज्यावपाकर्तुं शिशावनभिषेचिते । निराशाः समपद्यन्त तदा राज्यजिहीर्षवः ॥९२॥
स पर्वगुप्तकौटिल्यप्रयुक्तेरुदयोन्मुखः । विपाककालस्तत्राह्नि भङ्गोन्मुख इवाभवत् ॥९३॥
राजधानीस्थितस्यापि वर्णटो राजदायिनः । आरोग्यवार्तयाप्यासीन्मुहुर्द्वारनिरीक्षकः ॥९४॥
95 ततः सानुशयो राजा प्राभ्यर्थ्यत मन्त्रिभिः । राज्यं संग्रामदेवाय दातुमाश्वासकारिभिः ॥९५॥
राजाज्ञया निशामेकां बहोष्टस्तम्भमण्डपात् । बहिर्दत्तार्गलात्प्रातर्वर्णटो निरवास्यत ॥९६॥
भयाच्चजागराह्मापि तद्भृत्यानां विवेकिनाम् । आस्थानमण्डपं प्राप पायुक्षालनभूमिताम् ॥९७॥
एकाहराजपुरुषस्तदासित्रिजयेश्वरे । श्रीडाहेवप्रसादाख्यो राजबीजी समर्पयत् ॥९८॥
अथाभिषिच्य संग्रामदेवं तीव्रीभवद्व्यथः । स राजधान्या निर्गत्य मर्तुं निजमठं ययौ ॥९९॥
100 धीः केशश्मश्रुवपने शिरःशाटकवर्जनम् । काषायग्रहणोद्वेगः शस्त्रत्यागग्रहश्च यः ॥१००॥
राजभृत्यैः प्रतिज्ञातः स तस्मिन्निश्चितक्षये । जीवत्येव कृतश्राद्धकैः परिवर्जितः ॥१०१॥ युग्मम् ॥

---

७६. [1]) Thus corr. by $A_2$; reading of $A_1$ illegible; $A_2$ in margin °कुमाकर्षा. ७७. [1]) $A_1$ gloss मदरमागकर्केण. ७९. [1]) $A_2$ gloss वशीकरण.—[2]) Thus corr. by $A_2$ from $A_1$ सम्भवः. ८१ [1]) Thus corr. by $A_2$ from $A_1$ °मार्यादृ°. ८३. [1]) $A_2$ न्यवधीद्र°. ८६. [1]) Thus $A_2$; $A_1$ °कामोपि नृपो भा°. ८७. [1]) Thus $A_2$; $A_1$ स्थित.—[2]) Thus corr. by $A_2$ from $A_1$ °देशानां. ८८. [1]) Thus $A_2$; $A_1$ नरेन्द्राश्रितां. ८९. [1]) $A_2$ gloss काडिलतीर्थविषये बलात्कारस्थानगाहा अमपाविशताः लोकाः. ९०. [1]) Thus corr. by $A_2$ from $A_1$ नृपा°. ९३. [1]) Thus corr. by $A_2$ from $A_1$ विपाकपाकस्त°. ९५. [1]) Thus corr. by $A_2$ from $A_1$ °देवस्य. ९६. [1]) Thus $A_1$; $A_2$ निरवास्यत; perhaps to be emended निरवस्यत. ९८. [1]) $A_4$ gloss एकाहं राजभूतस्य वर्णटस्य पुरुषो भृत्यः.

द्वे सहस्रे सुवर्णस्य सार्धे बद्ध्वा पटाञ्चले । यो निर्जगाम राजासौ मुमूर्षुर्भिक्षुमन्दिरात् ॥१०२॥
पञ्चभिः पर्वगुप्ताद्यैर्वित्तकं तस्य मन्त्रिभिः । हृतं सजीवितस्यैव विभज्यान्योन्यमग्रतः ॥१०३॥ युग्मम् ॥
विवेष्टमानः शय्यायां व्याधिदग्धान्तरो नृपः । तिष्ठन्मठाङ्गनकुटीगर्भे ध्वान्तान्धकारिते ॥१०४॥
अजातसंविद्विक्षोभे पश्यन्द्रोहरतान्निजान् । प्राणैरहानि द्वित्राणि न यदा निरमुच्यत ॥१०५॥ 105
तदा सुहृद्बन्धुभृत्यवेलावित्तैः कृतत्वरैः । जिहीर्षुभिश्च साम्राज्यं विषं दत्त्वा विपादितः ॥१०६॥
अवरोधवधूमध्यात्सती तं पतिमन्वगात् । एका त्रैलोक्यदेव्येव स्वयमेव विरोचनम् ॥१०७॥
वर्णाश्रमप्रत्यवेक्षाबद्धकक्ष्यः क्षितीश्वरः । चक्रभान्वभिधं चक्रमेलके द्विजतापसम् ॥१०८॥
कृतास्थाचारमालोक्य राजा धर्मवशंवदः । निजमाह श्वपादेन ललाटतटमङ्कयन् ॥१०९॥
तन्मातुलेन तद्दोषाहीरनाथेन योगिना । सांधिविग्रहिकेणार्थं स स्वेनैव न्यकृन्तत ॥११०॥ 110
पूर्वाचार्यप्रभावेण स्वमाहात्म्याधिरोपणम् । प्रख्यापयद्भिर्गुरुभिः श्रद्धयेति बुध्यते ॥१११॥
तत्कथापितैव समाहास्त विपन्न इति श्रुतिः । दीर्घव्याधिहते तस्मिन्नुपपत्तिः कथं भवेत् ॥११२॥
अथामयान्तरेणाभूत्सा वार्तैस्तूच्यते यदि । वर्णटाभिशापोऽपि तदायात्यत्र हेतुताम् ॥११३॥
भुक्तैश्वर्यो नव समाश्चतुर्विंशे स हायने । मासि भाद्रपदे कृष्णतृतीयस्यां व्यपद्यत ॥११४॥
पितामहीं शिशोर्गोप्त्रीं विनिवेश्य नृपासने । भूभटाद्यैः समं प्राभूत्पर्वगुप्तोऽथ पञ्चभिः ॥११५॥ 115
क्रमात्समं पितामह्या तान्व्यापाद्येतरान्बली । एकः स एवमाक्रान्तः प्रबभूव नृपास्पदे ॥११६॥
स पार्थिवत्वमन्त्रित्वमिश्रया चेष्टया स्फुरन् । राजा राजानकश्चेति भिन्नामेवं धियं व्यधात् ॥११७॥
सेवमानः स्वयं बालभूपं भोज्यार्पणादिभिः । ऋजूनां प्रत्यभात्पर्वगुप्तो द्रोहबहिष्कृतः ॥११८॥
यान्द्रोहभीरून्संभाव्य संविभेजे यशस्करः । तस्य तत्तनयोच्छेदे त एवासन्प्रयोजकाः ॥११९॥
करभाङ्कुरहापिङ्के हमभुवि क्षितिपालवत् । स ददौ कुङ्कुमालेपं वर्चः शाद्वलविस्तृते ॥१२०॥ 120
बिभ्यदेकाङ्गसंघातात्सकटोत्पाटनाक्षमः । प्रमापणाय प्रायुङ्क्त शिशोः कर्माभिचारिकम् ॥१२१॥
न्याय्यं ते सान्वयस्यास्ति राज्यं चैत्रादिवासरे । अन्यथाचरतो नाशः क्षिप्रं वंशायुषोर्भवेत् ॥१२२॥
इतीमामपि यामिन्यां श्रुतवान्भूतभारतीम् । अभिचारस्य वन्ध्यत्वं निर्ध्यायाधिकशङ्कितः ॥१२३॥
एकाङ्गेभ्यो विभिन्नेभ्यो बिभ्यदुज्झितसंभ्रमः । उदताम्यत्तथा चिन्तालुप्तसंविद्दिवानिशम् ॥१२४॥
तदा महाहिमापातनिःसंचारजने दिने । अकस्मात्संभृतबलो राजधानीं निरुद्धवान् ॥१२५॥ 125
विरोधकारिणं मुद्राभिधेन सह सूनुना । निर्द्रोहमाहवे हत्वा मन्त्रिणं रामवर्धनम् ॥१२६॥

---

१०२. [1]) Thus corr. by later hand from A₁ बद्ध्वा. १०८. [1]) A₄ gloss, partly effaced: चक्र ... जने ... करता .. चक्रमेल ... [illegible] ... १०९. [1]) A₂ gloss अस्थिकास्थाचारम्. ११०. [1]) A₄ gloss [illegible].—[2]) A₂ gloss सन्धिविग्रहमुद्रास्तमुकमक- [illegible] सान्धिविग्रहिक। कटकपाल:. ११४. [1]) नव supplied by A₂ in space left by A₁. ११६. [1]) A₄ gloss [illegible].—[2]) A₂ gloss प्रभुरमूत्. ११६. [1]) Emended with G Edd.; A₁ एव साक्रान्तिः which A₂ alters to एवमाक्रान्तिः. ११७. [1]) Thus A₂; A₁ स्फुरन्.—[2]) A₂ gloss राजा पार्थिवः राजानकः मन्त्री । राज्ञः अनः प्राणनं । जीवनं परिरक्षणलक्षणं । [illegible] राजानः [illegible] । राजान एव राजानक । स्वार्थे कः यद्वा अन [illegible] । कः [illegible] । यथा प्राणनं विना देहस्थितिर्नोचित । तथा श्रीपार्थिवं मन्त्रिणं विना पार्थिवानां स्वयं कार्याकार्यविवेकचौपलाभिज्ञा न सम्भवेदिति । राजा- नेकमपेक्षते राजा ॥ यद्वा राज्ञः अनः प्राण इव राजानक इत्यर्थः॥.

पिङ्गेण वेलावित्तेन प्राभृतार्थमुपाहृताम् । गले पुष्पस्रजं बद्ध्वा पातितं पार्थिवासनात् ॥१२७॥
स तं वक्राङ्घ्रिसंग्रामं हतमन्यत्र मन्दिरे । पातयित्वा वितस्तान्तः कण्ठबद्धशिलं निशि ॥१२८॥
चतुर्विंशस्य वर्षस्य दशम्यां कृष्णफाल्गुने । पापः सवङ्कुकवचो न्यविक्षत नृपासने ॥१२९॥ चक्रलकम् ॥
130 पारेविशोकं दिविराज्ञातस्याभिनवाभिधात् । सूनुः संग्रामगुप्तस्य स तदा पार्थिवोभवत् ॥१३०॥
केचित्स प्रत्यवस्थानं ये पुरा प्रतिजज्ञिरे । ते सर्व एव तद्भीताः प्रातरेव प्रणेमिरे ॥१३१॥
पार्थिवैकाङ्गसामन्तमन्त्रिकायस्थतन्त्रिणाम् । तद्भीत्या द्रोहवृत्तीनां द्रोहाद्वैतमदृश्यत ॥१३२॥
एकाङ्गस्य तदास्थाने सुख्याभिजनजन्मनः । प्रमादान्मदनादित्यनाम्नो ढक्का व्यदीर्यत ॥१३३॥
हतांशुकेन भूभर्त्रा कुपितेन खलीकृतः । स निकृत्तकचश्मश्रुस्तपस्वी समपद्यत ॥१३४॥
135 तादृशस्य पुनस्तस्य सखीपुत्रत्वमीयुषः । अद्याप्यभिजने जाता वसन्ति त्रिपुरेश्वरे ॥१३५॥
कुर्वता पर्वगुप्तेन भूभृता द्रविणार्जनम् । प्रापिताः पुनरुत्साहं प्रजारोगा नियोगिनः ॥१३६॥
व्यधत्त स्कन्दभवनविहारवसुधान्तिके । पर्वगुप्तेश्वरं सोपि वृजिनार्जितया श्रिया ॥१३७॥
श्रीयशस्करभूभर्तृशुद्धान्तस्य विशुद्धधीः । कौलीनमलुनादेका गौरीव नृपसुन्दरी ॥१३८॥
सुचिराङ्कुरितप्रीतेः पर्वगुप्तस्य याकरोत् । समागमार्थिनो युक्त्या वञ्चनामुचितां सती ॥१३९॥
140 इदं यशस्करस्वामिसुरवेश्मार्धनिर्मितम् । त्यक्त्वा पत्युर्विपन्नस्य कृत्वा निर्माणपूरणम् ॥१४०॥
अमोघमस्मिं नियमाद्विधास्यामि त्वदीप्सितम् । स ह्युपच्छन्दयन्त्यैवं सुभ्रुवाभिहितस्तया ॥१४१॥
अथ प्रवृद्धगर्वेण तत्स्वल्पैरेव वासरैः । संपूर्णतां सुरगृहं गमितं तेन भूभुजा ॥१४२॥
सा यागज्वलने राजललना पीतसर्पिषि । पूर्णाहुत्या समं साध्वी जुहाव सहसा तनुम् ॥१४३॥
उपर्यस्या निरस्तासोः पुष्टाः कुसुमवृष्टयः । तत्काङ्क्षिणस्तु न्यपतन्नवर्णमुखरा गिरः ॥१४४॥
145 सुदीर्घसाहसारम्भचिन्तासंरम्भशोषितः । पर्वगुप्तो बभूवाथ तृष्णामयपथातिथिः ॥१४५॥
व्याध्याधिप्रशमायासैर्लब्ध्वाप्यस्थायिनीं स्थितिम् । मूढाः प्रकृतिं नोज्झन्ति द्रोहश्रीलोभमोहिताः ॥१४६॥
आशङ्क्य तादृङ्क्षेपि सोकुण्ठैः प्राक्तनैः शुभैः । कैश्चित्सुरेश्वरीक्षेत्रे परासुः समपद्यत ॥१४७॥
षड्विंशवत्सराषाढबहुलेह्नि त्रयोदशे । द्रोहार्जितेन नृपतिः स राज्येन व्ययुज्यत ॥१४८॥
अतीन्द्रियायां परलोकवृत्ताविहैव तीव्राशुभपाकशंसी ।
दृश्येत नाशो यदि नाम नाशु न कः कुकृत्येन यतेत भूत्यै ॥१४९॥
150 क्षेमगुप्ताभिधानोभूदथ राजा तदात्मजः । आसवासेचनोत्सिक्तचित्ततारुण्यसंज्वरः ॥१५०॥
सोभूत्स्वभावदुर्वृत्तो नितरां दुर्जनाश्रयात् । कृष्णक्षपाक्षणो घोरमेघान्ध इव भीतिकृत् ॥१५१॥
स्वतुल्यवेषालंकाराः शतं लालितका नृपम् । तं फल्गुणप्रभृतयो दुराचाराः सिषेविरे ॥१५२॥
द्यूतासवाङ्गनासेवाव्यसनेपि स पार्थिवः । विटनिर्लुण्ठ्यमानोपि नाभूल्लक्ष्मीबहिष्कृतः ॥१५३॥

---

१२७. [1]) Thus corr. by $A_3$ from $A_1$ °हृतम्. १२९. [1]) चक्रलकम् added by $A_3$. १३०. [1]) Thus corr. by $A_3$ from $A_1$ विशोकं.—[2]) Thus $A_3$; $A_1$ तथा. १३१. [1]) Thus $A_1$; $A_3$ केचित्तत्प्रत्य°. १३२. [1]) Thus $A_3$; $A_1$ द्रोहाद्वै°. १३८. [1]) $A_3$ gloss कौलीनं लोकनिन्दां.—[2]) Thus corr. by $A_3$ from $A_1$ °मलुनाद°. १४०. [1]) Thus corr. by $A_3$ from $A_1$ निर्वाण°. १४१. [1]) $A_3$ gloss अस्मीति निपातः अहमित्यर्थे. १५२. [1]) Thus $A_1$; $A_3$ °वेषा°.—[2]) $A_3$ gloss पक्षतक:.

रागी मधुप्रणयवान्विहिताससक्तिर्यः सख्यमेति मधुपैर्दलकोशसारैः ।
पद्मे प्रयाति दिनमात्रमपि प्रसक्तिं श्रीस्तत्र वेत्सि किमिव तव कुतूहलाय ॥१५४॥

विटाः प्रविष्टा हृदयं जिष्णुजा वामनादयः । पिशाचस्येव रचितामशुचिं तस्य चक्रिरे ॥१५५॥ 155

परोपहासकुशलः परनारीरतिप्रियः । परावस्थाशयस्तस्थौ पार्थिवोऽनर्थतत्परः ॥१५६॥

ष्ठीवनं श्मश्रुमालासु पालयः भोजपालिषु[1] । तेन क्षिप्ताः प्रतीक्ष्याणां करोटीषु च टक्कराः ॥१५७॥

कठिलंघटनैर्मौर्यौ[1] मृगव्यशा[2] वनाटनैः । विटाधौशीलरटनैर्यौलभ्यं तस्य लेभिरे ॥१५८॥

पुंश्चलीजाल्मवैधेयबालकप्रोग्रभूनिर्भरा । समभूदप्रवेशार्हा राजपर्षन्मनस्विनाम् ॥१५९॥

जिष्णुपुत्रैः क्षेमगुप्तक्ष्माभृत्पञ्चपुत्रकः । चारणस्थगुणाकृष्टः किं न धूर्तैरनर्त्यत ॥१६०॥ 160

तस्य कङ्कणवर्षोऽसीत्यभिधानं विधाय ते । तोषिताश्चासकृच्चक्रुर्दोष्णोः कङ्कणवर्षिताम् ॥१६१॥

निर्दोषदोषाविष्कारे नववस्तुप्रदर्शने । अघृष्यटक्कराधाने प्रसादः प्रापि तैर्नृपात् ॥१६२॥

संलक्ष्य कुत्रकथ्यान्ताः कृत्वा निजवधूः पुरः । रागी राजा गृहाजीतो द्यूते तैर्निर्धनः कृतः ॥१६३॥

संभोगाभ्यसौभाग्यकृतस्पर्धैः परस्परम् । संभुज्यैता भवान्वक्तु विशेषमिति चोदितः ॥१६४॥

उपभोगं स्वभार्याणां निर्लज्जैस्तैः स कारितः । का दक्षेति च रत्यन्ते पृष्टोऽभीष्टधनप्रदः ॥१६५॥ युग्मम् ॥ 165

तस्य लालितकेष्वास्तां मुख्यौ संभोगढौकने । मात्रोधारिश्वरसित्याख्रिक्षाकौ[1] हरिधूर्जटी ॥१६६॥

नीत्वा नर्मकथाकृतां निजवपुर्मुञ्चन्ति मानोन्नतिं संतुष्य स्वयमङ्गनाः शुचितया त्यक्तं कुले कुर्वते ।
सौख्यं घ्नन्ति दुर्दीर्घसेवनसमासक्त्या यदर्थं भ्रमः प्रत्याख्याय तदेव वेत्ति न विटैः किं प्रार्थ्यते सेवया ॥१६७॥

यशस्करस्य भूत्वापि सचिवो भट्टफल्गुणः । तस्याभूदनुजीव्यन्ते धिग्भोगाभ्यासवासनाम् ॥१६८॥

फल्गुणस्वामिमुख्यानां प्रतिष्ठानां विधायिनः । तस्योपदेशो भूभर्तुः पर्यहास्यसकृद्ग्रहः ॥१६९॥

गृहन्विहेठितां[1] हन्तुं टक्करादि बलात्ततः । वृद्धो रक्कः कम्पनेशो दुर्गोष्ठीमध्यगोऽभवत् ॥१७०॥ 170

तीक्ष्णाक्षेपे संप्रविष्टं हन्तुं संग्रामडामरम् । श्रीजयेन्द्रविहारं स निर्घृणो निरदाहयत् ॥१७१॥

सुगतप्रतिमारीतिं हृत्वा दग्धात्ततोऽखिलात् । अरेवगृहेभ्यथ संगृह्य[2] मात्रसंचयम् ॥१७२॥

सुरप्रतिष्ठया वार्धौ मूढः स्वयशसो विदन् । नगरापणवीथ्यन्तः क्षेमगौरीश्वरं व्यधात् ॥१७३॥

एकः प्रयात्युपरमं द्रविणं तदीयं हृत्वापरः प्रसभमुद्धरति प्रमोदम् ।
नो वेत्ति तत्त्वनिधने परकोशगामि धिग्वासनामसममोहकृतान्धकाराम् ॥१७४॥

त्यागिना क्षेमगुप्तेन भुक्त्यर्थं खशभूभुजे[1] । दत्त्वा विहारान्निर्दग्धाद्ग्रामाः षट्त्रिंशदर्पिताः ॥१७५॥ 175

दुर्गाणां लोहरादीनां शास्ता शालमखोपमः । नृपतिः सिंहराजाख्यस्तस्मै स्वां तनयां ददौ ॥१७६॥

स तस्यां शाहिदौहित्र्यां दिद्दायां सक्तमानसः । दिद्दाक्षेम इति ख्यातिं ययौ लज्जावहां नृपः ॥१७७॥

मातामहेन भूभर्तुर्बध्वास्तस्या व्यधीयत । श्रीभीमशाहिनोदारप्रासादो भीमकेशवः ॥१७८॥

---

१५७. ¹) Corr. by $A_2$ from $A_1$ °पालक॰. १५८. ¹) Corr. by $A_2$ from $A_1$ °वरमार°.—²) मृगव्यशा supplied by $A_2$ in space left by $A_1$. १६०. ¹) Corr. by $A_2$ from $A_1$ °नर्त्यत. १६५. ¹) कुन्तत supplied by $A_2$. १६६ ¹) Thus corr. by $A_2$; $A_1$ °रक्षित्या मिता°. १७०. ¹) Thus $A_2$; $A_1$ °न्विहेवितां. १७२. ¹) Thus $A_2$; $A_1$ दग्ध्वा ततो.—²) Thus $A_2$; $A_1$ सङ्गृह्य. १७४. ¹) Thus corr. by $A_2$ from $A_1$ कृत्वा. १७५. ¹) $A_4$ gloss सिंहराजस्य. १७६. ¹) Thus corr. by $A_2$ from $A_1$ शालमुखो° १७८. ¹) Thus $A_2$; $A_1$ श्रीभूमिस्वामिनो°. Cf. *Albêrûnî's Indica* ( trans. by Sachau ), ii. 13,

चन्द्रलेखाभिधां कन्यां राज्ञे[1] दत्तवताभवत् । फल्गुणद्वारपतिना समं दिद्दा समत्सरा ॥१७९॥

180 गुरूपदेशः सुमहान्कुन्तविद्याश्रमस्तथा । तस्य निर्वहणाशक्तेर्भूभुजो[1] हास्यतां ययौ ॥१८०॥

अमोघपतनान्प्रासान्[1]योध्यान्संग्रामकर्मसु । शृगालमृगयासक्त्या[2] स हि श्लाघ्यानमंस्यत[3] ॥१८१॥

तं वृतं वागुरावाहिडोम्बचाटविकपेटकैः[1] । पर्यटन्तं श्वभिः सार्धमपश्यन्सततं जनाः ॥१८२॥

तस्य दामोदरारण्यलल्यानशिमिकादिषु । स्थानेषु क्रोष्टुमृगयारसिकस्य वयोगमत् ॥१८३॥

अथ कृष्णचतुर्दश्यां स कुर्वन्मृगयां नृपः । ज्वालामपश्यत्क्रोशन्त्याः शृगाल्या निर्गतां मुखात् ॥१८४॥

185 तदालोकनसंजातसत्रासाकम्पितस्ततः[1] । लूतामयज्वरेणाभूत्परीतो मृत्युहेतुना ॥१८५॥

मर्तुं ययौ च वाराहक्षेत्रं यत्र विधायकः । श्रीकण्ठक्षेममठयोरासीद्दुष्कपुरान्तिके ॥१८६॥

मसूरविदलाकारलूताङ्कितकलेवरः । पौषे चाब्दे चतुस्त्रिंशे नवमेह्नि[1] सिते मृतः ॥१८७॥

क्षेमगुप्तात्मजः क्ष्माभृदभिमन्युरभूत्ततः । शिशुर्निर्व्याजधर्मिण्या दिद्दादेव्यानुपालितः ॥१८८॥

संधिविग्रहमुद्राग्रमुख्यकर्माधिकारिणः[1] । निःसाध्वसं राजवधूमवन्ध्यशयनां व्यधुः ॥१८९॥

190 अभिमन्यौ क्षितिं रक्षत्यकस्मादेव दारुणः । तुङ्गेश्वरापणोपान्तादुज्जगाम हुताशनः ॥१९०॥

वर्धनस्वामिपार्श्वस्थभिक्षुकीपारकावधिः । वेतालसूत्रपातस्थान्स ददाह महागृहान् ॥१९१॥

डोम्बचण्डालसंस्पृष्टभूपसंपर्कदूषितान् । दग्ध्वा महागृहान्वह्निर्भुवः शुद्धिमिवाकरोत् ॥१९२॥

रक्षित्री क्ष्मापतेर्माता स्त्रीस्वभावाद्विमूढधीः । सारासारविचारेण लोलकर्णी न पस्पृशे ॥१९३॥

राज्ञः प्रतापेणारूढवैरा तस्थौ पुरा यतः । पतिवत्न्येव[1] सा सार्धं फल्गुणेनाग्र्यमन्त्रिणा ॥१९४॥

195 पत्यौ[1] मृते सपत्नीनां दृष्ट्वानुमरणं[2] ततः । दम्भेनानुमुमूर्षन्तीमनुमेने स तां द्रुतम् ॥१९५॥

निषिषेधानुबन्धात्तु सानुतापां चितान्तिके । कृपालुर्मरणादेताममात्यो नरवाहनः ॥१९६॥

अतो निसर्गपिशुनो रक्तस्तां मन्युदूषिताम् । फल्गुणाद्राज्यहरणाशङ्कां राज्ञीमजिग्रहत् ॥१९७॥

विरागशंसिभिर्लिङ्गैस्तां ज्ञात्वा विषमाशयाम् । समन्युं साखिलामात्यां फल्गुणोप्यास शङ्कितः ॥१९८॥

स हि सर्वाधिकारस्थः सर्वस्याक्षिगतोभवत् । दीप्यमानोधिकं मन्त्र[1]शौर्योत्साहादिभिर्गुणैः ॥१९९॥

200 अस्थीनि क्षेमगुप्तस्य गृहीत्वा जाह्नवीं गते । पुत्रे कर्दमराजाख्ये प्रबलैरन्वितो बलैः ॥२००॥

तत्प्रत्यागमपर्यन्तं पर्णोत्से स्थातुमुद्यतः । अविश्वसन्नृपगृहे फल्गुणो वैरिशङ्कितः ॥२०१॥

निर्गत्य नगराद्यावत्सभाण्डागारसैनिकः । काष्ठवाटान्तिकं प्राप[1] तावद्रक्षादिचोदिता ॥२०२॥

आकलय्य द्रुतं दिद्दा संत्यज्य प्रार्थनादिकम् । पृष्ठे प्रत्युत याष्टीकांस्तस्य हन्तुं व्यसर्जयत् ॥२०३॥

नवावमानखिन्नः स मिलितानन्तसैनिकः । प्रत्यावृत्य ततो मानी वाराहं क्षेत्रमाययौ ॥२०४॥

205 श्रुत्वा समेतसैन्यं तं प्रत्यायातं प्रतापिनम् । आस्कन्दशङ्किनी दिद्दा सामात्या समकम्पत ॥२०५॥

---

१७९. 1) Thus corr. by later hand from $A_1$ राज्ञो. १८०. 1) Thus corr. by $A_2$ from $A_1$ °शक्तैर्भू°. १८१. 1) Thus corr. by $A_2$ from $A_1$ °पतिमान्या°.—2) $A_2$ कुन्तान्.—3) Thus corr. by $A_2$ from $A_1$ श्लाघ्यानम°. १८२. 1) Thus corr. by $A_2$ from $A_1$ °डविडपे°. १८५. 1) Thus corr. by $A_2$ from $A_1$ °तस्थितिः. १८७. 1) Thus corr. by $A_2$ from $A_1$ नवमेह्ने. १८९. 1) Thus corr. by $A_2$ from $A_1$ मन्त्रिवि°. १९४. 1) $A_2$ gloss समर्थेनैव सती. १९५. 1) Thus corr. by $A_2$ from $A_1$ पत्न्यौ.—2) $A_1$ °नुसरणं. १९९. 1) Thus $A_2$; $A_1$ तन्त्र°. २०२. 1) Thus corr. by later hand from $A_1$ प्राप्य; $A_2$ gloss प्राप इत्यर्थः.

तस्मिन्क्षेत्रे गतं ज्ञात्वा विलम्ब्य स्वामिनं चिरम् । वराहपादसविधे तेन शस्त्रं समर्पितम् ॥२०६॥
द्रोहसंभावनापायं शस्त्रत्यागेन मन्त्रिणा । स्वस्य संमार्जितं तेन राजमातुश्च साध्वसम् ॥२०७॥
युक्तायुक्तविचारबाह्यमनसः सेवा महद्दैशसं कुर्वेऽस्मिन्प्रतिकारकर्म गहनद्रोहापवादावहम् ।
येन न्यूनगुणैरशोपकरणीभावोऽपि तस्मै परं कोपः कोऽपि विवेकिनः समुचितः शान्त्याय शस्त्राय वा ॥२०८॥
पर्णोत्समेव शनकैः ससैन्ये फल्गुणे गते । विगताध्यापका बाला इवामोदन्त मन्त्रिणः ॥२०९॥
योगक्षेमौ चिन्तयन्ती क्षेमगुप्तवधूरपि । अनिशं प्रजजागार स्वयं कण्टकपाटने ॥२१०॥ 210
राज्यभार्यौ पर्वगुप्तो मन्त्रिणौ कोशपीडिनौ । भ्राजिमहस्करौ पूर्वं पुत्र्योर्यौ[1] छोजभूभटौ ॥२११॥
तयोः प्रजातौ तनयौ ख्यातौ महिमपाटलौ । अवर्धिषातां यौ राजमन्दिरे राजपुत्रवत् ॥२१२॥
तौ तथावस्थितावेव तत्कालं राज्यलालसौ । संमन्त्र्य समगंसातामुग्रैर्हिम्मकादिभिः ॥२१३॥
बलिनौ तावबलया राज्यापास्तौ नृपास्पदात् । समन्यू स्वगृहादास्तां यावत्कृतगतागतौ ॥२१४॥
एकतः पृष्ठतः प्रासान्महिम्नो निर्गतस्य सा । निर्वासनाय याष्टीकांस्तावत्प्रकटवैकृता ॥२१५॥ 215
शक्तिसेनाभिधानस्य श्वशुरस्य निवेशनम् । प्रविवेश स तज्ज्ञात्वा तं ते तत्रापि रुरुधुः ॥२१६॥
शक्तिसेनेन याष्टीकाः सान्त्विता नाचलन्यदा । तदा भीतस्य जामातुर्व्यक्तं प्रादात्स संश्रयम् ॥२१७॥
तं[1] लब्धसंश्रयं प्राप हिम्मको मुकुलस्तथा । एरमन्तकनामा च परिहासपुराश्रयः ॥२१८॥
श्रीमानुदयगुप्ताख्योऽप्यमृताकरनन्दनः । ललितादित्यपुरजा यशोधरमुखा अपि ॥२१९॥
एकैके ते[1] मिथः सैन्यैर्भुवनक्षोभकारिणः । संभूय चक्रुर्द्वैराज्यं महिम्नः पक्षमाश्रिताः ॥२२०॥ 220
तस्मिन्महाभये दिद्दापक्षं मन्त्री सबान्धवः । एक एव तु तत्याज नाद्रोको नरवाहनः ॥२२१॥
प्रवर्धमानपृतना योद्धुं बद्धोद्यमास्ततः । पद्मस्वाम्यन्तिकं प्रापुर्दीप्यमानायुधा द्विषः ॥२२२॥
अथ भूरमठे दिद्दा विसृज्यात्मजमाकुला । आपच्छान्तिक्षमांस्तांस्तानुपायान्समचिन्तयत् ॥२२३॥
ललितादित्यपुरजान्द्विजान्स्वर्णेन भूरिणा । तूर्णं स्वीकृत्य विदधे रिपूणां संघभेदनम् ॥२२४॥
एकाक्षेपोऽखिलैः कोपो विधेय इति वादिभिः । महिम्नः पीतकोशैस्तैः संधिर्देव्या समं कृतः ॥२२५॥ 225
गोष्पदोल्लङ्घने यस्याः शक्तिर्नाशायि केनचित् । वायुपुत्रायितं पङ्क्त्या तया संघाब्धिलङ्घने ॥२२६॥
यत्संग्रहो रत्नमहौषधीनां करोति सर्वव्यसनावसानम् ।
त्यागेन तद्यस्य भवेन्नमोऽस्तु चित्रप्रभावाय धनाय तस्मै ॥२२७॥
उत्कोचकाञ्चनादानेष्वुग्रां ध्यायन्त्युपक्रियाम् । दिद्दा यशोधरादिभ्यः कम्पनादि समार्पयत्[1] ॥२२८॥
अभिचारं महिम्नश्च कृतवत्या मितैर्दिनैः । मण्डलेखण्डितात्रस्तं रण्डायाः[1] समजृम्भत ॥२२९॥
कदाचित्स्थक्कनाख्यस्य शाहीशस्योपरि क्रुधा । तदा स्ववंशजैर्यात्रां कम्पनाधिपतिर्ददौ ॥२३०॥ 230
तद्देशं निम्नगाशैलदुर्गं प्रविशता जवात् । अखण्डशक्तिना तेन बलाद्ग्राहि थक्कनः ॥२३१॥

---

२०६. [1]) Corr. by later hand from A₁ तत्र. २११. [1]) Thus corr. by later hand from A₁ यौ. २१३. [1]) Emended; A R G °हिमक°. २१६. [1]) Thus corr. by A₂ from A₁ शक्तिसेनानि°. २१८. [1]) Thus corr. by A₂ from A₁ तैलेक्य°; A₂ gloss तं महिमानं. २२०. [1]) Thus A₂; A₁ एकैकं तं. २२०. [1]) Thus corr. by A₂ from A₁ ममोत्सु. २२८. [1]) Emended; A R G समर्पयत. २२९. [1]) Thus A₂; A₁ रिंडायाः. Cf. vi. 260. २३०. [1]) Thus corr. by A₁ from °चित्रकना°.

स कृतप्रणतेस्तस्य करमादाय भूपतेः । अभिषेकाम्बुभिश्चक्रे श्रीलतांप्यायनं पुनः ॥२३२॥
लब्धप्रवेशैः[1] समये तस्मिन्नक्कादिभिः खलैः । कम्पनाधिपती राज्ञ्या विद्वेषोपाहि मुग्धया ॥२३३॥
उर्वीपतेश्च स्फटिकाश्मनश्च शीलोज्ज्वलस्वच्छहृदयस्य चान्तः ।
असंनिधानात्सततस्थितीनामन्योपरागः कुरुते प्रवेशम् ॥२३४॥
स्वचित्तसंवादि वचो वदन्तो धूर्ता वितन्वन्ति मनःप्रवेशम् ।
235 पृथग्जमानो गणिकावधूनां विटाः प्रभूणामपि नर्मचेटाः ॥२३५॥
द्रोग्धारं धक्कमं रक्षन्धनादायीति पैशुनम् । तथ्यमेव तदीयं सा स्वयंवादादमन्यत ॥२३६॥
अथ स्ववसतिं प्राप्ते कम्पनेशे जयोर्जिते । वाष्टीकान्व्यसृजद्दिद्दा स्फुटं निर्वासनोद्यता ॥२३७॥
तदाक्षेपं समाकर्ण्य स्मरन्तः कोशसंविदम् । ते हिम्मकैरमन्ताद्याः पूर्ववद्विक्रियां ययुः ॥२३८॥
नरवाहनमुख्यास्तु राज्ञीपक्षं न तत्यजुः । बिभेद पूर्ववद्व्यापदेवं निजबलं पुनः ॥२३९॥
240 प्रविष्टेषु ततः कोपात्पुरं शुभधरादिषु । भट्टारकामठे दिद्दा भूयः पुत्रं व्यसर्जयत् ॥२४०॥
दत्तार्गले नृपगृहे स्थितां तां दैवमोहिताः । ते तद्वैव विना पुत्रं विमूढा नोदपाटयन् ॥२४१॥
राज्ञ्याः संजघटे लोकः परस्मिन्नेव वासरे । मङ्गलेन तदा स्थैर्यं सा किंचित्समदर्शयत् ॥२४२॥
जयाभट्टारिकापार्श्वाद्वच्छूरमठान्तिकम् । व्याप्य स्थितैर्द्विषत्सैन्यैरथ प्रववृते रणः ॥२४३॥
राजधानीं राजसैन्ये प्रविष्टे त्रासविद्रुते । सिंहद्वारे घटाबन्धमेकाङ्गाः समदर्शयन् ॥२४४॥
245 शरीरनिरपेक्षास्ते भीतं संस्तम्भ्य तद्बल । अधावन्विद्विषां सैन्यं चेलुः केचिच्च शात्रवः ॥२४५॥
तस्मिन्नवसरे राजकुलभट्टः समाययौ । तूर्यघोषैर्द्विषां सैन्यं भिन्दन्नानन्दयन्निजम् ॥२४६॥
तस्मिन्प्राप्ते द्विषां सैन्यं विननाश विनश्वरम् । न द्रोहाविनयं जातु सहन्ते शस्त्रदेवताः ॥२४७॥
कोटयत्यायसान्बन्धान्स्फोटयत्युपलानिति । यः ख्यातिमवहत्संख्यां हिम्मको भीमविक्रमः ॥२४८॥
तस्यासिना राजकुलभट्टदेहार्धपातिना । चर्ममात्रं न तुत्रोट ककुटस्यातिसंकटे ॥२४९॥
250 विलोक्य तदसंभाव्यं सैन्ये दैन्यं समाश्रिते । अघानि हिम्मको योधैरवाहम्भिं यशोधरः ॥२५०॥
तथाप्यासीत्स्फुरत्संख्ये य एरमन्तकः क्षणम् । स भग्नासिश्च्युतो वाहाज्जीवग्राहमगृह्यत ॥२५१॥
आजौ तैरेप्यताधातुं यः श्रीमाञ्जाजबान्धवः । जगामोदयगुप्तः स क्वापि त्यक्त्वा महाहवम् ॥२५२॥
इत्थं लब्धजया राज्ञी तत्क्षणाक्ष्मापतिद्रुहा । यशोधरं शुभधरं मुकुलं च सबान्धवम् ॥२५३॥
काश्मीरिकाणां यः प्राड्शुल्कोऽध्वेता गयान्तरे । सोऽप्येरमन्तकः शूरः परिहासपुराभवः ॥२५४॥
255 बद्ध्वा महाशिलां कण्ठे वितस्ताम्भसि पातितः । स्वदुर्नयफलं देव्याः प्रकोपेनानुभावितः ॥२५५॥

२३२. [1]) A₂ gloss श्रीः एव लता. २३३. [1]) Thus corr. by later hand from A₁ °वेशाः; R G as above. २३४. [1]) Thus corr. by A₂ from A₁ °स्थोन्यराग. २३५. [1]) Thus A₁; A₂ स्वसंवादा°. २३८. [1]) A₂ gloss एकाङ्गोपेक्षिते कोशो विषेण इत्येवंरूपां. २३९. [1]) मुक्त्वा supplied by A₂ in space left by A₁. २४१. [1]) Thus corr. by A₂ from A₁ नोपपाट°. २४३. [1]) Thus corr. by A₂ from A₁ अथाद्वि°.—[2]) The words from चेलुः to सैन्यं in the following verse are omitted by A₁ and supplied in margin by A₂. २४६. [1]) A₂ °निजान्. २४७. [1]) Thus A₁; A₂ G R विनिश्वरम्. २४८. [1]) Thus corr. by later hand from A₁ क्रोट°.—[2]) तिमवहत्सं supplied by A₂ in space left by A₁. २५०. [1]) Emended with C; A R G °रश्वहस्ति. २५१. [1]) Thus A; R G ऐर°. २५४. [1]) Thus corr. by A₂ from A₁ काश्मीरका°.—[2]) Thus corr. by A₂ from A₁ °शुल्कोपकैता.—[3]) Thus corr. by A₂ from A₁ गमान्तरे.—[4]) Thus corr. by A₂ from A₁ °शार°.

ये तमस्तमसाद्दर्पाद्या गोपालनृपात्पुरा । अभिमन्युं यावदासन्षोडशानां महीभुजाम् ॥२५६॥
वर्षवर्धि प्रतापायुःश्रीहरा द्रोहवृत्तयः । ते क्षिप्रं मन्त्रिणः सर्वे सान्वयाः सहानुगाः ॥२५७॥
भीमभ्रूभङ्गमात्रेण दिद्दादेव्या सकोपया । आसन्निःशेषतां नीता दुर्गयेव महासुराः ॥२५८॥ *तिलकम्* ॥
अभवन्निर्मिता राज्ञ्या तानुत्पाद्य महोद्धतान् । रक्कादयः कम्पनादिकर्मस्थानाधिकारिणः ॥२५९॥
इत्थं मन्त्रिप्रकाण्डः स चण्डामाखण्डलोपमाम् । अखण्डमण्डलां चक्रे निर्द्रोहो नरवाहनः ॥२६०॥ 260
राज्ञी कृतज्ञभावेन सापि मन्त्रिसभान्तरे । तमाजुहाव निर्द्रोहं स्वयं राजानकाख्यया ॥२६१॥
सुप्ते सुष्वाप निष्पन्नभोजनेऽभुङ्क्त सा । हृष्टे जहर्ष निर्विण्णे निर्विवेदानुकूल्यतः ॥२६२॥
आरोग्यान्वेषणं शिक्षाप्रार्थनां गृहवर्तिनः । स्वात्मवस्तुविसर्गं च नाकृत्वा तस्य पिप्रिये ॥२६३॥
अभूतां युग्यवाहस्य कुड्यनाम्नः सुतौ पुरा । यौ सिन्धुभुय्यौ तज्ज्यायान्सिन्धुर्लोलितकः किल ॥२६४॥
पर्वगुप्तगृहे भूत्वा गञ्जाध्यक्षे[1] स्थिते[2] क्रमात् । लब्ध्वा गञ्जाधिकारित्वं तस्या राज्ञ्याः शनैरभूत् ॥२६५॥ 265
ख्यातस्तथैव गञ्जेशो नवायासविधायकः[1] । कर्मस्थानस्य निर्माता सिन्धुगञ्जाभिधस्य यः ॥२६६॥
प्रायशो हृतराज्यस्ते वर्तते नरवाहनः । इति नेयप्रियं राज्ञीं सोऽभ्यधत्त दुराशयः ॥२६७॥
सा तथेत्यब्रवीद्यावत्तावत्प्रेम्णा स जातुचित् । मन्त्री तां प्रार्थयामास भोक्तुं निजगृहागमम् ॥२६८॥
सा सानुगां तत्र यातां ध्रुवं त्वामेव भंस्यति[1] । इत्युक्ता सिन्धुनाप्यस्य तत्कर्तव्यं भयाकुला ॥२६९॥
अनुक्त्वैव प्रचलिता राजधानीमलक्षिता । स्त्रीधर्मिण्यस्मि जातेति पश्चाद्दूतीं व्यसर्जयत् ॥२७०॥ 270
संप्रवृत्तोपचारायां[1] गतायां तत्प्रयाणतया[2] । राज्ञ्यां नाशममात्यस्य प्रीतिः संविद्य सा ययौ ॥२७१॥
तयोस्ततः प्रभृत्येव निष्कृष्टस्नेहयोः कृतम् । चाक्रिकैरतिकश्यत्वं तिलपिण्याकयोरिव ॥२७२॥
कुलिशं सर्वलोहानामम्भसां शैलसेतवः । अभेद्याः प्रतिभान्त्यन्ते न किंचिदसतां पुनः ॥२७३॥
ये बालादपि संभूताः प्राज्ञाः सुरगुरोरपि । तेषां न विद्मः के[1] तावन्निर्माणपरमाणवः ॥२७४॥
विश्वासोज्झितधीः शिशून्कलयते काकोऽन्यदीयान्निजान्हंसः क्षीरपयोविभागकुशलस्तस्यस्यतारादुनात् ।
लोकावेक्षणतीक्ष्णधीः खलगिरं जानाति सत्यां नृपो धिग्वैदग्ध्यविमुग्धताव्यतिकरस्पृष्टं विधानं विधेः ॥२७५॥ 275
मूका चरणहीना सा श्रुतिबाह्यतया तथा । वैधेयविभ्रमकृतिरिव प्रायाद्विगर्हताम् ॥२७६॥
उद्वेजितस्तया शश्वत्तया स नरवाहनः । यथा विमाननोत्तप्तः स्वयं तत्याज जीवितम् ॥२७७॥
प्रकुप्यत्यप्रतीकार्ये स्वजनेऽस्तमचेतसाम् । शरणं मरणं त्यक्त्वा किमिवान्यद्यशोर्थिनाम् ॥२७८॥
शशिहीनेव रजनी सत्त्वत्यक्तेव भारती । विरराज न राजश्रीर्नरवाहनवर्जिता ॥२७९॥
सा क्रौर्याभ्यासविषमा हन्तुं विततविक्रमान् । संग्रामडामरमुखांस्तत्समीपस्थानचिन्तयत् ॥२८०॥ 280
निजमुत्सरधौर्यं ते तद्भयेन विनिर्गताः । कय्यकद्वारपत्यादीन्कृतारम्भीन्व्यपादयन् ॥२८१॥
उत्पन्नभीतया राज्ञ्या त्यक्त्वा परिभवत्रपाम् । ते प्रत्यासमनीयन्त मानः स्वार्थार्थिनां कुतः ॥२८२॥

---

२६५. ¹) A₂ gloss सनौ सुराहे गञ्जा भण्डागारे दुमानयेति कोशः.—²) Thus A R G; perhaps, to be emended with G *sec. manu* गञ्जाध्यक्षस्ततः क्रमात्. २६६. ¹) Thus emended according to conjectural reading (*sec. manu*) in G; A R G (*prima manu*) नयायासवि°. २६९. ¹) Emended; A₁ भंस्यति; G P भस्स्यति; *R* भर्त्स्यति; C भस्स्यति. २७१. ¹) A₂ °वृत्ताव°.—²) A₂ तत्प्रणतया. २७४. ¹) Thus A₂; A₁ किम्ताव°.

स्थानेश्वरादिभिर्मुख्यैर्डामरैरितरैः समम् । ते भीताः पुरतस्तस्याः पुनरेत्य जजृम्भिरे ॥२८३॥
अथ तद्भीतया राज्ञ्या रक्षे प्रणयमागते । आनीतः फल्गुणो भूयो वीरार्थिन्या निजान्तिकम् ॥२८४॥
285 राजकार्याणि कुर्वाणः स भूयः शस्त्रमग्रहीत् । न्यस्तशस्त्रोपि यत्सत्यं दुस्त्यजा भोगवासना ॥२८५॥
महिमा राजपुर्यादिजयिनस्तस्य पश्चिमः । अद्भुतो वृद्धबन्धक्या अवरुद्ध इवाभवत् ॥२८६॥
अभूदुदयराजस्य देवीभ्रातुरतिप्रियः । यः महाक्षपटले जयगुप्ताभिधः कुधीः ॥२८७॥
अन्येधिकारिणस्तेन सहिताः क्रूरवृत्तयः । कश्मीरेषु व्यधुर्लुण्टिं दुष्कृतैस्तदुपार्जितैः ॥२८८॥
दौःशील्यभाजो मातुश्च पाप्मभिर्विधुरीकृतः । अभिमन्युः क्षणे तस्मिन्क्षयरोगेण पस्पृशे ॥२८९॥
290 पण्डितः पुण्डरीकाक्षो विद्वत्पुम्भिरुपस्कृतः । कृतश्रुतः स वैदुष्यतारुण्याभ्यां विदिद्युते ॥२९०॥
तथा विशुद्धप्रकृतेस्तस्य दुष्कृतसंगमः । शोषाधायी शिरीषस्य रविताप इवाभवत् ॥२९१॥
अर्धमानः[1] प्रजाचन्द्रस्तृतीयस्यां स कार्तिके । शुक्लेष्टचत्वारिंशाब्दे ग्रस्तो निर्ऋतिराहुणा ॥२९२॥
तत्पुत्रो नन्दिगुप्तस्तु बालश्चक्रे निजासने । वृद्धस्तनयशोकस्तु दिद्दाया हृदये पदम् ॥२९३॥
सा शोकपिहितक्रौर्या तस्थौ प्रशमशीतला । रविरत्नशलाकेव ध्वान्तच्छन्नोष्मवैकृता ॥२९४॥
295 ततः प्रभृत्यद्भुताभिस्तस्या धर्मप्रवृत्तिभिः । कुकर्मभिरुपोढापि लक्ष्मीः प्राप्ता पवित्रताम ॥२९५॥
नगराधिपतिर्भृत्यः सिन्धुभ्राता शुभाशयः । तदीयधर्मचर्यायां बभूव परिपोषकः ॥२९६॥
सा तेनोत्पादितानर्घजनरागा गतैनसा । ततः प्रभृत्यभूद्देवी सर्वलोकस्य संमता ॥२९७॥
राज्ञः स सचिवः सत्यं दुष्पापो लुप्तचण्डिमा । कुर्याद्यः सुखसेव्यत्वं हेमन्त इव भास्वतः ॥२९८॥
सा निर्ममे विपन्नस्य सूनोः सुकृतवृद्धये । अभिमन्युस्वामिनोभूदभिमन्युपुरस्य च ॥२९९॥
300 अथ दिद्दापुरोपेतो दिद्दास्वामी तया कृतः । मठश्च मध्यदेशीयलाटशौडोत्र[1]संभवः ॥३००॥
भर्तुः कङ्कणवर्षस्य पुण्योत्कर्षाभिवृद्धये । चकार कङ्कणपुरं रमणी स्वर्णवर्षिणी ॥३०१॥
श्वेतशैलमयं चान्यं सा दिद्दास्वामिनं व्यधात् । धवलं चरणोद्भूतगङ्गाम्भःप्लवनैरिव ॥३०२॥
चक्रे काश्मीरिकाणां च दैशिकानां समाश्रयः[1] । तयात्युच्चचतुःशालो विहारश्चारुसंपदा ॥३०३॥
श्रीसिंहस्वामिनं नाम्ना सिंहराजस्य सा पितुः । मठं च विदधे स्थित्यै[1] दैशिकानां द्विजन्मनाम् ॥३०४॥
305 मठप्रतिष्ठावैकुण्ठनिर्माणाद्यैः स्वकर्मभिः । तयातिपावनश्चक्रे वितस्तासिन्धुसंगमः ॥३०५॥
तेषु तेषु प्रदेशेषु किमुक्तैर्भूरिभिः श्रुतैः[1] । सा प्रतिष्ठा व्यरचयच्चतुःषष्टिमिति श्रुतिः ॥३०६॥
जीर्णोद्धारकृता देव्या प्रुष्टप्राकारमण्डलाः । प्रायः सुरगृहाः सर्वे शिलावप्रावृताः कृताः ॥३०७॥
क्रीडाचङ्क्रमणे राज्ञ्याः पङ्गा विग्रहवाहिनी । वल्गाभिधा वैवधिकी वल्गामठमकारयत् ॥३०८॥
तीर्थासेवनमौनभागपि तिमिः सक्तः स्वकुल्याशने वाताशान्यसते शिखी घनपयोमात्राशनोप्यम्बुदम् ।
विश्वस्ताञ्जलचारिणः प्रकटितध्यानोपि भुङ्क्ते बकः सत्कर्माचरणेपि दोषविकृतौ[1] न प्रत्ययः पापिनाम् ॥३०९॥
310 चर्षणी[1] वर्षमात्रेण शान्तशोका बभूव सा । भोगोत्सुकार्भके तस्मिन्नपरि व्यभिचारकृत् ॥३१०॥

---

२९२. ¹) Thus A R G; Edd. वर्धमानः, found also *sec. manu* in R G. $A_2$ gloss अर्धमानः खण्डबिम्बश्च. ३००. ¹) Thus A R G. ३०३. ¹) Thus corr. by $A_2$ from $A_1$ समाश्र°. ३०४. ¹) स्थित्यै omitted by $A_1$ and supplied in margin by $A_2$. ३०६. ¹) Thus $A_2$; $A_1$ श्रुताः. ३०९. ¹) Thus $A_1$; $A_2$ °विरती. ३१०. ¹) $A_2$ gloss चर्षणी असती इत्यर्थः.

वर्षे एकान्नपञ्चाशे नीतः पक्षे सिते क्षयम् । स मार्गशीर्षद्वादश्याममार्येश्वमया तया ॥३११॥
पौत्रस्त्रिभुवनो नाम मार्गशीर्षे सितेहनि । पञ्चमेप्येकपञ्चाशे वर्षे तद्वत्तया हतः ॥३१२॥
अथ मृत्युपथे राज्यनाम्नि स्वैरं निवेशितः । क्रूरया परमः पौत्रो भीमगुप्ताभिधस्तया ॥३१३॥
तस्मिन्नवसरे वृद्धः फल्गुणोपि व्यपद्यत । निगूढक्रौर्यदौःशील्या दिद्दा यद्धीरवाद्भूत् ॥३१४॥
बभूव साथ सुस्पष्टदुष्टचेष्टाशतोत्कटा । भ्रष्टवल्गपटा मत्तदन्तिमूर्तिरिवोत्कटा ॥३१५॥ 315
महाभिजनजातानामपि हा धिक्सर्वतः । सरितामिव नारीणां वृत्तिर्निम्नानुसारिणी ॥३१६॥
स्रोतोधिराज्यमधिगम्य विराजमानास्सिन्धोः प्रसूय कमलाल्पपयोभिकेते ।
जाते सरस्यविरतं जलजे प्रसक्ता नार्यो महाभिजनजा अपि नीचभोग्याः ॥३१७॥
खशस्य वद्दिवासाख्यपर्णोत्सग्रामजन्मनः । बाणस्य तनुस्तुङ्गाख्योविशन्महिषपालकः ॥३१८॥
प्रविष्टो जातु कश्मीरांल्लेखहारककर्मणा । सुगन्धिसीहभक्टनागाहयिकषण्मुखैः ॥३१९॥
पञ्चभिर्भ्रातृभिः सार्धं सांधिविग्रहिकान्तिके । देव्या दृग्गोचरं यातो हृदयावर्जकोभवत् ॥३२०॥ तिलकम् ॥ 320
रहःप्रवेशितो दूत्या स भाव्यर्थबलायुवा । संभुक्तभूरिजाराया अपि तस्याः प्रियोभवत् ॥३२१॥
तुङ्गानुरागिणी राज्ञी पापा लज्जोज्झिता ततः । रसदानेन वैमुख्यमाजं भृत्यमघातयत् ॥३२२॥
धिङ्निश्चारान्कुपतीन्येषां विषमचेतसाम् । फलशून्या स्तुतिस्तोषे रोषे प्राणधनक्षयः ॥३२३॥
रक्षणो देवकलशो वेलावित्तः कृतस्तया । भुप्याधिकारे कौट्टन्यमाचरन्निजपो विटः ॥३२४॥
येपि कर्दमराजाद्या वीरा द्वारादिनायकाः । तेपि कौट्टन्यमभजन्नन्येषां गणनैव का ॥३२५॥
चतुष्पञ्चानि वर्षाणि तिष्ठन्नृपगृहे शिशुः । भीमगुप्तोभवद्यावत्किंचिल्लौढीभवन्मतिः ॥३२६॥
राज्यव्यवस्था यात्रा च पितामह्याश्च वृत्तयः । दुःस्थिताः प्रत्यभासन्त संस्थाप्यास्तस्य चेतसि ॥३२७॥
अङ्गशीलविहीनाया निर्घृणाया निसर्गतः । तावत्त्रेयधियस्तस्याः स चिन्त्यः समपद्यत ॥३२८॥
अभिमन्युवधूस्तं हि चक्रे गूढमवेशितम् । महाभिजनजं पुत्रं तस्मात्सोभूत्तथाविधः ॥३२९॥
सा देवकलशेनाथ दत्तमन्त्रा विशङ्किता । त्रपोज्झिता स्पष्टमेव भीमगुप्तमबन्धयत् ॥३३०॥ 330
निगूढे नन्दिगुप्तादिद्रोहे लोकस्य योभवत् । संदेहः स तदा तेन व्यक्तकृत्येन वारितः ॥३३१॥
ताभिस्ताभिर्यातनाभिर्भीमगुप्तं निपात्य सा । षट्पञ्चाशेभवद्वर्षे स्वयं क्रान्तनृपासना ॥३३२॥
प्रवृद्धरागया राज्ञ्या दत्तोद्रेको दिने दिने । सर्वाधिकारी तुङ्गोथ बभूवाधरिताखिलः ॥३३३॥
सभ्रातृकेन तुङ्गेन मीलिताः पूर्वमन्त्रिणः । राज्यविप्लवमाधातुमयतन्त विरागिणः ॥३३४॥
तेथ संमन्त्र्य कश्मीरानानिन्युः क्रूरपौरुषम् । उग्रं विग्रहराजाख्यं दिद्दाभ्रातुः सुतं नृपम् ॥३३५॥ 335
मुक्त्वा महाराज्यं प्राप्तो विधातुं राज्यविप्लवम् । धीमान्प्रायोपवेशार्थं द्रुतं प्रावेशयद्द्विजान् ॥३३६॥
विहितैक्येषु विप्रेषु लोकः सर्वोपि विप्लुतः । अन्वियेषान्वहं तुङ्गं तत्र तत्र जिघांसया ॥३३७॥

३११. 1) Thus A1 ; A2 एकोनप°. ३१२. 1) Thus corr. by later hand from A1 मार्गशीर्ष. ३१५. 1) बभूव साथ supplied by A2 in space left by A1. ३१८. 1) A2 gloss वोदील ग्राम:. ३१९. 1) ल supplied by A2 in space left by A1. ३२०. 1) Corr. by A2 from A1 सन्धि°.—2) Thus A1 ; A2 °कान्तरे. ३२५. 1) Thus corr. by A2 from A1 कौटिल्य°. ३२९. 1) Thus corr. by A2 from A1 अभिमन्यव°. ३३३. 1) थ supplied by A2 in space left by A1. ३३६. 1) A2 gloss प्राय: भोजनत्याग:.—2) Thus A1 ; A2 प्रायोऽनशि°.

कस्मिंश्चित्पिहितद्वारे तुङ्गं प्रच्छाद्य वेश्मनि । दिनानि कतिचिद्दिद्दा तस्थावास्कन्दशङ्किनी ॥३३८॥
तया स्वर्णप्रदानेन सुमनोमन्तकादयः । ब्राह्मणाः समगृह्यन्त ततः प्रायो न्यवर्तत ॥३३९॥
340 एवं तस्मिन्महाक्षेपे तया दानेन वारिते । ययौ विग्रहराजः स भग्नशक्तिर्यथागतम् ॥३४०॥
अथ दार्ढ्यं समासाद्य तुङ्गाद्याः प्रभविष्णवः । शनैः कर्दमराजादीञ्जगृहुर्विहितविग्रहान् ॥३४१॥
सुलक्कनो रक्कसूनुस्तथान्ये मुख्यमन्त्रिणः । रुष्टैर्निर्वासिता देशात्तुष्टैस्तैः संप्रवेशिताः ॥३४२॥
प्रवर्धमानवैरेण गूढदूतैर्विसर्जितैः । प्रायं विग्रहराजेन ब्राह्मणाः कारिताः पुनः ॥३४३॥
लस्कोयादिस्तया विप्रा भूयः प्रायविधायिनः । लब्धस्थैर्येण तुङ्गेन संनिपत्यापहस्तिताः ॥३४४॥
345 तेषां मध्ये वसन्गूढमादित्याख्यः पलायितः । हतो विग्रहराजस्य प्रियः कटकवारिकः ॥३४५॥
शस्त्रक्षतः प्रतीहारो वत्सराजाभिधः पुनः । न्यङ्कोतकादिभिर्धात्रञ्जीवग्राहमगृह्यत ॥३४६॥
ते स्वर्णग्राहिणो विप्राः सुमनोमन्तकादयः । सर्वेऽपि बद्धास्तुङ्गेन कारागारं प्रवेशिताः ॥३४७॥
अथ फल्गुणनाशेन इमे राजपुरीपतौ । तां प्रत्यारब्धिरभवत्क्रुध्यतां सर्वमन्त्रिणाम् ॥३४८॥
निपत्य संकटे वीरः पृथ्वीपालाभिधस्ततः । चक्रे राजपुरीराजः काश्मीरिकाबलक्षयम् ॥३४९॥
350 शिपाटको हंसराजो विपन्नौ तत्र मन्त्रिणौ । चन्द्रायैर्दुर्गतिर्दृष्टा[1] मरणं यत्र भेषजम्[2] ॥३५०॥
अथान्येन पथाकस्मात्तुङ्गः सार्धं सहोदरैः । कृत्स्नां राजपुरीं वीरः प्रविश्य सहसादहत्[1] ॥३५१॥
ननाश तेनोपायेन पृथ्वीपालः स पार्थिवः । शेषाणां मन्त्रिणां सैन्यं प्राप मुक्तिं च संकटात् ॥३५२॥
अबलः सन्स भूपालस्तुङ्गाय प्रददौ करम् । एवं कृतं तदा तेन नष्टस्यार्थस्य योजनम् ॥३५३॥
प्रविशन्नगरं तुङ्गस्ततः स्वीकृतकम्पनः । चकार डामरग्रामसंहारं सिंहविक्रमः ॥३५४॥
355 दिद्दाप्युदयराजस्य भ्रातुः पुत्रं परीक्षितम् । चक्रे संग्रामराजाख्यं युवराजमशङ्किता ॥३५५॥
सा हि सर्वाञ्छिशुप्रायान्पुरो भ्रातृसुतान्स्थितान् । परीक्षितुं मुमोचाग्रे पालेवतफलावलिम् ॥३५६॥
शक्तः कियन्ति कः प्राप्तुं फलान्यत्रेतिवादिनी । साभवद्राजपुत्राणां तेषां कलहकारणम् ॥३५७॥
गृहीताल्पफलांश्च प्रहारांस्तान्ददर्श च । संग्रामराजं[1] स्वस्वल्पफलभाजमविक्षतम् ॥३५८॥
अनन्तफलसंप्राप्तावक्षतत्वे च कारणम् । सविस्मयं तया पृष्टः स तामेवं तदाब्रवीत् ॥३५९॥
360 अन्योन्यकलहव्यग्रानेतान्कृत्वा पृथग्वसन् । समवापं फलान्यस्मिन्न चाभूवं परिक्षतः ॥३६०॥
व्यसनं संप्रवेश्या[1]न्यानस्थितानामप्रमादिनाम् । न काः क्लेशविहीनानां[2] घटन्ते स्वार्थसिद्धयः ॥३६१॥
श्रुत्वेति तस्य सा वाचमप्रमत्तत्वसूचिकाम् । भीरुर्नारीस्वभावेन राज्येऽमन्यत योग्यताम् ॥३६२॥
शूरस्य लभ्यं शौर्येण भीरोर्भीरुतया यथा । कार्यं हि प्रतिभात्यन्तर्न भवेच्च तदन्यथा ॥३६३॥
काष्ठं वह्न्युज्झितमपि भवेच्छीतशान्त्यै कपीनां लोष्टं शुद्ध्यै सलिलमनलश्चाग्नि[1]शौचैणकानाम् ।
अन्तर्भावा विदधति यथा भाविनः कार्यसिद्धिं तत्त्वं तेषां क्वचन सहजं वस्तुतो नास्ति किंचित् ॥३६४॥

---

३५०. 1) Thus $A_2$; $A_1$ °दुर्गतिं दृष्ट्वा.—2) Thus corr. by later hand from $A_1$ भैष°. ३५१. 1) सहसा supplied by $A_2$ in space left by $A_1$. ३५८. 1) राजं omitted by $A_1$ and supplied by $A_2$. ३६१. 1) Thus corr. by $A_2$; $A_1$ व्यसनैः संप्रविश्या°.—2) Thus corr. by $A_2$ from $A_1$ °विहीनां. ३६४. 1) $A_2$ gloss अग्निसौचा मृगा अग्निमश्नन्ति विषमूषका विषं च न विषद्यन्ते जीविता - - - - -. 2) $A_2$ यथाभावन.

तस्यामेकाब्दशीत्यब्दशुक्लभाद्राष्टमीदिने । देव्यां दिवं प्रयातायां युवराजोऽभवन्नृपः ॥३६५॥ 365

स्त्रीसंबन्धेन भूपालवर्याणां भुवनाद्भुतः । तृतीयः परिवर्तोयं वर्ततेत्र मण्डले ॥३६६॥

निर्नष्टकण्टककुले वसुसंपदाढ्ये श्रीसातवाहकुलमाप महीतलेस्मिन् ।
छायानिबन्धकुशली जलदाम्बुसिक्तो चूतप्ररोह इव केलिवने प्रवृद्धिम् ॥३६७॥

अथ स मृदुलवान्तर्गूढधैर्यानुभावः सुखमवनिमशेषां दोष्णि संग्रामराजः ।
बिसकुलनिभशोभानिह्नुतप्राणसारः फणकुलं उरगाणामीशितेव न्यधत्त ॥३६८॥

इति श्रीकाश्मीरिकमहामात्यचण्पकप्रभुसूनोः कल्हणस्य कृतौ राजतरङ्गिण्यां षष्ठस्तरङ्गः ॥
अत्र वर्षचतुःषष्टी मासेष्वर्धे दिनेषु च । अष्टस्वभूवन्भूपाला दश भूभोगभोगिनः ॥

---

३६६. ¹) Thus corr. by later hand from A₁ °र्वतो°. ३६७. ¹) Thus corr. by A₂ from A₁ निबन्धक°.—²) Thus corr. by A₂ from A₁ सारदा°; R G as above.—³) A₂ प्रवृद्धिम्. ३६८. ¹) Thus corr. by A₂ from A₁ फणकुल. *Colophon.* ¹) A₂ inserts here the note: राº १० वं ३६९ ॥ भाविनः राº ११ सम्यः २३६३ ॥.—²) A₁ adds here: लिखितमेतद् राजानकरत्नकण्ठेन.—³) A₂ भाविनः.

## ॥ सप्तमस्तरङ्गः ॥

मातुस्तेजसि निर्मले[1] पितृकुले श्लाघ्या तनुर्वेधसा स्वं संध्याहितसंनिधिर्मम जपारक्ताधरे खेलसि ।
संध्यावन्दनसाभ्यसूयगिरिजास्तुत्यैरशीर्षोत्कलैर्यः संध्यामपि वन्दते स्म स जगत्प्रीणातु गौरीश्वरः ॥ १॥

क्ष्मां[1] क्ष्मापतिर्बिभ्रन्मनसा च भुजेन च । गाम्भीर्येण च शक्त्या च सोजयद्वाहिनीपतीन्[2] ॥२॥

जाते राज्ञीक्षये भङ्गो यैस्तुङ्गस्य तदाखिलैः । दिनश्रीविगमे संध्याप्रसङ्गस्येव रागिणः ॥३॥

तत्तत्प्रतिभटाटोपत्रोटनात्प्रत्युतास्य तैः । उदयो ददृशे शश्वद्गतिं को वेत्ति वेधसः ॥४॥ युग्मम् ॥

5 नृपेण जातज्ञातेयः शूरः शक्तिसमन्वितः । सर्वाधिकारयोग्यो ना[1] सदा चन्द्राकरः स्वयम् ॥५॥

अन्ये भीमतिकाग्रामदिविरस्योरुसंपदः । पुण्याकरस्य तनयाः शूराः शान्तिं प्रपेदिरे ॥६॥

समर्थमन्त्रिविरहादनिच्छन्नपि वेधसा । निन्ये गत्यन्तरत्यक्तस्तुङ्गपक्षं क्ष्मापतिः ॥७॥

संग्रामराजतुङ्गादीन्देवी कोशमपाययत्[1] । मुमूर्षन्ती पुरा स्थातुमद्रोहेणेतरेतरम् ॥८॥

क्लेशासहो महीपालस्ततः कार्यवशादपि । तुङ्गन्यस्तप्रजाकार्यो भोगाभ्यासालसोऽभवत् ॥९॥

10 पर्याप्तं तस्य भीरुत्वं कियदन्यत्प्रकाश्यताम् । असमैर्यौनसंबन्धैश्चक्षमे यशसः क्षतिम् ॥१०॥

साहायकार्थी यस्मादाच्छीशौर्यादिमते सुताम् । दिद्दामठाधिपतये प्रेमनाम्ने स लोठिकाम् ॥११॥

क्व लोकोद्दलनोन्नद्धभूभृद्योग्या नृपात्मजा । प्रतिग्रहजलक्लिन्नपाणिः क्वाल्पमना द्विजः ॥१२॥

अथ तुङ्गादिभङ्गाय प्रायं ब्राह्मणमन्त्रिणः । परिहासपुरे विप्रपारिषद्यानकारयन् ॥१३॥

विप्रमन्त्रिमतैक्येन कृतो राज्ञः स विप्लवः । दुःसहः पद्ममानाभिसमागमसमोऽभवत् ॥१४॥

15 राज्ञोऽप्युत्पाटने सज्जैः कथंचित्प्रार्थितोऽद्विजैः[1] । मतिः क्षान्तिवदप्राये[2] तुङ्गनिःसारणे कृता ॥१५॥

राज्ञां[1] तुङ्गादिभिर्यत्तावदेभ्यः प्रतिश्रुतम् । अन्यस्यार्थयितुं लग्नास्तावत्ते शठबुद्धयः ॥१६॥

तुङ्गास्कन्देन विप्रोऽयं यो मृतस्तद्गृहे[2] वयम् । तं निर्दहाम इत्युक्त्वा शवः कोऽप्यरघट्टतः ॥१७॥

तैरुद्धृत्य यदानीतः शठैस्तुङ्गगृहान्प्रति । केशहोमाच्च विहिताद्या कृत्योत्थापिताभवत् ॥१८॥

तया प्रतीपपातिन्या निःशौचानां द्विजन्मनाम् । अकस्मान्निरगाच्छस्त्रं विनाशायोत्थिते कलौ ॥१९॥ तिलकम् ॥

20 ततः पलायिता विप्रा यस्तेषां मन्त्रदोऽभवत् । निगूढं राजकलशस्तद्वेश्म प्राविशद्भयात् ॥२०॥

स व्यक्तीभूतकौटिल्यः संग्रामं सुचिरं व्यधात् । अपहारैस्तु ते विप्राः पलाय्य स्वगृहान्ययुः ॥२१॥

---

१. ¹) A₂ निर्मिते. २. ¹) A₃ gloss भुवं शान्तिं च.—²) A₃ gloss सेनापतीन् समुद्रांश्च. ५. ¹) ना supplied by A₂. ८. ¹) A₃ gloss कोशं । दिव्यं । अपाययत् अकारयत् । पीतकोशान् कृतवती इत्यर्थः. १५. ¹) Thus corr. by A₃ from A₁ प्रार्थितो.—²) A₃ °प्रावेस्तु°. १६. ¹) Thus corr. by A₃ from A₁ राज्ञस्तु°.—²) A₃ gloss निःसारणं. १७. ¹) वं supplied by A₂.—²) A₄ gloss तुङ्गगृहे.

विजिते राजकलशो समकार्या हिंजालयः । मन्त्रिणः श्रीभरद्वताः समागत्य व्यधुर्मृधम् ॥२२॥
ते कृत्वा सुमहत्कर्म समाप्ति समरे गताः । निर्भिद्य मण्डलं सप्त सप्तसप्तेर्द्रुतं ययुः ॥२३॥
जितः सुगन्धिसीहेन तेषु शान्तेषु संयुगे । बद्धाय राजकलशस्तुङ्गेनानायितो गृहम्[1] ॥२४॥
शीघ्रमानोधिरोप्याशु स्कन्दे मार्गेषु विप्लवः । तुङ्गस्य पुण्यवादैः स नर्तितोपहतायुधः ॥२५॥
अन्योपि भूतिकलशो नाम मन्त्री विनिर्जितः । सुतेन राजकाख्येन सह भूरमठं ययौ ॥२६॥
क्रमात्सुगन्धिसीहाद्यैर्मुक्तः करुणया ततः । सपुत्रः सोवमानाभितप्तो देशान्तरं ययौ ॥२७॥
परिहासपुरादेवं जातो यो देशविप्लवः । स दैवयोगात्तुङ्गस्य शुभाय प्रत्युताभवत् ॥२८॥
ततः प्रसादिते राज्ञि गुणदेवेन मन्त्रिणा । आययौ भूतिकलशः कृतगङ्गानिमज्जनः ॥२९॥
पुनर्नृपगृहे तस्मिन्किंचिल्लब्धपदे शनैः । तुङ्गं निहन्तुं राज्ञैव गूढं दूताः प्रयोजिताः ॥३०॥
ज्ञातवार्तेन तुङ्गेन तस्मिन्नर्थे प्रकाशिते । सपुत्रो भूतिकलशो राज्ञा निर्वासितः पुनः ॥३१॥
अवष्टम्भं मनाग्लेभे चन्द्राकरसुतः शनैः । यो मध्यामन्तकः सोपि तस्मिन्काले व्यपद्यत ॥३२॥
भुक्त्वा किंचित्क्षणं भूभृत्कन्यासंभोगभाजनम् । राजोपकारकृच्छ्रीमान्प्रेमापि प्रमयं ययौ ॥३३॥
विपेदिरेन्ये गङ्गायाः सर्वेपि नृपतिप्रियाः । अवाशिष्यत भोगाय तुङ्गः सभ्रातृकः परम् ॥३४॥
इति यो यो हि वृत्तान्तस्तस्य नाशाय शङ्कितः । स स दैवानुकूल्येन प्रत्युतोऽभ्युदयकोऽभवत्[1] ॥३५॥
कालक्रमत्रुटितसंश्रयभूः स्वमूलमात्राश्रयी तटतरुः सरितोम्बुपूरैः ।
यैः शङ्क्यते निपततीति विशीर्णमूलिस्तैरेव तस्य हि भवेत्स्थितिभूमिवार्धम्[1] ॥३६॥
नीत्युज्ज्वलं व्यवहरन्प्रजाराधनतत्परः । प्राक्पुण्यसंक्षयात्तुङ्गः शनैस्त्वासीत्स्खलन्मतिः ॥३७॥
यस्त्वभाग्यापहाराय हीनजन्मानमाददे । साहायकाय कायस्थं क्षुद्रं भद्रेश्वराभिधम् ॥३८॥
भिक्षाणिज्यं[1] सौनिकत्वं काष्ठविक्रयितादि[2] च । आरामिकस्य यस्यासीत्कृत्यं वंशक्रमोचितम् ॥३९॥
कम्बलोद्वृष्टपृष्ठोथ भोजनार्थमवालगत्[1] । भस्त्रामषीभाण्डवाही यश्च पश्चान्नियोगिनाम् ॥४०॥
अनन्तराजकार्यादिचिन्ताश्रान्तो विधाय तम् । तुङ्गः सहायं नावुद्ध संसर्गाद्भाग्यसंक्षयम् ॥४१॥
धार्मिकं तेन धर्माके विनिवार्यार्यचेतसम् । गृहकृत्याधिकारे[1] स दुष्कृती विनिवेशितः ॥४२॥
देवगोब्राह्मणानाथातिथिराजोपजीविनाम् । अकालमृत्युर्विदधे वृत्तिच्छेदं स दुर्मतिः ॥४३॥
शवाजीवोपि पुष्णाति क्रूरः कापालिको निजान् । भद्रेश्वरस्तु पापोभूत्स्वजानामपि जीवहृत् ॥४४॥
तुङ्गेन चैत्रे सर्वत्र कृते भद्रेश्वरे प्रभौ । सुगान्धिसीहः प्रययावाषाढे मासि संक्षयम्[1] ॥४५॥
परलोकं गते तस्मिन्सर्वभारसहेनुजे । तुङ्गश्छिन्नोत्तमाङ्गत्वं सदैन्योमन्यतात्मनः ॥४६॥
श्रीत्रिलोचनपालस्य शाहेः साहायकार्थिनः[1] । देशं ततो मार्गशीर्षे मासि तं[2] व्यसृजन्नृपः ॥४७॥
राजपुत्रमहामात्यसामन्तादिनिरन्तरम् । सैन्यं तमन्वगाद्भूरि भुवनक्षोभनक्षमम् ॥४८॥

---

२४. [1]) A₄ gloss [illegible]. ३५. [1]) A₃ gloss [illegible]. ३६. [1]) Thus emended with C; A R G °[illegible]. ३९. [1]) A₃ gloss [illegible].—[2]) Thus corr. by A₃ from A₁ °[illegible]. ४०. [1]) The first half of this verse has been omitted by A₁ and supplied by A₃ in margin. ४५. [1]) Thus corr. by A₃ from A₁ °[illegible]. ४७. [1]) A₄ gloss [illegible].—[2]) A₄ gloss [illegible].

अभ्यागतेन सन्नतः[1] शाहिना कृतसत्क्रियः । पञ्चषाणि दिनान्यासीत्तद्देशे स मदोन्मदः ॥४९॥

50 प्रजागरचरन्यासशस्त्राभ्यासादिवासनाः । अभियोगोचिताः शाहि[1]रपश्यंस्तं[2] तदाब्रवीत् ॥५०॥ युग्मम् ॥

तुरुष्कसमरे यावन्न यूयं कृतयुद्धयः । आलस्यविषयात्तावत्तिष्ठतास्मिन्गिरेस्तटे ॥५१॥

एवं त्रिलोचनेनोक्तं[1] सोग्रहीन्न हितं वचः । तस्थौ परं समं सैन्यैरुत्सेकादाहवोत्सुकः ॥५२॥

हम्मीरेण[1] तदा सैन्यं जिज्ञासार्थं विसर्जितम् । तौषीपारे[2] मितप्रायैस्ततस्तीर्त्वावधीद्बलैः ॥५३॥

ततस्तं[1] माहितोत्सेकमपि शाहिः पुनः पुनः । जगादाहवतत्त्वज्ञः पूर्वोक्तामेव संविदम् ॥५४॥

55 स तस्य नाग्रहीद्वाक्यं रणौत्सुक्यवशंवदः । प्रत्यासन्नविनाशानामुपदेशो निरर्थकः ॥५५॥

प्रातस्ततः स्वयं कोपात्तुरुष्कानीकनायकः । सर्वाभिसारेणागच्छच्छलाहवविशारदः[1] ॥५६॥

अथ तुङ्गस्य कटकः सहसा भङ्गमाययौ । शाहिसैन्यं परं संख्ये ददृशे विचरत्क्षणम् ॥५७॥

शाहिसैन्ये गतेप्यासीज्जयसिंहः स्फुरन्रणे । श्रीवर्धनश्च सांग्रामि[1]र्विभमार्कश्च डामरः ॥५८॥

वीरे तुरंगतुमुले प्रहरद्भिस्त्रिभिर्भटैः । वीरक्षेत्रे निजे देशे रक्षितस्तैर्यशःक्षयः ॥५९॥

60 कस्त्रिलोचनपालस्य माहात्म्यं वक्तुमीश्वरः । निःसंख्या अपि यं संख्ये न जेतुमशकन्द्विषः ॥६०॥

शुशुभे रुधिरासारवर्षी युद्धे त्रिलोचनः । कल्पान्तदहनज्योतिर्विसारीव त्रिलोचनः ॥६१॥

स योधयित्वा संग्रामे कोटीः कङ्कटवाहिनाम् । एकाकी कार्यमर्मज्ञो निर्ययौ रिपुसंकटात् ॥६२॥

गते त्रिलोचने दूरमशेषं क्षितिमण्डलम् । प्रचण्डचण्डालचमूशलभच्छायमानशे ॥६३॥

संग्रामविजयोप्यासीन्न हम्मीरः समुच्छ्वसन् । श्रीत्रिलोचनपालस्य स्मरञ्शौर्यममानुषम् ॥६४॥

65 त्रिलोचनोपि संश्रित्य हास्तिकं स्वपदाच्युतः । सयत्नोभून्महोत्साहः प्रत्याहर्तुं जयश्रियम् ॥६५॥

यथा नामापि निर्नष्टं शीघ्रं शाहिश्रियस्तथा । इह प्रासङ्गिकत्वेन वर्णितं न सविस्तरम् ॥६६॥

स्वप्नेपि यदसंभाव्यं यत्र भग्ना मनोरथाः । हेलया तद्विदधतो नासाध्यं विद्यते विधेः ॥६७॥

ईषद्भूमिवैपुल्यं[1] राज्ञः शंकरवर्मणः । वृत्तान्तवर्णने पूर्वममुत्र प्रकटीकृतम् ॥६८॥

स शाहिदेशः सामात्यः सभूभृत्सपरिच्छदः । किमभूत्किमु वा नाभूदिति संचिन्त्यतेधुना ॥६९॥

70 अवतारं तुरुष्काणां रुन्धाशेषे महीतले । प्राप्तभङ्गस्ततस्तुङ्गः स्वदेशं प्राविशच्छनैः ॥७०॥

सृगालायेव तुङ्गाय लब्धभङ्गाय भूपतिः । न तत्रागसि चुक्रोध स धैर्यसरलाशयः ॥७१॥

किं तु खेदाय समभूत्तुङ्गायत्तत्वमीशितुः । परायत्ततया चित्तं पशोर[1]प्युपतप्यते ॥७२॥

तुङ्गात्मजोपि कन्दर्पसिंहः श्रीशौर्यगर्वितः । राजोचितं[1] व्यवहरंस्तस्योद्वेगप्रदोभवत् ॥७३॥

गुडलेखैः क्षणे तस्मिंश्छिद्रान्वेषी स भूभुजम्[1] । भ्राता विग्रहराजोपि प्रैरयत्तुङ्गमारणे ॥७४॥

75 कोशादिस्मरणाद्राजा[1] चिरं दोलायमानधीः । अभीक्ष्णप्रेरणोद्विग्नः प्रेरकानब्रवीत्ततः ॥७५॥

४९. [1]) Thus $A_2$; $A_1$ स तथा. ५०. [1]) र supplied by $A_2$ in space left by $A_1$.—[2]) Thus corr. by $A_2$ from $A_1$ ° पश्यन्त. ५२. [1]) Thus corr. by $A_2$ from $A_1$ °नोक्ता:. ५३. [1]) Thus $A_1$; altered by later hand to हम्मी°; G as above.—[2]) Thus corr. by $A_2$ from $A_1$ °पार; $A_2$ gloss तौषी नाम नदी. ५४. [1]) स्त supplied by $A_2$. ५६. [1]) Thus $A_2$; $A_1$ °रेणोत्तच्छ°. ५८. [1]) Thus $A_2$, with gloss संग्रामस्यापत्यं सांग्रामिः; $A_1$ संग्रामे. ६६. [1]) Thus $A_2$; $A_1$ दिलम°. ६८. [1]) $A_2$ gloss यस्य देशस्य भूमेः वैपुल्यं. ७२. [1]) पशोर supplied by $A_2$ in space left by $A_1$. ७३. [1]) Emended; A राज्यो°. ७४. [1]) Thus $A_1$; altered by later hand to भूभुजात् which is found also in G R. ७५. [1]) $A_2$ gloss यथं देव्या पीतकोशाः कृता इति स्मरणात्.

मम्मायामथ तज्जायां कन्दर्पं[1] चाप्यजीजनत् । पुत्रं विचित्रसिंहं च मातृसिंहं च विश्रुतौ ॥१०४॥

105 गृहीत्वा तौ स्नुषां तां च मङ्गला तुङ्गवल्लभा । देशाद्विनिर्गता दीना राजपुर्यां स्थितिं व्यधात् ॥१०५॥ कुलकम्[1]॥

तुङ्गस्थाने ततो राज्ञा पापो भद्रेश्वरः कृतः । भूतेश्वरादिदेवानां चक्रे कोशादिलुण्ठनम् ॥१०६॥

कियद्विवेकवैकल्यमस्य राज्ञः प्रकाश्यताम् । तादृशानपि यश्चक्रे पार्थादीनधिकारिणः ॥१०७॥

पार्थः परमदुर्मेधाः ख्यातो भ्रातृकलत्रगः । निर्विचारेण यत्तेन नगराधिकृतः कृतः ॥१०८॥

वधादिपापं पार्थेन सुकृतत्यक्तचेतसा । पवित्रे प्रवरेशस्य रङ्गपीठे प्रवर्तितम् ॥१०९॥

110 चक्रे लुब्धस्य भूभर्तुर्मतङ्गः[1] कृपणाग्रणीः । सिंधोः सुतः कोशवृद्धिं प्रजापीडनपण्डितः ॥११०॥

पुरा देवमुखाख्यस्य दिविरस्य किलाजनि । आपूपिकायां वेश्यायां पुत्रश्चन्द्रमुखाभिधः ॥१११॥

यस्तुङ्गोपाश्रयाल्लब्ध्वा लालितत्वं महीपतेः । वराटकात्प्रभृत्यासीत्कोटीनां कृतसंचयः ॥११२॥

विभूतिमध्ये लुब्धस्य प्राभृतायाभ्यढौकितैः[1] । अपूर्वैर्निजभृत्येषु विक्रयोभूत्कुलोचितः ॥११३॥

प्रभूताचिररोगश्च भूत्वा लब्धोदयः पुनः । यो मन्दाग्निः सरोगश्च तिलशाकैर्व्यहस्यत ॥११४॥

115 एकमेवाभवद्यस्य सुकृतं मरणक्षणे । कोटेस्त्रिभागं यददाच्छ्रीरणेश्वरयोजने ॥११५॥

तदात्मजाः कृता नागभागनन्दिमुखास्त्रयः । अधीशाः पृतनाङ्कस्य राज्ञा तुङ्गोपजीविनः ॥११६॥

हास्यं बभूव भूभर्तुस्तेषां तुङ्गपदार्पणम्[1] । बन्धनं यवकाण्डीनां हेमस्थाने शिशोरिव ॥११७॥

ते तुरुष्काहवे राज्ञा तुङ्गेनसहिताः पुनः । प्रत्यावृत्य ययुर्देशं निजमेव पलायिताः ॥११८॥

इत्थं मन्त्रिष्वयोग्येषु क्षान्तिशीले च भूपतौ । केचिदुद्रेकमभजन्दरद्दिविरडामराः ॥११९॥

120 सा लोठिकामठं कृत्वा लोठिका नृपतेः सुता । तिलोत्तमाया विदधे मातुर्नाम्नापरं मठम् ॥१२०॥

पापिनामपि हन्तेयं क्वापि सत्कर्मवासना । भद्रेश्वरोपि यच्चक्रे विहारं सुकृतोज्ज्वलम् ॥१२१॥

सत्यं विवेक्ता संग्रामराजो योन्याय्यतोर्जितम् । निजं ब्रुवाणो द्रविणं प्रपामपि न निर्ममे ॥१२२॥

श्रीलेखा पार्थिववधूः श्रीयशोमङ्गलात्मजा । पत्यौ शिथिलसामर्थ्ये स्वैरिणीत्वमसेवत ॥१२३॥

सुतः सुगन्धिसिंहस्य जयलक्ष्म्यां[1] बभूव यः । वल्लभो निर्भरं देव्याः सोस्यास्त्रिभुवनोभवत् ॥१२४॥

125 स जयाकरगञ्जादिगञ्जघटातितीक्ष्णधीः[1] । कोशोपकारकृत्तस्या आरोप्यासीज्जयाकरः ॥१२५॥

नवग्रामीणगञ्जादिकर्त्री संचयतत्परा । साभूद्भर्तुः प्रसादेन सुभगा भूरिवैभवा ॥१२६॥

स चतुर्थसमाषाढप्रारम्भाहे महीपतिः । हरिराजाभिधं पुत्रमभिषिच्यास्तमाययौ ॥१२७॥

सुमनःसेवितः[1] कुर्वन्नशेषाशा[2]प्रकाशनम् । ह्लादावहः[3] स सर्वस्य चैत्रोत्सव इवाभवत् ॥१२८॥

अमोघाज्ञेन तेनेमां निश्चौरां कुर्वता महीम् । पण्यवीथ्यां[1] निशीथिन्यां[2] निषिद्धा द्वारसंवृतिः ॥१२९॥

130 अचिरस्थायिनी राज्ञस्तस्याशाचिन्तितोन्नतिः[1] । सन्ध्या नवेन्दुलेखेव पार्थिवानामजायत ॥१३०॥

---

१०४. [1]) $A_2$ gloss कन्दर्पसिंहः. १०५. [1]) कुलकम् added by $A_2$. ११०. [1]) Emended with G C; A R भूभर्तुः सतङ्गः. ११३. [1]) $A_2$ gloss कोशलिकार्थं. ११७. [1]) Thus $A_1$; $A_2$ °पदेर्पणम्. १२४. [1]) Thus corr. by $A_2$ from $A_1$ °लक्ष्मीं. १२५-१२६. [1]) The words from गञ्जादिगञ्जघटा° to नवग्रामीण in the following verse have been omitted by $A_1$ and supplied in margin by $A_2$; they are found in G R. १२८. [1]) $A_2$ gloss पण्डितैः पुष्पैश्च.—[2]) $A_2$ gloss आकाङ्क्षा दिशश्च.—[3]) $A_2$ gloss सौख्यं तोषश्च. १२९. [1]) [2]) Thus corr. by $A_2$ from $A_1$ पुण्यवीथ्यां and निशीथिन्यां. १३०. [1]) Thus $A_2$; $A_1$ °शाचिन्तितोन्नतिः.

हार्दिकाविनद्धान्युर्वीं त रक्षित्वा क्ष्मापतिः । क्षयं ययौ शुचिमथ्यः शुचिशुक्लाष्टमीदिने ॥१३१॥
प्राणिनां दोलमानानां नक्षत्राणामिव क्षणात् । लक्ष्मीर्दाम्पत्यपेयं संमता भङ्गदायिनी ॥१३२॥
समन्योः स्वैरिणीवृत्तिः सुतस्य जननी जिता । अभिसारं चकारास्येस्थविनानां[1] जनश्रुतिः ॥१३३॥
राज्योपकरणे सज्जीकृते राज्यार्थिनी स्वयम् । सा राजमाता श्रीलेखा यावज्जाता समागता ॥१३४॥
मिलितैस्तावदेकाङ्गैर्भीमा धावमकेण च । सागराख्येन तत्पुत्रो[1] बालोऽनन्तो नृपः कृतः ॥१३५॥ युग्मम् ॥ 135
निधिं[1] जिघृक्षोरन्येन हृते तत्र प्रमादनम् । तद्रक्षिणोऽहेतुलुब्धस्य नागायेव यथा किल ॥१३६॥
राजमातुस्तथा राज्यलुब्धायाः पुत्रनाशनम् । अभूदन्यहृते राज्ये वृजिनायैव केवलम् ॥१३७॥ युग्मम् ॥
सा राज्यविप्रलम्भेन तादृशा व्यथिताशया । व्यस्मरत्तनयस्नेहं धिग्भोगाभ्यासवासनाम् ॥१३८॥
अथाजगाम स्थविरः पितृव्यो बालभूपतेः । राज्यं विग्रहराजाख्यो हर्तुं[1] विततविक्रमः ॥१३९॥
स लोहरात्प्रचलितो दग्ध्वा द्वारमतन्द्रितः । दिनद्वयेन सार्धेन नगरं सत्वरोऽविशत् ॥१४०॥ 140
श्रीलेखाप्रेरिताः सेनाः प्रविष्टं[1] लोठिकामठम् । दहीपितामयस्तत्र निजघ्नुस्तं सहानुगम् ॥१४१॥
मठद्वयं ततः कृत्वा स्वस्य भर्तुः सुतस्य च । तस्थौ व्यवसती राज्ञी राज्यद्रोहोद्यतानिशम् ॥१४२॥
ततो नरपतिः किंचिच्छनैः शिथिलशैशवः । अतिव्ययादिव्यसनी पर्मेश्वरतयाभवत् ॥१४३॥
तस्यासन्रुद्रपालाद्याः शाहिपुत्राः परं प्रियाः । अनल्पवेतनादाने राज्योत्पन्नापहारिणः ॥१४४॥
कृतप्रत्यहनिर्वाहः सार्धलक्षेण भूभुजा । रुद्रपालो दरिद्रत्वं कदाचिदपि नात्यजत् ॥१४५॥ 145
दिद्दापालः क्ष्मापाललब्धया प्रतिवासरम् । सहस्राणामशीत्यापि शेते स्म न सुखं निशि ॥१४६॥
अनङ्गपालवेतालचक्रे क्ष्मापाललालितः । शश्वत्सुवर्णगीर्वाणप्रतिमापाटने[1] मनः ॥१४७॥
रुद्रपालः परित्राता धनप्राणादिहारिणाम् । बभूव वीरचण्डालप्रायाणां वज्रपञ्जरः ॥१४८॥
कायस्था रुद्रपालाद्याः प्रजानां पीडनं व्यधुः । चकारान्धमठं श्रीमानुत्पलाख्यो यदग्रणीः ॥१४९॥
कियद्रुपालवालभ्यमन्यस्तस्याभिधीयताम् । जालन्धराधिपस्येन्दुचन्द्रस्येन्दुमुखीं सुताम् ॥१५०॥ 150
उपयेमे मनोज्ञस्याज्ज्येष्ठामासंमतिं स्वयम् । यया भद्रः स्वामिधया विदधे त्रिपुरेश्वरे ॥१५१॥
तस्याः किंचिद्वयोन्यूनां स्वसारं यो यवीयसीम् । अथ सूर्यमतीं देवीं भूभुजे परिणीतवान् ॥१५२॥
रुद्रेण भूपतिः सख्या स कर्मसुखदायिना । पात्रीकृतो दुर्नयानां कर्णेनेव सुयोधनः ॥१५३॥
कम्पनाधिपतिस्तत्र क्षणे त्रिभुवनो बली । आययौ भूपतेर्हर्तुं राज्यं संभृतडामरः ॥१५४॥
आकृष्टाशेषकटके तस्मिन्योद्धुमुपागते । एकाङ्गाः सतुरारोहा राजपक्षं न तत्यजुः ॥१५५॥ 155
असिना लङ्घयन्प्रासानमोघाश्लाघ्यविक्रमः । प्रजहारानन्तदेवः स्वयं त्रिभुवनं रणे ॥१५६॥
संनाहरक्षिताङ्गः स दृढप्रहृतिपीडितः । विदर्ही[1] वदनेनासृक्स्वप्रतापमिवोद्वमन् ॥१५७॥
विनयच्छन्नशौटीर्यैः[1] शिशुप्रायैः[2] स भूपतिः । दृष्ट्वा बलमसंभाव्यं तस्मिंस्त्यक्ता रणं गते ॥१५८॥

---

१३३. [1]) स्थविनाम supplied by $A_2$ in space left by $A_1$. १३५. [1]) $A_2$ gloss तस्या अपरः पुत्रः. १३६. [1]) Thus $A_2$; $A_1$ रतं. १३९. [1]) Thus A R; G C हन्तुं. १४१. [1]) Thus corr. by $A_2$ from $A_1$ प्रविष्टी. १४७. [1]) Thus corr. by $A_2$ from $A_1$ °पाचटने. १५०. [1]) च supplied by $A_2$. १५१. [1]) मास supplied by $A_2$ in space left by $A_1$. १५२. [1]) Thus $A_1$; $A_2$ किंचिदिव. १५७. [1]) $A_2$ gloss चचाल. १५८. [1]) $A_2$ gloss शौटीर्यं अभिमानः प्रागल्भ्यं वा.—[2]) $A_2$ gloss शिशुसदृशाः.

शमालाडामरं मन्त्रं प्राचैरभिनवाभिधम् । शालास्थले व्यधात्क्ष्माप्यविक्रमो मोचविक्रमम् ॥१५९॥

160 मांसाद्यन्वेषणायाटीभूतखड्गो भ्रमन्वने । भुवनक्षोभकृदभूच्छैरबोमन्त्रभूपतिः ॥१६०॥

पश्यन्प्रहारलूनाङ्गानेकाकान्स पदे पदे । निवेद्यमानानप्तैर्नामग्रहणपूर्वकम् ॥१६१॥

क्षितिभृज्ज्ञातदाक्षिण्यो बिलञ्चित्स्याभरे ततः । चाग्रन्यमक्षपटलादेकाङ्गानां व्यधारयत् ॥१६२॥ युग्मम् ॥

एवं तत्र कृतशेन भृत्येभ्यः प्रतिपादिता । बिलञ्चित्तेन दीनारकोटिः षण्णवतिः क्रमात् ॥१६३॥

राज्ञो रणाजिवृत्तस्य युग्धसेकैः करास्सरः । स्थिरमद्रङः कृष्टसैन्योऽपि जनश्रुतिः ॥१६४॥

165 अहो महत्त्वं भूभर्तुर्दीनो देशान्तरागतः । तादृक्त्रिभुवनो येन संविभेजे विमन्युना ॥१६५॥

ब्रह्मराजाभिधस्तेन बन्धुर्गङ्गाधिपः कृतः । रुद्रपालकृतद्वेषो चिरकम्पलितो ययौ ॥१६६॥

सप्तभिर्म्लेच्छभूपालैः समं मिलितडामरः । तेनानीतो दरद्राजो बलाढ्यचक्रमण्डलः ॥१६७॥

क्षीरपृष्ठाभिधं ग्रामं प्राप्तस्य समरोत्सुकः । तस्यापं विक्रमोद्यमो रुद्रपालो विनिर्ययौ ॥१६८॥

भो व्यवस्थापिते युद्धे सैन्याभ्यां दरदीश्वरः । क्रीडन्पिण्डारकाख्यस्य नागस्य भवनं ययौ ॥१६९॥

170 युद्धेवाचरणात्तत्र पार्श्वस्थैर्वारितोऽपि सः । भ्रममाणस्य मत्स्यस्य गात्रे कुन्तमपातयत् ॥१७०॥

अथोज्ज्वलाम गोमायुवपुः कुण्डाद्भुजंगमः । स च तं मृगयौत्सुक्यादधावद्दरदीश्वरः ॥१७१॥

तमापतन्तमालोक्य व्यवस्थोन्मूलनं चिरम् । आस्कन्दाशङ्कि गुर्भर्तुः सैन्यं युद्धाय निर्ययौ ॥१७२॥

अभूत्ततोऽस्त्रसंघर्षसंजातानलसंहतिः । कृतस्वर्णाङ्गनोद्वाहो वीराणां समरोत्सवः ॥१७३॥

तस्मिन्महाभटाटोपे शिरश्छिन्नं दरत्पतेः । रुद्रस्य रौद्रमहसः संभृत्वं यशः पुनः ॥१७४॥

175 समरे वधबन्धादि म्लेच्छराजाः प्रपेदिरे । संप्राप हेमरत्नादि पुनः कश्मीरभूपतिः ॥१७५॥

दुर्लक्षमुक्ताधौताम्भःक्षालिताब्जलज्ज्वलम् । रुद्रपालो दरद्राजशिरो भर्तुरुपानयत् ॥१७६॥

आमोदयन्नवस्तेन कृतमार्येस्तया द्विजैः । बह्वीर्विविधास्तस्य बभूवुरपदालिकाः ॥१७७॥

रुद्रपाले ततो लूतामयेन प्रमयं गते । अन्येऽपि शाहितनयाः क्षिप्रमेव क्षयं ययुः ॥१७८॥

पालवंशान्ध्यविगमे मुक्ताशयजुषोऽभवत् । देवी सूर्यमती भर्तुर्दर्पणस्येव बिम्बिता ॥१७९॥

180 सुभटापरनाम्ना सा गौरीश्वरविधायिनी । पुण्यं वितस्तापुलिने निर्ममे सुभटामठम् ॥१८०॥

गोहेमहयरत्नादिप्रदानैः सबहून्द्विजान् । सदाशिवप्रतिष्ठायामकरिष्ठांश्चकार सा ॥१८१॥

आशाचन्द्रापराख्यस्य कह्लनस्यानुजन्मनः । नाम्ना व्यधापि वात्सल्यात्साग्रहारो मठस्तया ॥१८२॥

सिल्लनाख्यस्य च भ्रातुर्भर्तुर्धाभिधया सती । मठी चाकारयत्पार्श्वे त्रिजयेशामरेशयोः ॥१८३॥

अष्टोत्तरं चाग्रहारशतं श्रीविजयेश्वरे । ब्राह्मणेभ्यो महापुण्यं विद्वद्भ्यः प्रत्यपादयत् ॥१८४॥

185 पत्युर्नाम्नाग्रहारान्स्वनाम्ना चामरेश्वरे । त्रिशूलबाणलिङ्गादिप्रतिष्ठाश्च विनिर्ममे ॥१८५॥

---

१५९. [1]) Thus corr. by $A_2$ from $A_1$ मोचविक्रमम्. १६२. [1]) Supplied by $A_2$. १६३. [1]) Emended with G C; A कृतः. १६७. [1]) $A_2$ gloss ब्रह्मराजेन.—[2]) बलाढ्यचक्र supplied by $A_2$ in space left by $A_1$; $A_2$ gloss ग्राम. १६८. [1]) Thus $A_1$; $A_2$ क्षीरपृष्ठा°, with gloss क्षरोद इति ग्राम कमराज्ये. १७२. [1]) Emended; A चिरम्. १७६. [1]) $A_2$ gloss [illegible] इति [illegible] ॥.—[2]) Thus corr. by $A_2$ from $A_1$ हालज्ज्वलम्.—[3]) Thus corr. by $A_1$ from $A_1$ °रुपानयत्. १७७. [1]) Thus $A_2$; $A_1$ तथा द्विजैः

दंपती राजराजाख्ये मृते पुत्रे प्रचक्रतुः । सदाशिवान्तिके राजवेश्म संत्यज्य तौ स्थितिम् ॥१८६॥
ततः प्रभृति सत्यज्य पूर्वराजकुलस्थितिम् । तत्रैव कृत्वा भूपालास्तत्रैव वसतीर्व्यधुः ॥१८७॥
पार्थिवस्याश्वशालीयाः प्रियत्वाजितया प्रियाः । प्रसादैर्देशलुण्ठ्यां च सर्वतः समतां ययुः ॥१८८॥
नर्मेश्वरतया भर्तुर्वल्लभो नर्मकोविदः । अलुण्ठयत्प्रजा नित्यं डल्लको नाम दैशिकः ॥१८९॥
मालवाधिपतिर्भोजः प्रहितैः स्वर्णसंचयैः । अकारयद्येन कुण्डयोजनं कपटेश्वरे ॥१९०॥ 190
प्रतिज्ञा भोजराजेन पापसूदनतीर्थजैः । सततं वदनस्नाने या तोयैर्विहिताभवत् ॥१९१॥
अपूरयत्तस्य यस्तां दुस्तरां नियमाहितः । प्रहितैः काचकलशीकुलैस्तद्वारिपूरितैः ॥१९२॥
स तस्य पद्मराजाख्यः पर्णप्राभृतदैशिकः । प्रियताम्बूलशीलस्य त्यागिनो वल्लभोभवत् ॥१९३॥ चक्कलकम् ॥
तेन नागरखण्डादिपर्णविक्रयिणा नृपः । देशोत्पत्तिधनं प्रायो निःशेषं दापितस्तदा ॥१९४॥
पञ्चचन्द्रकशोभाङ्कमौलिसिंहासने नृपात् । बन्धायादत्त लब्धव्ये धने स धनिकोधिके ॥१९५॥ 195
तद्राजविक्रमास्थानोपयुक्तं तस्य मन्दिरात् । आनीयमानं मासार्धवासरे मासि मास्यभूत् ॥१९६॥
स्वकोशसंचयं दत्त्वा देवी सूर्यमती ततः । पद्मराजोद्भवां देशस्याव्यवस्थां न्यवारयत् ॥१९७॥
शमिते चाश्वशालीयडल्लकादिभये तदा । प्रावर्तन्त पुनर्देशे व्यवस्था निरुपद्रवाः ॥१९८॥
ततः प्रभृति राज्ञ्येव राजकार्योद्यताभवत् । तस्थौ शौर्यकथां त्यक्त्वा राजा कार्यकरः पुनः ॥१९९॥
भर्तुर्नारीविधेयत्वं तस्या भर्तृजयस्तथा । निष्कलङ्केन शीलेन नान्योन्यं गर्ह्यतामगात् ॥२००॥ 200
भवभक्तिव्रतस्नानत्यागशीलादिभिर्गुणैः । कृतिनानन्तदेवेन मुनयोपि विनिर्जिताः ॥२०१॥
राज्ये तस्य महीभर्तुर्दीर्घे तांस्तानलङ्घयत् । पतिंवरेव राजश्रीर्भृत्यान्नवनवोन्मुखी ॥२०२॥
क्षेमाभिधो राजगञ्जपूरणं बालभञ्जकः । व्यधाद्द्वादशभागादिप्रकारैर्ढौकयन्धनम् ॥२०३॥
मन्त्री ततोभवत्साधुस्त्रैगर्तः केशवो द्विजः । सौधचन्द्रातपेनेव भूपालो येन भूषितः ॥२०४॥
आस्यन्गतभीरेकाकी स एष ददृशे जनैः । भाग्याम्बुवाहतडितो निश्चिताः कस्य संपदः ॥२०५॥ युग्मम् ॥ 205
भाग्याधीनं धनं ध्यात्वा मुधा मुग्धधियामसौ । कुलविक्रमयोर्दर्पो मिथ्यैव पृथुतां प्रति ॥२०६॥
प्रासादपालवैश्यस्य गौरीशविदशालये । भूतेर्हलधरो वज्रो वराहश्चाभवन्सुताः ॥२०७॥
तेभ्यो हलधरः सूर्यमत्या विहितसेवनः । वृद्धिं दिने दिने गच्छंल्लेभे सर्वाधिकारिताम् ॥२०८॥
विधेयान्बुद्धियुक्तेन कुर्वतः क्षित्यनन्तरान् । सपत्नीकोभवत्तस्य मुखप्रेक्षी क्षमापतिः ॥२०९॥
क्षेमेण सूत्रितं पूर्वं सपादाग्रमुदग्रधीः । कर्मस्थानं स्फुटीचक्रे सर्वस्थानधुरंधरम् ॥२१०॥ 210
अभूद्वर्णकमूल्यादिलेखनं कनकस्य यत् । राजायत्तं जनस्यार्थसंचयानां प्रकाशकम् ॥२११॥
स तन्निवारयामास भाविनां भूभुजां विदन् । ज्ञानी संचितवित्तस्य दण्डायायासकारिताम् ॥२१२॥

---

१८७. [1]) Thus corr. by A₂ from A₁ कृत्वा. १८८. [1]) Thus corr. by A₂ from A₁ °लुण्ठा. १९०. [1]) Thus corr. by later hand from A₁ °भोजैः. १९२. [1]) A₂ gloss प्रतिज्ञां.—[2]) Thus corr. by later hand from A₁ प्रहितैः काचक°.—[3]) A₂ gloss तोय इति भाषया. १९३. [1]) A₂ gloss पानविशेषः. १९५. [1]) Thus corr. by later hand from A₁ °सने. १९६. [1]) र्ध supplied by A₂ in space left by A₁. २००. [1]) Thus corr. by later hand from A₁ शीलेना.—[2]) Thus corr. by A₂ from A₁ गृह्यता°. २०१. [1]) Thus corr. by A₂ from A₁ °स्थान°. २०३. [1]) A₂ gloss अर्पित. २०४. [1]) Thus corr. by later hand from A₁ केशवो. २०७. [1]) Thus A₁; A₂ भूतिर्ह°. २०९. [1]) Thus A₁; A₂ °बुद्धेन.—[2]) Thus corr. by A₂ from A₁ °न्तरम्. २१०. [1]) Thus A₁; A₂ सर्वकार्यधु°. २१२. [1]) Thus A₂; A₁ ज्ञाने.

भर्त्सितानथ शालीयान्धनदारापहारिणः । कांश्चिद्व्यापाद्य स शर्म निन्ये लोकस्य विप्लवम् ॥२१३॥
तदावासवता नीतः कचस्वर्णैः सुरास्पदैः । शोभां महामहारैश्च वितस्तासिन्धुसंगमः ॥२१४॥
215 आमरश्च सुताश्चास्य लक्ष्मीपरिचयोन्मदाः । द्विरदा इव न क्वापि दानप्रणयितां जहुः ॥२१५॥
तद्भ्रातृपुत्रो बिम्बाख्यः श्रीमान्वीरो वराहजः । द्वाराधिकारकार्यासीच्छानप्रलयवारिदः ॥२१६॥
स डामरकुलाकालमृत्युः स्वल्पानुगोभवन् । खशाहवे जहौ प्राणान्पलायनपराङ्मुखः ॥२१७॥
चम्पायां सालभूपालमुन्मूल्यानन्तभूपतिः । तत्तनूपजयी नव्यं धराधवमरोपयत् ॥२१८॥
मन्त्रभृन्येन शौर्येण परदेशेषु भूपतिः । हठप्रवेशान्विदधत्सोभूत्कृच्छ्रगतोसकृत् ॥२१९॥
220 तुक्कात्मजस्य कलशस्यारब्धौ खिन्नसैनिकम् । अमोचयद्धलधरो युक्त्या वल्लापुरादमुम् ॥२२०॥
उरशां च प्रविष्टस्य वैरिरुद्धाध्वनो व्यधात् । कम्पनाधिपतिस्तस्य मार्गान्संशोध्य निर्गमम् ॥२२१॥
कालेनन्तमहीभर्तुर्वैरिविग्रहसंकटे । साहसान्युदजृम्भन्त तानि तानि क्षणे क्षणे ॥२२२॥
राजेश्वरो द्वारपतिः श्रीमान्भद्रेश्वरात्मजः । डामरैः क्रमराज्यस्थैरन्येपि बहवो हताः ॥२२३॥
वीक्ष्य नीतिदृशा कार्यं भीत्या व्यवहरन्नपि । भृत्यतां निष्परिभवां को भुङ्क्ते नृपमन्दिरे ॥२२४॥
225 दुष्प्रवादास्पदीभूतो देव्या निविडसेवनात् । आशाचन्द्रादिभिः क्रुद्धैर्बद्धो हलधरोप्यभूत् ॥२२५॥
स राज्ञा हृतसर्वस्वो बन्धनक्लेशमन्वभूत् । भाग्यप्रभावे निःसारे सुखमेकान्ततः कुतः ॥२२६॥
नृपेण बन्धनात्त्यक्तं तं श्रीः प्रत्यागता पुनः । आलिलिङ्ग सितच्छत्रलज्जास्मितसितानना ॥२२७॥
स राज्ञ्याः प्रावृष इव प्रणयेन क्षणे क्षणे । कोपप्रसादमेघार्कपर्यायापातमन्वभूत् ॥२२८॥
ततः सरलचित्तस्य क्रमेण समपद्यत । भार्याजितत्वं भूभर्तुर्दुर्विपाकार्पणोन्मुखम् ॥२२९॥
230 अधिकारपरित्यागाद्दोषाननुशयावहान् । वदद्भिर्वार्यमाणोपि प्राज्ञैर्हलधरादिभिः ॥२३०॥
पत्न्या संप्रेरितः शश्वत्तनयस्नेहमुग्धया । पुत्राय कलशायाभूद्राज्यं दातुं समुद्यतः ॥२३१॥
यास्यस्यनुशयं राजन्नेवंवाद्यपि कारितः । सज्जं तेन रणादित्यनाम्ना क्षत्ताभिषेचनम् ॥२३२॥
एकाधचत्वारिंशस्य वर्षस्य नभसः सिते । षष्ठेह्नि बाहुलस्याभूदभिषिक्तो महीभुजा ॥२३३॥
अथास्थाने रणादित्यो राजपुत्रान्निवेशयन् । चिन्तयन्राज्यमाहात्म्यं प्रतिपत्तिषु निष्ठुरः ॥२३४॥
235 अनम्रो राजपुत्रोयं देवेति कथयन्नतः । कृकाटिकान्यस्तहस्तः क्षितिपाले न्यवेदयत् ॥२३५॥
कुपितेन स भूभर्त्रा परिवृत्यावलोकितः । एवं कृतस्मितो व्यक्तं तमूचे नीतिनिष्ठुरः ॥२३६॥
इत्थं यत्र निवेद्यन्ते कान्यकुब्जादिभूभुजः । तत्रैव त्यक्तराज्यस्य कान्यास्तु प्रक्रिया तव ॥२३७॥
दिने दिने सानुशयो नियतं भविता भवान् । नाभिमानपरित्यागः कर्तुं शक्यो मुनेरपि ॥२३८॥
सुदूरदर्शिनां तत्र मन्त्रिणां हृदयंगमम् । राजा तस्य वचः श्रुत्वा प्रतिवाक्याक्षमोभवत् ॥२३९॥
240 दृष्ट्वान्येद्युर्नवं भूपं राजचक्रेण सेवितम् । नवेतरं च सहितं परिमेयैः परिच्छदैः ॥२४०॥

२१४. 1) Thus corr. by A2 from A1 काञ्चिरस्व°; A2 gloss कचन दीप्यमानं स्वर्णं येषां तैः. २१७. 1) Thus corr. by A2 from A1 °भवत्.—2) Thus A2; A1 जहत्. २२०. 1) तुक्का supplied by A2 in space left by A1. २२१. 1) Thus corr. by A2 from A1 मार्गास्सं°. २३२ 1) सज्जं supplied by A2 in space left by A1.—2) A2 gloss तेनाभिषेचनं रणादित्यनामा क्षत्ता प्रतीहारः अभिषेचनं सज्जं कारित इत्यन्वयः कथं भूत एवंवादी अपि. २३३. 1) A2 gloss कलशः.—2) Thus corr. by later hand from A1 षष्ठ°; A2 gloss कार्त्तिकस्य. २३४. 1) प supplied by A2.

धीमान्हलधरो युक्त्या कुलकास्यया नृपम् । एवं निर्भर्त्स्यंल्लक्ष्मीं तं प्रत्याजीवदत्सुतः ॥२४१॥
विधाय निःसुखं सूनुं राज्यभारार्पणाद्विभुम् । कस्मात्त्वद्धृष्टसापेक्षो न जिह्रेष्यत्र वार्द्धके ॥२४२॥
तत्स्वयं राजकार्याणां कार्यमुद्वहनं त्वया । अभुक्तो यौवनाभोगैरयमस्तु सुतस्तव ॥२४३॥
इत्युक्त्वा स पुनर्भूपमधिकारमजिग्रहत् । चक्रे कलशदेवं च कलया युक्तिवञ्चितम् ॥२४४॥
पित्रोरेवान्तिके कुर्वन्नाहाराद्यपि संततम् । ततो बभूव कलशो नाममात्रमहीपतिः ॥२४५॥ 245
सर्वास्थानास्त्रपूजादिविधाने पार्थिवोचिते । पितुः सहायकल्पः स पौरोहित्यमिवाकरोत् ॥२४६॥
अनिमित्तप्रहृष्टानामनिमित्तानुतापिनाम् । न क्वापि चलचित्तानां तिरश्चामिव निश्चयः ॥२४७॥
दापयित्वा पतिं राज्यं निर्बन्धेनापि तावता । सूनौ बभूव यद्राज्ञी विप्रेमेर्ष्यानुतापिनी[1] ॥२४८॥
सेर्ष्या स्नुषाणामुत्कर्षं पार्थिवप्रमदोचितम् । वेषालंकरणादौ सा रूक्षचित्ता न चक्षमे ॥२४९॥
दासीकृत्यं तया पुत्रमहिष्यः कारिताः सदा । गृहोपलेपने यावन्न वैमुख्यमदर्शयन् ॥२५०॥ 250
पुत्रो विग्रहराजस्य क्षितिराजाभिधस्ततः । राज्ञः[1] पितृव्यजो भ्राता कदाचित्पार्श्वमाययौ ॥२५१॥
तस्मै न्यवेदयत्खेदं स चित्तस्योपतापकम् । पुत्रे भुवनराजाख्ये राज्यलुब्धेऽतिविप्लुते ॥२५२॥
स हि तस्यात्मजो नीलपुरराज्यं[1] समाश्रितः । तद्बलैः पितुरारब्धं[2] विधातुं सोद्यमोऽभवत् ॥२५३॥
नाम भागवतानां च पूज्यानां स्वपितुर्व्यधात् । वसंयज्ञोपवीतानां[1] शुनामशुचिमानसः ॥२५४॥
क्षितिराजः स्ववध्वां च विरक्तायां विशुद्धधीः । मनस्तापापहे चक्रे सर्वत्यागामृते स्पृहाम् ॥२५५॥ 255
राज्यं कलशपुत्राय ज्येष्ठानन्तरजन्मने[1] । रामलेखाभिधानायां राज्ञ्यां जाताय सत्वरम् ॥२५६॥
दत्त्वा स्तनंधयायापि तदोत्कर्षाभिधाय सः । राजर्षिर्विबुधैः सार्धं विदधे तीर्थसेवनम् ॥२५७॥
भुक्त्वा शमसुखं भूरीन्वर्षान्परमवैष्णवः । स चक्रायुधसायुज्यं ययौ चक्रधरे सुधीः ॥२५८॥
स[1] च भोजनरेन्द्रश्च[2] दानोत्कर्षेण विश्रुतौ । सूरी तस्मिन्क्षणे तुल्यं द्वावास्तां कविबान्धवौ ॥२५९॥
पितुः[1] पितृव्यजाद्भ्रातुर्जातस्यानन्तभूभुजा[2] । तन्वङ्गराजस्योत्सङ्गे[3] नप्ता[4] न्यासीकृतः शिशुः ॥२६०॥ 260
तन्वङ्गोऽपि विवृद्धिं तत्त्यक्त्वा राष्ट्रं शिशुं च तम् । पुनः प्रविष्टः कश्मीरानस्तं चक्रधरं ययौ ॥२६१॥
सर्वसाधारणीभूतभोगानां राजबीजिनाम् । तावज्ज्ञातेयमभवन्नेह द्रोहकलङ्किनम् ॥२६२॥
इन्दुराजात्मजात्सिद्धराजो यो बुद्धराजतः । जातो मदनराजाख्यं वीरं पुत्रमजीजनत् ॥२६३॥
अत्युत्सिक्तः सुतस्तस्य दरं[1] भूपतिमण्डलात् । विधुरे रात्रि निर्यातः शौर्योद्रेकादखण्डितः ॥२६४॥
तदानीं जिन्दुराजाख्यो डामरोद्रेकखिन्नया । राज्ञ्या स्वयं गृहं नीत्वा सान्निध्यं ग्राहितोऽभवत् ॥२६५॥ 265
क्षणः शोभाभिधस्तेन गाढोद्वेगावहः प्रभोः । देग्रामस्थो[1] डामरोऽथ दत्त्वास्कन्दं निपातितः ॥२६६॥

---

२४८. [1]) A₂ gloss विप्रेमा निस्स्नेहा; A, विप्रमेर्ष्यानुतापिनी इत्यन्वयादर्शे. २५१. [1]) ज्ञः supplied by A₂ in space left by A₁. २५३. [1]) Thus A₁; A₂ नीलपुरराज्यं.—[2]) Thus corr. by A₂ from A₁ °रारब्धि; A₂ gloss आस्कन्दं. २५४. [1]) वस supplied by A₂ in space left by A₁. २५६. [1]) A₄ gloss कलशदेवस्य द्वौ पुत्रौ ज्येष्ठो हर्षदेव एकः कनिष्ठ उत्कर्षो द्वितीयः. २५९. [1]) A₄ gloss अनन्तदेवः.—[2]) A₄ gloss भोजराजश्च. २६०. [1]) A₄ gives in margin a genealogical list showing the descendants of the brothers वज्रराज and कान्तिराज: वज्रराज, संग्रामदेव, अनन्तदेव, कलश, and कान्तिराज, जस्सराज, तन्वङ्ग.—A₄ gloss (to पितुः) संग्रामदेवस्य.—[2]) A₄ gloss कान्तिराजपुत्रजस्सराजात.—[3]) A₄ gloss तन्वङ्गस्य.—[4]) Thus corr. by A₂ from A₁ तन्वराज°.—[5]) A₄ gloss पौत्र उत्कर्षः. २६४. [1]) Thus corr. by A₂ from A₁ दत्तु°.—[2]) A₂ दूरं नृपतीत्यन्वयादर्शे. २६५. [1]) Thus A₁; A₂ नत्वा. २६६. [1]) A₂ gloss देवग्रामे इति भाषया.

कम्पनाधिपतां दत्त्वा ततस्तस्य प्रतापिनः । पार्थिवो[1] राजपुर्यादीन्देशांश्चक्रे करप्रदान् ॥२६७॥
अनन्तभूभुजो राज्ये तत्तत्स्खलितसंकटे । आलम्बयष्टिप्रतिमो ययौ हलधरः क्षयम् ॥२६८॥
मुमूर्षुणा चक्रधरे तेन पार्श्वस्थितो नृपः । सजानिरुपदेशार्थी स तदेत्थमकथ्यत ॥२६९॥
270 मा कार्ष्ट परराष्ट्रेषु रभसारब्धसाहसम् । युक्त्या वल्लापुरादौ यो ऽध्यपोढं व्यसनं मया ॥२७०॥
विशङ्क्यो जिन्दुराजोयं पराध्यां वृद्धिमागतः । भेदं वः सह पुत्रेण जयानन्दो[2] विधास्यति ॥२७१॥
कथितं तेन तत्स्मृत्वा जिन्दुराजं महौजसम् । विज्ञेनाबन्धयद्राजा युक्तिमांस्त्याजितायुधम् ॥२७२॥
अथ कालेन कलशक्ष्माभृत्कलुषिताशयः[1] । भृत्यैरसाधुसंसेव्ये प्रसक्तिं ग्राहितोऽध्वनि ॥२७३॥
तस्याभवन्भिञ्जापित्थराजपालादयः प्रियाः । तस्यैकदा राजपुत्राश्चत्वारः शाहिवंशजाः ॥२७४॥
275 पुत्रो गङ्गपतेर्नागनामा[1] निकटसेवकः । सोपि तस्य जयानन्दः कौटिल्याध्यापकोभवत् ॥२७५॥
द्विजेन्द्रेऽमरकण्ठे तु याते शिवसमानताम् । राजा प्रमदकण्ठस्य ययौ तज्जस्य[1] शिष्यताम् ॥२७६॥
दुःशीलस्य प्रकृत्यैव तस्याकृत्योपदेशकृत् । गम्यागम्यविचारस्य परिहर्ताभवद्गुरुः ॥२७७॥
गुरोर्गतविकल्पत्वं तस्यान्यत्किमिवोच्यताम् । त्यक्तशङ्कः प्रववृते स्वसुतासुरते[1]पि यः ॥२७८॥
महासमयसंचारचतुरैर्वैरभीतितः । गण्यते स्वप्रभावोभैरवोपि न निर्भयैः[1] ॥२७९॥
280 ते भट्टपादास्त्रासेन पतिता भग्नजानवः । बिडालवणिजा[1] स्वस्थाः शिरोहस्तार्पणैः कृताः ॥२८०॥
पुरा कृष्णबिडालाङ्को वणिक्कश्चिदिहाभिधाम् । बिडालवणिगित्यात्मनामाविस्मारिकां दधे ॥२८१॥
यो व्याजमूर्खो वैद्यत्वगुरुत्वालंकृतः क्रमात् । पटकृद्रजकादीनां शिल्पिनां गुरुतामगात् ॥२८२॥
स भट्टपादानुज्ञाप्यांश्चक्रे मूर्ध्न्यधिरोपयन् । श्रेष्ठी बिडालविष्ठौघदिग्धगन्धोत्कटं करम् ॥२८३[1]॥
एवं प्रकृतिनिःसारैरपि गर्जद्भिरन्वहम् । आन्ध्यं स गुरुभिर्निन्ये विश्वसोम्बुधरैरिव ॥२८४॥
285 ये दीर्घजागरा रात्रौ भूरिभोजनसेविनः । अजीर्णपिशितोद्गारनित्यदुर्गन्धकन्धराः ॥२८५॥
अवस्करप्रणालाभाः पृष्ठे क्षिप्रमधःपथैः । शौचपाथ इव क्षिप्रमुज्झन्ति मधुनिर्झरम् ॥२८६॥
नक्तमातोद्यवाद्यज्ञैस्तैः सार्धं कृतसेवनः । चारणो वेणुवाद्यज्ञो योषितां धर्षयन्हठात् ॥२८७॥
कनकाख्ये मठोग्रामे क्रुद्धे हलधरात्मजे । स्तम्भे निबद्ध्य तद्भृत्यैश्छिन्ननासो व्यधीयत ॥२८८॥
यो विटश्वमको नाम लूनाङ्गोमङ्गलावहः । शनैर्लेभे स वाल्लभ्यं कौहन्याश्वभूपतेः ॥२८९॥
290 प्रसादवित्तो भूभर्तुरन्तरे मन्त्रिणामपि । लब्धप्रतिष्ठः स प्राप ठकुराख्यां नृकुक्कुरः ॥२९०॥
प्रथां प्राप्तस्त्रपाहेतुं स भञ्जन्वंशमञ्जसा । प्रागेव नासावंशस्य भञ्जनं बह्वमन्यत ॥२९१॥
तेनोद्दीपितदौःशील्यः स यथांके त्रपोज्झितः । अवाच्यमपि वृत्तान्तं मध्यपातात्तदुच्यते ॥२९२॥
कञ्जनाख्या स्वसा राज्ञो नागाख्या च तदात्मजा । परदारप्रसक्तेन संभोक्तुं नावशेषिता ॥२९३॥

२६७. [1]) Thus corr. by $A_2$ from $A_1$ सपर्यो and °न्देशाश्चक्रे —[2]) $A_3$ gloss राजविट्. २७१. [1]) $A_4$ gloss कलशेन.—[2]) $A_4$ gloss अनन्तदेवगङ्गपतेर्नागनाम्नो भृत्यस्य पुत्रः. २७२. [1]) $A_4$ gloss हलधरेण. २७४. [1]) Emended; A R G °भवद्भिज्ञ°. २७५. [1]) $A_4$ gloss द्रुङ्गभ्रातुः. २७६. [1]) Thus corr. by $A_2$ from $A_1$ तज्ज्ञमति°. २७८. [1]) र supplied by $A_2$; $A_3$ gloss स्वा आत्मीया जाता पुत्री तस्याः सुरते सम्भोगे. २७९. [1]) Thus $A_1$; $A_2$ निर्भयः. २८०. [1]) Thus corr. by $A_2$ from $A_1$ विडाल°. २८१. [1]) Thus corr. by $A_2$ from $A_1$ बिडालनाम इत्या°. २८२. [1]) This verse has been omitted by $A_1$ and added in margin by $A_2$; found in R G. २८५. [1]) Thus $A_2$; $A_1$ °जागराद्रात्रौ. २८६. [1]) Thus corr. by $A_2$ from $A_1$ क्षिप्त°. २८९. [1]) Thus corr. by $A_2$ from $A_1$ कौड°. २९१. [1]) Thus $A_3$; $A_1$ कथामाप्तो पाहेतुं. २९२. [1]) Thus R G; A यथाके.

320 आकारितस्ततस्ताभ्यां प्रातः कलशभूपतिः । ऊचे बिज्जजयानन्दौ साशङ्को जनकाग्रजम्[1] ॥३२०॥
तन्मतेन जयानन्दन्यस्तहस्तः कथंचन । अन्वीयमानो बिज्जेन स पितुः प्राविशद्गृहम् ॥३२१॥
पिता प्रविष्टमात्रं तं वक्षो दत्तचपेटकः । अमात्यभागिन्नहिहि क्षुरिकामित्यथाब्रवीत् ॥३२२॥
एवं वासवितृवाक्कुलांधिमालम्ब्य पाणिना । तावद्धर्म्यं स्पृशन्न्यस्तं बिज्जो राजानमब्रवीत् ॥३२३॥
राजन्मानवतां धुर्यो भवन्नपि भवान्कथम् । नास्वाद्यं[1] मानिनो वेत्ति आत्मवधमहाव्रतम् ॥३२४॥
325 गृहीतवेतनैनाथं राजपुत्रेण शस्त्रिणा । संकटेस्मिन्मया स्वामी जीवता त्यज्यते कथम् ॥३२५॥
पिता भवानयं पुत्रः क्षणेन्यस्मिन्महीपते । मध्यसंनिहितेमुष्य यथोग्यं तद्विधीयताम् ॥३२६॥
मुग्धं विमोह्य नृपतिं वचोभिः स्निग्धकर्कशैः । बिज्जः स्वामिनमाराच्च निराकामत्सवल्गिकात् ॥३२७॥
बिज्जस्यापूजयन्धीरास्तद्धैर्यमतिमानुषम् । अनन्तदेवस्यान्वये यदेवं स व्यजृम्भत ॥३२८॥
चण्डी नरपतेः[1] पत्नी माल्यर्यबलवत्तया । अत्याज्यप्रथमीभूता तस्मिन्नवसरेभवत् ॥३२९॥
330 सा चेदासिष्यतोत्सुका[1] नाभविष्यत्तदेतरत् । नियमास्तवेगाग्राहा बन्धनात्[2]कलशस्य वा ॥३३०॥
ततो बिज्जेन कलशः सत्वरेण प्रवेशितः । बम्यन्दिल्हाभिधानाया वल्लभाया निवेशनम् ॥३३१॥
शिरोर्तिरस्य संजातेत्युक्त्वा भीतं पतिं व्यधात् । सा प्राज्ञा ज्ञातवृत्तान्ता तैलेनाभ्यक्तमस्तकम् ॥३३२॥
व्याजेन तेन सर्वस्य संप्रवेशं निषिध्य सा । पतिं जुगोप विन्यस्य बिज्जं द्वारस्य रक्षणे ॥३३३॥
ततः समाधेर्विरता राज्ञी निर्भर्त्स्य भूपतिम् । कुशलान्वेषणमिषात्तनयस्यान्तिकं ययौ ॥३३४॥
335 वक्तुं[1] बन्दीगमो राजा तथैव प्रययौ यदा । दत्तप्रवेशो बिज्जेन तदैकाक्येव सोभवत् ॥३३५॥
निषेधादनुगन्तृणां ततः क्रुद्धो[1] धराधवः । रुषित्वा विजयक्षेत्रं गन्तुं प्रावर्ततोद्धतः ॥३३६॥
तं प्रयान्तं सपत्नीकं प्राप्तं पद्मपुरान्तिकम् । अवोचन्नेत्य तत्रस्था विश्वावर्तादयो[1] द्विजाः ॥३३७॥
अधिकारं स्वयं त्यक्त्वा राजन्किमनुतप्यसे । कृतस्यानुशयो[1] युक्तो न सतो नासतोपि वा ॥३३८॥
न च ते दुर्मतौ त्यक्ताः[1] प्रजा एता मयेत्यपि । ध्यात्वा सूनोः समुचिता कर्तुं दुष्टस्य वाच्यता[2] ॥३३९॥
340 न यन्त्रपुत्रकस्येव शक्तिः कापि हि भूभुजः । भवेत्साधुरसाधुर्वा स प्रजानां शुभाशुभैः ॥३४०॥
उज्झन्ति यत्पयोवाहा जलानि तडितोथ वा । वनस्पतीनां सदसत्कर्मपाकस्य तत्फलम् ॥३४१॥
यथापथस्थितं पुत्रं त्यक्त्वैकस्यासितुं सुखम् । कोशं[1] त्यक्त्वा प्रस्थितस्य घटते तत्कथं तव ॥३४२॥
धाराधिरूढसामर्थ्यः सद्वंशः शुचिमानपि । संस्पृश्यते क्षीणकोशः कृपाण इव कैः पुमान् ॥३४३॥
श्रुत्वेत्यैष नृपो यावत्प्रत्यावृत्तिं विचारवान् । तावत्स पुत्रेणाभ्येत्य सभार्येण प्रसादितः ॥३४४॥
345 अथ प्रविश्य नगरं स प्रासादोपवर्जिताम्[1] । अशान्तमन्युरादाय लक्ष्मीं भूयो विनिर्ययौ ॥३४५॥

---

३२०. [1]) $A_4$ gloss जयानन्दः नागपुत्रः शुद्धभ्रातृपुत्रः. ३२४. [1]) Thus corr. by $A_3$ from $A_1$ न स्वाद्यं. ३२९. [1]) चण्डी नरपतेः and तस्मिन्नवसरेभवत् supplied by $A_3$ in space left by $A_1$. ३३०. [1]) सिष्यतो supplied by $A_3$ in space left by $A_1$.— [2]) वेगाग्राहा बन्ध supplied by $A_3$ in space left by $A_1$. ३३५. [1]) Emended: $A_1$ वक्तुं; $A_3$ वक्तुं. ३३६. [1]) क्रुद्धः supplied by $A_4$ in space left by $A_1$. ३३७. [1]) Emended; A विश्वाव°. ३३८. [1]) कृतस्या supplied by $A_3$. ३३९. [1]) Thus corr. by $A_3$ from $A_1$ त्यक्ता.—[2]) $A_3$ gloss, partly effaced, दुर्मतौ दुष्टबुद्धिविशिष्टे पुत्रे मया एताः प्रजाः त्यक्त[ाः]पुत्र एव राज्य[स्या]धिकारि-त्यपि [ध्या]त्वा दुष्टस्य पुत्रस्य वाच्यता निन्दा कर्तुं न समुचिता ते ... . ३४२. [1]) $A_3$ gloss भाण्डागारं. ३४५. [1]) Emended: A प्रसादा°; C प्रसादा°.

इत्यानुपलसुतादि स्वयं स्वीकृत्य निर्गतः । देवीं प्रतीक्षमाणोऽस्थात्सौवरिस्थारे ततः क्षणम् ॥३४६॥
नानामकारान्नारोप्य कोशादीषु नृपात्मजः । मार्गःशकूनपि पुरे निर्यात्यः पर्वतोपयम् ॥३४७॥
अज्ञातवार्तैः प्राक्पूर्णां तदास्थानेऽमवज्जनः । ज्ञातवार्तस्तदा स्वासीदाक्रन्दमुखराननः ॥३४८॥
प्रतिमोक्तुं पुरे लाभ्यां दत्तपुष्पाञ्जली जनः । बाष्पबिन्दूनिपातीज्झीर्णमर्घकणानिव ॥३४९॥
हा मातर्हा पितः केत्थं गच्छतः परिदेवितान् । इत्यस्मादपरः शब्दो मार्गेषु न तदा श्रुतः ॥३५०॥
मार्गेष्वाक्रन्दविरती निर्झरध्वनिः । शैलानां शोकनिःश्वासफूत्कार इव शुश्रुवे ॥३५१॥
तयोराक्रन्दितैः ग्रावस्वपि संजातसंस्तवी । कर्णी भूस्येऽस्य शृणुतामाकम्पितमिवाकृत् ॥३५२॥
पुत्रागता ताहशी तौ दृष्ट्वा मार्गे दुर्गीकृताम् । खगानां ग्रावमरणमपि लोको व्यवर्तत ॥३५३॥
तयोः पुत्राग्मयोश्चाथ्येतयोर्विजयेश्वरः । मनःप्रसादं संदृष्टः स्निग्धबन्धुरिवाकरोत् ॥३५४॥
तत्र भाण्डागाराश्वभृत्यादायवसार्पणैः । संविभागक्रियामिव व्यमयोरगमद्दिनम् ॥३५५॥
देशे कोशोपकरणपूर्णगोणीगणावृते । आसन्निन्धनगण्डालीचक्कवृन्दा इवापणाः ॥३५६॥
तन्बङ्कराजतुङ्गादिज्ञातिपुत्रा नृपात्मजाः । तं सूर्यवर्मचन्द्राद्या डामराश्चानुवव्रजुः ॥३५७॥
डामरान्क्षीरभूपादीन्राजा मौलनगरादिषु । स्थानेषु स्वेषु निक्षिप्य रक्षितं गुप्तिमानभूत् ॥३५८॥
विश्रान्तसर्वचित्तस्य श्रीमतोऽनन्तभूपतेः । प्रावर्तन्तोत्सवैर्गन्तुं दिनानि विजयेश्वरे ॥३५९॥
राजपुत्रद्वयारोहराज्ञिडामरमण्डलैः । कृत्स्नैरेव स्थितिर्बद्धा सविधे वृद्धभूभुजः ॥३६०॥
वत्सरे पञ्चपञ्चाशे ज्येष्ठे मासि विनिर्गतः । आसाद्य विजयक्षेत्रं स स्वर्गसुखमन्वभूत् ॥३६१॥
कलशस्तु गते राज्ञि प्राप वीतभयं महीम् । रक्षादौ चलिते भ्रातरज्ञां निधिमहीमिव ॥३६२॥
स्वराज्यमुज्ज्वलीकर्तुं रिक्तोऽपि विहितोद्यमः । चक्रे संमन्त्र्य विज्ञाद्यैः संमतानधिकारिणः ॥३६३॥
तेन सर्वाधिकारेषु जयानन्दो नियोजितः । द्वारे वराहदेवश्च वितस्तात्रपुरोद्भवः ॥३६४॥
यो द्वाम्बराधिकार्यासीज्जिन्दुराजस्य कम्पने । राज्ञा विजयमित्रः स कम्पनाधिपतिः कृतः ॥३६५॥
यथाधिकारमन्यांश्च विनिधायाधिकारिणः । राजार्थचिन्तामारेभे संरब्धः पितृविग्रहे ॥३६६॥
अथानन्दः पदातीनां चिकीर्षुरिव संग्रहम् । बलादनुचितेभ्योऽपि धनिकेभ्योऽग्रहीदृणम् ॥३६७॥
स्वीकृत्य पत्तीन्विज्ञादिराजपुत्रगणान्वितः । अथावन्तिपुरं प्राप योद्धुं वृद्धनराधिपम् ॥३६८॥
अभ्यर्थ्य कारितो वेलां राज्ञा कारागिनिर्गतः । शिमिकाकर्मना योद्धुं जिन्दुराजो विनिर्ययौ ॥३६९॥
तेषामुद्योगमाकर्ण्य क्रुद्धा वृद्धमहीभुजम् । स्वे डामराश्चाराद्याः संरम्भादुपतस्थिरे ॥३७०॥
अजायत ध्वस्तपुष्पकाडतुरगमण्डला । पात्रैः सवाटवी कृत्वा संकटा विजयेश्वरे ॥३७१॥
ततः सूर्यमती बलात्पश्यै परमकोपनम् । ययाचे पुत्रात्सल्यादयुद्धं दिवसद्वयम् ॥३७२॥

---

३४६. ¹) Thus corr. by A₂ from A₁ °स्था सरि°. ३४८. ¹) Thus corr. by A₂ from A₁ °स्तदास्थानी°. ३५०. ¹) Thus corr. by A₂ from A₁ क्क. ३५३. ¹) A₂ gloss ग्रावाः पोताः तेषां मरणं पोषणं. ३५६. ¹) A₂ गण्डालक्ष्मी गण्ड इति भाषया. ३५७. ¹) Thus corr. by A₂ from A₁ °सुङ्ग°. ३६१. ¹) A₂ gloss आनन्दवर्षः.—²) A₂ gloss स्वर्गसुखं परमानन्दं न तु तु [लिङ्].
३६२. ¹) A₂ gloss धनरहितान्. ३६४. ¹) स supplied by A₂ in space left by A₁.—²) A₂ gloss वितस्तात्रं नाम वाम्पुरं। तस्मादुद्भवो यस्य स वितस्तात्रपुरोद्भवः. ३६५. ¹) Thus corr. by A₂ from A₁ यो द्वाम्बराधि°.—²) A₂ gloss कम्पनेश. ३६९. ¹) वे supplied by A₂ in space left by A₁. ३७०. ¹) संरम्भा supplied by A₂ in space left by A₁.

अप्यागमय मध्यादीन्द्विजाशिशिरा विसृज्य सा । तन्मुखेनातिवात्सल्यादिदमूचे रहः सुतम् ॥३७३॥
विनाशशंस्ययं पुत्र कस्ते मतिविपर्ययः । तीव्रशौर्येण पित्रा यदेवं योद्धुमिच्छसि ॥३७४॥
375 यस्य भ्रूभङ्गमात्रेण दरदाजादयो हताः । तत्कोपानले कस्मादीहसे[1] शलभायितुम् ॥३७५॥
अस्मिंस्तु भीतिमार्तण्डे भीतिदोषतमे नृपे । कस्त्राता स्यात्त्वदीयानां तृणानामिव शस्त्रिणाम् ॥३७६॥
सेनाङ्गैः कतमैः केन शौर्येण कतमैर्धनैः । भवाञ्छक्तिमतां धुर्यं योद्धुमेनं प्रधावति ॥३७७॥
दैवात्संत्यक्तमेतेन भुङ्क्ष्व राज्यमखण्डितम् । पित्रा तीर्थोपविष्टेन किमिवापकृतं तव ॥३७८॥
द्वेषिभिः पात्यमानो व्यसनेस्मिन्सुदारुणे । प्रयास्यसि दिनैरेव रिक्तोप्यत्यन्तरिक्तताम् ॥३७९॥
380 नय सेनाः पितुर्भीतिर्जीवन्त्यां मयि नास्ति ते । ऋजुमेनं नयस्वार्द्रं प्रत्युतानुनयोक्तिभिः ॥३८०॥
इति दूतमुखैर्गूढं पुत्रो मात्रा कृतार्थनः । सर्वाशाभ्योनयत्सैन्यं रात्रावेव निजान्तिकम् ॥३८१॥
श्रुतापसारं सैन्यानां दूतैरेत्य प्रसादितम् । उपालेभे पतिं प्रातर्धृष्टा प्रत्युत वल्लभा ॥३८२॥
राज्ञ्या मिथस्तयोरेवं शमिताक्षेपयोरपि । पिशुनप्रेरणात्प्राप कालुष्यं धीः क्षणे क्षणे ॥३८३॥
वैरस्य रूपमेतद्धि भेदं याति मुहुर्मुहुः । संधीयमानमपि यत्क्लिन्नाम्बरमिवाशयम् ॥३८४॥
385 बाबाल्यादौ श्रुतोदन्तं श्रुत्वा तत्राशयो नृपः । गृहं प्रविष्टो धृष्टस्त्रीमायावितैर्जडतां ययौ ॥३८५॥
एवं प्रतिदिनं तत्रस्त्यक्तातापः प्रतिक्षपम् । स्वच्छाशयः शरत्तुच्छतडागौपम्यमाययौ ॥३८६॥
चकार पितृपक्ष्याणां पुत्रो वेश्मादिनाशनम् । पिता तु पुत्रपक्ष्याणां न किंचित्स्त्रीवशीकृतः ॥३८७॥
पुत्रस्नेहान्धया पत्न्या बाधितैश्चानुयायिभिः । रूक्षोक्तिभिस्ताप्यमानस्तस्थौ दुःस्थः सदा नृपः ॥३८८॥
राज्यं जिहीर्षुः पुत्रस्य निःभूरं तद्बलं विदन् । ईषत्स जिन्दुराजस्य गणनां पौरुषेकरोत् ॥३८९॥
390 पुत्राज्जिहीर्षुणा राज्यं तेन सन्नद्धनन्दनाः । प्रार्थ्यन्ते स्म तदा राज्यकृतये तत्पराङ्मुखाः ॥३९०॥
संप्रेर्य तं तदा राज्ञी स्वाम्यंयाशर्मशङ्किनी । हर्षं देवी नृपं कर्तुं दूतैराहूतवत्यभूत् ॥३९१॥
स पितामह्योर्दूतैराहूतः साहसोन्मुखः । बाबाल्यां निर्गतः सज्जे रक्ष्यमाणोपि रक्षिभिः ॥३९२॥
दत्तपार्ष्णिकषाघातः क्षणार्धेनोदलङ्घयत् । मनोजवेनाप्रमौजा वाजिना पञ्चयोजनीम् ॥३९३॥
वाजिनं विजिताभ्यासमनुगन्तुं समुद्यताः । अगच्छन्बहवो मार्गे दीनाः सेनाहयाः श्रमम् ॥३९४॥
395 प्राप्तस्य पादयोस्तस्य पतितस्य पितामही । आनन्दाश्रुजलस्यन्दैरभिषेकं प्रचक्रतुः ॥३९५॥
पुत्रे तन्निकटं प्राप्ते कलशः कम्पिताशयः । अभियानरणात्पित्रोः संधित्सुः स न्यवर्तत ॥३९६॥
स तस्य नगरात्पत्नीः पार्श्वं प्राज्ञो व्यसर्जयत् । अकरोद्विप्लुते राष्ट्रे स्वभेदस्याप्रकाशनम् ॥३९७॥
एवं प्रवर्धमानेपि वैरे कलशभूपतिः । कंचित्कालं मते मातुरवर्तिष्ट मनागिव ॥३९८॥
खशालाः कलशादेशाद्विवासोः कम्पनापतेः । तया प्रावर्तितमतेर्मार्गे संत्याजितः पतिः ॥३९९॥
अत्रान्तरे शमयितुं वैरं देशोपघातकृत् । तावुद्दिश्य पितापुत्रौ द्विजाः प्रायं प्रचक्रिरे ॥४००॥
400

३७५. [1]) Thus corr. by $A_3$ from $A_1$ °शीक्षिसे. ३७६. [1]) $A_3$ gloss भयं. ३७८. [1]) Thus corr. by $A_3$ from $A_1$ भुङ्क्ष्व. ३८३. [1]) $A_3$ gloss अमन्त्रकलशयोः. ३८४. [1]) रूप supplied by $A_3$ in space left by $A_1$. ३८५. [1]) Thus corr. by $A_3$ from $A_1$ बाबाला°. ३८६. [1]) °तुच्छ supplied by $A_3$ in space left by $A_1$. ३८८. [1]) Thus $A_3$; $A_1$ तया. ३९१. [1]) Thus corr. by $A_3$ from $A_1$ स्वाम्य°. ३९२. [1]) $A_3$ gloss पितामह्योः पितामहपितामह्योः.

संधिबन्धे समुत्पन्ने तनयस्यानुरोधतः । दंपती संप्रविष्टौ तौ सार्धं मासद्वयं पुरम् ॥४०१॥
अथानन्दादिदुर्बुद्ध्याथ बुद्ध्वा बन्धोद्यतं सुतम् । भूयोपि ययतुः खेदान्निर्गत्य विजयेश्वरम् ॥४०२॥
तस्याश्रवासकूटानि पुत्रो राज्ञावदाहयत् । व्यापादयत्पदातींश्च विषशस्त्राग्नियुक्तिभिः ॥४०३॥
तथा प्रवर्धमानेपि विरोधे सत्वरोधयत् । वात्सल्यविवशा राज्ञी भर्तुः प्रतिचिकीर्षितम् ॥४०४॥
लुङ्काभिधाभूत्कैवर्तबन्धकी तद्विधेयधीः । थक्कडामरनामा च तज्जारः खलतिस्तदा ॥४०५॥ 405
स तयात्रैव दुष्टात्मा कथ्यमानौ समीपगैः । शुश्राव पितरौ[1] नित्यं लीलास्मितसिताननः ॥४०६॥ युग्मम् ॥
तौ दंपती पुनर्हेमतुलापुरुषयुग्मदौ । क्रियाभिर्धर्मसत्राभिर्मनस्तापममुञ्चताम् ॥४०७॥
यदा पुनस्तयोर्दार्ढ्यमाग्रहस्यात्र व्यहीयत । तदा सेर्ष्यः स दुष्पुत्रो राज्ञो वह्निमदापयत् ॥४०८॥
तेनाग्निनोर्वरीशस्य सर्वोपकरणैः समम् । भस्मावशेषमभवद्विजयेश्वरपत्तनम् ॥४०९॥
सर्वनाशशुचा दीना राज्ञी मर्तुं समुद्यता । तन्वङ्गपुत्रैश्चकृषे कथंचिज्ज्वलतो गृहात् ॥४१०॥ 410
त्यक्तांशुकानि शय्याभ्यो निशायां सुप्तमुत्थितम् । निःशेषं राजसैन्यं तदजायत दिगम्बरम् ॥४११॥
तद्राजधानीसौधाग्रात्पश्यन्कलशभूपतिः । तोषादनृत्यज्ज्वालौघैर्गगनालिङ्गिभिः समम् ॥४१२॥
अतरन्नष्टसर्वस्वः स पारं सरितो नृपः । निममज्ज सजानिस्तु दुस्तरे शोकसागरे ॥४१३॥
संप्राप्य प्रातरमुष्टं रत्नलिङ्गं नृपाङ्गना[1] । [2]व्यक्रीणाल्लक्षसमस्या टाङ्कानां पार्श्वमीयुषाम् ॥४१४॥
क्रीत्वा च प्रददौ पूर्वं[3] भृत्यानां भोजनांशुके । धनेन तेन निर्दग्धान्यपि धामान्यशोधयत् ॥४१५॥ 415
भस्मकूलतलाद्यावल्लब्धं स्वर्णादि भूभुजा[1] । कथापि यावतो हन्त प्रथयत्यद्य कौतुकम् ॥४१६॥
राजा शून्याटवीभूते पत्तने तत्र सानुगः । नडत्वग्[1]ग्रथितच्छत्रपटलाच्छादितेवसत् ॥४१७॥
तावत्यप्यर्थसामर्थ्ये चिकीर्षोस्तत्पुरं नवम् । विना राजोचितामाज्ञां न सिद्धं वृद्धभूपतेः ॥४१८॥
अदृष्टाभिभवो मातुरानुकूल्यान्नवो नृपः । परितापं पितुस्तैस्तैर्दुःसंदेशैः सदाकरोत् ॥४१९॥
निर्बन्धादथ पुत्रेण पर्णोत्सगमनं पिता । निर्वासनोत्सुकेनोक्तः शश्वद्दूतमुखैर्यदा ॥४२०॥ 420
प्रभवन्त्या यदा चासीत्पत्न्या तस्यैव वस्तुनः । निष्पत्तये प्रेर्यमाणः साधिक्षेपं क्षणे क्षणे ॥४२१॥
तदा जातु रहः कुर्वंस्तन्वङ्गे थक्कने स्थिते । उवाचानुक्तपूर्वं तामेवं स परुषं वचः ॥४२२॥ तिलकम् ॥
अभिमानो यशः शौर्यं राज्यभोगो मतिर्धनम् । मया जायाविधेयेन हन्त किं किं न हारितम् ॥४२३॥
मिथ्योपकरणं नारीर्गणयन्ति नृणां जनाः । परिणामे तु नारीणां क्रीडोपकरणं नराः ॥ ४२४ ॥
द्वेषोन्मेषात्प्रसक्ताभिर्विरक्ताभिरसूयया । के नाम नात्र कान्ताभिः कृतान्तस्यातिथीकृताः ॥४२५॥ 425
रूपं काश्चिद्बलं काश्चित्प्रज्ञां काश्चिच्च कार्मणैः । पुंस्त्वं काश्चिदसृक्काश्चिन्[1]नृणां जहुरङ्गनाः ॥४२६॥
हरन्ति मायाभिरिव क्ष्मां पुत्रैरन्यगोत्रजैः । भक्ताः पयोधरीभस्त्रास्तरङ्गिण्य इवाङ्गनाः ॥४२७॥
पर्यन्ते वेतनमिमे किं जीर्णैरीदृशैरिति । पोषयन्ति सुतान्भर्तृंश्शोषयन्ति तु योषितः ॥४२८॥
सर्वकालं विदित्वापि दोषान्योषित्कृतानमून् । प्रतिपत्त्यनुरोधेन मयैवं नावधीरिता ॥४२९॥

---

४०६. 1) $A_2$ gloss पितराविति पितरौ राजा राज्ञी च राजा थक्कडामरनाम्ना समीपगैः कथ्यमानः राज्ञी च लुङ्काभिधा कैवर्ती नाम्ना कथ्यमाना उपहासार्थमित्यर्थः. ४१४. 1) Thus corr. by $A_3$ from $A_1$ नृपात्मजा.—2) Thus corr. by $A_3$ from $A_1$ विक्री°. 3) Thus $A_3$; $A_1$ पूर्वमीशु°. ४१६. 1) Thus $A_1$; $A_3$ तस्म°. ४१७. 1) नडत्वक् । छिन्नू इति भाषया. ४२६. 1) असृक्काश्चि supplied by $A_2$ in space left by $A_1$.

430 प्रभविष्णुर्महस्त्येवमैहिकीः सुखसंपदः । परलोकसुखस्याशामपि हन्तुं समीहते ॥४३०॥
वलीपलितयुक्तस्य नेदीयोमरणावधेः । विहाय विजयक्षेत्रं कुत्र गन्तुं ममोचितम् ॥४३१॥
क्षपाकरकलामौलेः किल्बिषक्षपणक्षमा । हारोपकण्ठसंसेवोत्कण्ठा कुण्ठीभवेत्कथम् ॥४३२॥
पुत्रो लोकद्वयत्राता कस्यान्यस्येदृशो भवेत् । तीर्थात्प्रस्थापयन्मां यत्कुपथे मृतमिच्छति ॥४३३॥
प्रतिभात्यवगीतोयं प्रवादो मेद्य चेतसि । अनयान्यकुलोद्भूतो यदयं संप्रवेशितः ॥४३४॥
435 विसंवादिममाकारावारैर्बन्धुविरोधिनम् । पुत्रं पितुरसंक्लिष्टं जानीयादन्यरेतसम् ॥४३५॥
स्थविराविष्कृताकूतां त्यक्त्वा प्राणाय यन्त्रणाम् । एवं वदन्पतिस्तस्याश्चक्रे मर्मसु ताडनम् ॥४३६॥
गोत्रजस्य पुरः पुत्रोत्पत्तिगुह्ये प्रकाशिते । आमृष्टत्रिप्रियालापा साभूदधिकलज्जिता ॥४३७॥
महत्तमस्य पुत्रो हि प्रशस्ताख्यस्य सोभवत् । विपन्नापत्ययोपात्तस्तयेत्यासीज्जनश्रुतिः ॥४३८॥
उत्सिक्तभाषितं भर्तुर्योषितो जितभर्तृकाः । जानन्त्यन्त्याङ्घ्रिसंवृत्तशिरस्ताडनसंनिभम् ॥४३९॥
440 अतः सा सुदृढं प्रौढिसंस्कारपरुषं वचः । प्राकृतप्रमदेवोच्चैरित्युवाच रुषा पतिम् ॥४४०॥
गतश्रीस्तापसो मन्दो जातभाग्यविपर्ययः । वृथा वृद्धः क किं वाच्यमिति मूढो न वेत्स्ययम् ॥४४१॥
बाल्योत्थितस्य यस्याद्य नाभूत्प्रावरणं पुरा । लोको जानात्ययं किं न तेन मां प्राप्य हारितम् ॥४४२॥
स्वकुलस्त्रीसमुचितं यत्किंचिन्मामभाषथाः । क्रियते किं न कालोयं यत्प्रायश्चित्तसेवने ॥४४३॥
अकर्मण्यो गतश्रया देशात्पुत्रेण वारितः । पत्न्यापि त्यक्त इत्यस्मात्परिवादाद्धि मे भयम् ॥४४४॥
445 कुलदोषादिवृत्तान्तगर्भोपालम्भनिर्भरैः । वचोभिर्व्यथितस्तस्यास्तस्थौ तूष्णीं यदा नृपः ॥४४५॥
तदा तस्यासनप्रान्तनिःसृतः प्रसरन्बहिः । निर्विकाराकृतेर्धस्तं ददृशे रक्तनिर्झरः ॥४४६॥
संभ्रान्तायां ततो राज्ञ्यामपश्यत्स्थकनो रुदन् । असिधेनुं गुदे तेन क्रुधा राज्ञा प्रवेशिताम् ॥४४७॥
ततोतिधीरो राजैव तं लज्जाचकितोन्वशात् । राज्ञो रक्तातिसरणं जातमित्युच्यतां बहिः ॥४४८॥
विधेया नारीणां तनयनिहिताशेषविभवाः कृतम्लानी भृत्ये पुनरुदितविश्रम्भरभसाः ।
नयन्तो गण्यत्वं प्रसभमभियोगैर्लघुमतीन् नयत्यक्ताः क्ष्मापाः प्रलयमुपगच्छन्ति न चिरात् ॥४४९॥
450 नृपतिर्वाहितहयः शरदातपखेदितः । तृष्यन्निपीय धान्याम्बु च्युतासृग्जात इत्यभूत् ॥ ४५०॥
गम्भीरै राजपुरुषैस्तथा वार्ता प्रवर्तिता । यथा नाबुद्ध वृत्तान्तमेतं कोपि बहिर्जनः ॥४५१॥ युग्मम् ॥
वत्सरे सप्तपञ्चाशे पौर्णमास्यां स कार्तिके । विजयेशाग्रतो राजा जीवितेन व्ययुज्यत ॥४५२॥
पत्न्याः पुत्रस्य चोद्वेगैस्त्यक्तो राजा सुखोचितः । प्रसार्य पादौ निद्रातुं प्राप सोवसरं चिरात् ॥४५३॥
चुकोपासौ न कस्मैचिच्चुकोपास्मै न कश्चन । चक्रे सुखी विमन्युश्च मरणेन महामनाः ॥४५४॥
455 संग्रामराजदायादो न कस्यचिदिव प्रियः । अंशुकाच्छादितो भूमावनाथ इव सोस्वपत् ॥४५५॥
न प्रियाक्रन्दितैः खिन्नश्च कुप्यन्नप्रियोक्तिभिः । सर्वत्यागी वशी राजा दीर्घनिद्रारसज्ञताम् ॥४५६॥
दाक्षिण्योल्लङ्घनप्रायश्चित्तायेव त्यजन्नसून् । कृतत्रपा पतिः पत्न्या ततो निन्ये सनाथताम् ॥४५७॥

---

४४९. ¹) Thus $A_3$; $A_1$ °बीजं लघु°. ४५०. ¹) $A_2$ gloss धान्यं धनिका धान्यजलम् इति भाषया । तद्व्यु. ४५२. ¹) Thus corr. by $A_2$ from $A_1$ सप्तान्तिके. ४५५. ¹) Thus corr. by $A_2$ from $A_1$ सीमयत्.

आराग्मपुत्रवत्सालं देवं मत्स्वहवेतनम् । ददौ स्वस्येव भृत्येभ्यः सा कर्तुमनृणं पतिम् ॥४५८॥
गृहीतवेतना भृत्याः कोशं सर्वे तया स्वयम् । पुरस्ताद्विजयेशस्य ममुः क्षेमाय याचिताः ॥४५९॥
पादन्यस्तशिराः पौत्रो दत्तकर्पितकोशया । मूर्धन्याघ्राय कथितो मा पितुर्विश्वसीरिति ॥४६०॥ 460
उत्थितैव ततो भूत्वा स्वयमाचलतां सती । प्रातिहार्यं व्यधाद्भर्तुः कारयन्त्यन्तमण्डनाम् ॥४६१॥
सादिनां शतमादिश्य नप्तुस्तत्रैव रक्षणे । सा पुनः शिबिकारूढमथ प्रास्थापयत्पतिम् ॥४६२॥
क्षपामेकां दिनार्धं च स्थित्वैवं पतिदेवता । प्रणम्य विजयेशानं युग्यारूढा विनिर्ययौ ॥४६३॥
निर्यान्तीं वीक्ष्य तौ प्रेततूर्यकल्लोलमिश्रितैः । लोकस्याक्रन्दतुमुलैर्भग्ना इव दिशोऽभवन् ॥४६४॥
विमानस्योत्पताकस्य परिष्कारेषु बिम्बिताः । प्रजा राज्ञोऽन्तिके रेजुरनुगन्तुमिवोद्यताः ॥४६५॥ 465
राज्ञां वितीर्णस्कन्धानां मदलोलाः शिरोरुहाः । विमानस्थस्य नृपतेरवहंश्चामरश्रियम् ॥४६६॥
पश्यन्ती पश्चिमां सेवां सैन्यानां नृपतिप्रिया । अस्ताभिलाषिणि दिने प्रपेदे पितृकाननम् ॥४६७॥
दुस्त्यजात्सुतवात्सल्यात्तदा केनापि हेतुना । सा बभूव क्षणे तस्मिंस्तनयालोकनोत्सुका ॥४६८॥
जानन्ती पवनोद्भूतं रजः सेनासमुत्थितम् । चकितोत्कण्ठिता साभूत्कलशागमनाशया ॥४६९॥
तस्मिन्क्षणे जनाः केचिदायाता नगराध्वना । अङ्ग किं कलशः प्राप्त इति पृष्टास्तया स्वयम् ॥४७०॥ 470
स तु पुत्रः क्षणे तस्मिन्प्रियाद्धर्मातुरन्तिकम् । दत्त्वा विभीषिकास्तास्ता निरुद्धो द्वेषकारिभिः ॥४७१॥
ततो गृहीतनैराश्या राज्ञी पुत्रावलोकने । सा प्रार्थयित्वा वैतस्तं वारि श्लोकमथापठत् ॥४७२॥
वैतस्तेन तु तोयेन जठरस्थेन ये मृताः । मोक्षं गच्छन्त्यसंदेहं ते यथा ब्रह्मवादिनः ॥४७३॥
उपनीतं वितस्ताम्बु पीत्वोपस्पृश्य चाथ सा । एवं शशाप पिशुनान्स्नेहसंक्षयकारिणः ॥४७४॥
जनितं प्राणवैरं यैः पुत्रेण सहावयोः । सान्वयानां क्षयस्तेषां भूयात्परिमितैर्दिनैः ॥४७५॥ 475
तस्यास्तेनोपतप्तायाः शापेनाव्यभिचारिणा । क्षिप्रमेव जयानन्दजिन्दुराजादयो मृताः ॥४७६॥
चक्रे हलधरामात्यजातकौलीनशान्तये । परलोकं पणीकृत्य युक्त्या च शपथं सती ॥४७७॥
एवं विशुद्धशीलत्वं संप्रकाश्य शुचिस्मिता । कर्णीरथाद्ददाज्झम्पां ज्वलिते जातवेदसि ॥४७८॥
अजायत नभो वह्निज्वालावलयमालितम् । तदागमोत्सवे दत्तसिन्दूरमिव निर्जरैः ॥४७९॥
साक्रन्दैर्न घटत्कारी दुःखोत्सर्पैर्न सोऽन्मलः । पटमालेख्यलिखित इव जज्ञे शिखी जनैः ॥४८०॥ 480
गङ्गाधरश्छित्तुद्दो युग्यवाहश्च दण्डकः । तानुदा नोनिका वल्गा चेति दास्यस्तदान्वयुः ॥४८१॥
बप्पटोडुट्टयोः कुल्यौ सेनटक्षेमटावुभौ । भूपालवल्लभावास्तां वैराग्याद्विजयेश्वरे ॥४८२॥
भावा यस्य निसर्गभङ्गुरतरास्तिष्ठन्ति नैते चिरं चेतःकाचघटस्य तस्य घटते दीर्घायमेको गुणः ।
यत्तस्मिन्निहितप्रकृति न गलत्यायाति न म्लानतां धत्ते नापचयं चमत्कृतिवशो गीर्वाणगङ्गापयः ॥४८३॥
एकषष्टिमतिक्रम्य वर्षान्भूपतिरायुषः । सपत्नीकः पुरारातिगौरीसायुज्यमासदत् ॥४८४॥

---

४५९. ¹) $A_2$ gloss विश्वो. ४६१. ¹) उत्थि supplied by $A_2$ in space left by $A_1$.—²) $A_2$ gloss आत्मा गृहीता लता यया.—³) $A_2$ gloss हास्यस्यत्वं. ४६६. ¹) $A_2$ gloss वितीर्णाः दत्ताः स्कन्धाः भुजशिरांसि शिबिकावाहनार्थं यैः तेषां. ४६७. ¹) Thus corr. by $A_2$ from $A_1$ पश्यन्त्यपश्चि°. ४६९. ¹) Thus corr. by $A_2$ from $A_1$ °गमनाशया. ४८३. ¹) $A_2$ gloss चेतोरूपे काचघटे तीव्र इति प्रसिद्धे.

485 अथास्थीनि समादाय चतुर्थे दिवसे तयोः । पुत्रास्तन्वङ्गराजस्य सर्वे गङ्गां प्रतस्थिरे ॥४८५॥
पैतामहेन कोशेन परिवारेण चान्वितः । पित्रा विरोधं जग्राह हर्षस्तु विजयेश्वरे ॥४८६॥
आद्ये पिता पुरवरे¹ पिता श्रीविजयेश्वरे । तस्मिन्पुत्रस्तु तत्रासीत्पिता तु नगरान्तिके ॥४८७॥
ततोतिव्यथितं पुत्रं दरिद्रो नीतिमान्पिता । अभ्यर्थ्यानर्थभीतश्च संधिं दूतैरयाचत ॥४८८॥
स तैरसकृदायातैर्दत्तशिक्षो युक्तवादिभिः । राजपुत्रः समं पित्रा संधिं निन्ये कथंचन ॥४८९॥
490 दत्त्वा पैतामहे कोशे शरीरे चात्मजन्मने । प्रतिभूभाव जनकः कृतप्रत्ययचेतनः ॥४९०॥
नृपतेः पुत्रमानेतुं विशतो विजयेश्वरम् । दृष्टिः दुष्टैर्गृहैर्दग्धा श्रुतिश्च जनगर्हया ॥४९१॥
स पीतकोशः संगृह्य तनयं प्राविशत्पुरम् । कोशं चास्थापयन्मुद्रां दत्त्वा तदभिधाङ्किताम् ॥४९२॥
अत्रान्तरे तस्य राज्ञो धार्मिकी धीरजायत । दारिद्र्यच्छेदिनी धर्म्या धनबुद्धिश्च सर्वतः ॥४९३॥
तनयो नयनाख्यस्य कल्यः सेल्यपुरौकसः । कुटुम्बिनो जय्यकाख्यः क्रमाद्ग्रामरतामगात् ॥४९४॥
495 स्वल्पोत्पत्तिः स दिग्देशविक्रीताज्यो वणिज्यया । संभृतार्थः शनैर्लुब्धो धनेशस्पर्धितां दधे² ॥४९५॥
सार्धं कोशं खनित्वा स नित्यं दीनारराशिभिः । पूरितायाः क्षितेः पृष्ठे बहून्व्रीहीनवापयत् ॥४९६॥
दीनारन्यसनं भृत्यैः कारयित्वा प्रतिक्षपम् । बहवो भेदभीतेन तेन गूढं निपातिताः ॥४९७॥
स भाङ्गिलं लब्धुमिच्छन्बलेकस्मात्पलायिते । द्राक्षालतानिरुद्धाश्वो हतः केनापि पत्तिना ॥४९८॥
तदीयेनोपलब्धेन धनेन वसुधातलात् । पर्याप्तेनात्यजद्राजा यावदायुर्दरिद्रताम् ॥४९९॥
500 समृद्धं क्षाल्यमानेषु तद्दीनारेष्वहर्निशम् । कलुषाम्भा बहून्मासान्वितस्ता समपद्यत ॥५००॥
दानोपभोगरहिताः काले क्लेशेन भूयसा । अन्यार्थमर्थान्रक्षन्ति चित्रं लुब्धा महाशयाः ॥५०१॥
प्राणान्धारयते निपीय मरुतः शेते तमोन्धे बिले संभोगे परदत्तमिच्छति पटं नग्नस्तपाशान्तये ।
विस्तार्येति कदर्यतामहिरवत्यन्यस्य हेतोर्निधीनान्यः कोपि परं परोपकृतिषु प्रौढोस्ति लुब्धं विना ॥५०२॥
अन्यैश्च बहुभिर्मार्गैर्नद्यः सिन्धुमिवाविशन् । नानार्थसंपदस्तास्तां भाग्यभाजं महीभुजम् ॥५०३॥
अर्था भाग्योदये जन्तुं विशन्ति शतशः स्वयम् । दिग्भ्योभ्युपेत्य सर्वाभ्यः सायं तरुमिवाण्डजाः ॥५०४॥
स्रोतांसि प्रबलत्वमेत्य बहुधा मूलेषु पुष्णन्त्यधो व्योम्नोम्भः पतति स्यजन्ति हरितो वारि प्रणालीमुखैः ।
505 इत्थं शुष्कसरः पयोदसमये संपूर्यते सर्वतो भाग्यानामुदये विशन्ति शतशो द्वारैर्न कैः संपदः ॥५०५॥
जनरक्षणदाक्षिण्ये ततः¹ पितुरिवान्वहम्² । कुशला कल्लशस्यासीत्प्रजापुण्योदयैर्मतिः ॥५०६॥
स्वयं वणिग्विवार्थानां गणनाकुशलोपि सः । विवेक्ता स्वल्पपरत्यागे मुक्तहस्तः सदाभवत् ॥५०७॥
उपस्थितौ भाविनौ च पश्यन्नायव्ययौ स्वयम् । अन्तिकात्याजयद्भूर्जखटिकादि नियोगिवत् ॥५०८॥
तस्य स्वरूपमूल्येन रत्नादि क्रीणतः स्वयम् । नाशकन्वञ्चनां कर्तुं केपि विक्रयकारिणः ॥५०९॥
510 त्रिवर्गं सेवमानः स विभज्य समयं सुखी । मध्याह्नादूर्ध्वमभवद्दृश्यः सर्वकार्यिणाम् ॥५१०॥
तस्य स्वेषां परेषां च कृत्यमन्विष्यतश्चरैः । अज्ञातः स्वल्पवृत्तान्तः प्रजानामभवत्क्वचित् ॥५११॥

---

४८७. ¹) Thus emended with G; A पुरवरे. ४९५ ¹) शस्य supplied by $A_3$ in space left by $A_1$.—²) Thus corr. by $A_2$ from $A_1$ धेतामगात्. ५००. ¹) Emended; A तदीना°. ५०३. ¹) Thus corr. by $A_2$ from $A_1$ °स्तास्त. ५०६. ¹) ततः supplied by $A_2$ in space left by $A_1$.—²) Thus corr. by $A_2$ from $A_1$ °वान्विकम्.

स्ववेश्मेव गृहस्थस्य व्याप्तवतश्चास्य मण्डलम् । अन्यो जनपदे जातु न कश्चिन्न्यमस्पृशत् ॥५१२॥
कौलीनचकितो राजा कुर्वन्कण्टकशोधनम् । प्रकटं नात्यजद्दण्डं चौरेभ्योपि स जातु चित् ॥५१३॥
न तस्यार्थः कोपि नष्टो मन्त्रिणो व्ययोजयत् । मन्त्रिणां स पुनश्चक्रे नष्टस्यार्थस्य योजनम् ॥५१४॥
विवाहयज्ञयात्रादिमहोत्सवशताकुलः । नित्यप्रहृष्टो निर्दैन्यस्तद्राज्ये ददृशे जनः[1] ॥५१५॥ 515
तेन नीतिविदाक्रान्ताः क्ष्माभुजः क्षित्यनन्तराः । आहारावरणेष्वासंस्तद्ध्यक्षान्विनाक्षमाः ॥५१६॥
तन्त्रङ्गस्थस्थक्कनादींस्त्रीनायातान्दिगन्तरात् । व्यधितैकाङ्गजान्मल्लप्रमुखान्गुङ्कजानपि[1] ॥५१७॥
अपीणयद्बन्धुभृत्यान्स भव्याभिर्विभूतिभिः । कलाभिरमृतार्द्राभिः सोमः[1] सुरपितृनिव ॥५१८॥ युग्मम् ॥
अप्राप्तपरिपाकोपि दौःशील्येन न भूपतिः । कुदैशिकोपदिष्टेन दुष्टाचारेण चोज्झितः ॥५१९॥
टक्केन बुल्लियाख्येन कन्यकाः समुपाहृताः । क्रीतास्तस्य तुरुष्केभ्यो[1] नानादिग्देशसंभवाः ॥५२०॥ 520
स ताभिः परदारैश्च रूपलोभादुपाहृतैः । अवरोधपुरंध्रीणां ह्रासप्रतिमढौकयत् ॥५२१॥
बह्वीः कामयमानस्य योषितः प्रतिवासरम् । मत्स्ययूषादिभिर्वृष्यैर्[1]नास्य पुष्टिरहीयत ॥५२२॥
महासमयपूजासु व्ययः स गुरुभिः समम् । महाचरूणामाहारं नीतिमुत्सृज्य चाकरोत् ॥५२३॥
एवं शाबलकृत्येन पुरं तेन नवीकृतम् । निर्दग्धे विजयक्षेत्रे शिलावेश्म न[1] शूलिनः ॥५२४॥
विजयेशशिलावेश्मनीलातपवारणम् । नृपोम्बरशिरश्चुम्बि जाम्बूनदमयं व्यधात् ॥५२५॥ 525
व्ययस्थितिं चानपायां व्यधत्त त्रिपुरेश्वरे । पिनाकिनश्च प्रासादं स स्वर्णामलसारकम् ॥५२६॥
ततः सत्कर्मकुशलश्चकार कलशेश्वरम् । निःसंख्यहाटकघटीपटलप्रङ्गशिलागृहम् ॥५२७॥
कलशेशोपरि छत्रं चिकीर्षोः काञ्चनाञ्चितम् । तुरुष्कदेशजः शिल्पी राज्ञोभ्यर्णमुपाययौ ॥५२८॥
सहस्रैर्भूरिभिर्हेमप्रच्छन्नसिद्धिं वदन्कलाम् । स छादयन्निजां ताम्रे काञ्चनारोपणं विदन् ॥५२९॥
कानिचिद्दिवसान्यासीत्प्राप्तनृपसत्क्रियाम् । ततोतितीक्ष्णप्रज्ञेन नोनकाख्येन मन्त्रिणा ॥५३०॥ 530
अभ्यूह्य शिक्षितकलो विलक्षोगाद्यथागतम् । तच्च छत्रं ययौ सिद्धिमत्यल्पैरेव काञ्चनैः ॥५३१॥
अनन्तेशाभिधं बाणलिङ्गमन्याश्च भूपतिः । प्रतिष्ठा विविधाश्चक्रे स शक्राधिकवैभवः ॥५३२॥
नृपे सङ्ग्रजपालाख्ये शान्तिं यातेभ्यषिच्यत । ततः संग्रामपालाख्यो राजपुर्यां[1] तदात्मजः ॥५३३॥
राज्यं जिहीर्षुर्बालस्य पितृव्यस्तस्य भूपतेः । भेजे मदनपालाख्यो बलीयानुद्यमं महान् ॥५३४॥
तद्भयाच्छरणं प्रायान्नृपं साहायकार्थिनी । स्वसा संग्रामपालस्य[1] जस्सराजश्च ठक्कुरः ॥५३५॥ 535
कृतप्रसादो नृपतिः साहायककृते ददौ । तयोः पश्चाज्जयानन्दं भूरिविज्जादिभिः समम् ॥५३६॥
तत्र विद्रावितामित्रः स[1] स्फूर्जन्क्रान्तमण्डलः । संग्रामपालामात्यानां कार्यान्ते शङ्कुतां[2] ययौ ॥५३७॥
काङ्क्षन्तो गमनं तस्य दत्त्वा तास्ता विभीषिकाः । ते वासमैच्छन्नाधातु स वीरो न त्वकम्पत ॥५३८॥
मतिं राजपुरीयाणामसावेतामदादिति । शङ्कमानेन तेनाथ विज्जो मन्युरुपाहृतः ॥५३९॥

५१५. [1]) Thus corr. by $A_1$ from जनैः. ५१७. [1]) Doubtful; thus A. ५१८. [1]) न. supplied by $A_3$ in space left by $A_1$. ५२०. [1]) Thus $A_3$; $A_1$ तुरुष्केन. ५२२. [1]) $A_3$ gloss वृष्यैः वाजीकरणैः. $A_3$ quotes: कृष्णकल्पतरौ पारिभद्ररसेनैव छिङ्गुलं वाममाचकम् । नवैविल्वा पारदवत्पातयेत्पूर्वकुम्भितः । योजयेत्सर्वयोगेषु सप्तकञ्चुकवर्जितम् ॥. ५२४. [1]) न supplied by $A_3$ in space left by $A_1$. ५३३. [1]) $A_3$ gloss राजविद् इति भाषया. ५३५. [1]) Thus corr. by $A_3$ from $A_1$ संग्रामराजस्य. ५३७. [1]) $A_3$ gloss जयानन्दः.—[2] Thus emended with G *sec. manu*; A शङ्कुतां.

540 तैस्तत्र द्वन्द्वविग्नैः प्रार्थितोथ महामतिः । रक्षापदेशात्स्वं सैन्यं स्थापयित्वा न्यवर्तत ॥५४०॥
एवं राजपुरीं तस्मिन्स्वीकृत्यान्तिकमागते । तुतोष कार्यमर्मज्ञः प्राज्ञः कलशभूपतिः ॥५४१॥
क्रमाद्राज्यायमानेषु बिज्जादिष्वथ पस्पृशे । आमयेन जयानन्दो दैवात्प्रमयहेतुना ॥५४२॥
स्वास्थ्यवार्तोपलम्भाय भूपतिं गृहमागतम् । वाच्यमस्ति रहः किंचिदित्यूचे स कथान्तरे ॥५४३॥
निर्यातेष्वथ सर्वेषु किंचिन्नैवाब्रवीद्यदा । तदा ताम्बूलमित्यक्षव्याजाद्बिज्जो विनिर्ययौ ॥५४४॥
545 आप्तेनोक्तोपि निर्गच्छन्किं प्रयासीति भूभुजा । मन्त्रिणा चैत्य स प्राज्ञो बहिरेव व्यलम्बत ॥५४५॥
जयानन्दोऽभ्यधाद्भूपमुक्त्वा राजपुरीकथाम् । व्यक्तं नास्त्येव ते राज्यं बिज्जे वृद्धिमुपागते ॥५४६॥
आदीयमानाद्बिज्जेन कार्येभ्यो वेतनादपि । दर्शयामास गणनां बहुमूल्यां महीभुजे ॥५४७॥
प्राप्तः कलुषतां राजा प्रयातः स्वगृहांस्ततः । याचितो गमनानुज्ञां बिज्जेनेङ्गितवेदिना ॥५४८॥
निषेधन्निव दाक्षिण्यलेशान्निर्बन्धकारिणः । तस्यानुज्ञां ददौ गन्तुं सान्तस्तोषो महीपतिः ॥५४९॥
550 लब्धादेशो गृहान्गत्वा सर्वोपकरणैः समम् । प्रस्थाप्य सोमतो भ्रातृनाद्रष्टुं नृपतिं ययौ ॥५५०॥
राजधर्म[1]गभीरत्वक्रूरयोः स्वामिभृत्ययोः । काञ्चिदिव क्षणे तस्मिन्नेष्टाभूदश्रुतावहा ॥५५१॥
न यत्प्रभुः प्रियं भृत्यं गमनात्स न्यवर्तयत् । उपालेभे समन्युश्च न यद्भृत्यः प्रिय प्रभुम् ॥५५२॥
सहोत्थितेन कतिचित्पदानि सह भूभुजा । चिरं कृत्वा कथां नीचैर्हसन्बिज्जो विनिर्ययौ ॥५५३॥
जिन्दुराजं हलधरो मुमूर्षुर्दूषयन्यथा । तथा बिज्जं जयानन्दः स व्यवारोपयत्पदात् ॥५५४॥
555 तल्लक्ष्मीमात्रशेषां क्ष्मां कृत्वा गच्छन्विधीयताम् । कृतार्थो बिज्ज इत्युक्तिं नामहीन्मन्त्रिणां नृपः ॥५५५॥
निवर्तयिष्यति क्ष्माभृन्नियतं गमनादमुम् । इत्याशयान्वगाद्बिज्जं राजवर्जं जनोखिलः ॥५५६॥
आस्कन्दं शङ्कमानोस्माद्बिज्जाद्राजा बलोर्जितात् । तृणस्पन्देपि चकितो निर्निद्रः पञ्च यामिनीः ॥५५७॥
तस्मिन्क्षुरपुरा[1]द्याते निवृत्तेष्वनुगन्तृषु । निवृत्तशङ्कस्तां शङ्कां प्रादुश्चक्रे स मन्त्रिणाम् ॥५५८॥
ते तदाकर्ण्य यं मन्त्रं बिज्जार्थहरणेब्रुवन् । तस्याविधाने भूभर्तुरमन्यन्त नयज्ञताम् ॥५५९॥
560 बिज्जादयस्तु निर्याता यं यं देशमशिश्रयन् । तत्र तत्रैव पूज्यत्वं रत्नानीव प्रपेदिरे ॥५६०॥
बिज्जोधिकं प्रवृद्धोपि दैवतस्येव भक्तिमान् । पश्चात्कलशदेवस्य सत्यंकारः सदाभवत् ॥५६१॥
एवं निर्वास्य बिज्जादीनचिरावाप्तवैभवः । क्षिप्रं सूर्यमतीशापाज्जयानन्दः क्षयं ययौ ॥५६२॥
राज्ञो विरोधकृद्वक्तुं शापस्याव्यभिचारिताम् । प्रमयं जिन्दुराजोपि तस्मिन्नेव क्षणे ययौ ॥५६३॥
तेपि बिज्जादयः क्षिप्रमचिरावाप्तसंपदः । प्रापुः शापोचितं सर्वे प्रमयं गौडमण्डले ॥५६४॥
565 आकस्मिकेथ प्रमये[1] बिज्जः प्रमयमाययौ । सुदीर्घबन्धनक्लेशं प्रापुस्तदनुजा अपि ॥५६५॥
पलायितेषु कारायास्तेषु व्याघ्रेण पाजकः[1] । हत[2]स्तदनुजाः शेषा भुक्तक्लेशाः क्षयं ययुः ॥५६६॥
द्वित्रास्त[1]द्वैधकाराणां नानदयन्मदनादयः । अदीर्घेणैव कालेन दुरन्तैर्यै[2]र्भविष्यते ॥५६७॥
जयानन्दसहायोथ तत्पुत्रान्परिपालयन् । सर्वाधिकारी भूपेन वामनाख्यो व्यधीयत ॥५६८॥

---

५५१. [1]) Thus corr. by later hand from A₁ राज्य°. ५५८. [1]) A₂ gloss क्षुरपुर. ५६५. [1]) A₂ gloss आकस्मिके प्रमये मारीतेथ इत्यर्थः. ५६६. [1]) Thus A₁; A₂ R G पाजकाः.—[2]) Thus A₁; A₂ ततस्त°. ५६७. [1]) Thus A₁; A₂ द्विमास्तु द्वैध°.—[2]) Thus corr. by A₂ from A₁ --तैस्तैर्भवि°.

यस्य तास्ता व्यवहृतीर्नीतिशास्त्रानुतापदाः । वर्णयन्ति यथावृत्ता गोष्ठीष्वद्यापि[1] धीमताम् ॥५६९॥
ग्रामानवन्तिस्वाम्यादिभोग्यानादाय लुब्धधीः । राजा कलशगञ्जाख्यं कर्मस्थानं विनिर्ममे ॥५७०॥ 570
मन्त्रिणे भोगकायासौ धनोत्पादविदेऽप्यदात् । क्रौर्यग्रस्तो न पादाग्रं जनरक्षणदक्षिणः ॥५७१॥
मन्त्रिणो राजकलशापत्यान्यत्यन्तरङ्गताम् । लेभिरे क्ष्माभुजः पार्श्वे प्रशस्तकलशादयः ॥५७२॥
सुताः स्वाच्छन्द्यविवशा धीराः संख्यादिसंभवाः । युक्त्या निदधिरे राज्ञा निबद्धस्वाधिकारिणः ॥५७३॥
पुनर्मदनपालेन क्रान्ते राजपुरीपतौ । साहायकाय व्यसृजत्सेनान्यं बप्पटं नृपः ॥५७४॥
प्रतापैर्भूपतेस्तेन भृत्यांशेनापि[1] निर्जितः । बद्ध्वा मदनपालोऽपि कश्मीरान्संप्रवेशितः ॥५७५॥ 575
भ्राता वराहदेवस्य कन्दर्पाख्यो महीभुजा । कृतो द्वाराधिपो वीरो विदधे डामरक्षयम् ॥५७६॥
बभूव जिन्दुराजास्य शिक्षितो नयविक्रमी । भूम्यनन्तरसामन्तमुकुटस्पृष्टशासनः ॥५७७॥
स राजपुर्यादिजयी द्वारं परमकोपनः । क्षणे क्षणेऽत्यजद्राज्ञा प्रसाद्य ग्राहितः स्वयम् ॥५७८॥
मदनः[1] क्षितिपालेन ग्राहितः कम्पनेशताम् । लब्धप्रकर्षान्बोपादीन्डामरान्बहुशोऽवधीत् ॥५७९॥
सेवावशीकृतः क्षेमपालं स[1] नगराधिपम् । चक्रे विजयसिंहाख्यं हताशेषमलिम्लुचम् ॥५८०॥ 580
कन्दर्पोदयसिंहाद्यैः[1] प्रहिते लोहरे सकृत् । राजा भुवनराजस्य दूरं निःसारणं व्यधात् ॥५८१॥
कीर्तिराजस्य तनयां स च नीलपुरप्रभोः । लब्ध्वा भुवनमत्याख्यां रिपोश्छिन्नामयोऽभवत्[1] ॥५८२॥
कार्यप्रतिग्रहे कर्तुं प्रवृत्तिं ग्राहितोऽभवत् । हत्वा विजयसिंहाख्यो नृपेण नगरेशताम् ॥५८३॥
गुङ्गात्मजः स मल्लोऽथ तेन द्वारपतिः कृतः । राज्ञां मौलिमणिस्थाने स्वप्रतापमरोपयत् ॥५८४॥ युग्मम् ॥
शौर्यं निष्परिवारस्य पार्थस्योत्तरगोग्रहे । उत्तरासंप्रवेशे वा श्रुतं मल्लस्य मानिनः ॥५८५॥ 585
पञ्चाशीत्तुरगैर्यस्तु कृष्णां तीर्त्वा व्यपाहरत् । राज्यं वाजिव्रजैः सार्धमभयाख्यस्य भूभुजः ॥५८६॥
एवं वशीकृतभुवो भूपतेर्नयवेदिनः । सममेवाष्टभूपालास्त्रिषष्टेऽब्देऽविशन्पुरम् ॥५८७॥
कीर्तिर्बब्बापुराधीशश्चाम्पेयो भूभृदासटः । तुक्कात्मजस्तु कलशो वल्लापुरनरेश्वरः ॥५८८॥
राजा संग्रामपालाख्यः स च राजपुरीपतिः । उत्कर्षो लोहरोर्वीभृद्दार्वेशो मुङ्गजो नृपः ॥५८९॥
गाम्भीरसीहः कान्देशः काष्टवाटधराधिपः । भीमानुत्तमराजोऽपि राजानमुपतस्थिरे ॥५९०॥ तिलकम् ॥ 590
राजलोकः प्रवृद्धोऽपि घने जनपदेऽभवत् । दुर्लक्ष्यो वार्षिकसरित्पूरो वारिनिधाविव ॥५९१॥
तस्मिन्क्षणे शिलीभूतवितस्तासलिले नृपैः । शीतक्षणेऽप्यसंक्षीणं सुखं तैरन्वभूयत ॥५९२॥
मनसापि हि भूपाला यत्ते किंचिदचिन्तयन् । प्राममेव पुरेऽपश्यन्वामनेन तदाहृतम् ॥५९३॥
कौशलं मन्त्रिणस्तस्य रराजेतरदुर्लभम् । निमित्तं मदसंभ्रान्तो नित्यवद्योऽस्यवाहयत् ॥५९४॥
पार्थिवेष्वथ यातेषु मल्ले कार्यपराङ्मुखे । क्षितिपालेन कन्दर्पो द्वारं स्वीकारितः पुनः ॥५९५॥ 595
अभिमानधनो मन्त्री कृतारब्धिर्निजैर्धनैः । दुर्गं स स्वापिकं नाम युक्त्या दुर्गहमग्रहीत् ॥५९६॥
स प्रविष्टोऽपि नगरं खिन्नः केनापि हेतुना । पार्थिवाभ्यर्थ्यमानोऽपि कार्यं नैवाग्रहीद्यदा ॥५९७॥

---

५६९. 1) पि supplied by $A_3$. ५७५. 1) Thus corr. by $A_3$ from $A_1$ °शेनाति. ५७९. 1) $A_3$ gloss मदनपालः. ५८०. 1) स supplied by $A_3$. ५८१. 1) Thus corr. by $A_3$ from $A_1$ कन्दर्पोन°. ५८२. 1) Thus corr. by $A_3$ from $A_1$ °च्छिन्नाश्रयो°. ५८५. 1) $A_3$ gloss अर्जुनस्य.—2) $A_3$ gloss उत्तरो विराटपुत्रः.—3) Thus $A_1$; $A_3$ हुतं.

तदा प्रशस्तकलशो¹ नित्यं दूत्यं समाचरन् । तदुक्तिवक्रोक्तिसंतप्तः संस्पृशन्नभिमानिताम् ॥५९८॥
निजाभिजातिभूयस्त्वा भूरीन्संगृह्य सचिवः । तत्पदे रत्नकलशं स्वभ्रातरमकारयत् ॥५९९॥
600 सोऽर्थैः कीर्त¹प्रथोऽप्यासीन्न कन्दर्प²समः क्वचित् । किं चित्रोल्लिखितः सिंहः सत्यसिंहक्रियां स्पृशेत् ॥६००॥
ततः क्रमेण भूभर्त्रा भृत्यवर्ज्यं कथंचन । राजस्थानाधिकारं स नगरे वाहितः पुनः ॥६०१॥
अतिताडनतश्चौरे विपन्नेऽथ कृपाकुलः । त्यक्त्वा तमप्यधीकारं विषण्णो जाह्न¹वीमगात् ॥६०२॥
पटान्तकृतसंरोधस्ताडयित्वा करं प्रभोः । कोपाद्देशान्तरं यातस्तं प्रत्यासे¹ स्म मन्युमान् ॥६०३॥
अत्यन्तखेदितोऽप्यासी¹दानीतस्यान्तिकं पुनः । दर्पं हर्तुं नृपस्तस्य संनद्धो न तु जीवितम् ॥६०४॥
605 इत्थं पुरुषसिंहानां प्रौढदार्ढ्यं विलोकवान् । आरोहमवरोहं च सोऽन्तरज्ञः क्षमापतिः ॥६०५॥
उपाङ्गगीतव्यसनं नर्तकीसंग्रहादरः । देशान्तरोचितं राज्ञा तेनैवेह प्रवर्तितम् ॥६०६॥
ततो जयवनोपान्ते निरन्तरमहागृहम् । स्वनामाङ्कं पुरं कर्तुं प्रावर्तत विशांपतिः ॥६०७॥
मठाग्रहारप्रासादमहागृहपरंपराः । सत्तोयोपवनास्तत्र ययुः सिद्धिं सहस्रधा ॥६०८॥
अत्रान्तरे राजसूनुर्हर्षः सोत्कर्षपौरुषः । गुणैर्लेभे प्रकाशत्वमन्यभूपालदुर्लभैः ॥६०९॥
610 सोऽशेषदेशभाषाज्ञः सर्वभाषासु सत्कविः । कृत्स्नविद्यानिधिः प्राप ख्यातिं देशान्तरेष्वपि ॥६१०॥
लुब्धेन पित्रा संत्यक्ता जना नानादिगागताः । गुणशौर्योज्ज्वलास्तेन गृहीताः कृतवेतनाः ॥६११॥
अपर्याप्ते पितृकृते वेतने व्ययशालिनः । एकाहान्तरितं तस्य भोजनं त्यागिनोऽभवत् ॥६१२॥
पितरं गायन इव व्यक्तं गीतैः स रञ्जयन् । भर्तव्यभरणं चक्रे तद्दत्तैः पारितोषिकैः¹ ॥६१३॥
उद्गायति पुरस्तस्मिन्कदाचिदथ पार्थिवः । सभ्येषु प्रीयमाणेषु शौचायोत्थाय निर्ययौ ॥६१४॥
615 तेन प्रसङ्गभङ्गेन जाततेजोवधः सुधीः । क्षुभ्य¹न्वैलक्ष्यकोपाभ्यां कुमारः² क्षितिमैक्षत ॥६१५॥
प्रभुर्वीतक्षान्तिः सुहृदतिशठः स्त्री परुषवाक्सुतो गर्वोन्नद्धः परिजन उदास्तप्रतिवचाः ।
इयान्सोढुं शक्यो ननु हृदयदाही परिकरो न तु भीतावज्ञालुलितनयनान्तं परिभवन् ॥६१६॥
पितुरेव तदा भृत्यो विश्रावट्टाभिधो विटः । शाधि राज्यं निहत्येमं नर्मणेवेत्युवाच तम् ॥६१७॥
अधिक्षिपन्स तं रोषादनेनोक्तमसांप्रतम् । इत्यासन्नेन हसता धम्मटेना¹प्यकथ्यत ॥६१८॥
अन्ये भोगेच्छवश्छन्नाः कुमाराननुयान्पितुः । केऽहं मदर्थं स्वीकुर्युर्वेश्या कामि¹सखीरिव ॥६१९॥
620 पुनः सभां संप्रविष्टस्तं पिता पर्यतोषयत् । प्रीतिदायैस्ततस्तैस्तैः साधुवादैश्च मानिनाम् ॥६२०॥
अन्येद्युस्तु पितुः पार्श्वात्स भुक्त्वा स्वगृहान्गतः । अभ्येत्य विश्रावट्टेन तदेव जगदे रहः ॥६२१॥
उपपन्नं तदुक्त्वा तेनाभीक्ष्णं निषेधता । निर्बन्धादपि हस्तेन सोऽथ कोपादताड्यत ॥६२२॥
तलाभिघातं रुधिरं वमन्तं घ्राणवर्त्मना । तं वीक्ष्य सोऽभिजातोऽभूत्सदाक्षिण्यो नृपात्मजः ॥६२३॥
भृत्यैः प्रक्षालयन्नास्यं तस्येदृक्पाप्मनो भवेत् । उक्तेनापीति कथयन्स्मित्वा वासांस्यदापयत् ॥६२४॥

---

५९८. ¹) Emended; A R G °कलशः. ६००. ¹) Thus A₁; A₂ नीत°.—²) Thus corr. by later hand from A₁ कन्दर्पः सम°. ६०२. ¹) जाह्न supplied by A₂ in space left by A₁. ६०३. ¹) Thus corr. by A₂ from A₁ प्रत्यास्ते. ६०४. ¹) Thus A₁; A₂ °खेदितस्त्वासीदा°. ६१३. ¹) Emended; A °तोषकैः. ६१५. ¹) Thus A₁; A₂ क्षुभ्यद्वै°.—²) Thus corr. by A₂ from A₁ कुमारः. ६१८. ¹) Emended; A धर्मटेना°. ६१९. ¹) Thus A₁; A₃ कामी स°.

स्वादूकृतं स्वादुतयैव भुङ्क्ते थूत्कृत्य मुञ्चत्यपि थूत्कृतानि ।
विश्वासितस्त्रासमुपैत्यकस्मादुभूच्च कालश्च समानभावः ॥१११४॥
जाड्यमित्यादि यत्किंचित्क्षितिपानां कटाक्षितम् । तत्सर्वं हर्षदेवस्य जाड्येन लघुतां ययौ ॥१११५॥ 1115
तुष्टः पटहवाद्येन हस्तालोपाविदे ददौ । भीमनायकनाम्ने स करिणं करिणीसखम् ॥१११६॥
स्वशिष्यस्तेन तस्यासीद्गायनः कनकोथ सः । चम्पकावरजः खेदाद्गीताभ्यासकृतोद्यमः ॥१११७॥
प्रसादीकृतमस्मै च खेदच्छेदनमिच्छता । तेन काञ्चनदीनारलक्षमक्षतचेतसा ॥१११८॥
कर्णाटभर्तुः पर्माण्डेः सुन्दरीं चन्दलाभिधाम् । आलेख्यलिखितां वीक्ष्य सोभूत्पुष्पायुधक्षतः ॥१११९॥
उत्तेजयन्ति संघर्षे हास्ये जडमतीन्विटाः । सारमेयानिवाजस्रं प्रोत्साह्य प्राकृताशयाः ॥११२०॥ 1120
स विटोद्वेजितो वीतत्रपश्चक्रे सभान्तरे । प्रतिज्ञां चन्दलावाप्त्यै पर्माण्डेश्च विलोडने ॥११२१॥
कृतापक्षिप्तकर्पूरपरित्यागं प्रतिज्ञया । तं च स्तुतिमिषादेवं जहसुः कविचारणाः ॥११२२॥
भावावेषविशेषतः परिगतस्त्वं दाक्षिणात्योध्वगो गन्धादप्यवधारितं यदुत ते कर्पूरकोले करे ।
पक्वं चेदिदमङ्ग हर्षनृपतेस्तत्कल्पयोपायनं नो चेत्तिष्ठतु नालिकेरकुहरे संपत्स्यमुग्ध्मन्थतः ॥११२३॥
आ कर्णाटवसुंधराधववधादा चन्दलालिङ्गनादा कल्याणपुरप्रवेशनविधेरा पिम्मलादर्शनात् ।
आ राजाश्रयकाननान्तवसुधापारर्द्धिकौतूहलाद्देवेन प्रतिविद्धमिद्धमहसा पोतासंसर्गम् ॥११२४॥
विटः प्रसाद्य नृपतिं मदनः कम्पनापतिः । महत्तरत्वं जग्राह तस्याश्चित्रार्पिताकृतेः ॥११२५॥ 1125
वस्त्रालंकारनिर्वाहकृतेमुष्याश्च वेतनम् । नित्यमादत्त भूपालाद्रायमीर्ष्याशमाय च ॥११२६॥
विटत्वे निस्त्रपत्वे च मदनस्य कथाक्रमः । मौग्ध्ये पारिप्लवत्वे च नृपस्य निकषोभवत् ॥११२७॥
मातेयं वप्पिका[1] नाकात्त्वयानीनेति वादिभिः । संदर्श्य जरतीं नारीं मुषितः सोपरैर्विटैः ॥११२८॥
दासीश्च देवता एता इत्युक्त्वान्यैः प्रवेशिताः । उन्नतिं च श्रियं चौज्झत्स्मरणमञ्जहसे जनैः ॥११२९॥
दास्यो मदनसंलापमन्त्राद्युल्लेखकारिभिः । अध्यापिता विटैस्तस्य मतिमोहं प्रचक्रिरे ॥११३०॥ 1130
ताभ्यः काभिरपि क्ष्माभृत्सुरतं समयोचितम् । वाञ्छन्तीभिः कृतः स्वाङ्गस्पर्शाद्भाग्योदयोज्झितः ॥११३१॥
आयुष्कामाय भूयांसं कालं जीवितकाङ्क्षिणे । आयुर्वर्षशतान्यस्मै ता मूढमतये ददुः ॥११३२॥
डोम्बेन पिण्डसिद्ध्यर्थी केनाप्येतद्रसायनम् । पिण्डसिद्धिकृदित्युक्त्वा पेयं किमपि पायितः ॥११३३॥
किं तस्य कथितैरन्यैर्मौग्ध्यैर्यो याचितो विटैः । क्षियमाणादिव धनादायुषोपि व्ययं व्यधात् ॥११३४॥
बलक्षेपच्छुरपरानुपायान्यानसेवत । कथयेत्कः सदाचारस्तानतोपि त्रपावहान् ॥११३५॥ 1135
स एवमन्धतामिस्रे[1] निक्षिप्तः शाश्वतीः समाः । मुग्धबुद्धिः स्वजाड्येन[2] दुर्नीतैश्च कुमन्त्रिभिः ॥११३६॥
मेघवाहनमुख्यानां कृत्ये लोकोत्तरे यथा । सन्त्यद्याल्पधियः केचित्संदेहान्दोलिताशयाः ॥११३७॥
तथास्मिन्नपि दुष्कृत्ये वर्ण्यमानेद्भुतावहे । भविष्यतीव कालेन नूनमप्रत्ययो जनः ॥ ११३८ ॥
राज्ये बहुच्छले तादृग्दुर्नीत्योपहतोप्यभूत् । आयुःशेषेण न वशे स रन्ध्रान्वेषिणां द्विषाम् ॥११३९॥

---

११२८. [1]) Emended; A वञ्जिका. Cf. vii. 319. ११३६. [1]) Emended; A °नामके.—[2]) Emended; A स्वजात्येन; C स्वजाम्येन.

1140 नर्तकीः शिक्षयन्नाशानुस्थायाभिनयं स्वयम् । तिष्ठन्दीपोज्ज्वले धाम्नि दूरात्केनापि शत्रुणा ॥११४०॥
क्षिप्तेषुरपि नाभूद्यन्निहतो व्रणितोथ वा । फलं तस्यायुःशेषस्य प्रजानां सुकृतस्य वा ॥११४१॥
कश्चिदेवाथ शुद्धान्ते पातवृत्तो महीपतेः । सर्वाशुद्धि[1]निधेः प्राभून्नारीचारित्रविभ्रमः ॥११४२॥
ते युवानो मदोन्मत्तास्ताः स्त्रियो यौवनोन्मदाः । नाशाय हर्षदेवस्य तस्मिन्नेवाभवन्क्षणे ॥११४३॥
निगृहीतास्तेन रोषात्सजाराः काश्चन स्त्रियः । काश्चित्स्वाकृष्य शुद्धान्ताज्जारैर्नीता दिगन्तरम् ॥११४४॥
1145 स्वेन दौःशील्यदोषेण सर्व एव विशङ्किताः । भृत्यास्तस्याशुभान्यैच्छन्नयतन्त च शान्तये ॥११४५॥
तस्यापि शीलवैकल्यं तावत्सर्वत्र पप्रथे । यावत्कलशभूपालात्संजातस्योपपद्यते ॥११४६॥
शैशवे वर्धितो याभिरङ्कमादाय मातृभिः । सोङ्कमारोप्य ता एव चुम्बन्संबुभुजेनिशम् ॥११४७॥
संभोगं भगिनीवर्गे कुर्वता दुर्मचोरुषा । निगृहीता च भुक्ता च नागा पुत्री पितृष्वसुः ॥११४८॥
स तुरुष्कशताधीशाननिशं पोषयन्धनैः । निधनावधि दुर्बुद्धिर्बुभुजे ग्राम्यसूकरान् ॥११४९॥
1150 अथ सेवाभिसारेण कदापि कुपितो नृपः । स मन्दबुद्धिरास्कन्दमदाद्राजपुरीं प्रति ॥११५०॥
विलोक्य सैन्यसामग्रीमनन्यसदृशीं पथि । त्रैलोक्याक्रान्तिसामर्थ्यं पार्थिवैस्तस्य शङ्कितम् ॥११५१॥
स तु पृथ्वीगिरिं दुर्गं दृष्ट्वा तद्ग्रहणोद्यतः । अप्रविष्टो राजपुरीं तन्मूले समुपाविशत् ॥११५२॥
मासमभ्यधिकं तेन तस्थुषा परिपीडिताः । प्रक्षीणाम्बादिसंभारा बभूवुर्दुर्गरक्षिणः ॥११५३॥
त्रातुं संग्रामपालस्तानूरीचक्रे धरापतिः । कियन्तं न करं भीतः कियतीर्न च संविधाः ॥११५४॥
1155 उपोढदार्ढ्ये नृपतौ स तदप्रतिगृह्णति । लुब्धमुत्कोचदानेन स्वीचक्रे दण्डनायकम् ॥११५५॥
अमन्यमाने[1] नृपतौ व्यावृत्तिं प्रेरिता रहः । प्रवासवेतनं भूरि मार्गितुं तेन शस्त्रिणः ॥११५६॥
तैः प्राये प्राकृतप्रायैः कृते सोल्लुण्ठभाषितैः । राज्ञो दूरस्थकोशस्य कटकः क्षोभमाययौ ॥११५७॥
स तत्समर्थनां यावच्चक्रे तावद्विभीषिकाम् । तुरुष्कास्कन्दजामन्यां प्रददौ दण्डनायकः ॥११५८॥
अथाल्पधैर्यो नृपतिरुत्थाप्य कटकं ययौ । कृत्स्नां च कोशसामग्रीं तत्याजाध्वनि साध्वसात् ॥११५९॥
1160 अपरीक्ष्यावृतो भृत्यः स्वामिनामतिसंकटे । करोति व्यसनापातमजात्योसिरिवाहवे ॥११६०॥
तेन स्वयमयोग्येन योग्यानन्याननिच्छता । कलङ्किता नरेन्द्रश्रीः क्षुद्राश्वेनेव मन्दुरा ॥११६१॥
ततः प्रभृति निर्वाणप्रतापस्य महीपतेः । प्रतापचक्रवर्त्याख्या सर्वतो म्लानिमाययौ ॥११६२॥
म्लानाननो न यस्तिष्ठ स्वेन भृत्यैस्तथाखिलैः । तत्कर्म कृतवन्तं स कन्दर्पं बह्वमन्यत ॥११६३॥
आनिनीषोश्च तं तस्य जडस्याकृत भूपतेः । दण्डनायक एवेच्छाच्छेदं पैशुनकर्मणा ॥११६४॥
1165 ज्ञातद्रोहोथ नृपतिरवधीद्दण्डनायकम् । प्रातिपस्यानुरोधेन न क्रुधा न्यग्रही[1]त्पुनः ॥११६५॥
दुर्गं[1] संदिग्धजीवोपि निवसन्संचिकाय सः । लुब्धस्ताम्बूलवस्त्रादि प्रहितं भृत्यबान्धवैः ॥११६६॥
आत्मनः सर्वनाशाय संजातं दैवमोहितः । वधार्हं प्रत्युत पुनर्निन्ये तं स्वपदं नृपः ॥११६७॥
तं विटाश्चाटुभिर्भूयो राजानमुदतेजयन् । घोषयात्राजितं स्तोत्रैः कर्णाद्या इव कौरवम् ॥११६८॥

११४२. [1]) Emended; A सर्वभुद्धनिधेः. ११५६. [1]) Emended, A प्रमन्यमाने. ११६५. [1]) Emended; A न्यगृही°. ११६६. [1]) Conjectural reading; A दुर्गे.

वादी वादपराजितः प्रतिभटं गालीभिरस्याक्षिपन्योषिद्भ्रष्टसतीव्रता कुकलहैरुद्वेजयन्ती पतिम् ।
कायस्थश्च कृताखिलार्थमहिमा कृच्छ्रे नृपं पातयन्नस्यासह्यपराभवस्य कुरुते भूयः समुत्तम्भनम् ॥११६९॥
भुक्तदेयधनो बिभ्यत्तं सहेलमहत्तमः । उर्वीपतिं दुर्व्यसने प्रेरयन्स्वार्थपण्डितः ॥११७०॥ 1170
बन्धुमन्विष्य दरदां लवन्यैः सह लाहरैः । दुर्गघाताभिधं दुर्गं ग्रहीतुं तमचूचुदत् ॥११७१॥
तद्धि लक्ष्मनचन्द्राख्ये पुरा गोप्तरि डामरे । जनकद्वारपतिना हतेनन्तनृपाज्ञया ॥११७२॥
प्रायोपविष्टया द्वारे तत्पत्न्यापि समर्पितम् । कलशक्ष्माभुजा कृपोपेक्षं प्राप दरन्नृपः ॥११७३॥
तद्बलाहारदैः क्रान्तानन्तग्रामेत्र मण्डले । राजा च मन्त्रिणा चाथ बभूव स्वीकृतोद्यमः ॥११७४॥
निर्झरे[1] तत्र गोभूर्णां वृत्तये संभृतं हिमम् । अवग्रहेण तत्तस्मिन्क्षणे निःशेषतां ययौ ॥११७५॥ 1175
चारैस्तद्बन्धमालक्ष्य तद्वधाय महत्तमः । अभीक्ष्णं प्रेरयन्क्ष्मापं स च तत्रोद्यमं व्यधात् ॥११७६॥
वातगण्डं[1] तदुद्योगे प्रतिष्ठासुं नृपाज्ञया । चम्पको द्वारकार्यस्थमभिसंधातुमैहत ॥११७७॥
द्वारं निश्चार्य भूपेन प्रापितो मण्डलेशताम् । सर्वैः सहाभजद्वारं स हि द्वाराधिकारिभिः ॥११७८॥
विसूचितोपि[1] कटके तेन द्वारपतिस्ततः । तीर्त्वा मधुमतीं सिन्धुं सैन्यैर्दुर्गमवेष्टयत् ॥११७९॥
समस्तानपि सामन्तान्प्रहिण्वन्सर्वतः स्वयम् । एकप्रयाणान्तरितः कोटेपि न्यवसन्नृपः ॥११८०॥ 1180
स्यजन्निर्गण्डशैलादि दुर्गसंश्रयदुर्जयैः । काश्मीरिकाः[1] सह दरत्सैनिकैः समरं व्यधुः ॥११८१॥
विदधे प्राजिमठिकानाम्न्याघातपदे वसन् । सपुत्रो गुङ्गजो मल्लः संभ्रमानतिदुःसहान् ॥११८२॥
तत्पुत्रौ[1] दैवविस्फोक्तराज्यप्राप्ती तदिच्छया । मानं व्यवर्धयातां यौ वीरावुच्चलसुस्सलौ ॥११८३॥
अत्युद्दामस्तयोर्ज्यायान्क्षिपन्नपि नृपासनम् । आसीत्प्राश्चर्यमाहात्म्याद्यात्रायां तत्र निर्गतः ॥११८४॥
अवग्रहेण भूपालप्रतापेन च शोषिताः । यथाकथंचित्तद्दुर्गं ररक्षुर्दारदा भटाः ॥११८५॥ 1185
अथाक्षेप विधेर्हर्षप्रतापपरिपन्थिनी । पपात महती वृष्टिरेकीकृतजलस्थला ॥११८६॥
दुर्गशृङ्गं हिमैः कृत्स्नं दुर्भेद्यैः पर्यवार्यत । अनुकूलेन विधिना संनाहैर्निहितैरिव ॥११८७॥
उत्थाने पातयन्कांश्चित्पतने कांश्चिदुत्क्षिपन् । वेधाः कम्बलयस्येव कन्दुकक्रीडितभ्रमम् ॥११८८॥
ततः स्मृत्वा गृहान्वृष्टिदुःस्थास्ते दुष्टमन्त्रिणः । चक्रिरे पूर्ववद्राज्ञः स्कन्धावारे विसूत्रणम् ॥११८९॥
ऊर्ध्वस्रोतोनुसारीव तिमिः शैलहताननः । ततोपि चक्रे व्यावृत्तिं राजा जयपराङ्मुखः ॥११९०॥ 1190
मुक्तापणः शीर्णकोशः त्यक्तभीकञ्चुकायुधः । कटकः सर्व एवाभूत्पलायनपरायणः ॥११९१॥
धावतः पथिभिस्तैस्तैः साक्रन्दाज्ञाजसैनिकान् । पृष्ठलग्नरिपून्दीर्घा मार्गमसिष्यतापगा ॥११९२॥
क्षौमैः सहंसमालेव साब्जषण्डेव खेटकैः । सशैवलेव खड्गौघैः सशिलेव तुरंगमैः ॥११९३॥
सौवर्णैः सरथाङ्गेव राजनैर्भाजनैरपि । सफेनेव जनस्यकैरासीन्मधुमती सरित् ॥११९४॥
नीतानां च हतानां च दरदैः प्रसृतोदयैः । अभूद्धीरतानां च संख्या काचिन्न देहिनाम् ॥११९५॥ 1195
अनाथवत्तथा भूतं सैन्यं त्रातुं कृतोद्यमः । एकस्तु तानुजो मानी नावलम्बाद्धिरुच्चलः ॥११९६॥

---

११७५. [1]) Emended; A निझरे. ११७७. [1]) Emended; A वातगण्डस्तदु°. ११७९. [1]) Thus or, perhaps, विसूचितोपि to be read for A विसूचितापि. ११८१. [1]) Emended; A काश्मीरकाः. ११८३. [1]) Emended, A तत्पुत्रो.

दरद्कुलाम्बुधिर्धावन्स विश्वाक्रमणोद्यतः । ताभ्यां वेलागिरीन्द्राभ्यामिव संस्तम्भितोखिलः ॥११९७॥
तौ रक्षित्वा बलं प्राप्तौ प्रसिद्धिमतुलां गतौ । पतिंवरेव राजश्रीर्भेजे लक्ष्येण तेजसा ॥११९८॥
ततः प्रभृति लोकस्य सर्वस्यासीदृशी मतिः । राज्यार्हौ मानिनावेतौ क्लीबोयं न तु भूपतिः ॥११९९॥
1200 तथा कृत्वापि यद्राज्ञे दर्शनं परिजह्रतुः । तौ प्रीतिदायविमुखौ बबन्धास्थां ततो जनः ॥१२००॥
अथ शान्तरिपुत्रासो नगरं प्राविशन्नृपः । प्रतापस्तु दिशः प्रायान्मल्लराजतनूजयोः ॥१२०१॥
तौ रामलक्ष्मणावेताविति सर्वस्तदाब्रवीत् । रावणप्रतिमे राज्ञि भाव्यर्थानुगुणं वचः ॥१२०२॥
राजा तु गतलज्जः स नित्यकृत्योपमं जडः । कर्तुं प्रारभताखिन्नः पुनर्मण्डलपीडनम् ॥१२०३॥
अल्पापकारमपि पार्श्वगतं निहन्ति नीचो न दूरमसमागसमप्यरातिम् ।
श्वा निर्दशत्युपलमन्तिकमापतन्तं तस्यागिनं न तु विदूरगमुग्ररोषः ॥१२०४॥
1205 ततः प्रविष्टः संप्रीतः सेवया दत्तकम्पनम् । मदनं सोशृणोत्स्वैरं शंसन्तं तत्पराभवम् ॥१२०५॥
तद्रोषेण जिघांसुस्तमागो जगाह सोपरम् । तस्य देवीविसृष्टाशालेखोल्लङ्घनलक्षणम् ॥१२०६॥
प्राप्तो मडवराज्यात्स क्ष्माभुजादत्तदर्शनः । भीतो लक्ष्मीधरस्यागान्मन्दिरं टक्क[1]मन्त्रिणः ॥१२०७॥
राजा प्रसाद्यमानोपि तत्कृतेन्येन मन्त्रिणा । सस्मितं वीक्षितं सैन्यैस्तं सपुत्रमघातयत् ॥१२०८॥
कोपस्मितं नरपतेरकालकुसुमं तरोः । वेतालस्याट्टहसितं नैवमेव प्रशाम्यति ॥१२०९॥
ये संप्ररूढविपुलप्रणयाभिमाना निःशङ्कमीश्वरनिवेशनमाचरन्ति ।
1210 मन्त्रानुपक्रमरभसाद्भुजगेन्द्रसख्यं प्रख्यापयन्त इव ते प्रलयं प्रयान्ति ॥१२१०॥
कर्णेजपकुले तावन्मदनप्रलयावधिः । शापः सूर्यमतीदेव्याः प्रसारितभुजोभवत् ॥१२११॥
विक्रमालोकनोत्कम्पी निचिक्षेप क्षमापतिः । बद्ध्वा कलशराजं तं लक्ष्मीधरनिवेशने ॥१२१२॥
निरुद्धं तस्य बद्धस्य शिक्षापेक्षामिवान्नृपः । तेजोवधाय सविधमुदयाख्यं व्यसर्जयत् ॥१२१३॥
लक्ष्म्या जाज्वल्यमानं तं वीक्ष्य प्रज्वलितः क्रुधा । लब्धासिधेनुः कस्माच्चिन्मनस्वी सहसावधीत् ॥१२१४॥
1215 तद्भृत्यैरथ संक्रुद्धैर्निपत्य स विपादितः । दुर्बुद्धेस्तस्य भूभर्तुरेवं भृत्या विपेदिरे ॥१२१५॥
मण्डले राजदण्डेन क्षतेनेव परिक्षते । क्षारपातोपमान्यापि प्राभूद्दुःखपरंपरा ॥१२१६॥
अहारि काञ्चनस्थाली यैः पार्थिवगृहादपि । सत्यप्यहस्करे अभूस्तस्करास्तादृशा विशः ॥१२१७॥
प्रवर्धमाने मरके क्रन्दितध्वनिनिर्भरः । निर्घोषः प्रेतवाद्यानां न व्यरंसीद्दिवानिशम् ॥१२१८॥
उदीपप्लुषितग्रामे वत्सरे पञ्चसप्तते । अखण्डं सर्वभाण्डानां दुर्भिक्षमुदजृम्भत ॥१२१९॥
1220 दीन्नाराणां धान्यखारिः प्राप्याभूत्पञ्चभिः शतैः । दीनारेणाभवल्लभ्यं माद्वीकस्य पलद्वयम् ॥१२२०॥
ऊर्णापलस्य दीनारैः क्रयः षड्भिरजायत । लवणोर्वणहिङ्ग्वादेरभिधाप्यास दुर्लभा ॥१२२१॥
शवैर्नवोभवन्नम्भःसंसेकोच्छूनविग्रहैः । छन्नतोया गिरिस्रस्तैश्छिन्नदारुवनैरिव ॥१२२२॥
एतद्व्यवहिता[1] राजधानी दूराच्च दृश्यते । ध्यात्वेति सर्वतो राजा द्रुमाणां छेदमादिशत् ॥१२२३॥

---

१२०७. [1]) Emended; A डक्क°. १२२३. [1]) Emended; A व्यवहृता.

समग्रनवफला वृक्षा गृहस्था इव पातिताः । कुटुम्बैरिव रोलम्बैरशोच्यन्त पदे पदे ॥१२२४॥

प्राणापहं महादण्डं तथार्तेपि जने नृपः । हलावहण्णे वृद्धोसौ गण्डशैलमिवाक्षिपत् ॥ १२२५॥ 1225

निपीड्य लोकं कायस्थैर्महादण्डव्यवस्थया । पुरग्रामादिषु क्वापि न मृदप्यवशेषिता ॥१२२६॥

अथोल्बणत्वं संग्रामान्निहन्तुं सर्वडामरान् । स दण्डभृदिव क्रुध्यन्नादिक्षन्मण्डलेश्वरम् ॥१२२७॥

पूर्वं मडवराज्योर्व्यां होलडान्तः स डामरान् । दवाल्कन्दोवधीत्तांस्तान्कुलाये विहगानिव ॥१२२८॥

प्रता लवन्यानुग्रडकुन्तलोविकटाकृतिः । जीवन्मडवराज्यान्तस्तेन शिशोपि नोज्झितः ॥१२२९॥

लावन्यवृक्षाः शूलानि पान्थैरप्यथ रोपितैः । भीमरूपाभवद्भूमिर्भैरवस्य महानसः ॥१२३०॥ 1230

शूले लवन्यस्यैकस्य क्रूरां विन्यस्यतो वधूम् । ययुः सर्वे दिशो भीता लवन्या मण्डलेश्वरात् ॥१२३१॥

केचिद्बुभुजिरे तेषां गोमांसं म्लेच्छभूमिषु । अरघट्टघटद्वारिकृष्टाः केचिदवालगन्[1] ॥१२३२॥

प्राहिणोत्प्राभृतं भूरि भैरवाय महीभुजे । लवन्यमुण्डमालालीरखण्डा मण्डलेश्वरः ॥१२३३॥

तोरणावलयो राजद्वारेदृश्यन्त सर्वतः । डामराणां करोटीभिर्घटीभिरिव निर्भराः ॥१२३४॥

द्वारे कङ्कणवस्त्रादि लब्धमानं नृपौकसः । नेता डामरमुण्डस्य यः कोपि स किलासदत् ॥१२३५॥ 1235

भोक्तुं डामरमुण्डानि व्याप्तविस्तीर्णतोरणाः[1] । विदधुर्गृध्रकङ्काद्या राजद्वारोपसेवनम् ॥१२३६॥

यत्र यत्रास्त भूपालस्तत्र तत्र व्यधुर्जनाः । लवन्यमुण्डैरखण्डैर्विस्तीर्णास्तोरणस्रजः ॥१२३७॥

गन्धेनाशुचिना घ्राणं कर्णौ भीमैः शिवारुतैः । अखिद्यत शवाकीर्णे श्मशान इव मण्डले ॥१२३८॥

बलेरकम्पपामान्ताल्लोकपुण्यांशवधि व्यधात् । एकभेरीं मण्डलेशो डामरैः शूलकीलितैः ॥१२३९॥

एवं मडवराज्यं स कृत्वा निर्नष्टडामरम् । अधावत्क्रमराज्योर्वीं कर्तुं तामेव पद्धतिम् ॥१२४०॥ 1240

अवश्यं न भविष्याम इति निश्चित्य डामराः । चक्रिरे क्रमराज्यस्था लौलाहे सैन्यसंग्रहम् ॥१२४१॥

तैः सर्वैर्दत्तसंग्रामैः कुर्वद्भिः कदनं महत् । आस्ते स्म तत्र सुचिरं निरुद्धो मण्डलेश्वरः ॥१२४२॥

किमन्यद्राक्षसः कश्चित्सुरतीर्थर्षिपूजितम् । निहन्तुं मण्डलमिदं हर्षव्याजादवातरत् ॥१२४३॥

उल्लासो रात्रिषु दिने स्वापः क्रौर्यमुदग्रता । अवाङ्मुखत्वं कर्तव्ये दक्षिणेशोचिते रतिः ॥१२४४॥

इत्यादयस्तस्य केचिद्धर्मा नक्तंचरोचिताः । तथा हि तत्कालभवैः प्रियाः प्राज्ञैः प्रकीर्तिताः ॥१२४५॥ 1245

अत्रान्तरे मल्लसूनुः कनीयान्यौवनोन्मदः । लक्ष्मीधरस्य गेहिन्या हृदयाह्लादकोभवत् ॥१२४६॥

सा हि राजकुले तस्मिन्संसक्ता प्रातिवेश्मिके । नारज्यत निजे पत्यौ वानरप्रतिमाकृतौ ॥१२४७॥

ज्ञातीनगण्यान्सत्वान्यान्कस्मात्राज्यार्हलक्षणौ । नावधीदुच्चलावेतौ राजसूच्चलसुस्सलौ ॥१२४८॥

इति लक्ष्मीधरेणेर्ष्यारोषादुक्तोपि भूपतिः । न चुक्रोधामुनापार्ति पूर्वज्ञातिवधाहृतः[1] ॥१२४९॥

स्वयमन्यमुखेनापि स तेनोक्तस्ततोसकृत् । ¯¯[1] घाते तयोस्तस्य ध्यात्वा साध्वसमादधे ॥१२५०॥ 1250

ज्ञातिभीत्यनुवृत्त्यादि तेन विस्मरता ततः । संमन्त्र्य मन्त्रिभिः सार्धं दधे तद्वधनिश्चयः ॥१२५१॥

आसन्नवारवनिता धक्कनाख्याय तं व्यधात् । भूभर्तुर्दुरभिप्रायं तयोः कर्णपथातिथिम् ॥१२५२॥

---

१२२४. [1]) Emended; A रोलम्बेर°. १२३२. [1]) Thus $A_2$; $A_1$ °वालगन्; G °वालगन्. १२३६. [1]) Emended; A व्याप्त विस्तीर्णतोरणा. १२३९. [1]) $A_2$ gloss शूलन¯¯¯वाबलीकभवनं (three *aksharas* illegible). १२४९. [1]) Emended; A चक्रोधा°. १२५०. [1]) $A_1$ indicates a *lacuna* of two *aksharas*.

सख्या दर्शनपालेन तत्रार्थे छिन्नसंशयौ | निरगातां निशीथिन्यां द्वित्रैस्तावनुगैः समम् ||१२५३||
षट्सप्ततेऽब्दे नगरान्मार्गशीर्षेऽथ निर्गतौ | उच्चासंजसतेः प्राप्तौ डामरस्योपवेशनम् ||१२५४||
1255 प्रशस्तराजो बुभुक्षुः सिंहराजं निजानुजम् | सोऽभिसंधाय तौ निन्ये लवन्यो मण्डलान्तरम् ||१२५५||
ततो राजपुरीं ज्यायान्प्रायात्कल्हस्य भूपतेः | कनीयान्प्रययौ पार्श्वं कालिञ्जरधरेशितुः ||१२५६||
तयोर्निर्गतयो राज्यं न कैश्चिच्छ्रद्धीयत | निमित्तज्ञेन राज्ञैव दुर्निमित्तैस्त्वशङ्क्यत ||१२५७||
लक्ष्मीधरमुखेनैव प्रार्थनां हन्तुमुच्चलम् | चक्रे संग्रामपालस्य सोऽङ्गीकृत्य धनं ततः ||१२५८||
स स्वान्तिकागतस्येषन्मल्लसूनोः कृतादरः | तया विशङ्कया शत्रोरासीदधिकगौरवः ||१२५९||
1260 आसन्नाभ्युदयं शत्रुं दृष्ट्वैव विधिचोदितः | शङ्काविष्करणाल्लोके नयेत्संभावनाभुवम् ||१२६०||
राजपुर्याः प्रकृत्यैव काश्मीरानर्थकाङ्क्षिताः | प्रभविष्णौ रिपौ प्राप्ते चक्रिकायां किमुच्यताम् ||१२६१||
कांश्चिन्निकृतिकप्रायान्पार्श्वयातानथोच्चलः | गमागमान्कृतोद्योगो डामराणामकारयत् ||१२६२||
डामरास्तु महोत्साहास्तमानेतुं व्यसर्जयन् | राज्ञा विप्रकृतां दूतान्वितीर्णोपायनान्बहून् ||१२६३||
तं सूर्यवर्मचन्द्रस्य तनयो जनकाभिधः | चकारोपचितोत्साहं मायादूतैर्विसर्जितैः ||१२६४||
1265 वीक्ष्य डामरदूतांस्ताञ्जहता राजतो भयम् | व्यक्तं संग्रामपालेन निन्ये माहात्म्यमुच्चलः ||१२६५||
स कार्यगौरवात्प्रह्वो मूर्ध्नि कर्पूरचूर्णनम् | कृत्वा तमविनाशाय यावद्विज्ञप्तुमैहत ||१२६६||
तावत्कलशराजाख्यस्तद्देश्यो मुख्यठक्कुरः | हर्षदेवार्पितोत्कोचस्तमेत्य विजनेऽब्रवीत् ||१२६७||
राज्ञः प्रसादनं त्यक्त्वा तवोच्चलहितैषिणः | कामधेनुं विनिर्धूय छागकण्ठग्रहे ग्रहः ||१२६८||
कोऽयं काश्मीरभूपानां कास्य शक्तिस्तपस्विनः | आराधनेन तद्राज्ञो विधेहि स्वमसाध्वसम् ||१२६९||
1270 अयं राजगिरौ दुर्गे स्वाप्यतां पार्थिवस्ततः | स्यान्मनीषितवर्ती बलासान्निध्यं च सर्वदा ||१२७०||
तेनेति प्रभुराख्यातः खशानां स मिताशयः | तद्भीतः स्वार्थलुब्धश्च तथेति प्रत्यपद्यत ||१२७१||
तमभ्यधाच्च नो गन्तुं शक्तोऽहमनुद्यतम् | त्वयैव बध्यतामेष मिषतः प्रेषितोऽन्तिकम् ||१२७२||
इत्युक्त्वा तं स्ववसतिं विसृज्यावदुच्चलम् | प्रातः कलशराजस्य त्वया गन्तव्यमन्तिकम् ||१२७३||
इह प्रधानामात्योऽसौ येन ते स्यादनत्ययः | ततो विपक्षोच्छित्त्यै त्वां प्रतिमोक्ष्यामि सानुगम् ||१२७४||
1275 अथ तद्वसतिं गन्तुं चलितोऽन्येद्युरुच्चलः | प्राग्दुर्निमित्तैस्तत्कृत्यमाप्तैश्च विबोधितः ||१२७५||
मन्त्रे भिन्ने निवृत्तं तं श्रुत्वा खशनृपान्तिकम् | कुप्यन्कलशराजोऽथ सज्जसैन्यः समाययौ ||१२७६||
समास्कन्दाय संप्राप्तं जानञ्छस्त्रभृतां वरः | ऐच्छद्रणाय निर्गन्तुं निजभृत्यैः सहोच्चलः ||१२७७||
क्षोभे संप्रस्तुते तं स सान्त्वयित्वा खशाधिपः | तिष्ठन्कलशराजेन सहानिन्ये निजां सभाम् ||१२७८||
निषेधाधायिनो भृत्यान्स विधूयौजसां निधिः | सज्जः खशसमाजं तं कोपकम्प्राधरोऽविशत् ||१२७९||
1280 द्रष्टुं तं[1] नाशकत्कश्चित्कल्पान्तार्कमिवोल्बणम् | क्रुद्धं कलशराजो वा राजा वा तेजसां निधिम् ||१२८०||
स विविक्तीकृते[1] धाम्नि खशाधीशं[2] समन्त्रिणम् | सान्त्वयन्तं महातेजाः कोपरूक्षाक्षरोऽब्रवीत् ||१२८१||

---

१२५४. [1]) Thus $A_1$; $A_2$ gloss उच्चलौ, corr. by later hand into उच्चास ; $A_3$ reads उच्चास. १२५६. [1]) Thus corr. by $A_1$ from कालि°. १२५७. [1]) Emended; A कश्चि°. १२६३. [1]) Thus $A_1$; a later hand corrects डामरांस्तु महोत्साहांस्त° and विप्रकृतान्बहू°. १२८०. [1]) Emended; A नशाक°. १२८१. [1]) Emended; A कृतो.—[2]) Emended; A खशाधीशा.

पूर्वं दार्वाभिसारेभूत्तारराज्ञो नरो नृपः । नरवाहननामास्य सूनुः फुल्लमजीजनत् ॥१२८२॥
स सातवाहनं[1] तस्माच्चन्द्रोभूत्तत्सुतः कृती । गोपालसिंहराजाख्यौ चन्द्रराजोप्यथाप्तवान् ॥१२८३॥
तदात्मजः सिंहराजो दिद्दाख्यां तनयां ददौ । क्ष्माभुजे क्षेमगुप्ताय सावीरा भ्रातृनन्दनम् ॥१२८४॥
राज्ये संग्रामराजाख्यं व्यधादुदयराजजम् । भ्रातापि कान्तिराजोस्या जस्सराजमजीजनत् ॥१२८५॥ 1285
पितानन्तस्य संग्रामो जस्सस्तन्वङ्गगुङ्गयोः । अनन्तात्कलशक्ष्माभृज्जन्मल्लोप्यजायत ॥१२८६॥
कलशाहर्षदेवाद्या जाता मल्लात्तथा वयम् । कोयमित्यादि तन्मन्त्रैः क्रमेस्मिन्कथ्यते कथम् ॥१२८७॥
पृथिव्यां वीरभोग्यायां क्रमो वा कोपयुज्यते । वीरस्य च सहायोस्तु कः स्वबाहुद्वयात्परः ॥१२८८॥
दिष्ट्या तदनुकम्प्यानां मूर्ध्नि हस्तमिवास्पृशन् । काश्मीरिकाणां[1] भूपानां नाभूवं कुलपांसनः ॥१२८९॥
तस्माद्द्रक्ष्यथ मे शक्तिमित्युक्त्वा निर्गतस्ततः । विजयाय स पत्तीनां शतेनानुगतोचलत् ॥१२९०॥ 1290
निहतं शशमादाय तस्याग्रे कश्चिदाययौ । स तेन सुनिमित्तेन प्राप्तां मेने रिपुश्रियम् ॥१२९१॥
अरघट्टघरट्टादिकृष्टिमुत्सृज्य निर्गताः । डामरा वाहदेवाद्यास्तं यान्तमुपतस्थिरे ॥१२९२॥
कटकस्थस्य संग्रामपालस्यायातमन्तिकात् । तदेभ्यो राजपुर्यन्तः क्षिप्रं निन्युः प्रसह्य ताम् ॥१२९३॥
भुक्त्वा तद्दत्तैर्गच्छन्स्वावासं स दिनात्यये । सैन्यैः कलशराजस्य दत्तास्कन्दोभवद्द्विषः ॥१२९४॥
रात्रीभिर्निर्गमात्तस्मिन्द्वारं संरोध्य वारिते । तदीयाः सैनिका युद्धे लोष्टावह्लादयो हताः ॥१२९५॥ 1295
मध्यं प्रविश्य शमिते प्रधनैस्तत्र संयुगे । सोल्पसैन्योपि संवृत्तः सुतरामल्पसैनिकः ॥१२९६॥
चैत्रस्य पौर्णमास्यन्तः कृच्छ्रमप्यनुभूतवान् । वैशाखासितपञ्चम्यां यात्रामत्रस्तधीर्व्यधात् ॥१२९७॥
विसृज्य वाहदेवादीन्विप्रवाय स्ववर्त्मभिः । आललम्बे[3] प्रवेशेच्छां क्रमराज्याध्वना स्वयम् ॥१२९८॥
यं राजोदयसिंहान्ते कापिलं क्षेमजात्मजम् । अस्थापयल्लोहरोर्व्यां स विशान्तं मुमोच तम् ॥१२९९॥
स्वयमग्रे सममार्गां खड्गचर्मधरो व्रजन् । पलायने पूर्वशिष्यान्पर्णोत्से तद्भटान्व्यधात् ॥१३००॥ 1300
बद्ध्वा निःशङ्कमासीनं द्वारेशं सुज्जकाभिधम् । कश्मीरानामिषाकाङ्क्षी क्षिप्रं श्येन इवापतत् ॥१३०१॥
तं डामराश्च कतिचित्खाशिकाश्चाद्रिसंश्रयाः । राजद्विषः प्राप्तमात्रं सर्वतः पर्यवारयन् ॥१३०२॥
नभाकाशादिव न्यस्तं भुवो गर्भादिवोत्थितम् । निशम्यातर्कितं प्राप्तं चकम्पे हर्षभूपतिः ॥१३०३॥
मा भूदसौ बद्धमूलः क्रमराज्यान्तरस्थितम्[1] । मा वधीन्मण्डलेशं च ध्यायन्नित्याकुलोथ सः ॥१३०४॥
विलम्बमाने संनद्धसैनिके दण्डनायके । त्वरितं प्राहिणोत्पट्टं वितीर्णासंख्यनायकम् ॥१३०५॥ 1305
दैवोपहतवीर्यो वा क्रान्तो वा द्रोहचिन्तया । अध्वनि क्षीणतां त्यक्त्वा स तु मार्गे व्यलम्बत ॥१३०६॥
अन्यांश्च यान्यांस्तिलकराजादीन्व्यसृजन्नृपः । ते ते पट्टं समासाद्य नाकुर्वन्नपनिर्गमम् ॥१३०७॥
दण्डनायकमुख्येपि लोके राज्ञा विसर्जिते । याते विमूढतां प्राप बद्धमूलत्वमुच्चलः ॥१३०८॥
वराहमूलं प्रविशन्नागतां द्विषतां बलात् । अश्वां सुलक्षणोपेतां राजलक्ष्मीमिवासदत् ॥१३०९॥
महावराहमौलिच्छत्रस्य मूर्ध्नि पपात च । तदंसस्थितया पृथ्व्या वरणार्थमिवार्पिता ॥१३१०॥ 1310

---

१२८३. [1]) Emended; A सार्थवाहनं. Cf. vi. 367. १२८५. [1]) Thus corr. by $A_2$ from $A_1$ °स्यास्सञ्जरा°. १२८९. [1]) Emended; A काश्मीरकाणां. १२९९. [1]) Thus $A_1$; corr. by later hand into लोहरा°. १२९८. [1]) Emended; $A_1$ वह°.—[2]) न्विप्रवा and र्त्म supplied by $A_2$ in space left by $A_1$.—[3]) Emended; A आललम्ब. १२९९. [1]) Thus A; perhaps, to be emended लोहरा°. Cf. vii. 482. १३०४. [1]) Emended; A °स्थितिम्. १३०८. [1]) Thus $A_1$; $A_2$ °नायकसमुखे.

काकायवैश्यकुलजैर्योधैः संरुद्धपद्धतिः । स हुष्कपुरमुत्सृज्य क्रमराज्योन्मुखो ययौ ॥१३११॥
अत्रान्तरे तमायान्तमाकर्ण्योत्सेकमागतैः । विग्रहोन्मुखतां निन्ये डामरैर्मण्डलेश्वरः ॥१३१२॥
तैर्हि प्रागेव भङ्गं स भीतो हत्वा महाभटान् । यशोराजमुखान्भूरीन्ययौ मन्दप्रतापताम् ॥१३१३॥
शनैरपसरन्सोथ तारमूलकमासदत् । उच्चलाधिष्ठितास्तेपि विद्विषन्तस्तमन्वयुः ॥१३१४॥
1315 समेतसामन्तसैन्येन तेन तत्र चिरं धृतः । उच्चलप्रलयाभस्य पौरस्त्यानिलविभ्रमः ॥१३१५॥
सैन्ययोरुभयोस्तत्र जयश्रीकरिणीकृते । बभूव तुल्यसंघर्षः सेर्ष्ययोरिव दन्तिनोः ॥१३१६॥
आनन्दनामाप्युत्पिञ्जोत्थानमुच्चलमातुलः । चक्रे मडवराज्येथ निर्विडीकृतडामरः ॥१३१७॥
तद्विप्लवे डामरौघा दिग्देशेभ्यः सहस्रशः । उन्ममज्जुर्हिमापाये रन्ध्रेभ्य इव षट्पदाः ॥१३१८॥
तत्क्षणं क्षीणभाग्यस्य यथा द्वारपतिस्तथा । कायस्थः कम्पने राज्ञः सहेलोभून्महत्तमः ॥१३१९॥
1320 आनन्देन कृतास्कन्दो बहुशो विहिताहवः । औज्झीन्मडवराज्यं स न यत्तद्वभूत्तदा ॥१३२०॥
अथाद्भुतप्रतापेन वेष्टयित्वा महाचमूम् । उच्चलेनाहवे बद्धः ससैन्यो मण्डलेश्वरः ॥१३२१॥
न विद्मः किं तदा वृत्तं योधानां यत्किलाविदन् । ते सखड्गाश्वसंनाहा बद्धा वयमिति स्फुटम् ॥१३२२॥
तथा बद्धोपि निर्दध्यौ स भव्यः प्रभवे हितम् । स्वामिभक्तिर्विपर्येति पर्यन्तेपि न मानिनाम् ॥१३२३॥
तूर्णं पुरप्रवेशाय सोथ प्रैरयदुच्चलम् । विश्वास्य नेदृगन्योस्ति क्षण इत्यसकृद्ब्रुवन् ॥१३२४॥
1325 विशतस्तस्य चानेकैः पुरग्रामानलुण्ठयत् । कर्मणानेन कौलीनमस्यास्त्विति विचिन्तयन् ॥१३२५॥
परिहासपुरे तेन स ततः संप्रवेशितः । श्वभ्राम्बुविषमाद्यस्मान्निर्गमोत्यन्तदुर्गमः ॥१३२६॥
तत्रोच्चलं चतुःशाले स्वं च दग्धुमचूचुदत् । निशान्त निशि ते तत्तु न चक्रुस्तद्धितैषिणः ॥१३२७॥
यथा चित्तं तथास्य स्यात्कायश्चेत्साहसक्षमः । तदात्मनिरपेक्षस्य किं न सिध्येन्मनीषितम् ॥१३२८॥
क्लीबच्छन्नवपुस्त्वचा सह वसत्यच्छेद्यया कच्छपो निर्वर्मा रणकर्मसाहसमहोत्साहश्च सिंहः सदा ।
धिक्प्रादुष्कृतपक्षपातरभसो नीचेषु मुग्धो विधिर्वीराणां कुरुते शरीरमभितो वैकल्यशल्याहतम् ॥१३२९॥
1330 संदिदेशाथ स क्ष्मापमाकृष्यायं मयागतः । सृगाल इव ते क्षिप्तः क्षिप्रं निर्गत्य बध्यताम् ॥१३३०॥
ततः समस्तसामन्तसैन्यसंततिसंयुतः । अद्य मृत्युर्जयो वेति निश्चित्य निरगान्नृपः ॥१३३१॥
स प्राणसंशये सर्वायासप्रशममादिशत् । पटहोद्घोषणेनासीत्पौरैरनुगतोखिलैः ॥१३३२॥
प्राप्तं भरतसेत्वग्रं घ्नन्तः सैन्यं विरोधिनम् । आजानेयै राजभृत्याः क्षणान्मार्गमलङ्घयन् ॥१३३३॥
क्षुभितेष्वाविधायाते राजसैन्ये द्विषद्बलम् । मण्डलेश्वर एवान्तःप्रविष्टो निरनाशयत् ॥१३३४॥
1335 अथोच्चलबले भग्ने विदुद्रुः केपि आङ्गिकाः । भ्रान्त्वा राजविहारं च प्राविशन्केपि डामराः ॥१३३५॥
त्रिल्लसेनाभिधं दृष्ट्वा प्रविष्टं[1] डामरं परे । उच्चलोसाविति भ्रान्त्या विहारं तमदाहयन् ॥१३३६॥
सोमपालाभिधेनारिहयारोहान्तरे चिरम् । कुर्वन्दर्शनपालस्य पितृव्येण सहाहवम् ॥१३३७॥
यत्नाज्जनकचन्द्राद्यैर्मानी व्यावर्तितो रणात् । परिहासपुरात्पापान्मृत्युवक्त्रादिवोच्चलः ॥१३३८॥

---

१३११. [1]) Thus $A_1$; corr. by later hand into कांकायवैश्य°. १३१९. [1]) Emended; A सहलो.—[2]) Emended; A °भूमहत्तमः. १३३२. [1]) Doubtful; thus emended with C; A °सीत्पारैर°. १३३६. [1]) Thus $A_1$; corr. by later hand into प्रविष्ट.

वितस्तां गौरिकावालं¹मामासीर्स्वां हयान्वितः । स डामरैः सह पुनः प्रययौ तारमूलकम् ॥१३३९॥
जयेन तावन्मात्रेण कितवोल्प इवोन्मदः । राजा प्रशंसयानन्दं राजधानीं न्यवर्तत ॥१३४०॥ 1340
जीवन्तमप्यरिं मुक्त्वा न पश्चादलगत्स यत् । आसन्नुच्छ्वसितास्तेन भङ्गभाजोपि डामराः ॥१३४१॥
यातान्पलाय्य तान्ज्येष्ठामूलीये मासि सर्वतः । भूयोपि संघटयितुं स्थिरधीरैच्छदुच्चलः ॥१३४२॥
स्वदोर्मात्रसहायस्य परायत्तस्य मानिनः । दुर्भिक्षान्तर्महोद्योगः स तस्य विषमोभवत् ॥१२४३॥
तन्मध्येतिदरिद्रेपि संग्रामं स ररक्ष यत् । तमुत्पाद्यानयद्राजा श्रीपरीहासकेशवम् ॥१३४४॥
तस्मिन्विघटिते पांसुः कपोतच्छदधूसरः । रोदसीच्छादनं हर्षशीर्षच्छेदावधि व्यधात् ॥१३४५॥ 1345
प्रागन्धकारो¹ देशेस्मिन्दिवसेपि व्यजृम्भत । कूपिकादिवसालोक इति यत्प्रथे जने ॥१३४६॥
निवेशिते परीहासकेशवे प्रशशाम तत् । तस्मिन्नुन्मूलिते भूयः सार्धं मासमजृम्भत ॥१३४७॥
किंचिदुच्छ्वसिते राज्ञि मन्दोद्रेकतया रिपोः । दिशा शूरपुरस्याथ सुस्सलः प्रत्यदृश्यत ॥१३४८॥
अवनाहे¹ स हि वसन्नुपालम्भपरैः पितुः । संदेशैः शंसतो ज्येष्ठमौदासीन्यादपाहतः ॥१३४९॥
हृत्वान्कल्हक्षितीशेन कांश्चिदादाय वाजिनः । चिरेण राजदाक्षिण्यमौज्झीत्तेन व्यलम्बत ॥१३५०॥ 1350
आरम्भादुदयान्तं च तिष्ठन्वैरेपि निष्ठुरे । साम प्रयुयुजे मोहावहं¹ मायानिधी रिपोः ॥१३५१॥
जित्वा माणिक्यनामानं तेन सेनापतिं रणे । प्रापि शूरपुरद्रङ्गाज्जयश्रीः श्रीश्च भूयसी ॥१३५२॥
तस्याभ्युदयपात्रस्य तया संप्राप्तया श्रिया । आरब्धिसमयः कृत्स्नः स विभूत्यद्भुतोभवत् ॥१३५३॥
मण्डलेश्वरपद्मादीनविचिन्त्योच्चलं ततः । प्राहिणोन्नृपतिर्योद्धुं सुस्सलं क्षिप्रकारिणम् ॥१३५४॥
तेन शूरपुरे भग्नास्तद्योधाः शौर्यशालिना । भूयांसः प्रलयं प्रापुर्मग्ना वैतरणीजले ॥१३५५॥ 1355
तत्र दर्शनपालस्य स्वामिद्रोहकृतो वपुः । विक्रामतो न संस्पृष्टं खिन्नयेव जयश्रिया ॥१३५६॥
राजसैन्यं तदन्यैर्हतशेषं पलायितम् । लोकपुण्ये निवसतः सहेलस्यान्तिकं ययौ ॥१३५७॥
सुस्सलापातकल्पान्तं विशङ्क्यापि सहेलकः । तैस्तैर्भग्नैर्बलैः साकं नगरं प्राविशत्ततः ॥१३५८॥
एवमभ्येत्य नृपतौ सुस्सलेन विलङ्घिते । अवाप तारमूलस्थः प्रतिष्ठां पुनरुच्चलः ॥१३५९॥
बिभ्यद्भिस्तुरगानीकात्स्पर्धिप्रायैः¹ स डामरैः । आनिन्ये शैलदुर्गेण भूयो लहरवर्त्मना ॥१३६०॥ 1360
राजाप्युदयराजाख्यं कृत्वा द्वारपतिं पुनः । प्राहिणोदुच्चलं जेतुं लहरे मण्डलेश्वरम् ॥१३६१॥
ततः पद्मपुरं प्राप्ते मातुले मल्लजन्मनोः । न कोपि कम्पनं भूपान्मन्त्री त्रासातुरोग्रहीत् ॥१३६२॥
को मेस्तीति विनिश्चित्य वदतोथ महीपतेः । अधिकारस्रजं हस्ताच्चन्द्रराजः समाददे ॥१३६३॥
अनाशीः शयने मृत्युर्येषां तेषां स वंशजः । श्रीजिन्दुराजमुख्यानामौचित्यं प्रत्यपालयत ॥१३६४॥
स द्रौणिरिव निर्नष्टे काले सेनापतिः कृतः । निर्गत्य तत्पद्मपुरादरिसैन्यं न्यवारयत् ॥१३६५॥ 1365
विपक्षः कम्पनेशः स तेन क्ष्मां क्रमतां¹ शनैः । नवम्यां शुक्लनभसो हतोवन्तिपुरान्तरे ॥१३६६॥
स हि गोवर्धनधरोपान्ते कुर्वन्निराहवम् । स्वसैन्यैर्वर्जितो गीतं शृण्वन्परिमितानुगः ॥१३६७॥

---

१३३९. ¹) $A_2$ gloss परिहासपुरसमीपे गुरिकाबलमस्ति. १३४६. ¹) Emended; A °कारदेशे°. १३४९. ¹) Thus $A_1$; $A_2$ (?) अवनाहे; $A_2$ gloss पीडुपावमामे. १३५१. ¹) Emended; A मोहौवहं. १३६०. ¹) Emended; A °नीकात्स्पर्धि°. १३६६. ¹) Emendod, A क्रमता.

प्रविश्यारिहयारोहैर्वितस्तातीरवर्त्मना । प्राप्तोकस्माद्भयं लेभे प्रमत्तानां शुभं कुतः ॥ १३६८॥
प्रहितं चन्द्रराजेन क्ष्मापतिर्वीक्ष्य तच्छिरः । भूयो जयाशामकरोद्दानुकूल्यं विदन्विधेः ॥१३६९॥
1370 वैमुख्येन व्रजन्कुर्यात्सांमुख्यैरन्तरा विधिः । प्रत्यागमभ्रमं सिंह इव व्यावृत्य वीक्षितैः ॥१३७०॥
अथ लब्धबलश्चन्द्रराजोमन्दोद्यमोविशत् । विजयक्षेत्रमाकर्षन्कटकं दशधाष्टधा ॥१३७१॥
तुलाधर इव स्रष्टा साम्यभङ्गं न चक्षमे । तदा द्वयोः कटकयोस्तुलायाः पुटयोरिव ॥१३७२॥
प्राप्ते यतस्तृतीयस्मिन्दिवसे मण्डलेशितुः । अकालवृष्टिविवशं लहरे व्यद्रवद्बलम् ॥१३७३॥
शीतवातहता योधा मग्नाः केदारकर्दमे । तुरगासितनुत्रादि शक्तियन्त्र इवामुचन् ॥१३७४॥
1375 उच्चलेन ततो रक्ष्यमाणमप्यार्द्रचेतसा । प्राप्तं जनकचन्द्राद्या निजघ्नुर्मण्डलेश्वरम् ॥१३७५॥
हर्षभूभृद्भृत्यवर्गे द्रोहशङ्काङ्किते परम् । कलेवरव्ययात्कीर्तिः क्रीता तेनैव मन्त्रिणा ॥१३७६॥
ध्रुवं संस्पर्धतो वन्द्या देवशर्मादयोस्य ते । न चेत्कोपि विपर्यासे दोषमुद्घोषयेज्जनः ॥१३७७॥
लवन्योग्मूलनारातिव्यूहव्यामोहनादयः । विध्यधीने फले ध्याते स्तुत्याः कस्य न तत्क्रियाः ॥१३७८॥
किं पातालतमो न हन्ति हिमगुः किं नो विषं भीतये पानीयं गिलतः किमान्तरशिखिध्वस्त्यै न धन्वन्तरिः।
सर्वत्रैकपदे प्रयात्यफलतां वाच्यो जडो नाम्बुधिः सिद्धेर्दैवविधेयतां विमृशतां स्तुत्यैव वस्तुज्ञता ॥१३७९॥
1380 स्वामिकृत्योद्यमस्तुल्यस्तुतिषु स्त्रीषु पूज्यताम् । गङ्गा तज्जननी स्वस्य नमस्यन्त्यविशङ्किताम् ॥१३८०॥
साहसे सा हि तनये यत्र तत्र महीभुजा । प्रहीयमाणे तं खेदमोहिताह स्म भूभुजम् ॥१३८१॥
अनन्यसंततेरेकं सुतमेतं प्रभो मम । मा नियुङ्क्थाः यत्र तत्र कार्ये संदेहितासुनि ॥१३८२॥
स तामकथयन्मातर्यथा तेनन्यसंततेः । तथा मेनन्यभृत्यस्य सोयमेकोवलम्बनम् ॥१३८३॥
स्वसंभवस्य तां[1] भर्तुर्भक्तिसंभावनामसौ । प्राप्तप्रतिष्ठानिष्ठायां मेने मानवती सती ॥१३८४॥
1385 उच्चलस्य क्षणे तस्मिन्हिरण्यपुरमीयुषः । राज्याभिषेकं संभूय तत्रत्या ब्राह्मणा ददुः ॥१३८५॥
नृपमत्यन्तविवशं प्रसङ्गे तत्र मन्त्रिणः । भूयांसः सन्ति तैः सार्धं व्रज तद्लोहराचलम् ॥१३८६॥
प्रजा एव ततः शान्तोत्कण्ठा नवनृपं प्रति । त्वामानेष्यन्ति न चिराद्दिनैर्वा स्वयमेष्यसि ॥१३८७॥
सोभ्यधादवरोधस्त्रीकोशसिंहासनाद्यहम् । असामान्यं परित्यज्य गन्तुं सपदि नोत्सहे ॥१३८८॥
पुनस्तेकथयन्नाप्ता यान्तोध्यारुह्य वाजिनः । पृष्ठे विन्यस्य नेष्यन्ति कोशान्तःपुरयोषितः ॥१३८९॥
1390 श्वपाकीकामुकोप्यासीद्यस्मिंस्तदपरोपि चेत् । सिंहासनं समारोहेत्काभिमानक्षतिस्ततः ॥१३९०॥
आस्तामेतत्परं ब्रूथ मन्त्रमित्यथ चोदिताः । ते पार्थिवेन भूयोपि ससंरम्भं बभाषिरे ॥१३९१॥
क्षत्रधर्मं पुरस्कृत्य शासतां क्ष्मां क्षमाभुजाम् । को दैन्यस्यावकाशः स्यादाशीर्येषां मृधे वधः ॥१३९२॥
अनुयोगश्च लज्जा च भयं द्वैधं च मन्त्रिणा । भूभुजां व्यसनोल्लासे शत्रवो न तु गोत्रिणः ॥१३९३॥
कार्यं न पश्येदलसः स्वयं यो भृत्येषु विन्यस्तसमस्तकृत्यः ।
यष्ट्याश्रयस्येव विनष्टदृष्टेः पदे पदे तस्य किलोपघातः ॥१३९४॥

---

१३७९. [1]) Emended ; A भाग्य°. १३८२. [1]) Emended ; A नियुङ्क्था. १३८४. [1]) Emended ; A ता भर्तु°. १३९२. [1]) Thus $A_1$ ; corr. by later hand into सैन्य°.

लङ्घेतमस्य स्वबमात्तशस्त्रः स्वल्पस्य शत्रोः कलयन्नवज्ञाम् ।
एवं किलाहीर्बमतिर्बिहाति स्वयं प्रवृद्धिं क्षपया विमुग्धः ॥१३९५॥ 1395
कालेन याति क्रिमितां महेन्द्रो महेन्द्रभावं क्रिमिरप्युपैति ।
अयं प्रतीपानयनप्रसिद्ध इत्येव नित्यानुचितोभिमानः ॥१३९६॥
पराभवाधायि भयं जिगीषोः सर्वाङ्गवैकल्यवताहितेन ।
येनाभियुक्तः स समस्तसंपत्पूर्णोपि वैकल्यहतत्वमेति ॥१३९७॥
लब्धस्थितिः स्फीतविभूतिपार्श्वं दीनोभियोक्ता परपिण्डवृत्तिः ।
आद्ये कथं नाम पराभवः स्याज्जयं भवेच्चेह न तत्र भावः ॥१३९८॥
अमात्यवैमत्यवशेन निद्रा कृता न कार्यस्य तनीयसोपि ।
वैशाखरज्ज्वोरिव कर्षकाभ्यां पर्याययोगेन कृते विकर्षे ॥१३९९॥
समग्रशक्तेरेकेनाप्याशाक्रान्तस्य भूपतेः । वैरी सर्वाङ्गहीनोपि राज्यमाशु कर्षति ॥१४००॥ 1400
यत्र द्विपस्तत्र याहि क्रान्तां क्रान्तां च मेदिनीम् । पानार्थी न चिरादेवं पुनर्जयमवाप्स्यसि ॥१४०१॥
विधुरेपि क्षितौ भृत्यसहस्रपरिवारितैः । पतद्भिराहवे भूपैः कथात्याभिख्ययोपलभ्यते ॥१४०२॥
नृत्यच्छिन्नशिरोधरोत्कुरनटे ज्वालावलीगागुणप्रक्रान्तिन्दुदयच्छिन्नांमुखशिखिज्वालाप्रदीपाङ्कुरे ।
धन्याः केप्युपलभ्य वीरशयने शान्ताभिमानज्वरोल्लाघश्लाघ्यशरीरतासफलितस्निग्धाशिषः शेरते ॥१४०३॥
उदात्तमित्यन्तकृत्यं संचिन्त्यं कितवा इव । राज्ये भजन्ते दीव्यन्तः क्षत्रियास्त्वासहीनताम् ॥१४०४॥
मन्त्रान्तरानुयोक्तारं तदप्युत्सृज्य मन्त्रिणम् । पदवं प्राप्तकाले च तं निःश्वस्य तमब्रुवन् ॥१४०५॥ 1405
उत्कर्षवरसंस्त्यक्तुमपि शक्तोपि संकटे । अन्यथानुचितं किंचित्प्राप्स्यस्यहितचिन्तितम् ॥१४०६॥
स तानुवाच स्वं हन्तुं न शक्तोहं ततो मयि । भवद्भिरेव विषमे प्रहर्तव्यमुपस्थिते ॥१४०७॥
गिरं कापुरुषस्येव क्लैब्यग्रस्तस्य तां प्रभोः । सबाष्पास्तेनुशोचन्तः पुनरेवं बभाषिरे ॥१४०८॥
प्रतीकाराय नः शक्तिर्न चेदेवहतौजसाम् । प्रत्युतैवंविधे कृत्ये प्रसरेयुः कराः कथम् ॥१४०९॥
पशून्पुरुषरूपान्स नूनं भूभृत्पुपोष तान् । दुःखमोदक्षमं तस्य ये तादृग्दैन्यमीयुषः ॥१४१०॥ 1410
युगान्तानपि जीवित्वा कायः सापाय एव यः । तस्यागमात्रसाध्येर्थे धिग्दैन्यमनुजीविनाम् ॥१४११॥
योषितोपि विशन्त्यग्निं ये ध्यात्वा विस्मृतिं व्रजेत् । भर्तृस्नेहः स पुंसोपि यस्य कोन्यस्ततोधमः ॥१४१२॥
दीप्तवस्त्येव ये शोकभयदैन्याद्यविक्रियाः । भर्तुः पश्यन्ति तैरेवा भूः सतीर्थाप्यपावनी ॥१४१३॥
क्षुत्क्षामस्तनयो वधूः परगृहप्रेष्यावसन्नः सुहृद्दुग्धा गौरशनाद्यभावविवशा हम्बारवोद्गारिणी ।
निष्पथ्यौ पितरावदूरमरणौ स्वामी द्विषन्निर्जितो दृष्टो येन परं न तस्य निरये भोक्तव्यमस्त्यप्रियम् ॥१४१४॥
अथोपि मानुषपशून्स तान्नृपतिरब्रवीत् । उदात्तकृत्योप्याविश्य भूतैरिव विमोहितः ॥१४१५॥ 1415
एतस्मिन्पश्चिमे काले भुक्तं राज्यं यथा मया । जाने विशालेश्वरतया तथान्यो नोपभोक्ष्यते ॥१४१६॥

---

१३९५. [1]) ह supplied by $A_2$ in space left by $A_1$. १३९८. [1]) Thus corr. by later hand from $A_1$ [illegible]. १४०३. [1]) Emended; $A_1$ has written first °क्षुरनट and corrected this into °क्षुरनटे.—[2]) Thus cor. by $A_1$ from ज्वालाय°.—[3]) Thus corr. by $A_1$ from °च्छिन्नौ.—[4]) च omitted in A. १४०४. [1]) Thus A; perhaps to b emended [illegible]. १४०९. [1]) Emended; A पुरुषं. १४११. [1]) Emended; A च:.

यमः कुबेरश्चीशाग्रे राज्ञां तिष्ठन इत्यसौ । सदैकशरणैवाभूत्ख्यातिरस्मिन्कलौ युगे ॥१४१७॥
रामोपेन्द्रमहेन्द्राद्याः प्रयातारो यदध्वना । उपस्थितायां नियतौ तत्र मर्त्यस्य काः शुचः ॥१४१८॥
किं तु दूये यदेषा भूर्भुक्त्वा कुलवधूरिव । महोपालद्रूचेटीव प्राप्ता प्रसभभोग्यताम् ॥१४१९॥
1420 इतः प्रभृति यः कश्चिद्राज्यस्यास्य गतौजसः । चक्रिकाभावसाध्यस्य आनयात्रां करिष्यति ॥१४२०॥
अलौकिके कृते यत्नशौर्यस्य फलवन्ध्यताम् । प्रायोऽद्यैरल्पसत्त्वैर्दर्पोन्नूनं हसिष्यते ॥१४२१॥
कार्यारम्भः फलोल्लासमालोक्य प्रायशो जनैः । अनानुगुण्यगणना कुमार्गैर्न विमर्श्यते ॥१४२२॥
पक्षान्तकोटिरवलम्बनभूः स नेत्रं दुग्धेन यस्य मरणं धियि कैरिवेत्थम् ।
पारं गते मथनकर्मणि मन्दराद्रेर्दोषोर्ध्यते त्रिगुणहेतुपरीक्षणेन ॥१४२३॥
शौवसंरम्भविच्छेदेऽपि श्रीगर्भस्त्वमदर्शयम् । जनोपजीवनार्थं यत्तज्ज्ञातं जायातिक्षये ॥१४२४॥
1425 उच्छलेनापि सत्कृत्ये हस्तामोक्षेयचेतसा । दर्शितस्थामदर्पानं करिष्यन्ते विडम्बनाः ॥१४२५॥
गतोयमानाच्च बालास्तमालोच्य विहस्यताम् । समर्थनेच्छुर्वाञ्छामि मृत्युमीदृशमप्यहम् ॥१४२६॥
स्वैरेव स हतो नो चेत्कस्तस्माद्वसुधां हरेत् । लब्धां रक्षितुमिच्छामि ख्यातिमेतेन हेतुना ॥१४२७॥
मुक्तापीडः पुरा राजा ज्वलित्वा मूर्ध्नि भूभुजाम् । कार्पण्यप्रणयं प्राप लब्धरन्ध्रो विरोधिभिः ॥१४२८॥
स युत्तरापथे मानापथस्थगितसैनिकः । मितानुगोहितै रुद्धमार्गो भूदुर्गमेऽध्वनि ॥१४२९॥
1430 तं शल्यो नाम सामन्तवैरल्यविवशो नृपः । बन्धुं प्रतिज्ञामकरोद्वाजिलसैर्युतोटभिः ॥१४३०॥
स सामप्रमुखोपायापायध्यानावसन्नधीः । भवत्स्वाम्यभिधं कृत्यमपृच्छन्मुख्यमन्त्रिणम् ॥१४३१॥
असाध्यां सोऽपि निर्ध्याय विनिपातप्रतिक्रियाम् । न्याय्ये निश्चित्य नैयत्यं कर्तव्ये प्रत्युवाच तम् ॥१४३२॥
उपाययुक्तिप्रत्युक्तौ कृत्ये कीर्त्यभिमानिनाम् । निःसंभ्रमेव प्रतिभा लोभेनाक्षोभिते हृदि ॥१४३३॥
कृत्यं कृत्यविदो लब्धप्रसिद्धिपरिरक्षणम् । साम्राज्योपार्जनमुखो व्यापारस्त्वानुषङ्गिकः ॥१४३४॥
1435 गच्छच्छरीरविच्छेदादपि भस्मावशेषताम् । कर्पूरः सौरभेणेव जन्तुः ख्यात्यानुमीयते ॥१४३५॥
शान्तयोर्जीवितस्थानं द्वयमप्यद्भुतं द्वयोः । अनङ्गस्याङ्गनापाङ्गः स्तोकृणिका यशस्विनः ॥१४३६॥
ख्यातसंरक्षणं नाम जन्तोः कल्पान्तरस्थितिः । वर्तन्ते कीर्तिकायस्य संपूर्णाः परमाणवः ॥१४३७॥
धीरैर्विधिश्च निर्व्येयो विरोधिष्ववधानवान् । यस्तेषामुन्नतिध्वंसाय यततेऽन्वहम् ॥१४३८॥
भृङ्गावपातनहठव्यसनी विधाता स्वोत्पत्तिपद्मकुलजेऽपि सरोजषण्डे ।
संकोचिनि द्विजपतावपि भुक्तिबन्ध्ये मातङ्गहस्तपतनैः कुरुतेऽपमानम् ॥१४३९॥
1440 ये हठापातिनो धातुर्धैर्यं[1] ख्यातिनिपातने । रक्षितुं समुपेक्षन्ते तैः किं नाम —[2] रक्षितम् ॥१४४०॥
जातिः क्ष्माभृति वंशजाभ्यनतया ख्यातिप्रतिष्ठामिमामुद्दीप्यानलमुज्झितस्ववपुषः केऽप्यत्र वेत्राङ्कुराः ।
त्रातुं हन्त विदन्ति ये न विधिना क्रुद्धेन पृथ्वीभृता द्वारि द्वाःस्थकरैर्गतागतखलीकाराणि संप्रापिताः ॥१४४१॥
भोगापवर्गणभूयिष्ठानिष्टान्प्रामानवेत्य तत् । प्रतिष्ठासौष्ठवत्राणे संरब्धुं देव सांप्रतम् ॥१४४२॥

---

१४३०. [1]) Thus $A_1$; $A_2$ °वैरल्य°. १४४०. [1]) Thus corr. by $A_1$ or a later hand from °धातुरिव.—[2]) The *lacuna* not indicated in A; न supplied in R C.

दण्डकालककाख्यस्य तद्रोगस्याशुकारिणः । पार्थिवाकस्मिकोत्थानं मिषादय प्रकाशयताम् ॥१४४३॥
श्वो वक्तास्म्यथ कर्तव्यं व्यापत्क्षपणक्षमम् । उक्त्वेति स महामात्यो निर्गत्य स्वगृहानगात् ॥१४४४॥
दण्डकालककं दण्डधरो व्यस्तम्भिघाततः । अधीर इव चक्रन्द लुठद्विस्पन्दलोचनः ॥१४४५॥ 1445
स्वेदसंवाहनश्वेदवमनादैरुपक्रमैः । निःशैथिल्यव्यथं तेन मुमूर्षुं तं जनोवदत् ॥१४४६॥
ततो निश्चितमृत्युत्वं पत्युः कथयता कृतः । वह्निप्रवेशोमात्येन कृतशल्यनिवेदकः ॥१४४७॥
कर्तव्यशेषं दाक्षिण्यादनाचक्षाणमग्रतः । गुणयोक्तिनिष्ठुराचारमन्तस्तुष्टाव तं नृपः ॥१४४८॥
अप्रौढः सोढुमुग्रामां व्यथामस्मीति वादिना । राज्ञाप्यनलसादेहं ततश्चक्रेभिमानिना ॥१४४९॥
तेन प्राणानुपेक्ष्यैवमन्यख्यातिर्मनस्विना । ऊर्ध्वाधिरोहे सोपानं कृतं न निजकीर्तनात् ॥१४५०॥ 1450
एवं दैवोपनीतानामख्यातीनां चिकित्सितम् । स्वधियामात्यबुद्ध्या वा पारमेति मनस्विनाम् ॥१४५१॥
इत्युक्त्वा विरतो वंशबीजरक्षार्थमात्मजः । भोजो निसृज्यतां कोटमेवमूचेथ मन्त्रिभिः ॥१४५२॥
तं राजपुत्रं प्रस्थानमङ्गलान्ते विनिर्गतम् । पुनर्व्यावर्तयामास दण्डनायकमोहितः ॥१४५३॥
सा धीः स साहसारम्भस्तद्वैहल्यमापदि । नष्टमेकपदे तस्य नाशकाले ह्युपस्थिते ॥१४५४॥
लक्ष्मीर्तडिल्लता[1] कीर्तिबलाका शौर्यगर्जितम् । प्रतापशक्रचापं च भागधेयाम्बुदानुगम् ॥१४५५॥ 1455
धीशौर्यादिगुणेन भाग्यसमये प्रागेव एको नृपः शक्रस्याक्रमणं क्रियेत न कुतोऽनेनेति संभाव्यते ।
मौग्ध्यं पङ्कजडान्धवच्च स ततो गच्छन्नभाग्योदये दत्तोऽनेन पदक्रमो भुवि कथं नाभेति संचिन्त्यते ॥१४५६॥
विरोधिप्रतिरोधाय तन्त्रिसैन्यं विसर्जितम् । नगरस्थमपि क्ष्मापाप्यवासधनमादधे ॥१४५७॥
दायादाभयदं राजभृत्याः सर्वेऽपि चक्रिरे । ये केचिच्चचसम्भोहे ते दैवैरेव केवलम् ॥१४५८॥
पराभयपरं द्विषा न संकल्पमपि व्यधुः । किं वा स्तुमस्तैर्यैः स्त्रीवदमुच्चसंचिरादसन्[1] ॥१४५९॥
यां काणश्यावतीनर्तक्यन्वये कापि नर्तकी । पुत्रीचक्रे क्वापि जातां जयमत्याभिधाथ सा ॥१४६०॥ 1460
भूत्वा गृहीतकौमारा तरुण्युज्ज्वलरागिणी । धनलुब्धावरुद्धास्त्रमभजन्मण्डलेशितुः ॥१४६१॥
तस्मिन्हते नरेश्वास्वापत्रपोज्ज्वलमायया । तथैव दैवयोगेन पट्टदेव्या भविष्यते ॥१४६२॥ तिलकम्[1] ॥
आबद्धपङ्क्त्यधर्यामुञ्चलाभर्षिणीं व्यधुः । भूपालदर्शनेप्यस्तभीतयो राजसेवकाः ॥१४६३॥
वेतनस्वीकृतैः सर्वैः शिक्षाधायी पुरस्कृतः । लोभावमानागुह्योऽप्य योधश्रद्धां हरन्युधि ॥१४६४॥
मन्दप्रतापताप्राप्तो नर्मोक्त्या मर्मभेदकृत् । आहारादिक्षणे कर्ता प्रक्रियार्थनया कलेः ॥१४६५॥ 1465
अतीव प्रभुदानादिमाहात्म्याख्यानकोविदः । एक एकीकरोद्योधः पृतनानां विलक्षणम् ॥१४६६॥ युग्मम्[1]॥
श्रीलेखाभ्रातृसूनोर्यस्तनयो व्यड्डमङ्गलः । मल्लज्ञातीयकोपेन स राज्ञास्कन्द घातितः ॥१४६७॥
मातुलस्यात्मजा मल्लापत्यस्तस्य गेहिनी । श्वश्र्वा समं स्ववसतीरादीप्य दहने मृता ॥१४६८॥
मौनव्रतादिनियमच्छन्नक्रौर्योऽन्तकोपमः । करोत्यभ्यन्तराभिचारान्मल्लः परमदाम्भिकः ॥१४६९॥
तदेव युवराज्येच्छुर्वध्यतां[1] निर्भयं रिपुः । शाहिपुत्रीभिरित्यूचे तस्मिन्नवसरे नृपः ॥१४७०॥ 1470

१४५५. ¹) Emended; A लक्ष्मीस्तडि°. १४५९. ¹) Emended; A °मुच्चरचि°. १४६२. ¹) A₁ writes here ३ instead of तिलकम्. १४६६. ¹) A₁ writes here २ instead of युग्मम् (युगलकम्). १४७०. ¹) Emended; A °र्वध्यतां.

स्वयं प्रावात्समास्कन्दं द्वारि स्थितवतः पुरः । तस्य प्राणार्थिनो वाक्यापूर्व्वं मल्लस्य निर्ययौ ॥१४७१॥
स हि हैराज्यसञ्ज्ञाभ्यां पुत्राभ्यां प्रार्थितोपि सन् । मुनिव्रतः सदाचारानुरोधात्त्यजनृपम् ॥१४७२॥
विश्वासाय परं राज्ञो भ्रातृजाशीर्भविष्यतोः । द्वैमातुरान्सल्हणादीञ्जीवे दत्त्वावसद्गृहे ॥१४७३॥
आसेदुषे मुनिदशामाजन्मप्रीणिताश्रये । तथा स तस्मै चुकोप प्रत्यासन्नवधो नृपः ॥१४७४॥
1475 स युद्धाभ्यर्थनं कुर्वन्नाहूतः परिपन्थिभिः । रेजे तेनैव वेषेण समराय विनिर्गतः ॥१४७५॥
उपवीत्यक्षसूत्राङ्कपाणिर्दर्भोज्ज्वलाङ्गुलिः । भस्मस्मेरललाटाङ्को जामदग्न्य इवापरः ॥१४७६॥
स्नानार्द्रधवलश्यामलोलधम्मिल्ल[1]लीलया । देहत्यागे प्रयागाम्बु धारयन्निव मूर्धनि ॥१४७७॥
उष्णीषी वीरपट्टेन खेटकेनोष्णवारणी । सोसिधारातीर्थपान्थो दण्डी खड्गेन दिद्युते ॥१४७८॥
भोगे पुरस्कृताः केचित्तत्कृत्याः पूर्वनिर्गताः । अमर्त्यनारीभोगेपि तस्यासन्नग्रभागिनः ॥१४७९॥
1480 द्वौ रथ्यावट्टविजयौ द्विजौ पौरोगवस्तथा । कोष्ठकः सज्जकाख्यश्च योद्धा[1] युद्धे हता बभुः ॥१४८०॥
क्षतोप्युदयराजाख्यः क्षत्तायुः[1]शेषतस्तथा । प्राणैर्नियोगभागाजौ नाञ्जकोपि व्ययुज्यत ॥१४८१॥
शिरोधियोधैर्नीरन्ध्रं द्वारमालोक्य सर्वतः । त्यक्तकम्पो ददौ झम्पां स तेषामेव मूर्धनि ॥१४८२॥
शैवलेष्विव खड्गेषु खेटकेष्वम्बुजेष्विव । अरसा धवलो भ्राम्यन्राजहंस इवाबभौ ॥१४८३॥
क्षणाच्च ददृशे शातशरशङ्कुशताचितः । प्रवीरो वीरशयने क्षमो भीष्म इवापरः ॥१४८४॥
1485 शोच्यं गतायुषो राज्ञः किं नाभूत्तस्य तादृशः । चिच्छेद यः शिरः पृष्ठे हयं च भ्रमयन्स्मयात् ॥१४८५॥
राज्ञी कुमुदलेखाख्या मल्लस्याला च वल्लभा । गृहेऽजुहुतां वीतिहोत्रे गात्राणि संभृते ॥१४८६॥
राजात्मकल्ययोः पत्न्यौ बाले सल्हणरल्हयोः । स्नुषे मल्लस्यासमती सहजा चाग्निसाद्गते ॥१४८७॥
सर्वोपभोगभागिन्यस्तदन्तःपुरयोषिताम् । परिवाराङ्गना वह्नौ षट्चाष्टैव विपेदिरे ॥१४८८॥
महागृहाग्नितापेन शोकोष्णैश्च जलाम्बुभि. । तप्ताम्भसो वितस्तायास्तीरे ग्रामे बभूव तत् ॥१४८९॥
1490 प्रवर्धितायाः स्तन्येन द्रष्टुमक्षमया पयः । दास्यमानं निवापेषु पुण्याश्वान्नाख्यया समम् ॥१४९०॥
धात्र्या परस्मिन्वै तस्मिंस्तीरे स्वान्तःपुरे स्थिता । माता भविष्यतो राज्ञो[1]र्नन्दानिम्बकुलोद्भवा ॥१४९१॥
महानसाग्निधूमेन संलक्ष्यात्रीक्ष्य पुत्रयोः । सोत्कण्ठं कटकौ सौधादुदग्दक्षिणदिक्स्थयोः ॥१४९२॥
कियतां दिवसैरेव पुत्रौ शत्रोः पितृद्विषः । जामदग्न्यार्थिनं वंशे शप्त्वेति नृपतिं सती ॥१४९३॥
अनिषण्णेव दीप्ताग्नौ गृहे स्वं निरदाहयत् । प्रनृत्यन्तीभिरालीभिरिव ज्वालाभिरावृता ॥१४९४॥
1495 वधे दर्शनपालस्तु नृपे प्राप्ते प्रतिक्षणम् । अन्यद्भुतैरन्तरायैरायुःशेषेण रक्षितः ॥१४९५॥
वर्षमात्रावशेषायुर्यद्वा द्रोहेण रक्षितः । सोत्रमानस्य पुत्रस्य रोगजस्य च भुक्तये ॥१४९६॥
कृष्णभाद्रनवम्यां तं वधं श्रुतवतोः पितुः । मल्लात्मजन्मनोः शोकः कोपेन निरपीयत ॥१४९७॥
आवल्लिपुरकग्रामात्प्रज्वलत्क्रोधवह्निना । अधावद्विजयक्षेत्रं सोन्वेषुरथ सुस्सलः ॥१४९८॥
योद्धुमभ्याप[1]तन्तं तं चन्द्रराजोथ निर्गतः । पट्टदर्शनपालाद्यैः ससैन्यैः पर्यवर्ज्यत ॥१४९९॥
1500 निजैरुपेक्षितश्चक्रे स चिरं तत्र दुष्करम् । स्वल्पसैन्योपि संग्रामं भूरिसैन्येन शत्रुणा ॥१५००॥

१४७७. ¹) Emended; A °धम्मिल°. १४८०. ¹) Emended; A योधा. १४८१. ¹) Emended; A क्षतायुः°. १४९१. ¹) Emended; A राज्ञो नन्दा°. १४९९. ¹) Emended; A योद्धुमस्याप°.

अक्षोटमल्लः समरे तत्र मल्लश्च चाचरिः । अगातां राजपुत्रौ द्वौ स्वर्गस्त्रीभोगभागिताम् ॥१५०१॥
रजोन्धकारे कन्येन्दुयोषिद्व्यालिङ्गितो हतः । चन्द्रराजः सुरस्त्रीभिरिन्दुराजो[1]स्य चानुगः[2] ॥१५०२॥
तस्मिन्नपि हते वीरे चक्रे हर्षमहीभुजः । आशारविन्दिनीमूलकन्दनिर्दलनं विधिः ॥१५०३॥
पद्मारथः प्रविश्याथ विजयेशाङ्गनं भयात् । प्रविष्टे सुस्सले देवे द्वारं दत्तार्गलं व्यधुः ॥१५०४॥
आस्थानीयः परं पद्मनामा युद्ध्वा हतो बहिः । लक्ष्मीधरो मर्तुमिच्छुर्बद्ध्वा नीतः स डामरैः ॥१५०५॥ 1505
विजयेश्वरगञ्जाप्रसौधारूढोथ सुस्सलः । अधो ददर्श तान्सर्वान्पशूनिव भयाकुलान् ॥१५०६॥
धूर्तः स दत्तमध्यस्थो दत्तानीतवान्पुनः । पट्टदर्शनपालौ द्वौ तेषां पूर्वं निजान्तिकम् ॥१५०७॥
निःश्रेण्यभावादारोढुमक्षमौ सुस्सलानुगैः । तौ मृताविव निर्बद्धपाणी रज्ज्वाधिरोपितौ ॥१५०८॥
तयोर्विदग्धगमनं व्रीडावर्णायमानयोः । प्रतिश्रुत्याकरोद्धीमान्सुस्सलो म्लानिमार्जनम् ॥१५०९॥
स्निग्धोक्त्या मृष्टमांसादिभोगैस्तस्यामतल्पयोः । तस्मिन्नेवाह्नि मन्दत्वं विदेशौरहूक्ष्यमायतौ ॥१५१०॥ 1510
केनाप्यधिष्ठितश्चक्रे परेद्युर्यत्स सुस्सलः । जाने विश्वसृजोप्यङ्गरोमाञ्चयति तत्स्मृतिः ॥१५११॥
जासटो नृपतिर्हर्षभूर्भर्तुर्मातुलात्मजः । उमाधरमुखाश्चान्ये राजानो यत्र च त्रयः ॥१५१२॥
राजपुत्रहयारोहतन्त्रिसामन्तसंततेः । न यत्र गणना काचित्सैन्येष्वष्टादशास्वभूत् ॥१५१३॥
विजयेशाङ्गनस्थानां द्वारमुत्पाट्य सोविशत् । एकाक्येवान्तरं तेषां सासिराक्षेपरूक्षवाक् ॥१५१४॥
स तत्र साक्षिणं कृत्वा क्षमावान्विजयेश्वरम् । प्रतिश्रुत्याभयं तेभ्यः प्रणतेभ्यो विनिर्ययौ ॥१५१५॥ 1515
पुनः सौधाग्रमारूढस्तान्सर्वानर्पितायुधान् । रज्जुबद्धकरान्भृत्यैरानिनाय ततोन्तिकम् ॥१५१६॥
स्वर्णरूप्यत्सरुश्रेणिपूर्णायुधपरिष्कृता । कीर्णपुष्पोपकारेव सुस्सलास्थानभूरभूत् ॥१५१७॥
विन्यस्य पशुपालानां पशूनिव स तान्करे । संरक्षितुं डामराणां त्र्यहं तत्राकरोत्स्थितिम् ॥१५१८॥
ततः सुवर्णसानूरग्रामं स प्राप्य बन्धनात् । पट्टदर्शनपालौ द्रागौज्झीद्देशान्तरोन्मुखौ ॥१५१९॥
पट्टः शूरपुरं प्राप्तो भार्ययागतया गृहात् । संसृष्टमानोप्यस्मार्षीदल्पसत्त्वो दिगन्तरम् ॥१५२०॥ 1520
यावन्मात्राप्यौन्नती सा विदेशोन्मुख्यलक्षणा । धीर्धुर्दर्शनपालस्य पट्टमैत्र्या[1] विडम्बिता ॥१५२१॥
अहंपूर्विकया राज्यं जिघृक्षुरथ सुस्सलः । नगरासादनायैच्छदभिसंधातुमग्रजम् ॥१५२२॥
समानप्रायवयसोः सर्वदोद्यमयोरभूत् । यस्माज्ज्येष्ठकनिष्ठत्वं प्रक्रियारहितं तयोः ॥१५२३॥
द्वित्रेष्वहःसु यातेषु क्रामंस्तां तां भुवं बली । उदतिष्ठद्राजधान्याः सविधादेव सुस्सलः ॥१५२४॥
निर्दग्धुं कलशा[1] तत्प्रसूतं भूपतेः सुतः । कुप्पापराभिधो भोजदेवो योद्धुं विनिर्ययौ ॥१५२५॥ 1525
आत्मवच्छङ्कमानेन कुमाराणां प्रदुष्टताम् । यो भाव्यर्थबलात्पित्रा हतौजा विदधे सदा ॥१५२६॥
कृतो गत्यन्तराभावात्तदानीं तु निरङ्कुशः । केषु केषु न युद्धेषु योधानामग्रणीरभूत् ॥१५२७॥
प्रपितामहतुल्यः स स्याद्वैश्यागेन वर्धितः । कुर्यादुत्साहसंपन्नो निर्दोषादा न किं दिशः ॥१५२८॥
नासीति विश्राम कश्चित्प्रयोगस्तु विधीयते । अत्रावलम्बते सर्वो विषयज्ञस्तु दुर्लभः ॥१५२९॥

---

१५०२. [1]) Thus corr. by $A_1$ from °निर्मन्दुराजौ°.—[2]) Thus corr. by $A_1$ from चारमज:. १५१०. [1]) Emended; A °हृन्त°.
१५२१. [1]) Emended with C; A चपलौ. १५२५. [1]) Thus $A_1$; C कलशागार; doubtful.

1530 स राजसूनुरुद्दामविक्रमस्य रिपोरभूत् । अत्युद्दामोधिकं जातस्तिमिरिव तिमिंगिलः ॥१५३०॥
कृतप्रभावं पितरि प्रपन्ने निगर्हणां नार्हति तत्प्रसूतिः ।
कल्कीभवेद्येन तिलमुज्झ्यते किं तैलेन वस्तः कुसुमाधिवासः ॥१५३१॥
देवेश्वरात्मजः पित्र्यः पार्थिवेनाधिगौरवम् । वर्धितोप्यभजत्पापः प्रतिपक्षसमाश्रयम् ॥१५३२॥
ततस्तदात्मजो भिक्षुः प्रस्थिते सुस्सलाहवे । नृपेणार्थ्यमानोर्थं खेदात्सावज्ञमीक्षितः ॥१५३३॥
1535 ज्ञास्यस्यपान्तरं राजन्ममेत्युक्त्वा विनिर्गतः । खड्गधाराजलैर्मानी म्लानिमक्षालयद्रणे ॥१५३४॥
सर्वनाशादभूदुःखं तथा न हृदि भूपतेः । तदन्तरापरिज्ञानात्कृतघ्नस्य यथाधिकम् ॥१५३५॥
विभवैर्नित्यसंभूता जानते त्वन्तरं नृपाः । तदा शक्या यदा तेषां प्रलापैरेव सत्क्रिया ॥१५३६॥
भोजेन निर्जितानीको विद्रुतः सुस्सलो रणात् । लवणोत्सं पलाय्यागाद्विर्दीर्घाततताततः ॥१५३७॥
प्रत्यावृत्तस्ततो भोजस्तीव्रातपकदर्थितः । उद्यानान्तस्तनुं तल्पे पित्रा सह मुहुर्जहौ ॥१५३८॥
अथोत्तरेणोदतिष्ठद्वादः पाराकृपीकसः । ज्यायान्मल्लात्मजः प्राप्तः सेतुराच्छिद्यतामिति ॥१५३९॥
1540 सुस्सलेन हतं राज्यं नचायाति हृतं यदि । स दण्डनायकेनाभूत्संदिष्ट इति पापिना ॥१५४०॥
अतो जवेन चाविक्षत्प्रथमं चावधीन्मृधे । नरेन्द्रेश्वरदेवापर्णीनं देवनायकम् ॥१५४१॥
अथोक्तनाम श्यामस्थः सह व्यूहेन सादिनाम् । नगराधिकृतो नागस्तस्यामाङ्गुरिसैनिकः ॥१५४२॥
तत्रास्थां पार्थिवोवज्ञात्मधानपृतनान्विते । बभार नौबलाशङ्कां सुस्सलाहवनिर्गतः ॥१५४३॥
अल्पसैन्यो महत्तनुर्वाधनस्मादशङ्कत । अपनीतशिरस्त्राणस्तावत्स तमवन्दत ॥१५४४॥
1545 मण्डलेश्वरवर्मं स प्रियं शाम्भोरविश्वसत् । ऊचे त्ववेश्म याहीति स च पापस्तथाकरोत् ॥१५४५॥
तस्य द्रोहफलं दृष्टमेतस्मिन्नेव जन्मनि । मण्डले यदमन्यस्मिन्भिक्षित्वा जीवितं जहौ ॥१५४६॥
ततो राजा सरित्तीरं प्राप्तः प्रैक्षत डामरान् । सेत्वग्रे श्यामविकृतान्दावदग्धान्द्रुमानिव ॥१५४७॥
बलश्ववारकाणस्य तेषां मध्ये वपुर्बभौ । परं जनकचन्द्रस्य शुक्रस्येव तमोन्तरे ॥१५४८॥
महासेतुः स घटितो राज्ञा नौभिः स्वसिद्धये । पर्यवस्यन्विधिवशाच्छत्रूणां सिद्धये पुनः ॥१५४९॥
1550 अथारुरुहुरादाय वह्निं हर्म्यचतुष्किकाम् । शतद्वारे मर्तुकामा देव्यः शाहिद्धलादिकाः ॥१५५०॥
लोको विरक्तः सेत्वग्रे दायादिः सह संगरम् । ददर्शाश्वयुजीलागिमिव निर्विक्रियः प्रभोः ॥१५५१॥
विजये सावशेषेसी वह्निदानोद्यताः प्रियाः । अनिशं वारयन्राजा सेत्वग्रे रणमग्रहीत् ॥१५५२॥
अथ विन्यस्तवर्माणं राजसेनागजं शरैः । सेतोर्जनकचन्द्राद्याः प्रमुखस्थमताडयन् ॥१५५३॥
स विद्धो मर्मसु शरैः पूत्कारोद्गारकृद्गजः । स्वचमूमेव चरणैरमृद्नाद्विमुखीकृतः ॥१५५४॥
1555 विधिनेव विरुद्धेन सिन्धुरेण कदर्थिता । अदयस्पष्टिहयारोहा समपद्यत वाहिनी ॥१५५५॥
सेतुं तीर्णस्ततो वैरिसैनिकैर्विमुखीकृतः । शतद्वाराकुलं प्राप्तः साश्वारोहोविशन्नृपः ॥१५५६॥
सवात्मवेषरहितो रहोपि ददृशे न यः । भुञ्जानस्यापि यस्यास्यमुद्रा नैव व्यभाव्यत ॥१५५७॥

१५३०. ¹) Emended with C; A जाता तिमेरिव. १५३१. ¹) Emended; A कल्की°, corr. by later hand into कल्की°. Cf Böhtlingk, *Sanskrit Wörterbuch in kürzerer Fassung*, vi. 214 *b*. १५५२. ¹) Emended; A सावशेषोसो. १५५०. ¹) Emended; A °वेषर°.

स भयार्तिगुणाकीर्णस्वेदप्रक्षिप्तचामरः । पुनः पुनः क्षिप्यमाणजलसम्मीलनोर्मिभिः ॥१५५८॥
अनवस्थितपार्ष्ण्यन्ताघातमचलितं हयम् । निरोद्धुं बहुशः कर्षन्नष्टवल्गामपि करम् ॥१५५९॥
खल्वाटशीर्षपर्यन्तलम्बिनीः कुन्तलच्छटाः । प्रापयञ्छ्रवणोपान्तं करेण गलितासिना ॥१५६०॥ 1560
लब्धलम्बनिर्भुग्नश्रोत्रपालिलताञ्चलात् । कालाहिनेव मूर्तेन वेष्टितोच्चण्डकन्धरः ॥१५६१॥
निस्ताम्बूलतयोच्छुष्कौ जतुपीताविवालकृत् । ओष्ठावुत्क्षिप्य कृच्छ्रेण विह्वलो जिह्वया लिहन् ॥१५६२॥
कनीनिकाचलत्कोणं क्षामधूसरमाननम् । उत्तानीकृत्य पृष्ठस्थाः पश्यन्दीनमनाः प्रियाः ॥१५६३॥
परिभ्रमचङ्क्रमान्तस्थः स ददृशे जनैः । वह्निदानोद्यतास्ताश्च वारयन्करसंज्ञया ॥१५६४॥
मल्लराजस्य वेश्माभूद्राजधान्यन्तिकेपि यत् । तीर्त्वा जनकचन्द्रेण तत्र वह्निरदीयत ॥१५६५॥ 1565
राजधान्युन्मुखं दृष्ट्वा ज्वलन्तं वह्निमागतम् । भेजे पलायनं भोजो राज्यं निश्चित्य हारितम् ॥१५६६॥
स शूलैर्विद्विषां भीमैर्नेत्रैरिव तिरोहितम् । द्वारं भित्त्वा तुरंगस्थः प्राङ्गणान्निर्ययौ बहिः ॥१५६७॥
पञ्चषैः सादिभिः सार्धं लोहरोन्मुख्यमाश्रितः । प्रतस्थे सेतुमुत्तीर्य सिंहराजमठायनम् ॥१५६८॥
यातस्य दृक्पथात्सूनोः साश्रुरालोकयन्दिशम् । राजाश्ववारैः सहितो वेश्मनो बहिरभ्रमीत् ॥१५६९॥
अत्रान्तरे मर्तुकामास्त्रातुं काश्चिन्नृपाङ्गनाः । अदृममिस्तल्पारिजनैरभज्यत चतुष्किका ॥१५७०॥ 1570
शाहिपुत्र्यस्तदज्ञात्वा शत्रवः पतिता इति । मत्वा चतुष्किकाशृङ्गे ततोग्निमुददीपयन् ॥१५७१॥
वास्तव्या डामराश्चाथ प्रमत्तोन्योन्यमुदायुधाः । ज्वलतः क्ष्मापतिगृहाद्भाण्डागाराद्यलुण्ठयन् ॥१५७२॥
केचित्तत्र वधं प्रापुर्विपदं केचनात्यजन् । अदृष्टवस्तुसंप्राप्तिः केषांचिद्धास्यदाभवत् ॥१५७३॥
सितेयं शर्करेत्येकः कर्पूरं वदनेक्षिपत् । ततः सरिति तद्भाण्डं निर्दग्धवदनो ह्यधात् ॥१५७४॥
पामरैः स्वर्णचित्राणि कैश्चित्स्वर्णमहेच्छया । विनिर्दग्धानि वासांसि विचितं भस्म चादरात् ॥१५७५॥ 1575
अविद्धमौक्तिकस्तोमः सिततण्डुलविभ्रमात् । कश्चित्पामरनारीभिर्घरट्टेषु विचूर्णितः ॥१५७६॥
वसन्त्यदृश्ये देशेस्मिन्खलीकारेण तादृशा । एवं विडम्बिता लक्ष्मीर्न पुनः क्वाप्यदृश्यत ॥१५७७॥
विद्याधरीरिवोदात्तवेषाः क्ष्मापतिसुन्दरीः । हरन्तो डामराः क्रूरा दृश्यन्ते स्म पदे पदे ॥१५७८॥
वसन्तलेखाप्रमुखाः सस्नुषास्तत्र चक्रिरे । निर्यातशेषाः स्वान्देहाञ्ज्वाल्यः सप्तदशाग्निसात् ॥१५७९॥
गृहाणां दह्यमानानामभूयत चटत्कृतिः । गाढोष्मक्वथमानाच्छसिन्धुघोषप्रतीतिकृत् ॥१५८०॥ 1580
श्रीपद्मश्रीमपापार्श्वस्थितस्तद्वीक्ष्य पार्थिवः । आर्षं श्लोकमिमं शोकात्स्मृत्वापाठीत्पुनः पुनः ॥१५८१॥
प्रजापीडनसंतापात्समुद्भूतो हुताशनः । राज्ञः कुले श्रियं प्राणांश्चादग्ध्वा विनिवर्तते ॥१५८२॥
दग्ध्वाथ राजधानीं तामुच्चलो डामरान्वितः । अल्पकसैन्यं वीक्ष्यारिं पारमेवातरत्पुनः ॥१५८३॥
ततो युद्धा मर्तुमिच्छत्सैन्ये राजाकुलात्मनाम् । उपायचैर्मतिद्वैधैः पदातीनां क्षणे क्षणे ॥१५८४॥
गच्छन्ननन्तपालादिराजपुत्रधिया मृधम् । दण्डनायकवाक्येन न्यषिध्यत पदे पदे ॥१५८५॥ 1585
बुध्यस्व लोहरं वापि याहीत्यूचे यं चम्पकः । प्रयागस्योत्तरः पक्षः प्रत्यभासाभिमः पुनः ॥१५८६॥

---

१५७१. ¹) Emended; A °स्तवा ज्ञात्वा. १५७६. ¹) Emended; A °स्तोमश्चित°. १५७७. ¹) Emended; A वसन्नदृश्ये. १५७८. ¹) Emended; A °वेषाः. १५८०. ¹) Emended; A °भूयत. १५८६. ¹) च wanting in A; supplied with R C.

वार्तामबुद्ध्वा पुत्रस्य नृपतिर्व्याकुलीभवन् । पदवीं भोजदेवस्य याहीत्याह स्म चम्पकम् ॥१५८७॥
प्रयागमात्रानुचरो राजन्संपत्स्यसे क्षणात् । तस्मान्मामपि मा त्याक्षीरित्यूचे तं स निःश्वसन् ॥१५८८॥
सोन्तर्बाष्पस्तं बभाषे निर्द्रोहोसीति कथ्यते । त्वयाप्यस्मिन्क्षणे कस्मात्तस्मादुल्लङ्घ्यते वचः ॥१५८९॥
1590 विना पुत्रं न पश्यामि सार्केपि दिवसे दिशः । त्वं तस्मिन्नङ्कसंवृद्धे न मन्युं कर्तुमर्हसि ॥१५९०॥
अश्वानिमित्तं कलहस्तेष्वेव दिवसेष्वभूत् । मन्त्रिणो राजपुत्रेण तेन तस्याभिमानिना ॥१५९१॥
गिरा प्रभोरुपालब्धस्तत्तागूरणगर्भया । स लज्जानम्रवदनो राजपुत्रानुसार्यगात् ॥१५९२॥
पञ्चाशताश्ववारैः स भ्रातृभृत्यादिभिः समम् । उत्तीर्णः सरितः पारमात्मना पञ्चमोभवत् ॥१५९३॥
भ्रातृद्वयेश्ववारे च शैपाराजात्मजे पथि । हताश्वे पतिते सोभूज्जनकेनान्वितो भ्रमन् ॥१५९४॥
1595 अनाप्नुवन्नात्मजनोर्वार्तां वा वर्त्मनाप्यटन् । गलितेहनि संप्राप वितस्तासिन्धुसंगमम् ॥१५९५॥
एवमाप्तान्परान्पुत्रमन्वेष्टुं प्राहिणोन्नृपः । अन्येपि तन्मिषं लब्ध्वा तस्य पार्श्वादवाचलन् ॥१५९६॥
उत्कोचादायिना क्रुद्धं राजपुर्यादिविग्रहे । योग्यानसहता भृत्यान्निःसारः कटकः कृतः ॥१५९७॥
लोहरप्रस्थितौ विघ्नं राज्ञा पुत्रस्य कारितः । प्रवेशितः पुरं वैरी राजन्यन्याहवाकुले ॥१५९८॥
सर्वस्वध्वंसिना येन स एव नृपतेरभूत् । तदाप्युचितकर्तव्यनिवेत्ता दण्डनायकः ॥१५९९॥ तिलकम्॥
1600 राज्ञः कृत्स्नावसन्नस्य शृण्वतो बहुमन्त्रितम् । नैकत्र रूढिः कर्तव्ये क्वाप्यधीरधियोभवत् ॥१६००॥
सर्वैर्यथा निखिलरन्ध्रमुखेन वंशः संपूरितो न खलु शब्दमपाकरोति ।
तैस्तैस्तथा बहुपथप्रचयेन मन्त्रः संकल्पितः किल न निश्चयमभ्युपैति ॥१६०१॥
भाग्यक्षयस्यैतदेव लक्षणं प्राकृतोपि यत् । अपृष्टः कथयेद्राष्ट्रान्मन्त्रं स्वहृदयोचितम् ॥१६०२॥
त्रैलोक्यनाम्ना सूतेन शंसता दण्डनायकम् । निरोध्य वल्गामित्यूचे भूयः क्ष्माभृद्रणोन्मुखः ॥१६०३॥
एकाङ्गैः साश्ववारैः प्राग्जिगाय त्वत्पितामहः । तद्गच्छामोक्षपटलोपान्तं तत्संमहेच्छया ॥१६०४॥
1605 पदातिप्रायसैन्यांस्तान्निहन्मः संहताञ्रिपून् । पश्चाक्षिपत्य तैः साकं श्येना इव विहंगमान् ॥१६०५॥
ततश्चिचलिषावेव राज्ञि तत्कटको दिशः । सवृष्ट्यम्बुहतो रङ्कमक्षिलोक इवागमत् ॥१६०६॥
पारेवितस्तां ग्रामेभ्यः पाथेयायात्मजन्मनः । स शैयाराजजन्मभ्यो रत्नमैत्रेयकाग्रदात् ॥१६०७॥
आरामिकैस्तैः संप्राप्ते राजचिह्ने क्षणादिव । तेजःस्फारोर्जितो र[illegible] गतश्रीर्ददृशे जनैः ॥१६०८॥
पदे पदे श्रयमानसैन्योक्षपटलादिषु । स्थानेषु चाश्रमीत्कश्चिन्न च तस्यापदन्तिकम् ॥१६०९॥
1610 संभयार्थ्येव बभ्राम सार्यं वेश्मानि मन्त्रिणाम् । प्रवेशं प्रददौ चास्य न कोपि द्वारि तस्थुषः ॥१६१०॥
प्रायोपवेशकुशलाः शक्तास्त्वन्ते न कुत्रचित् । मिथ्यासंभावनाभूमिर्भूपानां ब्रह्मबन्धवः ॥१६११॥
ये केपि देशे सम्यस्मिंस्तत्रैत्यास्थया भ्रमन् । प्रविविक्षुर्गृहान्प्राप कपिलाख्यस्य मन्त्रिणः ॥१६१२॥
तस्मिंल्लोहरकोट्टस्थे तत्पत्न्या स्थातुमर्थितः । नैच्छच्च कोट्टं गन्तुं न प्राविक्षद्दैवमोहितः ॥१६१३॥

---

१५९४. ¹) Emended; A भ्रातहरि.—²) Thus A; cf. vii. 1607. १५९७. ¹) Emended; A °निसारः. १५९८. ¹) Emended; A राजपुत्रस्य. Cf. vii. 1453. १५९९. ¹) A₁ writes here ३ instead of तिलकम्. १६०४. ¹) Emended; A प्राग्जिगायस्तत्पिता°, C °गाय तत्पिता°. १६०७. ¹) A₁ शैया ‒ ‒ राजजन्मभ्यो, य subsequently supplied by A₁ or later hand· but comp. शैपाराजात्मजे. vii. 1594.

आर्तस्य तस्य तत्पुत्रैः पितृद्रोहकारिभिः । ऋणिकैरुत्तमर्णस्य स्वं निःस्वैरिव गोपितः ॥१६१४॥
सदोषोस्मीति सोप्यासीत्स्वयं शृण्वन्विगर्हणाम् । तदैव गोपिताशेषकृत्यो दुर्मन्त्रिभिः पुरा ॥१६१५॥ 1615
गृहीतसर्वनैराश्यः पार्श्वस्थेष्वप्यविश्वसन् । अभूत्प्रत्युत्प्रमुत्तीर्णो नितरां विरलानुगः ॥१६१६॥
प्रख्यापयन्तः संभूतिं षट्त्रिंशति कुलेषु ये । तेजस्विनो भास्वतोपि सहन्ते नोच्चकैः स्थितिम् ॥१६१७॥
तेष्वन्तेनन्तपालाद्या राजपुत्रास्तमत्यजन् । सान्द्रतां दधति ध्वान्ते स्थगिताध्वाः पदे पदे ॥१६१८॥[1]
वाहनाज्जोहिलमठोपान्तं प्राप्यावतीर्णवान् । स दण्डनायकेनापि तत्यजे सानुजन्मना ॥१६१९॥
इहास्मच्छ्वशुरावासस्तत्र वस्तुमिमां निशाम् । वीक्ष्य ते स्थानमेष्यामीत्युक्त्वा व्याजेन सोचलत् ॥१६२०॥ 1620
यियासोरनुगं तस्य पाथेयार्थं प्रयागकः । ययाचे कुद्वमस्मै स प्रादात्सक्तूंश्च तत्सुतः ॥१६२१॥
एकांशुकावशेषश्रीस्ततो वा शेषजीवितः । प्रयागशेषानुचरो नृपतिः समपद्यत ॥१६२२॥
सूदश्चम्पकभृत्यस्य जल्लकाख्यस्य तत्क्षणम् । मुक्तो नामान्तिकं प्राप्तो नृपतेराप्ततामगात् ॥१६२३॥
वृतीप्रविहितैः खातैरमे दुःसंचरा क्षितिः । भ्राम्यतस्तानुवाचेति नारी काचिद्गृहान्तरात् ॥१६२४॥
ततस्तीरे वितस्ताया निषण्णेस्मिन्प्रयागकः । गन्तुं जयपुरं कोट्टमाजुहाव स नाविकान् ॥१६२५॥ 1625
स हि प्राक्संविदं चक्रे तत्रस्थैः सह शास्त्रिभिः । नृपं प्रेयाभयं नेतुं भीमादेवस्य[1] मन्दिरम् ॥१६२६॥
उच्चलाभ्यर्थिणाप्युक्ते भीमादेवेन येन सः । राज्ञोनुगो गमिष्यामि प्रविष्टस्योपवेशनम् ॥१६२७॥
नौचरैराहृतां नावमारुरोह न भूपतिः । नाशोन्मुखः समासन्नदृष्टिपातभयाकुलः ॥१६२८॥
पर्यापतत्कालकरस्थभोगिसंदर्शनेनेव मतिप्रदीपः ।
क्षिप्रं प्रशाम्युन्मुखतामुपैति विनाशकालेषु शरीरभाजाम् ॥१६२९॥
तस्मिन्द्रोहदुर्भिक्षेपि यस्य मानव्रतः परम् । अनन्यालोकिनी दृष्टिर्भेजे कुलवधूव्रतम् ॥१६३०॥ 1630
नीलाश्वीयः स बिम्बाख्यो डामरोभिमिलितोहितैः ।
तदापि प्रययौ राज्ञो विस्मृतिं संश्रयार्थिनः ॥१६३१॥ युगलकम् ॥
ततः प्रावर्तत त्यक्तुं वारि वारिमुचां गणः । क्षमामिव क्षालयितुं द्रोहस्पर्शेन दूषिताम् ॥१६३२॥
भूर्निर्जना वृष्टिपातस्तमिस्रा दुःसहायिता[1] । वैरिभीतिरिति प्राभूत्किं तस्य न दुःखदम् ॥१६३३॥
इति दृष्टानुरोधेन धिग्दुष्कर्मविधायिनाम् । अस्मर्तव्यमपि व्यक्तं नाम वाहिष्यतेधुना ॥१६३४॥
सोमानन्दाभिधानस्य पूज्याः सिद्धस्य वेश्मनः । सोमेश्वराभिधाः सन्ति काश्चित्पितृवनान्तरे[1] ॥१६३५॥ 1635
तल्लाञ्छिताङ्गना तुङ्गतरुप्रच्छन्नवाटिका । अभूद्गुणाभिधानस्य कुटी क्षुद्रतपस्विनः ॥१६३६॥
वारस्त्रियां स विरहभुजंगीतिप्रसिद्धया । भिक्षाख्यया समं भेजे चेष्टितं कुट्टिनोचितम् ॥१६३७॥
तस्य प्रतापगौरीशदेवागारान्तिकस्थितेः । कुटीं मुक्तेन तां निन्ये क्ष्माभृद्वस्तुं स तां क्षपाम् ॥१६३८॥
मुक्तमालम्ब्य नृपतिस्तमालम्ब्य प्रयागकः । यान्ति स्म विद्युद्द्योतेन क्ष्मां पश्यन्तोन्तरान्तरा ॥१६३९॥
निश्च्योतोङ्गसंस्यूतकृत्तवासाः स्खलन्नृपः । स तां प्रयागमुक्ताभ्यां कथंचित्प्रापितः कुटीम् ॥१६४०॥ 1640

१६१८. [1]) A₁ writes here ३ (instead of युग्मम्?). १६१९. [1]) Emended; A सोजुजन्मना. Cf. vii. 894. १६२०. [1]) Emended; A निवसम्. १६२१. [1]) Emended with C; A सं पुनः. १६२६. [1]) Emended; A भूभादेवस्य. १६३१. [1]) Emended; A डामराभि°. १६३३. [1]) Thus A. १६३५. [1]) Thus A₂; A₁ °वनान्तिके. १६३६. [1]) Thus A₂; A₁ अनुष्ठिताभि°. १६४०. [1]) चारलिका supplied by A₂ in space left by A₁. १६३४. [1]) Emended; A तामस.

तदा कुमन्त्रिनिष्कृष्टं स व्यापद्वारणक्षमम् । शोचन्सस्मार कन्दर्पं रुद्रं दैत्यमिवोत्पलः ॥१६४१॥
प्राकारमूर्ध्ना मुक्तेन प्रविष्टेन हतार्गलाम् । नृपः कुटीमाक्रन्नोर्वीं विवेशास्थिततापसाम् ॥१६४२॥
विशतोश्मक्षतः पादस्तस्यासृग्दक्षिणोस्यजत् । मेने तेनानिमित्तेन स मृत्युं समुपस्थितम् ॥१६४३॥
कुद्यामर्गलरुद्धायां निषण्णस्याङ्गने ययौ । रात्रिर्भीतिमतो[1] भीमा तस्य घोराभ्रमालिनी ॥१६४४॥
1645 पङ्कोपलिप्तः पङ्काङ्कस्थण्डिलस्थो निनाय ताम् । दासकम्बलिकाच्छन्नगात्रो वृष्टधुतरां निशाम् ॥१६४५॥
विसस्मारान्तरा दुःखमासीनप्रचलायितैः । निर्निद्रस्त्वभवच्छ्वभ्राद्रुदयन्निव समाकुलः ॥१६४६॥
कोहं केनाभिभूतोद्य क वर्ते कोनुगोधुना । किं कृत्यमिति निध्याय मुहुर्मुहुरकम्पत ॥१६४७॥
हतं राज्यं प्रिया दग्धा भ्रष्टः सूनुरबान्धवः । जातोस्म्येकाक्यपाथेयो लुठन्भिक्षाभुजोऽङ्गने ॥१६४८॥
इत्येकैकं च निध्याय दुःखं नैक्षिष्ट सोपरम् । प्राप्तावसादं शोचन्तमात्मतुल्यं कथास्वपि ॥१६४९॥ युग्मम् ॥
1650 भोजस्तु वाजिभिर्द्वित्रैरवशिष्टैः समं व्रजन् । हस्तिकर्णान्तरं प्राप निर्गत्य नगरान्तरात् ॥१६५०॥
व्रजतस्तस्य धीरासीन्नियतं पञ्चषैर्दिनैः । पुनः संप्राप्नुयां राज्यं यदीन्द्रोपि भवेद्रिपुः ॥१६५१॥
गर्भवास इव पौरुषे स्फुरन्किं न कर्म पुरुषश्चिकीर्षति ।
कर्मवायुरिव संस्पृशन्हठान्मूढमेव कुरुते तु तं विधिः ॥१६५२॥
मातृभिर्दत्तपाथेयं भृत्यं नागेश्वराभिधम् । प्रतीक्षमाणश्चक्रे स रङ्गवाटान्तरे स्थितिम् ॥१६५३॥
शून्ये देवगृहे तत्र तिष्ठञ्श्रुत्वा समागतम् । स निर्ययौ तेन तस्मिन्निःशङ्कं प्रहतं पुनः ॥१६५४॥
1655 तत्र मातुष्कृतद्रोहे क्षत्रधर्मादविच्युतः । राजपुत्रः स यच्चक्रे न तत्कस्याद्भुतावहम् ॥१६५५॥
स सिंह इव संहारं कृत्वा युधि विरोधिनाम् । अस्राङ्गरागलिप्ताङ्गो वीरशय्यामभूषयत् ॥१६५६॥
भ्रातास्य मातुलापत्यं विपेदे पद्मकाभिधः । खेलो लालितश्चैव संख्येसंख्यपराक्रमः ॥१६५७॥
मठं सूर्यमतीदेव्याः शर्वर्यामु लोविशत् । भ्राताप्यस्य रणभ्रान्तो लवणोत्सात्समाययौ ॥१६५८॥
हतं भोजं श्रुतवतोर्हर्षमात्रे स्थिते तयोः । मनस्युत्खातशूलेभिरेवैका पर्यशिष्यत ॥१६५९॥
1660 प्राप्तमप्राप्तवद्राज्यं तथापि प्रत्यभात्तयोः । प्रवासे विस्मृते राज्यसुखे लब्धे च कुत्रचित् ॥१६६०॥
प्राप्ते कुतश्चिदानीतो मुक्तेनान्विष्य तापसः । प्रणम्य नृपतिं चक्रे स्वकुटीं तां[1] निरर्गलाम् ॥१६६१॥
तां दंशमशकाकीर्णामास्तीर्णतृणविष्टराम् । कृताम्बुसेकां मुक्तेन नृपतिः प्राविशत्कुटीम् ॥१६६२॥
यद्गिरा बहुमानोऽभूच्छ्रुतया भूभुजामपि । स भूभृचाटुकारित्वं भीतो भिक्षाभुजोप्यगात् ॥१६६३॥
भिक्षाकस्योचितं ग्राम्यमनुदात्तं त्रपावहम् । आलापाभ्यवहाराभ्यां तस्य शृण्वन्स विव्यथे ॥१६६४॥
1665 स भिक्षाकः प्रयागेन विक्रयायाधरांशुकम् । निजं दत्त्वा विससृजे विपणिं भोज्यसिद्धये ॥१६६५॥
कटूक्तिः कटुवागर्थे परोक्षं भेदभीतिकृत् । कुतापसो दौःस्थ्यहेतुर्नृपस्यारिर्यथाप्यभूत् ॥१६६६॥
मध्याह्ने स्कन्धविन्यस्तभोज्यभाण्डकरण्डिका । तपस्विन्याप्यथानिन्ये तेन क्षुद्रतपस्विना ॥१६६७॥
भृत्यभिक्षाकयोः पूर्वं स्त्रिया अप्यथ पार्थिवः । एवं वीक्ष्य गोचरीभूतं निराशो जीवितेभवत् ॥१६६८॥

---

१६४४. [1]) Emended with C; A °भीतिवतो. १६६१. [1]) प्राप्ते कुतश्चि, पस., चक्रे स्वकुटीं तां, supplied by $A_2$ in space left by $A_1$. १६६२. [1]) Thus corr. by $A_2$ from $A_1$ °चाचम°.—[2]) Emended; A °मचका°.

तेन प्रयागोपहृतं भोज्यं तदनुरोधतः । स्पृष्टमेव न भुक्तं तु तीव्रदुःखोल्बणात्मना ॥१६६९॥

का वार्तेति प्रयागेन प्राक्तनस्थेन पृष्टया । तापस्या माध्यया व्यक्तमुक्तो भोजवधस्ततः ॥१६७०॥ 1670

मिथ्यैतदिति तेनार्थं कथ्यमानोऽपि पार्थिवः । भुक्तिं तामक्रशकुनं परीक्ष्याबुद्ध नान्यथा ॥१६७१॥

नारोहति गिरं शत्रोरप्रियाख्यायिनोऽपि यत् । तस्य संववृते दुःखं निमग्नस्य तदापदि ॥१६७२॥

स शोचन्नात्मजं बाल्ये नीत्यै यां यन्त्रणां व्यधात् । आजन्म दुःखदायित्वं मेने तस्यात्मनस्तथा ॥१६७३॥

हतः स समरे वृत्त्या प्रवीरस्पृहणीयया । जज्ञे तेनातिवात्सल्यादङ्कशायीव वालितः ॥१६७४॥

गात्रेषु हारान्पुत्रस्य यौवनव्यूढवक्षसि । पश्यन्नात्मनि संकल्पैर्विह्वलः सोऽकृताशिषः ॥१६७५॥ 1675

रक्षणीयो हतो बालो वृद्धस्त्वेवं स्वजीवितम् । रक्षाम्यनुचिताचारैर्जिह्रायेति स चिन्तयन् ॥१६७६॥

एवं स पुत्रशोकेन धृतावाच्यव्यथो व्यथन् । निनाय तापसावासे द्वितीयामपि यामिनीम् ॥१६७७॥

कृतार्थनः प्रयागेन प्रयातुं भगवन्मठम् । शोकहारितधी राज्ञी न संकल्पमपि व्यधात् ॥१६७८॥

लम्बेन्दुवदनसान्द्रावश्यायाम्भोऽश्रुवर्षिणी । रथाङ्गाक्रन्दिनी रात्रिः सशोकेवाथ सागमत् ॥१६७९॥

क्षुत्पिपासापरिक्षामं प्रभुं वीक्ष्य स तापसः । प्रार्थ्यते स्म प्रयागेन प्रातर्भोक्तव्यसिद्धये ॥१६८०॥ 1680

उपनिन्ये विनिर्गत्य प्रविष्टस्तापसस्तयोः । सव्यञ्जनान्नपूर्णे द्वे पात्रे – – क्षणात्पुरः ॥१६८१॥

कस्यापि गृहिणो यागोत्सवादेते मयाहृते । तस्मिन्नित्युक्तवत्यूचे विनिश्वस्य प्रयागकः ॥१६८२॥

राजन्स्वामिवियोगेऽस्मिन्पश्य लोकस्य सुस्थताम् । स तं जगाद विहसन्किं मूढ इव भाषसे ॥१६८३॥

यो गतो गत एवासौ तत्क्षत्या नापरः क्षतः । सर्वो निजसुखापेक्षी न किंचित्कोऽपि शोचति ॥१६८४॥

लोकैकचक्षुषि गते परलोकमर्के लोकः स्वपित्यखिल एव सुखं गृहेषु ।
कोऽन्यो विचिन्तयितुमर्हति विश्वमेतत्सिद्धेन्मया विरहमेत्य कथं किलेति ॥१६८५॥ 1685

पुत्रस्य स्नेहविश्वासः पूर्वमास्तं क्षये भुवे । यथैकः प्रभवेन्नान्यस्तथा स्नेहोऽपि देहिनः ॥१६८६॥

अहमेव हतं पुत्रं श्रुत्वा जीवितजीवितम् । तिष्ठामि स्वस्थवद्यत्र तत्रान्यो निम्यतां कथम् ॥१६८७॥

इत्युक्त्वा विरते राज्ञि पुनर्गूढं प्रयागकः । प्रैरयत्तापसं भोज्यं कर्तुं ते भाजने त्यजन् ॥१६८८॥

व्यसनव्ययशिष्टं मे पर्याप्तं नास्ति वेतनम् । यते तथापीत्युक्त्वा स सखेद इव निर्ययौ ॥१६८९॥

गोप्यं रहस्यभणितमत्यल्पहृदयातिथि । अमृतं पारतमिव नाल्पसत्त्वैः सुदुर्जरम् ॥१६९०॥ 1690

कुल्यो मनोरथो नाम विप्रस्य वनवासिनः । सुहृत्तपस्विनस्तस्य तां कथामुपलब्धवान् ॥१६९१॥

राज्ञः संदर्श्य दायादं भवान्वो भुक्तिभाजनम् । इत्युक्त्वा तेन निन्ये स द्रोग्धृतां क्षुद्रतापसः ॥१६९२॥

जज्ञे भृत्येन गर्ह्येण जातः सोऽन्त्येन केनचित् । सदृशं यस्सदसतोर्ज्ञापकं जन्मकर्मणोः ॥१६९३॥

इल्लाराजस्तां प्रवृत्तिं बुद्ध्वा ताभ्यां न्यवेदयत् । उच्चलाय समादिक्षत्कार्ये तत्र तमेव सः ॥१६९४॥

---

१६७१. [1]) Emended, A तेनार्थे. १६७३. [1]) तथा supplied by $A_2$ in space left by $A_1$. १६७६. [1]) Thus corr. by $A_2$ from $A_1$ कुर्वी.—[2]) रक्षाम्यनु and तावारै supplied by $A_2$ in space left by $A_1$. १६७९. [1]) Thus corr. by later hand from $A_1$ °वदना.—[2]) Emended with C; A °श्यावोम्भो°. १६८१. [1]) Two *aksharas* wanting in fourth *pâda;* the *lacuna* not marked in A; C सद्रीक्षणात्पुरः. १६८६. [1]) Thus $A_1$; $A_2$ पूर्वमासन्क्षये. १६८८. [1]) प्रैरयत्तापसं supplied by $A_2$ in space lef by $A_1$. १६९२. [1]) Emended; A द्रोग्धृतां.

1695 केचित्तु भूतिभिक्षाख्यमिक्षाराजोपसर्पणे । कायस्थं कारणं प्राहुस्तयोस्तापसविप्रयोः ॥१६९५॥
वार्ता चेद्दवगीतेयं सुबहुभ्रमसंकुले । काले तत्रस्थपाशस्य तस्यैव द्रोहमुख्यता ॥१६९६॥
श्वपाकस्कन्धमारूढो लब्ध्वा तास्ता विमाननाः । विपेदे यत्स कारायां युक्तं तत्तस्य कर्मणः ॥१६९७॥
क्षुत्क्षामो हर्षदेवस्तु प्रयागेनार्थितोसकृत् । प्रत्यये पुत्रशोकेपि भोजनायाकरोन्मनः ॥१६९८॥
गृहीतभोजनं जानन्प्राप्तं प्राप्तं स तापसम् । तमोरेर्बहिरैक्षिष्ट नीडाच्छिशुरिवाण्डजः ॥१६९९॥
1700 अपश्यंश्च कुटीं कृत्स्नां वेष्टितामेत्य शस्त्रिभिः । शुश्राव चाक्रन्दद्वारद्वार्यमाणार्गलाध्वनिम् ॥१७००॥
आनञ्जातं ततो द्रोहमङ्गनात्तापसाधमम् । सशस्त्रिणं मुक्तमेहीत्याह्वयन्तं व्यलोकयत् ॥१७०१॥
मुक्तं विसृज्य कृत्वा च द्वारमुद्घाटितारारि । त्यक्तभीरादधे लघ्वीं क्षुरिकामन्तिकस्थिताम् ॥१७०२॥
एकस्तत्सविधं क्रूरः साहसाहंक्रियोन्मदः । आरुरोहाथ कृष्टासिधेनुः कश्चित्ततो भटः ॥१७०३॥
तं राजा संकटकुटीरुद्धायामोप्यपातयत् । क्षितौ व्यायामकुशलो नावधीत्कृपया पुनः ॥१७०४॥
1705 पतितेन हतेनार्थो वराकेणामुना न मे । इत्यूचे दुरहंकारमस्तस्मिन्नपि क्षणे ॥१७०५॥
नीध्रमुत्पाट्य निपतन्नेकोन्योप्युत्पतन्भटः । भयाद्भूमौ न्यपततां तं विलोक्योद्यतायुधम् ॥१७०६॥
पृष्ठे पूर्वं प्रविष्टस्य तिष्ठन्स्थानकनिष्ठुरः । स रुरोरिव चामुण्डा रेजे दण्डाकृतिः क्षणम् ॥१७०७॥
न सिंहनादैर्नो भेरीतूर्यघोषैर्न चोन्मदैः । शस्त्रशब्दैः स शुशुभे भूपस्यान्तक्षणे रणः ॥१७०८॥
आखोर्भाण्डप्रवेशस्य बिडाला इव डामराः । परं प्रवेशितास्तस्य निःशब्दं शस्त्रिणः कुटीम् ॥१७०९॥
1710 अथान्यो नीध्रमार्गेण संप्रविष्टः प्रयागकम् । हत्वा दोष्णि च शीर्षे च राजानं समुपाद्रवत् ॥१७१०॥
राज्ञः प्रहरतः शस्त्रं वञ्चयित्वा स शस्त्रभृत् । वक्षसि क्षुरिकाघातद्वयं प्रादात्कृतत्वरः ॥१७११॥
वर्णान्महेश्वरेत्येनान्निरुच्चा गतजीवितः । पपात निहतो भूमौ छिन्नमूल इव द्रुमः ॥१७१२॥
पलाय्य संप्रविशतो योग्यधीरस्य यादृशः । चक्रवर्त्यपि स प्राप वधं वेश्मनि तादृशम् ॥१७१३॥
नान्यः स इव कालेस्मिन्ददृशे भूतिमान्नृपः । गर्भनिर्हरणत्वं च तस्येवान्यस्य नेक्षितम् ॥१७१४॥
1715 यद्येकेनैव संग्रामवैमुख्येनोज्ज्वलात्मनः । सर्वप्रकारसुभगं माहात्म्यं तस्य खण्डितम् ॥१७१५॥
नेयबुद्धित्वमेवासीदथ वा तस्य दूषणम् । सर्वक्लेशावहा दोषाः कृत्स्नास्तन्मन्त्रिणां पुनः ॥१७१६॥
द्वाचत्वारिंशतिं साष्टमासा यस्य वयःसमाः । स शुक्लभाद्रपञ्चम्यां हतोब्दे सप्तसप्तते ॥१७१७॥
राजा दुर्योधन इव स्ववंश्यच्छेदमिच्छता । सोभूज्जातकयोगेन कारितः स्वकुलक्षयम् ॥१७१८॥
तस्यास्तम्भौमार्कजौ जीवबुधौ भक्रोष्णगुः शशी । तनयामित्रजामित्रखेषु कर्कटजन्मनः[3] ॥१७१९॥

---

१६९५. ¹) Emended; A भूमिक्षा°. *Cf.* viii. 94. १७०४. ¹) Emended; A संकटी कु°. १७०७. ¹) Emended with C; A प्रविष्ट. १७१७. ¹) Emended, A द्वाचत्वारिंशत:. १७१९. ¹) Emended; A तस्यासी भ्मा°.—²) Emended with C; A °ष्णगी.—³) A₂ explains this verse by the following *janmachakra*:

चन्द्रदेवेऽल्पपापेषु स्वमदात्मजगेषु यत् । आहुः श्रुसंहिताकाराः कौरवादीन्कुलान्तकान् ॥१७२०॥ 1720

निर्ब्राह्मण्यो जनः कृत्स्नो देशेऽस्मिन्वैरिणोऽन्तिकम् । दस्योरिव शिरश्छित्त्वा स्वामिनोऽपि निनाय तत् ॥१७२१॥

तस्योत्तमाङ्गे भूभर्तुश्छिद्यमाने ससागरा । चकम्पे भूर्निरभ्रापि द्यौर्वृष्टिं महतीं जहौ ॥१७२२॥

तन्मुण्डे लगुडारूढे यदयुक्तं जनो व्यधात् । अभूत्तेनाभिशापेन सोऽपि दीर्घोपसर्गभाक् ॥१७२३॥

मण्डले देवबिम्बानां यथामुष्मिन्विपाटनम् । तथा नवं प्रववृते भूपतेर्मुण्डखण्डनम् ॥१७२४॥

नैक्षिष्ट तच्छिरः प्राग्मौचित्यादुच्चलो नृपः । भूत्वा चिरमुदश्रुस्तु कारयामास वह्निसात् ॥१७२५॥ 1725

धिक्कष्टं तस्करस्येव तादृशचक्रवर्तिनः । गोबलाङ्कां विना प्राप्ता शरीरेणान्त्यसत्क्रिया ॥१७२६॥

भृत्यैस्त्यक्तो नष्टवंशो गौरकाख्येन केनचित् । स काष्ठागारिणा चक्रे नभोनाथ इवाग्निसात् ॥१७२७॥

दीर्घो हर्षनृपोदन्तः सोऽयं कोऽप्यद्भुतावहः । रामायणस्य नियतं प्रकारो भारतस्य वा ॥१७२८॥

भाग्याम्बुवाहतडितस्तरलाः श्रियस्तास्तथावसानविरसं प्रसभोन्नतत्वम् ।
तत्रापि नैव बत मोहहताशयानां शान्तिं प्रयाति विभवानुभवाभिमानः ॥१७२९॥

नाप्यन्यत्यवरोधिकापरिकरे नैकापि चक्रन्द तं तावत्स्वप्यनुगेषु नानुसृतवान्कोऽप्यास्त तीर्थे न वा ।
लोकस्य स्वसुखोपलिप्तमनसो वीक्ष्येति निःस्नेहतां निर्वेदं समुपेत्य नाश्रयति धिक्स्वान्तं वनान्ते रतिम् ॥१७३०॥ 1730

नान्दी किंचिद्भवति नियतं यत्र पश्चाच्च किंचिन्मध्ये कस्मात्सपदि घटयन्सौस्थ्यदौस्थ्यानुरोधम् ।
निःशीर्षाङ्क्रिर्नट इव मुहुः कोऽपि जन्तुर्नटित्वा नो जानीमो भवजवनिकान्तर्हितः क्व प्रयाति ॥१७३१॥

श्रीः सातवाहनकुलेऽकृत कान्तिराजवंशे त्यजन्त्युदयराजकुले प्रतिष्ठाम् ।
शृङ्गं सुरैर्विरहितं जहती हिमाद्रेर्दिव्ये तटे सुरगिरेरिव वासरश्रीः ॥१७३२॥

इति काश्मीरिकमहामात्यचण्पकप्रभुसूनोः कल्हणस्य कवेः कृतौ राजतरङ्गिण्यां सप्तमस्तरङ्गः ॥
सप्ताष्टानवताब्द्यां त्र्यहोनायां महीभुजः । षडत्रोदयराजस्य वंशे जाताः प्रकीर्तिताः ॥
राजानः ६ श्लोकाः १७२३[1] ॥

---

१७२०. ²) A₂ gloss श्रु. १७३२. ¹) Emended; A श्रीसात°.—²) Emended; A कान्तराज°. Cf. vii. 1285.
*Colophon*. Thus A₁, perhaps for १७३२. A₁ adds here लिखितश्चैव मया राजानकरत्नकण्ठेन.

## ॥ अष्टमस्तरङ्गः ॥

ॐ नमो विघ्नहर्त्रे ।

वृद्धाः कञ्चुकिनो जरद्धरवृषः कुब्जस्तुषारद्युतिर्नित्याप्तोपि बहिष्कृतः परिकरः सोयं समस्तोप्यहो ।
अर्धाङ्गैकसतीकृताङ्गनतया चारित्र्यचर्याविदा सा भिन्द्याद्दुरितं चराचरगुरोरन्तःपुरं पार्वती ॥१॥
उच्चकोपप्रसादोभूत्कंचित्कालं नवो नृपः । प्राङ्मन्थादिव पाथोधिरुज्झितविषामृतः ॥२॥
सोदरौ डामरौ चैव तस्याभूतां भृशोन्मदौ । मेघस्येव पुरो वातावमदौ स्फूर्तिहारिणौ ॥३॥
यत्किंचनविधाय्यासीद्भ्राता यश्चौवनोन्मदः । राज्ञो दुष्प्रक्रिया दौःस्थ्यकरी वात्सल्यशालिनः ॥४॥
5 सोनिशं हि गजारूढो विकोशासिः परिभ्रमन् । आत्तसारां महीं पीतरसां रविरिवाकरोत् ॥५॥
एकीभूतानमून्सर्वाण्डामराञ्जिर्वहामि मा । इत्युक्तं तेन नोर्वीभृत्तस्यैकाग्र्यो वचोग्रहीत् ॥६॥
इत्यधो मन्त्रिसामन्ता वैराज्येच्छुः सहोदरः । भूर्निष्कोशेत्यभूत्किं न भूपतेस्तस्य संकटम् ॥७॥
अधिराज्याभिषेकेण सत्कृत्य भ्रातरं ततः । पातुं लोहरसंबन्धं प्राहिणोन्मण्डलान्तरम् ॥८॥
द्विरदायुधपत्त्यश्वकोशामात्यादि स व्रजन् । निनाय सर्वं वात्सल्यादनिषिद्धोग्रजन्मना ॥९॥
10 आशङ्क्य कोट्टभृत्येभ्यः प्रवेशे प्रत्यवस्थितिम् । उत्कर्षजं प्रतापाख्यं सह निन्येव्रधीश तान् ॥१०॥
कुर्याममुं नृपमहं प्रातिहार्यं समाचरन् । नताः स्वभृत्यवत्तस्थुर्भूभुजो भूम्यनन्तराः ॥११॥
दिनानि सप्त संरुद्धे मार्गे तदनुयायिनाम् । गायनः कनको लब्धान्तरो देशान्तरं ययौ ॥१२॥
वाराणस्यां विजहता निर्वेदात्तेन जीवितम् । हर्षभूभर्तृभृत्येषु व्यक्तं निन्ये कृतज्ञता ॥१३॥
ऊर्ध्वाधिरोहं दाक्षिण्याद्दस्यूनामुज्ज्वलः पुनः । सेवास्मृत्या सुधीः सेहे चन्दनो भोगिनामिव ॥१४॥
15 तथा जनकचन्द्रेण दर्पाद्व्यवहृतं तदा । राजान्ये डामराश्चासन्यथा नष्टप्रभा इव ॥१५॥
अभयस्योरशाभर्तुस्तनयायामजीजनत् । राज्यां विभवमत्यां यं भोजो हर्षनृपात्मजः ॥१६॥
जातं मृतत्रिपुत्रानन्तरं गुरुभिः शिशुम् । आयुष्कामैस्तमाबद्धाभव्यभिक्षाचराभिधम् ॥१७॥
ब्रह्मम्पारिसंतानतनुत्वेनाभियोचितम् । ररक्ष तद्गिरा राजा राज्याश्चाङ्के समार्पयत् ॥१८॥ तिलकम् ॥
तमादाय स्वयं वासौ यावद्राज्येकरोन्मनः । तावद्भ्रातेङ्गितज्ञो नीतिकौटिल्यमुज्ज्वलः ॥१९॥
20 तुल्योत्साहासहिष्णुत्वादस्मै कुप्यन्तु डामराः । एष एवातिसत्काराद्ग्रहास्तु विशदाशयः ॥२०॥
इति संचिन्त्य स द्वारदिस्त्वं तस्योदघोषयत् । यथा विकारं प्रययुर्भीमादेवादयोखिलाः ॥२१॥

---

१. [1]) Thus $A_1$; $A_3$ भिन्द्यादु°. २. [1]) Emended; A °भूत्किंचित्कालं. ५. [1]) कोशासिः supplied by $A_2$ in space left by $A_1$. १०. [1]) Emended with C; A सतं. १८. [1]) Emended with C; A समर्पयत.

तेषां तस्य च मात्सर्यं यदा पर्वाभिमायवी । तदान्योन्याश्रिता भृत्याः पणं चक्रुर्युयुत्सवः ॥२२॥
विरक्तः क्ष्मापतिस्तेषां सेतुपृष्ठे रणं मिथः । वार्यमाणोपि सचिवैराददतेह चतुष्किकाम् ॥२३॥
द्वन्द्वयुद्धे प्रवृत्ते तु डामरैरुभयाश्रितैः । अथ प्रारभ्यताकस्मात्संरम्भैर्दारुणो रणः ॥२४॥
सेतुद्वयाश्रया युद्धे लग्ने राज्ञि कारिकटात् । योधा जनकचन्द्रस्य शरवर्षमवाकिरन् ॥२५॥ 25
वान्तः शराः सशीत्कारास्ते स्पृष्टनृपविग्रहाः । मग्नाः स्तम्भेष्वदृश्यन्त कोपेनेव प्रकम्पिनः ॥२६॥
आकृष्य दोर्भ्यां भूपालं बलादिव ततोनुगाः । प्रविश्य मण्डपद्वारं चक्रिरे पिहितार्गलम् ॥२७॥
शस्त्रं जनकचन्द्राद्या भीमादेवादयोपि ते । चतुष्किकायां चक्रुस्तत्रोन्योन्यं जिघांसवः ॥२८॥
तुमुले तत्र शक्त्याग्रं भीमादेवानुगोभिनत् । तीक्ष्णो जनकचन्द्रस्य कालपाशात्मजोर्जुनः ॥२९॥
स वीक्ष्य स्वं क्षतं द्रोहं प्रयुक्तं भूभुजा विदन् । पादप्रहारान्विदधे कोपाद्द्वारि नृपौकसः ॥३०॥ 30
अभग्ने तत्र संत्रासात्स्नानद्रोण्यन्तरं गतम् । अधावत्कृष्टशस्त्रीको भीमादेवो जिघांसया ॥३१॥
स्तम्भच्छन्नस्ताद्विलोक्य तद्वेश्मगणनापतिः । मध्यं जनकचन्द्रस्य कृपाणेन द्विधा व्यधात् ॥३२॥
तस्मिन्हते तदनुजो गग्गसंज्ञो प्रधावितो । स एव करवालेनालक्षितोकृत विक्षतौ ॥३३॥
अग्रभज्य तद्वध्यः सुचिरं नावतिष्ठते । उग्रकर्मा च पुमाञ्चिरस्यास्युचितं रिपुम् ॥३४॥
स हि द्विभाद्रे तत्राब्दे हर्षान्नाशादनन्तरम् । अन्यूनामतिरिक्तैर्वर्षमिभिः पर्यवरुध्यत ॥३५॥ 35
यद्द्रोपकर्तुरप्येव द्रोहं प्रस्वामिनो व्यधात् । औत्कट्यात्पापमनसस्य क्षिप्रमेव क्षयं ययौ ॥३६॥
शान्तस्तोषे कोपशोकावाविष्कुर्वति कृत्रिमौ । भीमादेवः पलायिष्ट गग्गस्तु व्यश्वसीन्नृपे ॥३७॥
प्रहिते लोहरं गग्गे स्वमुल्लाघयितुं क्षतम् । त्रस्तास्तेन व्यसृज्यन्त स्वोर्वीरन्येपि डामराः ॥३८॥
उपायापकृतैः प्राप्यं राज्यं दस्युभिरुज्झितम् । एवं शनैरवष्टम्भं भेजे भूपतिरुद्बलः ॥३९॥
तेनाथ लब्धस्थैर्येण दिनैरेव जिगीषुणा । त्याजिताः क्रमराज्यान्तर्हयसैन्यादि डामराः ॥४०॥ 40
ततो मडवराज्यं स प्रस्थितो विप्रियप्रियान् । डामरान्कालियमुखान्बद्ध्वा शूले व्यपादयत् ॥४१॥
हल्लाराजोपि बलवांस्तेन क्रान्तक्षितिः क्रमात् । बलैर्नगर एवोपैरवष्टम्भेन घातितः ॥४२॥
प्राग्जन्मप्रेमसंस्कारादन्तरङ्गतयाथ वा । तस्य पुत्र इव प्रीतिर्गग्ग एव व्यवर्धत ॥४३॥
न सेहे नाममात्रं यः कण्टकानां प्रियप्रजः । नृपो गग्गाय चुक्रोध सापराधाय न क्वचित् ॥४४॥
राज्यारम्भेनुयुक्तेन भीमादेवेन धीमता । उक्ते शुभावहे शिक्षे द्वे स मन्त्रवदस्मरत् ॥४५॥ 45
एकया लोकवार्तार्थं प्राकारप्रभृति निर्गतः । बहिरविक्षय बाह्यालीरश्वारोहादिनक्षयम् ॥४६॥
अन्वयोत्थानशीलेन भूत्वा नामापि वैरिणः । अर्धरात्रेपि यात्राभिस्तेनाच्छिद्यत विग्रहः ॥४७॥
तस्यैवालुप्तधैर्यस्य राज्ञां मध्ये[1] मनस्विनः । कार्पण्योपहतं[2] वृत्तं नाप्यभूदमलीमसम् ॥४८॥
अथोच्चलसदाचारजाह्नवीजलमज्जनात् । कुनृपोदीरणोद्भूतो गिरः पाप्मापनेष्यते ॥४९॥
तेनानुपचिताङ्गेन प्रायशो विनिवारिताः । अनूरुणेव सद्वृत्तिध्वंसिनो ध्वान्तसंचयाः ॥५०॥ 50

२३. [1]) स्तु supplied by $A_2$ in space left by $A_1$. २७. [1]) Emended; A निहता°. ३९. [1]) Emended; A प्राकदबल. ४४. [1]) Emended; A सापराध न कश्चित्. ४७. [1]) Thus $A_1$; corr. by later hand into अन्धाको°. ४८. [1]) तस्यैवालुप्तधैर्यस्य राज्ञां मध्ये supplied by $A_2$ in space left by $A_1$.—[2]) Thus $A_2$; $A_1$ कार्येणापहतं.—[3]) Thus $A_2$; $A_1$ नाप्रायूद°.

प्रायोपविष्टप्रमये देहत्यागप्रतिज्ञया । निबद्धया प्रत्यवेक्षां धर्माध्यक्षानकारयत् ॥५१॥
निशम्य कृपणस्यार्तिं क्रन्दितं तदनिष्टकृत् । बभूव तस्य स्वात्मापि नानिग्राह्यो महात्मनः ॥५२॥
कार्यिणो यस्य वा दोषाद्वार्ताक्रन्दितमुत्थितौ । तस्य स्वबान्धवाक्रन्दैस्तस्मिन्क्रुद्धे शशाम तत् ॥५३॥
अबलानुग्रहव्यग्रे तस्मिन्नाजनि सर्वतः । वास्तव्या बलिनस्तस्थुरबलास्त्वधिकारिणः ॥५४॥
55 सोर्थेनैकधरत्राजेत्यज्ञात्वा कथितं जनैः । यं यं स्वदोषमश्रौषीत्तं तं त्वरितमत्यजत् ॥५५॥
येन केनापि संप्राप्तः प्राप्युपायेन पार्थिवः । अमोघदर्शनः सोभूत्कल्पवृक्ष इवार्थिनाम् ॥५६॥
सुधावर्षी प्रियालापप्रीतिदायैर्जनप्रियः । नाशकत्सेवकास्त्यक्तुं विश्रम्भभवनेष्वपि ॥५७॥
श्लाघ्यभमैः प्रतिकलं तस्य सेवाविधायिभिः । प्राप्तं त्रिचतुरान्वारान्क्षणदास्वपि दर्शनम् ॥५८॥
सेव्यमानः सदाक्षिण्यः क्षणेनैव फलप्रदः । कस्यैन्द्रजालिकैरम्रः शाखीव न बभूव सः ॥५९॥
60 वास्तव्यानां निशम्यार्तिं तेन दैन्यनिवारणम् । चक्रे पित्रेव पुत्राणां संत्यक्तेतरकर्मणा ॥६०॥
स्वसंचितानि सोन्नानि विक्रीणानोल्पवेतनैः । दुर्भिक्षमुद्धतावेव जघान जनवत्सलः ॥६१॥
निवार्य चौर्याचरणात्कृपार्द्रस्तस्करानपि । कोशाध्यक्षान्स विदधत्कारागार्थजीविकान् ॥६२॥
कः संविभाग्यश्छेत्तव्या विपदः कस्य मण्डले । इत्यन्विष्यन्सदैकैकं चारैश्चिन्तापरोभवत् ॥६३॥
तस्यैकोप्यर्थनैस्पृह्यं नाम कोपि महान्गुणः । अनुषक्तो गुणैस्तैस्तै राज्ञः पल्लवितोभवत् ॥६४॥
65 स स्थित्यै दण्डयन्दण्ड्यानघाशेषभयाकुलम् । तेषां नादत्त सत्कर्म शुद्धये तांस्त्वकारयत् ॥६५॥
प्रस्तुतस्यार्थिने दातुं वस्तु तस्यैकसंख्यया । सहस्रसंख्यया दानभङ्गात्पूर्णतां यदि ॥६६॥
भूयसेर्थी यथा मह्यं देहि देहीति गां वदन् । तथास्मै देहि देहीति वदन्दाता स बुभुवे ॥६७॥
अनुदात्तं क्षिप्रकालं क्षीणसंख्यमसत्कृतम् । नेतृतूलादिनीतार्धं न तद्दत्तमदृश्यत ॥६८॥
उत्सवे दैन्यविश्रमी रञ्जने कार्यसाधने । आलेख्यलीनशाखीव न सोलभ्यफलोभवत् ॥६९॥
70 उत्सवे शिवरात्र्यादौ जनतां सोसिचद्धनैः । मघयोगे पयःपूरैर्महेन्द्र इव मेदिनीम् ॥७०॥
ताम्बूलदानव्यसनं पराध्योस्तव्रता तथा । नाभूद्धर्षनृपस्यापि तादृक्तस्यास्त[1] यादृशी ॥७१॥
लोष्टमात्रावशेषेपि लब्धे नृपपदे व्यधात् । स दानविभ्रमांस्तान्ये[1] धनदेनापि दुष्कराः ॥७२॥
निर्माणलोठनैर्धाम्नामजस्रं वाजिनां क्रयैः । काश्मीरिकोपि[1] चक्रे स न मृत्स्करसाद्धनम् ॥७३॥
अध्वन्यध्वनि योगेन प्राणविन्यासनैस्तथा । बभूव सर्वकृत्यज्ञः सोन्तरात्मेव देहिनाम् ॥७४॥
75 भोगाम्राजोचितान्विप्रा भैषज्यं व्याधिपीडिताः । वेतनं वृत्तिहीनाश्च तस्मात्समुपलेभिरे ॥७५॥
पिड्ग्रोपरागकेत्वादिदुर्निमित्तोपशान्तिषु[1] । गोसहस्राश्वहेमादिसंभवैः सोभजद्द्विजान् ॥७६॥
नन्दिक्षेत्रे पुरं कृत्स्नं दग्धमुत्पातवह्निना । पूर्वाधिकगुणं तेन नवं राज्ये व्यधीयत ॥७७॥
श्रीचक्रधरयोगेशस्वयंभूस्थानयोजनम् । जीर्णोद्धृतिव्यसनिना कृतं तेन सुकर्मणा ॥७८॥
हर्षदेवेन यो निन्ये श्रीपरीहासकेशवः । परिहासपुरे तं स नवं नरपतिर्व्यधात् ॥७९॥

---

५३. [1]) Emended ; A दोषादर्ता° ; C दोषाद्दता°. ५७. [1]) A विस्रम्भ°. ७१. [1]) Thus $A_1$ ; $A_2$ °स्यास्तु. ७२. [1]) Emended ; A °विभ्रमास्तान्ये. ७३. [1]) Emended ; A काश्मीरकोपि. ७६. [1]) Emended ; A °पमाविषु.

प्रत्यर्पितमुक्तावल्या भूषितो हर्षनीतया । तेन त्रिभुवनस्वामी निर्लोभेन महीभुजा ॥८०॥
जयापीडाहृतं हर्षोत्पाटने क्रुष्टमग्निना । सिंहासनं नवं चक्रे स राज्यककुदं नृपः ॥८१॥
लब्ध्वा तदर्धाध्यारोहं भर्तुः प्रेम्णातिदुर्लभम् । सामान्ययापि देवीत्वं जयमत्या न दूषितम् ॥८२॥
सा त्वानृशंस्यमाधुर्यत्यागसत्प्रियतानयैः । अश्रान्तार्तपरित्राणमुख्यैर्भव्याभवद्गुणैः ॥८३॥
लब्धभूपालवाल्लभ्या नार्थः क्रोधात्प्रजासु यत् । राक्षस्य इव भक्षाय लावण्यललिता अपि ॥८४॥
प्रियप्रजस्यायमन्यो गुणः सर्वगुणाग्रणीः । उच्चलक्ष्मापतेरासीदर्थैरस्पृष्टशालिनः ॥८५॥
जिघांसवः पापकामाः परस्वादायिनश्च ताः । रक्षांस्यधिकृता नाम तेभ्यो रक्षेदिमाः प्रजाः ॥८६॥
तेनेतिहासिनीं नीतिं श्रद्दधानेन सर्वदा । येन संपठता श्लोकं कायस्थोन्मूलनं कृतम् ॥८७॥
यत्ते विषूचिकाशूलसंन्यासेभ्यः किलेतरे । ग्रन्थ्याशुकारिणो विश्वं प्रजारोगा नियोगिनः ॥८८॥
पितरं कर्कटो हन्ति मातरं हन्ति पुत्तिका । हन्ति सर्वं तु कायस्थः कृतघ्नः प्राप्तसंभवः ॥८९॥
गुणान्समर्प्य स्फुरता येनैवोत्थाप्यते शठः । वेताल इव कायस्थस्तमेवाहन्ति हेलया ॥९०॥
विषवृक्षो नियोगी च यदेवाश्रित्य वर्धते । चित्रं करोति तस्यैव स्थानस्यानभिगम्यताम् ॥९१॥
तेन ते क्ष्माभुजा मानक्षतिकार्यनिवारणैः । काराप्रवेशैश्च खलाः शमं नीताः पदे पदे ॥९२॥
कार्यान्निवार्य बहुशः संहेलायान्महत्तमान् । भक्तासूत्रमयं वासः कारायां पर्यधापयत् ॥९३॥
स कार्यवेषं हास्याय समार्यं चारणोचितम् । अकारयद्भूतभिक्षं धावनं डोम्बयोधवत् ॥९४॥
स प्रांशुर्वेष्टितरमभुद्र्भोपेतोत्फलन्पुनः । शूलहस्तः सजानुरः केपामासीच हास्यकृत् ॥९५॥
स शीर्षदर्शनं साम्यवादवेश्याविटान्वितम् । प्रियवेश्यं कंचिदमे नृत्तवाद्यमकारयत् ॥९६॥
वक्त्रान्थं शकटे नग्नं क्षुरलूनार्धमस्तकम् । अकारयत्खटाम्बस्तमीनपिष्टच्छटाङ्कितम् ॥९७॥
ते कुम्भवादनैर्मुण्डमण्डनैश्चाङ्किताभिधाः । नियोगिनो भग्नमानाः सर्वतः ख्यातिमाययुः ॥९८॥
कार्यभ्रष्टा मलक्लिन्नक्षीणवस्त्रावगुण्ठनाः । सर्वार्थिनो व्यभाव्यन्त केप्यटन्तः प्रतिक्षपम् ॥९९॥
वृथावृद्धाः सुखप्राप्यं पाण्डित्यं भूर्जवस्परे । मत्वा बाला इवाचार्यगृहे प्रारेभिरे श्रुतम् ॥१००॥
केप्युच्चैरङ्गभिक्षाकाः सादरं स्तोत्रपाठिनः । कृतानुपाठाः स्वापत्यैः प्राज्ञे लोकमहासयन् ॥१०१॥
माता स्वसा सुता भार्या स्वापि कैरप्यकार्यत । सामन्तसेवनं कार्यप्राप्त्यै सुरतसेवया ॥१०२॥
जातकस्वप्नशाकुनश्लक्षणनिरीक्षणम् । कारयद्भिः शठैरन्यैर्गणकाः परिखेदिताः ॥१०३॥
पिशाचा इव शुष्कास्या रूक्षश्मश्रुकचाः कृशाः । बद्धाः परैर्व्यभाव्यन्त भृङ्कलामुखराकृयः ॥१०४॥
नृपेण कार्मिणां दर्पलिङ्गनाशे विपाटिते । अक्ष्णोर्भ्रान्तिपरिज्ञानक्षमत्वं समजायत ॥१०५॥
भारतस्तवराजादिस्तोत्रपाठमशिश्रियन् । ते दुर्गोत्सारिणीविद्याजपं बोदकुलोत्तमाः ॥१०६॥
इत्थं दौःस्थ्योदये दीर्घे मज्जन्तो नित्यदुर्जनाः । तस्मिन्राजनि कायस्था व्यलोक्यन्त पदे पदे ॥१०७॥
भिन्नसंधानभूर्यर्थदानभोज्यादिढौकनैः । न हि मोहयितुं शक्ताः प्राज्ञं तं तेन्यराजवत् ॥१०८॥
तान्प्रजाकण्टकान्दुष्टान्कृतधीरकृतानिशम् । तैस्तैः शुचिभिरध्यक्षैः स विशामीश्वरो वशान् ॥१०९॥

९४ ¹) Emended; A °कूलभिक्षा°.—²) Emended, A डोम्ब°.

भूतेशस्य यथा पुरी हुतवहप्लुष्टा स्मरादाशावलाक्रुधः स्वां श्रियमाससाद सहसा तद्वत्समस्तामिमाम् ।
110 स्वं कायस्थकुटुम्बिकूटशबलवमाया[1] पञ्चाननलीलीदामुसलदेव निर्वृतिसुखस्थित्या पुरीं स्वां क्रियाः ॥११०॥
शिवस्तुत्ये श्लोकमयं शिवरथ्याभिधः । विद्वान्पठंस्तेन हठात्सर्वाध्यक्षो व्यधीयत ॥१११॥
व्यवहारानभिज्ञोपि कंचित्कालमदीदृशत् । शुचित्वादार्यराजः स क्ष्मायां कृतयुगस्थितिम् ॥११२॥
तीव्रदण्डत्वमुग्रत्वतेजसस्तस्य भूपतेः । क्रूरानुद्दिश्य कायस्थान्धीमद्भिर्बह्वमन्यत ॥११३॥
न हि क्षुद्राश्वकायस्थपिशाचाविष्टवैरिणाम् । शंसन्त्यन्तरितं दण्डं दण्डनीतिविशारदाः ॥११४॥
115 चिरेण दण्डिता ह्येते कुर्युर्दण्डभयाद्भ्रमम् । लब्धान्तराः प्राणहरं कृच्छ्रं किंचिद्धि शासितुः ॥११५॥
दण्ड्यानां दण्ड्यमानानां पुत्रस्त्रीमित्रबान्धवाः । राज्ञा विचारशीलेन न तेनोपद्रुताः क्वचित् ॥११६॥
कर्णेजपांल्लोष्टधरप्रमुखांस्तेन दुःखदैः । कर्मभिः क्लिश्नताद्यापि पैशुन्यस्य खिलीकृतः ॥११७॥
विस्मृतिं लब्धराज्यानां पूर्वसंकल्पवासनाः । प्रयान्ति प्राप्तजनुषां गर्भवासस्पृहा इव ॥११८॥
प्राग्राज्याधिगमात्किंचित्सदसद्यद्व्यचिन्तयत् । राज्ये तन्न विसस्मार जातिस्मर इवोच्चलः ॥११९॥
120 ददर्श शत्रोर्द्रोहान्यान्द्रोग्धृन्स्वा पुरानुगान् । कर्तव्यानुगुणं तेषां प्रतिपत्तिमदर्शयत् ॥१२०॥
स्मरेन्नोपपतिः पूर्वपतिद्रोहं कुयोषितः । पूर्वस्वाम्यहितां चाथ कुभृत्यस्येश्वरो जडः ॥१२१॥
शेषाहिदेहान्मेदिन्या समं प्रज्ञापि राज्यभृत् । तस्मिन्परिणता नूनं कृत्याकृत्यविवेककारि ॥१२२॥
तथा ह्येकस्य वणिजो व्यवहर्तुश्च सोभवत् । विवादे संशयं छिन्दन्नेवं स्थेयाद्यगोचरे ॥१२३॥
सौहृदागूढसद्भावे व्यापदीपयिकं धनी । न्यासीचकार दीनारलक्षं कोपि वणिग्गृहे ॥१२४॥
125 तेनोपयुज्यमाना च व्ययेषु वणिजः करात् । कियत्यपि गृहीताभूद्वत्समा[1]मान्तरान्तरा ॥१२५॥
विंशतिं सार्धं[1] यातासु समासु न्यासधारिणम् । गृहीतशेषं दातुं स धनं प्रार्थयताथ तम् ॥१२६॥
वणिक्तु कुकृती तस्य न्यासमपासाय सोधमः । कालापहारमकरोत्तैस्तैः कलुषधीर्मिषैः ॥१२७॥
स्रोतोभिर्व्यस्तमम्भोधौ लभ्यं मेघमुखैः पयः । प्राप्तिर्भूयस्तु नास्त्येव वणिग्ग्रस्तस्य वस्तुनः ॥१२८॥
तैलस्निग्धमुखः स्वल्पालापो मृद्वाकृतिर्भवन् । न्यासप्रासविवादोद्यो वणिग्व्याघ्राद्विशिष्यते ॥१२९॥
130 विवादे श्रेष्ठिना साक्षं स्मितैः प्राप्तसख्यदर्शनैः । मुक्तं मुक्तं ज्ञायमानं प्राणान्तेपि न मुच्यते ॥१३०॥
निसर्गवञ्चका वेश्याः कायस्थो दिविरो वणिक् । गुरूपदेशोपस्कारैर्विशिष्टाः सविषाहिवत् ॥१३१॥
चन्दनाङ्कालिके श्वेतांशुके धूपाधिवासिनि । विश्वस्तः स्यात्किराते[1] यो विप्रकृष्टस्य नापदः ॥१३२॥
ललाटदृक्पुटश्रोत्रहृन्न्यस्तचन्दनः । षड्बिन्दुर्वृश्चिक इव क्षणात्प्राणान्तकृद्वणिक् ॥१३३॥
पाण्डुश्यामोभिधूमार्द्रैः सूक्ष्मास्यो गहनोदरः । तुम्बीफलोपमः श्रेष्ठी रक्तं मांसं च कर्षति ॥१३४॥
135 सोथ निःशेषितमिषः क्रुद्धो निर्बन्धकारिणः । गणनापत्रिकां तस्य सभ्रूभङ्गमदर्शयत् ॥१३५॥
यदादौ श्रेयसे इति न्यस्तमश्रेयसे पदम् । आतरव्यत्यये तेनो गृहीता षट्शती त्वया ॥१३६॥
छिद्रोपानत्कथाबन्धे शतं चर्मकृतेर्पितम् । विपादिकाकृते दास्या नीतं पञ्चाशतो घृतम् ॥१३७॥

११०. [1]) $A_1$ indicates here a *lacuna* of one *akshara*. १११. [1]) Emended with C; A लोक°. १२५. [1]) Emended; A °भुवत्समा°. Cf. viii. 154. १२६. [1]) Emended; A विंशतिदिशावातासु. Cf. v. 210. १३२. [1]) Emended; A किरातै.

स्फोटने भाण्डभारस्य क्रन्दन्त्याः कृपयार्पितम् । कुलाल्या बहुशः पश्य भूर्जे लग्नं शतत्रयम् ॥१३८॥
शिशुभ्योस्य बिडालस्य क्रीताः पोषाय मूषिकाः । त्वया शतेन वात्सल्याद्भ्रान्त्यमत्स्यरसस्तथा ॥१३९॥
चरणोद्वर्तनं सर्पिः शालिचूर्णं च सप्तभिः । क्रीतं शतैः भाद्रपदश्राद्धे च घृतमाक्षिकम् ॥१४०॥ 140
नीतं श्रीश्राद्धिकं कासायासायाद्दर्भकेण ते । सोऽव्यक्तजिह्वः किं वेत्ति वक्तुं लग्नं शतं ततः ॥१४१॥
वृषणोत्पाटको भिक्षाचरस्ते हडयाचकः । यो वारितो बुद्धपटुस्तस्मै दत्तं शतत्रयम् ॥१४२॥
आनीते मद्यपात्राणां मध्यं सर्वस्वयोपरि । शतं शतद्वयं धूपगन्धामूलपलाण्डुषु ॥१४३॥
इत्याद्यचिन्त्यतायुक्तान्परिहार्यव्ययानसौ । तस्यैकीकृत्य गणनां लाभेपि धनकैर्ण्यभाक् ॥१४४॥
वर्षमासप्रहतिथिप्रत्यावृत्तिः पुनः पुनः । संसारस्येव तस्यान्तं न ययौ नर्तिताङ्गुलेः ॥१४५॥ 145
स मूलपत्रं पिण्डीकृत्याथ सकलान्तरम् । प्रसारितोद्धस्तवेवे मीलयन्नभ्यधान्मृदु ॥१४६॥
शल्यमुद्धर निःक्षेपं मयोन्न्यासधनं त्विदम् । विश्रम्भदत्तं निर्दम्भं दीयतां सकलान्तरम् ॥१४७॥
तस्य धर्म्ये वचो जानन्क्षणमुच्छ्वसितोऽभवत् । क्षुरं क्षौद्रोपलिप्तं तु ध्यात्वा पश्चादतप्यत ॥१४८॥
मुक्तापह्नुतसर्वस्वं क्रौर्यानार्यमधार्थकः । विवादे नाशकज्जेतुं नापि स्थेया विचारकाः ॥१४९॥
स्थेयैरनिश्चितन्यायं पुरो न्यस्तं ततो नृपः । तदित्थमिति निश्चित्य वणिजं तमभाषत ॥१५०॥ 150
अद्यापि न्यासदीनाराः सन्ति चेत्तत्प्रदर्श्यताम् । अंशः कियानपि ततस्ततो वच्मि यथोचितम् ॥१५१॥
तथा कृते तेन वीक्ष्य दीनारान्मन्त्रिणोऽब्रवीत् । राजभिर्भाविता राज्ञां नाम्ना टङ्काः क्रियेत किम् ॥१५२॥
न चेत्कलशभूपालकाले न्यासीकृतेष्वमी । दीनारेषु कुतष्टङ्का मन्नामाङ्का अपि स्थिताः ॥१५३॥
निश्चितेनैव लक्षेण वणिक्तस्माद्व्यवाहरत् । वणिजो द्रविणमायमप्यासेनान्तरान्तरा ॥१५४॥
तस्माद्यदा यदेतेन गृहीतं दीयतां ततः । तदा प्रभृत्ययथावक्षाभोस्मै वणिजोर्थिनः ॥१५५॥ 155
न्यसनानेहसश्चैव प्रभृत्यस्मै प्रयच्छतु । लक्षाद्खण्डितालाभे किं वाच्यं मौलिके धने ॥१५६॥
अवधारयितुं शक्यं मादृशैः सघृणैरियत् । श्रीयशस्करवद्वीक्ष्यमीदृक्षेषु तु युज्यते ॥१५७॥
विवादे संविहानस्य युक्तं क्षान्त्यानुशासनम् । भाव्यं दण्डधराचारैः प्रयुक्तकुहतैः पुनः ॥१५८॥
अनिर्हार्येषु शल्येषु महामर्मगतेष्विव । सविवादेषु योपेक्षा कालापेक्षी स्वयान्नृपः ॥१५९॥
पथ्ये पार्थिवस्येत्थं निश्चोद्यं तस्य पालनम् । प्रजासु जागरूकस्य मनोरिव मनस्विनः ॥१६०॥ 160
सत्यं कारणनिर्व्यपेक्षममनाहंकारहीना सतीभावो वीतजनापवाद उचितोक्तित्वं समस्तप्रियम् ।
चित्रं सा त्रिभयान्विता तरुणिमा पारिप्लवत्वोज्झितो राजत्वं त्रिकलङ्कमत्र चरमे काले किलेत्यन्यथा ॥१६१॥
स वारशोपि राजेन्द्रधन्यथाः सम्भिकत्वाभवत् । मात्सर्याविष्टवैवश्याद्वोपोल्कावर्षभीषणः ॥१६२॥
औदार्यशौर्यधीधैर्यगुणमाहात्म्यमत्सरः । बभूव संख्यातीतानां मानप्राणहरो नृणाम् ॥१६३॥
मानोन्नतैव भूयोपि वाक्पारुष्यदवाहतैः । लाघवं मत्सुपालम्भैः पार्थिवोप्यनुभावितः ॥१६४॥
प्रस्तुमानां फणीन्द्राणामिव कोपोज्ज्वलं विना । तेजो विस्फूर्जितं ज्ञेयं न हि नाम शरीरिणाम् ॥१६५॥ 165

---

१४७. [1]) A विश्रम्भ°. १४९. [1]) Emended with C; A कौर्यानर्थ°. १६२. [1]) Emended; A स विता°.

विविधे भूतसर्गेऽस्मिन्न स कश्चित्स विद्यते । वपुर्वंशाचारिताद्वि यस्य दोषैर्न दूषितम् ॥१६६॥
जातिः पङ्कुरुहाद्वपुः कपिलताक्रान्तं शिरः खण्डनप्रभवप्रपञ्चकुचिशीलतादिविगुणाचारप्रवृष्टं वयः ।
निश्चलङ्कुरिति प्रभूतविषयव्याप्तिस्पृशो दुःसहा दोषा यत्र पुरोऽस्तु तत्र कतमो निर्दोषतोत्सेकभूः ॥१६७॥
अनिचार्यैति भूपालः स चकारानुजीविनाम् । वंशाचारविरहादिदोषोद्घोषणमन्वहम् ॥१६८॥
अन्योन्यद्वेषमुत्पाद्य संख्यातीता महाभटाः । युद्धभद्रालुना तेन द्वन्द्वयुद्धेषु घातिताः ॥१६९॥
170 मासार्धदिनमाहेन्द्रमहोत्सवसरेषु सः । निनाय योधान्संनद्धानन्योन्यप्रधनैर्धनम् ॥१७०॥
स नाभूदुत्सवः कश्चित्तदा यत्र नृपाङ्गने । भूमिर्न सिक्ता रक्तेन हाहाकारो न चोत्थयौ ॥१७१॥
नृत्यन्त इव निर्याता गृहेभ्यो वंशशोभिनः । कान्धवैर्निन्यिरे योधा लूनाङ्गाः पार्थिवाङ्गनात् ॥१७२॥
स्निग्धश्यामकचांश्चारदश्मश्रूनाकल्पशोभिनः । हतान्वीक्ष्य भटाञ्जाया मुमुदे न तु विव्यथे ॥१७३॥
भार्यो राजगृहं गत्वा प्रत्यायातेषु भर्तृषु । मेनिरे दिवसं लब्धमनास्था नित्यमन्यथा ॥१७४॥
175 भवेत्सवदर्दं कुर्यामित्यहंक्रियया वदन् । साविष्यमव्याहतवाग्यैस्तैर्भृत्यैरजिग्रहत् ॥१७५॥
प्रवर्धमानांस्तानेव विद्वेषकलुषाशयः । हताधिकारान्विदधे बहुशश्च विमानितान् ॥१७६॥
दम्भकः कम्पनाधीशः प्रवृद्धो तत्र सक्रुधि । विद्रुतो विषलाटायां निपत्य निहतः खशैः ॥१७७॥
तेन स्ववर्धितो द्वाराधीश्वरो रक्काभिधः । हताधिकारो विदधे विभूतिं वीक्ष्य भूयसीम् ॥१७८॥
माणिक्यसैन्यपतिना द्वारेकस्मान्निवारिते । खिन्नेन विजयक्षेत्रे चक्रे व्रतपरिग्रहः ॥१७९॥
180 कम्पनाद्यधिकारस्थाः प्रवीरास्तिलकादयः । काकवंश्या मार्दवेन तत्कोपं नानुभाविताः ॥१८०॥
भोगसेनो निरनुगः क्षीणवासा भवन्कृतः । तेनातिसेवामीतेन राजस्थानाधिकारभाक् ॥१८१॥
यस्येन्द्रद्वादशीयुद्धे सान्द्रसैन्योऽपि विद्रुतः । क्षुद्रवद्रङ्गगाचन्द्रोऽपि रौद्रमालोक्य विक्रमम् ॥१८२॥
येऽपि सज्जाभिधानस्य पुत्राः सामान्यशास्त्रिणः । तानजुच्छुजुव्यजुन्स मन्त्रिणः समपादयत् ॥१८३॥
पुत्रौ विजयसिंहस्य तस्येवास्यस्कन्दुर्दशौ । तिलको जनकश्चास्तामंमात्यश्रेणिमध्यगौ ॥१८४॥
185 यमेलाभयवाणादिमुख्या द्वारादिनायकाः । कस्तान्समर्थः संख्यातुं तद्विस्तरलसंपदः ॥१८५॥
द्विजाः प्रशस्तकलशादयः पूर्वे तदन्तरे । प्रापुर्बालद्रुमान्तःस्थजीर्णानोकहविभ्रमम् ॥१८६॥
कन्दर्पः क्ष्माभुजा दूतैः समानीतोऽपि नाददे । तस्यासहनतां वीक्ष्य प्रार्थितोऽप्यधिकारिताम् ॥१८७॥
आस्थानाचारसंलापव्यवहारादि मण्डले । नवमेवाभवत्सर्वं तस्मिन्नभिनवे नृपे ॥१८८॥
लक्ष्मीः कार्मणचूर्णाङ्का वेश्येव वशवर्तिनः । धीरानपि विधायेयं करोत्युन्मार्गवर्तिनः ॥१८९॥
190 सपिण्डानामपि व्यक्तमूलवीक्षणतत्परा । प्रेततेव नरेन्द्रश्रीर्जातिक्लेशापकारिणी ॥१९०॥
समस्तसंपत्पूर्णोऽपि यस्मात्सुस्सलभूपतिः । दध्यौ भ्रातुरवस्कन्दं राज्यापहरणोद्यतः ॥१९१॥
अकस्माद्भृणोऽव्ययेनमिव तं शीघ्रपातिनम् । स्थानं वराहवार्ताख्यमुल्लङ्घ्याजनमग्रजः ॥१९२॥
क्षिप्रकारी विनिर्गत्य तमग्रामपदं ततः । निपत्य सैन्यैर्बहुलैः सोपकारमकारयत् ॥१९३॥
विद्रुतस्यास्पदे तस्य नानोपकरणैर्युतैः । ताम्बूलवल्लीकूटैश्च सामग्री समभाव्यत ॥१९४॥

---

१८४. ¹) Emended with C; A °चास्तम°. १८६. ¹) Emended, A °जीर्णानोकाद°. १९४. ¹) Emended; A ताम्बूलवेलाकु°.

हतकार्यपरावृत्त्याशाक्षोऽपि पार्थिवः । मत्वापूर्वं तमभ्यणोदम्बेयुः क्रूरविक्रमम् ॥१९५॥ 195
गग्गचन्द्रस्तदावेशाद्धत्वा बहलसैनिकः । चक्रे सुस्सलभूपालबलनिर्दलनं ततः ॥१९६॥
अनल्पैः सौस्सलैर्योधैराहवायासनिःसहैः । क्रान्तिर्विमानोद्यानेषु कुमारीणाममुच्यत ॥१९७॥
भर्तृप्रसादस्यानृण्यं प्राणैर्युधि समर्पितैः । राजपुत्रौ गतौ तत्र सहदेवयुधिष्ठिरौ ॥१९८॥
पराधान्सुस्सलानीकाद्गग्गस्तान्[1]प्य विद्रुतान् । चक्रे भूरितुरंगस्य यैर्भूपस्यापि कौतुकम् ॥१९९॥
निर्विघ्नकटकं तं स भुक्त्वा सेल्यपुराध्वना । क्रमराज्योन्मुखं मार्गं द्रुतमन्वसरन्नृपः ॥२००॥ 200
आक्रम्यमाणसरणिः भयदावयजन्मना । प्रविवेश दरद्देशं परिमेयपरिच्छदः ॥२०१॥
दत्तमार्गं तस्य राजा डामरं लोष्टकाभिधम् । स सेल्यपुरजं हत्वा नगरं प्राविशत्ततः ॥२०२॥
तस्मिन्दूरं गते वैरकलुषोऽपि स नाददे । भ्रातृस्नेहेन संरम्भं ग्रहीतुं लोहरं गिरिम् ॥२०३॥
कल्हः कालिञ्जराधीशो[1] दौहित्रीं पुत्रवत्सुते । यामवर्धयत स्नेहात्पुत्रः पितृवर्जिताम् ॥२०४॥
राज्ञी विज्ञयपालस्य सुतां सुस्सलभूपतिः । उपयेमे स तां श्रीमानन्नवां मेघमञ्जरीम् ॥२०५॥ 205
तस्य प्रभावाधिष्ठानाच्छिद्योऽपि न लोहरे । शक्तिराचीद्दिवशानामपि बाधाय वैरिणाम् ॥२०६॥
धीरः सुस्सलदेवोऽपि मार्गैर्निर्गत्य दुर्गमैः । आसदत्सूरिभिर्मासैः स्वोर्वीं दुर्गादिवर्त्मना ॥२०७॥
प्रशान्ते व्यसने तस्मिन्धीरस्योत्सलभूपतेः । अन्येऽपि व्यसनाभासा उत्पन्नध्वंसिनोऽभवन् ॥२०८॥
भीमादेवः समावाय भोजं कलशदेवजम् । साहायकार्थमानिन्ये दरद्राजं जगद्दलम् ॥२०९॥
सल्हो हर्षमहीभर्तुरवरुद्धात्मजोऽभवत् । भ्राता दर्शनपालस्य सज्जपालस्तु तद्बलम् ॥२१०॥ 210
प्रीतिशेन ततो राज्ञा साक्षेप दरदीश्वरः । आक्षेपाहारितः प्राकारमस्यावृत्य निजां भुवम् ॥२११॥
सल्हस्तमन्वगाच्छत्रं भोजोऽविक्षत्स्वमण्डलम् । भेजे सुस्सलदेवस्य सज्जपालोऽनुजीविताम् ॥२१२॥
गृहीतार्थेन भृत्येन निर्गमैव प्रदर्शितः । भोजः क्षिप्रं नृपात्प्राप निग्रहं तस्करोचितम् ॥२१३॥
देवेश्वरात्मजः पित्र्यकोऽपि[1] वैराज्यलालसः । डामराश्रिते राज्ञि निर्याते व्यद्रवद्रिपुः ॥२१४॥
विचारपरिहारेण धावन्तः सर्वतो जडाः । तिर्यञ्च इव हास्याय प्रसिद्धिकारणा जनाः ॥२१५॥ 215
मल्लस्य रामलाख्योर्ध्वं सूनुरास[1] दिगन्तरे । भड्डूकः कश्चिदेवं चक्रिकाचतुरो वदन् ॥२१६॥
भिन्ने प्रवृद्धि व्यामूढैर्बहुभिर्विप्रलम्भितैः । भ्रममाणाद्विरानेन भूमिपैर्भूम्यनन्तरैः ॥२१७॥युग्मम्[1]॥
ग्रीष्मे प्रविष्टः कश्मीरानेकाकी घर्मपीडितः । व्यधीयत छिन्ननासः प्रतिज्ञाय नृपानुगैः ॥२१८॥
कटके पर्यटन्नाशः स एव ददृशे पुनः । स्वजात्युचितमत्यार्दिभिक्षवी सस्मितं जनैः ॥ २१९॥
मिथ्यैव नीतिकौटिल्यैः क्रियतेऽभ्युदयभ्रमः । शक्यते परया कर्तुं न दैवस्य मनीषिणम् ॥२२०॥ 220
शान्तापि ज्वलति क्वापि क्वचिद्दीप्तापि शाम्यति । दैववातवशाद्वह्निः पुंसः कल्पाप्तिसंनिभा ॥२२१॥
पलायनैर्नापयाति निश्चला भवितव्यता । देहिनः पुच्छसंलीना वह्निज्वालेव पक्षिणः ॥२२२॥

---

१९९. [1]) Emended; A °[illegible]°. २०४. [1]) Emended; A कालिञ्जर°. Cf. vii, 1256. viii, 618. २१४. [1]) Emended with C; A [illegible]°. २१६. [1]) Thus corr. by A₂ from A₁ [illegible]°. २१७. [1]) A₁ writes here २ instead of युग्मम्.

नाब्धिजलवह्निविषशस्त्रशरप्रयोगैर्न श्वभ्रपातरभसेन न चाभिचारैः ।
शक्या भिदन्तुमसवो विधुरैरकाण्डे भोक्तव्यभोगनियतोच्छ्वसितस्य जन्तोः ॥२२३॥
भिक्षाचरः समादिष्टवधो जयमतीगृहात् । नक्तं बध्यभुवं निन्ये वधकैः पार्थिवाज्ञया ॥२२४॥
225 पाणिं प्रस्फोट्य निक्षिप्तो वितस्तायां समीरणैः । क्षिप्तस्तटं क्षणं स्पन्दमानवक्षाः कृपालुना ॥२२५॥
द्विजेनैकेन संप्राप्तधिराद्धृतचेतनः । आसमत्यभिधानाया ज्ञातिर्दिद्देति गौरवात् ॥२२६॥
शाहिपुत्रीभिदक्ता या दत्तधतुरया तया । नीतो देशान्तरं गूढं ववृधे दक्षिणापथे ॥२२७॥ तिलकम् ॥
स भृत्यमन्यमिज्ञाय पुत्रवज्जरवर्मणा । मालवेन्द्रेण शस्त्रास्त्रविद्याभ्यासमकार्यत ॥२२८॥
अन्यदीयं घातयित्वा तत्तुल्यवयसं शिशुम् । रक्षितो जयमत्यैव स किलेत्यपरेऽब्रुवन् ॥२२९॥
230 देशान्तरागताद्भूतानां वार्तामुपलब्धवान् । अत एवाभवत्तस्या भूभृद्विरलितादरः ॥२३०॥
बहिरप्रतिभिन्दंस्तस्य धीरो मार्गवर्तिभिः । चक्रे तदप्रवेशाय संबन्धं पार्थिवैः समम् ॥२३१॥
ईर्ष्यामगोपयन्नार्याः शङ्कामच्छादयन्निपोः । स्वयमन्याभिगम्यत्वं करोति हि जडो जनः ॥२३२॥
भिक्षाचरे हते बालं कंचिदादाय तत्समम् । तत्राज्ञा ख्यातिमनयद्विदेवेत्यपरेऽब्रुवन् ॥२३३॥
तथ्येन सोऽस्तु मिथ्या वा प्रतिष्ठां तां तथाप्रवान् । यथा लघुत्वमानेतुं न दैवेनाप्यशक्यत ॥२३४॥
235 स्वप्नेन्द्रजालमायानामपि निर्विषया इमाः । कर्मवैचित्र्यजनिताः काश्चिदाश्चर्यविप्रुषः ॥२३५॥
स राजबीजी नाशाय विशां गूढं व्यवर्धत । पुरग्रामादिदाहाय कक्षान्तरिव पावकः ॥२३६॥
रोहत्यम्बिकसीमनि प्रतिविषावीरुद्विषक्ष्मारुहः काले प्रावृडुपप्लुताच्छसलिले मूर्छत्यगस्त्योदयः ।
सर्गच्छेदविधिक्षमानुदयतो दृष्ट्वा किलोपद्रवान्संभवेत्प्रतिकारकल्पनमहो दीर्घावलोकी विधिः ॥२३७॥
अजायत विपन्मज्जज्जगदुद्धरणक्षमः । तस्मिन्नेव क्षणे यस्मात्सुत्सलक्ष्मापतेः सुतः ॥२३८॥
तज्जन्मकालादारभ्य सर्वतो जयमर्जयन् । नामान्वर्थं नृपस्तस्य जयसिंह इति व्यधात् ॥२३९॥
240 शास्तुः सर्वार्थसिद्धाख्या यथा सर्वार्थसिद्धिभिः । तथा तस्याभिधान्वर्था नास्यजवृद्धिराप्यताम् ॥२४०॥
मुद्रां स कुङ्कुमस्याङ्कस्तदीयस्याभ्युपागताम् । विलोक्यौजलदेवोभूद्विमन्युर्भ्रातरं प्रति ॥२४१॥
बालस्यैवाङ्घ्रिमुद्रास्य वैरं पितृपितृव्ययोः । निवारयन्ती विदधे सुस्थितं मण्डलद्वयम् ॥२४२॥
स स्वर्गिणः पितुर्नाम्ना ततः सुकृतसिद्धये । चकारोज्जलभूपालः पैतृके स्थण्डिले मठम् ॥२४३॥
गोभूमिहेमवस्त्रान्नदाता तस्मिन्महोत्सवे । आश्चर्यकल्पवृक्षत्वं त्यागी सर्वार्थिनामगात् ॥२४४॥
245 प्रसादैः प्रहितैस्तेन महार्घैः श्लाघ्यसंपदा । महान्तोऽपि दिगन्तेषु पार्थिवा विस्मयं ययुः ॥२४५॥
भर्तृप्रसादाधिगतां श्रियं नेतुं परार्ध्यताम् । विहारं समठं देवी जयमत्यपि निर्ममे ॥२४६॥
केषांचित्पूर्वपुण्यानां चिरेण महीभुजः । इष्टाभीष्टाभिधानोऽभून्मठो नवमठाख्यया ॥२४७॥
सुल्लां स्वसारमुद्दिश्य परस्मिन्स्थण्डिले पितुः । विहारोऽपि कृतस्तेन नोचितां ख्यातिमाययौ ॥२४८॥
मृत्योर्मल्लकपाणित्वं तस्याकलयतः किल । न निष्ठां स्वप्रतिष्ठासु संप्रपेदे व्यवस्थितिः ॥२४९॥

---

२२७. [1]) $A_1$ writes here ३ instead of तिलकम्. २३०. [1]) Emended; A °तानावनमुप°. २३४. [1]) Emended with C; A °प्रभुत्व. २३७. [1]) $A_2$ gloss प्रतिविषा वीरुत् यस्या उपविषस्यादिनामान्तरं कीर्तं यथा विश्वाविषा प्रतिविषातिविषोपविषारुणा भृङ्गिकाशौक्षं चेति (*Amarakośa* ii. 4. 99-100). २४७. [1]) Emended; A °ख्यडे.

कदाचित्क्रमराज्यस्थो द्रष्टुमर्चिं स्वयंभुवम् । ययौ वर्हटचक्राख्यं गिरिग्रामं स भूपतिः ॥२५०॥ 250

तं कम्बलेश्वरग्रामाध्वना यान्तमवेष्टयन् । अकस्मादेत्य तत्रत्याश्चौराश्चण्डालशस्त्रिणः ॥२५१॥

प्रजिहीर्षुभिरप्याशु तस्मिन्नत्यल्पसैनिके । न तैः प्रहर्तुमुत्तेजोवष्टम्भस्तम्भितायुधैः[1] ॥२५२॥

अथ हारितमार्गः स गहने गिरिगह्वरे । भ्रमन्नल्पानुगाप्येकां क्षणदामत्यवाहयत् ॥२५३॥

उज्जगार क्षणे तस्मिन्स्कन्धावारेषु दुःसहा । नास्ति राजेति दुर्वार्ता सर्वतः क्षोभकारिणी ॥२५४॥

कटकान्निःसृतात्यल्पा यात्येव गिरिगह्वरात् । सा दुष्प्रवृत्तिर्दीर्घस्य पुरेऽरण्य इवासदत् ॥२५५॥ 255

नगराधिकृतस्तस्मिन्क्षणे छुड्डाभिधोऽभवत् । शस्त्रिणः कामदेवस्य कुल्यो रङ्गादिसोदरः ॥२५६॥

कृत्वा पुरक्षोभशान्तिं शालीकः स नृपास्पदे । प्रविश्य भ्रातृभिः सार्धं कार्यशेषमचिन्तयत् ॥२५७॥

नृपं कं कुर्म इत्येवं तांश्चिचिन्तयतोऽब्रवीत् । सज्जाभिधोऽपि कायस्थः कुटुम्बिकुटिलाशयः ॥२५८॥

यूयमेव सुहृद्बन्धुभृत्यबाहुल्यदुर्जयाः । राज्यं कुरुत संप्राप्य राष्ट्रमेवमकण्टकम् ॥२५९॥

तेनैवमुक्तास्ते पापा जातराज्यस्पृहास्ततः । सिंहासनाधिरोहाय क्षिप्रमासन्समुद्यताः ॥२६०॥ 260

श्रीयशस्करदेवस्य वंश्या एत इति श्रुतिः । तदन्वयेऽभूत्सर्वेषां राज्यौत्सुक्यप्रदायिनी ॥२६१॥

अत एवाभजत्क्रोधं तेषां कुहकदुक्तिभिः । सा वासनान्तःसंलीना सदाचारानपेक्षिणाम् ॥२६२॥

कथं न प्रतिभात्येषा सज्जस्यापि कुपद्धतिः । मारिकस्य कुले जातो लवटस्य हि सोऽधमः ॥२६३॥

क्षेमदेवाभिधानस्य पुत्रोऽप्यल्पनियोगिनः । क्रूराशयत्वमभजन्महासाहसिकोचितम् ॥२६४॥

चौर्येण स्वर्णभृङ्गारं हृतवान्भूपतेर्गृहात् । संभावितोऽपि गाम्भीर्याज्ज्ञाशापि स किलेङ्गितैः ॥२६५॥ 265

शस्त्रिधेनुर्निस्तृष्णीको विवस्त्रखिलान्स्मयात् । राजपुत्र इवात्यल्पं स त्रैलोक्यममन्यत ॥२६६॥

तस्य चिन्ता काचिदासीत्तदा दोलायतोऽङ्गुलीः । या राज्यहेतुः क्रूरेण फलेन समभाव्यत ॥२६७॥

तद्गिरा निजसंकल्पादपि ते राज्यलालसाः । नृपं जीवन्तमाकर्ण्य ततोऽभूवन्हतस्पृहाः ॥२६८॥

न स्फुरंश्च संमीलन्वा स्वप्न इवानिशम् । तेषां चेतसि संकल्पस्तदा प्रभृति सोऽभवत् ॥२६९॥

अहस्थिरादरेणाथ शनैः पृथिवीभुजा । निन्यिरे मध्यमां वृत्तिं राजस्थानाधिकार्य ते ॥२७०॥ 270

प्रकृत्या कक्षवाग्राजा सर्वेषामेव सर्वदा । तेषामप्यकरोद्वान्तरे मर्मस्पृशः कथाः ॥२७१॥

ते राज्ये हर्षभूभर्तुः पितरि प्रलयं गते । मातुस्तारुण्यमत्ताया विधवाया गृहेऽवसन् ॥२७२॥

तैर्मध्यामन्तको नाम शवभृत्यातिवेश्मिकः । हतवन्तोऽथ विश्वस्तो जननीजारशङ्कया ॥२७३॥

असतीमपि किं नैते न्यगृह्णन्निति भूपतिः । विचार्य कोपात्तन्मातुर्नासाच्छेदमकारयत् ॥२७४॥

तां कथां स नृपस्तेषां परोक्षमुदघोषयत् । क्व पुत्राश्छिन्ननासाया[1] वदन्नित्यन्वियेष च ॥२७५॥ 275

बृहद्गञ्जादिगञ्जेशं कृत्वा कार्याण्यचारयत् । स कायस्थकृतान्सर्वं भजन्सज्जमपि प्रभुः ॥२७६॥

पीडितस्तेन रौद्रेण निजोऽथ गणनापतिः । कोशोत्पन्नव्यवहर्तारं तं नृपाय न्यवेदयत् ॥२७७॥

प्रवेशभागिकपदे हृते राज्ञा यथा ततः । स क्रूरो रङ्गच्छुड्डादीन्प्रैरयत्पूर्वचिन्तिते ॥२७८॥

जिघांसवस्ते नृपतिं प्रसङ्गापेक्षिणः परैः । समगंसत दुष्यद्भिरथ हंसरथादिभिः ॥२७९॥

---

२५२. [1]) Doubtful emendation; A °मुत्तेजोवष्टम्भ°- २७५. [1]) Emended; A पुत्रान्छिन्न°.

280 प्रतिशीर्षभिरुर्वीशं पीतकोशैः समेत्य तैः । चतुष्पञ्चानि वर्षाणि मायाव्यवहृतः क्वचित् ॥२८०॥
बहुभिर्बहुधा भिन्नैर्बहुकालं विचिन्तितः । न भेदमगमन्मन्त्रः स चित्रं लोकदुष्कृतैः ॥२८१॥
नवैतां कुरुते शश्वन्नृपो मर्मस्पृशं कथाम् । इति प्रत्येकमुक्त्वा ते विरागं पार्थिवेऽभजन् ॥२८२॥
तैरुरःपार्श्वपृष्ठादि गूढैर्वर्मभिरायसैः । प्रच्छाद्य पार्थिवोऽजस्रमनुसव्रे जिघांसुभिः ॥२८३॥
असहो विरहं सोढुं यां प्रसादयितुं न काम । राजापि संदधे चेष्टां प्राकप्राकृतभुजंगवत् ॥२८४॥
285 स्वभाववैपरीत्येन नाशचिह्नेन स स्थिराम् । जयमत्या सहाप्रीतिं तदादाद्वत्सरद्वयम् ॥२८५॥
रक्षां भिक्षाचरस्याहुर्निमित्तं तत्र केचन । केचित्तु विद्युत्सदृशीं प्रेम्णां तरलवृत्तिताम् ॥२८६॥
अथ वर्तुलभूभर्तुरात्मजा बिज्जलाभिधा । कृतपाणिग्रहस्यागाद्वाल्लभ्यं वसुधाभुजः ॥२८७॥
संग्रामपाले नृपतौ तस्मिन्नवसरे मृते । तत्सूनुः सोमपालाख्यः पित्र्यं राज्यं समादधे ॥२८८॥
राज्यार्हमग्रजं भङ्क्त्वा सोऽभ्यषिच्यत चाक्रिकैः । इति कोपाकरेन्द्रोऽभूत्क्षुभ्यन्राजपुरीं प्रति ॥२८९॥
290 लक्ष्मीस्थैर्यप्रतिभुवः पुण्याः पाणिमभिग्रहत् । ..............................[1] ॥२९०॥
अर्थिचिन्तामणेस्तस्य प्रीणतो निखिलाः प्रजाः । नामाख्ययोर्जितो रेजे पश्चिमः स महोत्सवः ॥२९१॥
याते जामातरि क्ष्माभृच्चक्रे निखिलसन्त्रिणः । निर्वृत्तीन्किमपि क्रुध्यन्बुभुक्षूंस्तु व्यसर्जयत् ॥२९२॥
भोगसेनोऽपि भूपेन काले तस्मिन्समन्युना । निवारितो द्वारकार्यात्सवैरः समपद्यत ॥२९३॥
विक्रान्तः स हि कार्यस्थो निर्जिताखिलडामरः । सुस्सलक्ष्मापतिं जेतुं प्रतस्थे लोहरं पुरा ॥२९४॥
295 वात्सल्यमिश्रवैरेण वारितोऽथ महीभुजा । तत्परीवादमकरोच्छुक्रोधावेत्य तत्र सः ॥२९५॥
प्रवेशयन्नुच्छृङ्खलान्स समयान्तरम् । तमादिसुहृदं वीरं तदा राज्ञा विमानितम् ॥२९६॥
विमानिता विशालेच्छाः संहता हतवृत्तयः । न ते बहिष्कृतास्तेन प्रमराष्ट्रं जिगीषता ॥२९७॥
तान्भोगसेनविन्यस्तसद्भावान्कुटिलाशयः । सङ्गो निनिन्द वीरस्यार्तं जानन्सरलान्तरम् ॥२९८॥
कण्ठे चाथैव छित्त्वापि प्राणान्व्यापादयन्नृपः । भोगसेनोऽन्यथा भेदं कुर्यादगहनाशयः ॥२९९॥
300 अन्यथाभूत्स सङ्गोक्तं भोगसेनो यदब्रवीत् । किंचिद्रहोऽस्मि वक्ष्येति नृपतिं भेदलालसः ॥३००॥
स तु किं वक्षि न द्वारं तव दद्यामिति ब्रुवन् । बुभुक्षुपक्षप्रणयं निन्ये समवमानयन् ॥३०१॥
प्रबोधाधायिनो दृष्टिं निवर्तिप्रणवीमयम् । तपात्ययाहनिभ्रान्त इव जन्तुर्गतस्मृतिः ॥३०२॥
तन्निघ्नो यामिका भूत्वा स्वस्मिन्वारे ततोऽविशन् । ते राजधानीं संनद्धैः स्वसैन्यैः सह संहताः ॥३०३॥
यामिन्यां मे वयं हन्मस्तं हतेत्यभिधाय च । प्रावेशयन्व्यस्ताचिह्नांश्चण्डालान्मण्डपान्तरम् ॥३०४॥
305 भुक्तोत्तरं स्थिते राज्ञि ते बाह्ये मण्डपे स्थिताः । सरोषो नृप इत्युक्त्वा सेवकोत्सारणं व्यधुः ॥३०५॥
राजा च बिज्जलावेश्म यियासुर्मण्डपान्तरात् । दीपिकाभिः कृतालोको निर्ययौ मदनालसः ॥३०६॥
मध्यमं मण्डपं तस्मिन्प्राप्ते स्वल्पैः सहानुगैः । तस्यक्तं मण्डपं सङ्गो हङ्काद्यानरुणज्जनान् ॥३०७॥
अन्यैरप्यग्रिमे द्वारे निरुद्धे सर्व एव ते । जिघांसवः समुत्थाय नृपतिं पर्यवारयन् ॥३०८॥

२८२. ¹) Emended with C; A पार्थिवे. २८५. ¹) Emended; A महा°. २८६. ¹) Emended with C; A विद्युत्स°. २९०. ¹) A omits here two *pádas* without indicating a *lacuna*. C adds here: तं प्रेङ्खं सर्वलोकानां भेद्धं सर्वसमागतुजां. २९२. ¹) Emended with C; A निर्वृत्तीः किमपि.—²) Emended; A °बुभुक्षुस्तु. २९५. ¹) Emended with C; A °मिश्र वै°. ३०१. ¹) A बुभुक्षु°.

विश्रम्भिसम्भ्रमादेकेन हृदमये निवेदुषा । तं द्विजो द्विजगस्तेजः[1] शस्त्र्या कुक्षकयोभिनत् ॥३०९॥
ततः काञ्चनगौराणि तस्याङ्गान्यसिधेनवः । बह्व्यः सुमेरुशृङ्गाणि महोरग्य इवाविशन् ॥३१०॥ 310
स द्रोहो द्रोह इत्युक्त्वा केशाकृष्टान्विमोचयन् । क्रीडाहस्त्याः कपां हृदमुष्टिं दन्तैर्व्यपाटयत् ॥३११॥
सुजनाकरनामा हि भृत्यः कट्टारकं वहन् । तस्यान्तिकात्पलायिष्ट प्रहरत्सु विरोधिषु ॥३१२॥
अतो बालोचितां लब्ध्वा क्षुरिकां स चकर्ष ताम् । मुष्टावर्गलिता कोशात्सा कृच्छ्रेण विनिर्ययौ ॥३१३॥
निर्यातान्त्रः शत्रुभिस्तैस्त्यक्तकेशो बबन्ध तम् । धम्मिल्लमथ तां शार्ङ्गीं जानुद्वन्द्वान्तरर्पयन् ॥३१४॥
नदित्वा प्रहरंस्तेजं तादृग्वीर्योपि सोभवत् । येन क्षितौ निपतितः सर्वमर्मस्ववाहतः ॥३१५॥ 315
अभिनद्य ततो रड्डं प्रहरन्तं च पृष्ठतः । मदन्सिंह इव व्यड्डं परिवृत्य व्यदारयत् ॥३१६॥
अन्यं च शस्त्रिणं कंचित्सवर्माणमपातयत् । विचेष्टमानो यः प्राणैरचिरेण व्ययुज्यत ॥३१७॥
लब्धान्तरे प्रवासाय तस्मिन्धावति मण्डपः । रक्षिभिर्भूमिपालोयमित्यबुद्ध्या कवाटितः ॥३१८॥
द्वारमन्वत्मसर्पन्स क्व प्रयासीति जल्पता । क्षुड्डेन रुद्धमार्गेण खड्गपातैरहन्यत ॥३१९॥
भोगसेनं ततोपश्यद्द्वारस्यान्ते समुत्थितम् । दारुतूलिकया भित्तिमालिखन्तं पराङ्मुखम् ॥३२०॥ 320
भोगसेनेक्षसे कस्मादमुं त्वमिति वादिनम् । सोव्यक्तं किमपि हीतः प्रधावन्तं जगाद तम् ॥३२१॥
रथ्यावट्टाभिधो दीपधरस्तिष्ठन्निरायुधः । अयोदीपिकयारब्धयुद्धस्तैर्विक्षतोपतत् ॥३२२॥
चाम्पेयः सोमपालाख्यराजपुत्रः क्षताहितः । प्रहारैः प्राप्तवैक्लव्यो न गर्ताचारतामगात् ॥३२३॥
पौत्रः श्रीभूरपालस्य राजकापत्यमञ्जकः । विदध्रौ भेत्र संहाय शस्त्रीं पुच्छच्छटोपमाम् ॥३२४॥
ततः प्रधावन्प्रग्रीवमारुरुक्षुः क्षितीश्वरः । निकृत्तजानुखण्डालैरालिलिङ्ग वसुंधराम् ॥३२५॥ 325
तत्पृष्ठे स्वं क्षिपन्देहं प्रहारैर्जर्जरीकृतः । भृङ्गारनामा कायस्थो निर्द्रोहो वारितोरिभिः ॥३२६॥
पुनरुत्थातुकामस्य सर्वे शस्त्रावलीर्द्विषः । न्यपातयंस्तस्य काल्या नीलाब्जवरणस्रजम् ॥३२७॥
तिष्ठेत्कदाचिद्भूतोयमविपन्नो विपन्नवत् । कन्धरामधमः सङ्कुस्तस्येति स्वयमच्छिनत् ॥३२८॥
कृतं पदापहरणं यस्य सोहमिति ब्रुवन् । छित्त्वाङ्गुलीश्चकर्षापि रत्नाङ्कमूर्मिकावलीम् ॥३२९॥
एकपादस्थितोपानस्स्रस्तमाल्यैः शिरोरुहैः । नग्नवक्षः स ददृशे ग्लानो दीर्घभुजः क्षितौ ॥३३०॥ 330
पर्यायमथास्य पर्यन्ते वीरभूत्या महौजसः । निर्दोषतामीषदगात्सिस्मिशस्त्रं जनान्प्रति ॥३३१॥
सेवकः भूरटो नाम पूत्कुर्वन्द्रोहमुच्चकैः । निर्गत्य भोगसेनेन बहिः क्रोधान्निपातितः ॥३३२॥
प्रस्थितो दयिताचार्सं स विङ्गोहवशादिव । पन्थानं पृथिवीनाथः काल्या जगाह वेश्मनि ॥३३३॥
राज्योद्याने नृपतिमधुपा भोगकिञ्जल्कलोलाश्चेतो नानाव्यसनकुसुमश्रेणिभिः प्रीणयन्तः ।
हा धिग्दैवानिलतरलया पात्यमाना नियत्या वल्ल्येवैते किमपि सहसा दृष्टनष्टा भवन्ति ॥३३४॥
तिर्यग्व्यस्तजगज्जयी परिभवं लङ्केश्वरो लब्धवान्प्रापाशिपनृपोत्तमः कुरुपतिः पादाहतिं मूर्धनि ।
इत्यन्ते बहुमानहृत्परिभवः सर्वस्य सामान्यकस्को नाम भवेन्महानहमिति ध्यायन्धृताहंक्रियः ॥३३५॥ 335
पराङ्मुखहितैस्त्यक्तं तमनाथमिव प्रभुम् । नग्नं हुताशसात्कर्तुं श्वपचश्रमाहिणोनयन् ॥३३६॥

---

३०९. 1) Thus corr. by $A_1$ from °स्तेजः.

भुजौ कण्ठे गृहीत्वैकः कराभ्यां चरणौ परः । तं भुग्नग्रीवमालोलकुन्तलं रुधिरोक्षितम् ॥३३७॥
सत्पूत्कारव्रणं नग्नमनाथमिव पार्थिवम् । राजधान्या विनिष्कृष्टं न्यधत्तां पितृकानने ॥३३८॥
महासरिद्वितस्ताम्भःसंभेदद्वीपभूतले । अह्नाय वह्निसंस्कारं ते भीतास्तस्य चक्रिरे ॥३३९॥
340 न हतो नापि निर्दग्धः स केनापि व्यलोक्यत । उड्डीयेव गतस्त्वाशु नेत्रनिर्विषयोभवत् ॥३४०॥
व्यतीतेन स वर्षैकचत्वारिंशतमायुषा । सप्ताशीत्यब्दपौषस्य शुक्लषष्ठ्यां व्ययुज्यत ॥३४१॥
चक्रेथ सासिकञ्चो रड्डः शोणितमण्डितः । श्मशानाश्मनि वेताल इव सिंहासने पदम् ॥३४२॥
.............................. । ---[1]बद्धमूलानामाद्यानां तत्र[2] विद्युते ॥३४३॥
तस्यावरोहतः सिंहासनाद्योद्धुं पुरो युधि । विक्रामन्तो बन्धुभृत्या युद्धभूमिमभूषयन् ॥३४४॥
345 नन्दिक्षणौ ब्रह्मपद्माख्यौ युद्ध्वा तद्बान्धवौ चिरम् । योधाश्च कुडसूर्याद्याः सिंहद्वारेपतन्हताः ॥३४५॥
रणरङ्गनटो नृत्यन्निव राजगृहाङ्गने । सखड्गखेटको रड्डः खण्डशश्छिन्नतामभौ ॥३४६॥
दिशन्विजयसंदेहमहितानां क्षणे क्षणे । प्रहारैः सुबहून्भित्त्वा स चिरेणापतद्रणे ॥३४७॥
राजद्रोहोचितं तस्य निहतस्यापि निग्रहम् । वैशसत्यक्तमर्यादो गर्गः[1] कोपादकारयत् ॥३४८॥
द्विहामठान्तिके व्यङ्गः पौरैर्भस्माश्मवर्षिभिः । अवस्करप्रणालान्तर्मग्नाङ्गो न्यपात्यत ॥३४९॥
350 ते गुल्फदामभिः कृष्टाः स्थाने स्थाने प्रभुद्रुहः । तत्क्षणं लोकथूत्कारपूजां कृत्योचितां दधुः ॥३५०॥
पलाय्य प्रययुः क्वापि सड्डहंसरथादयः । मरणाभ्यधिकां कंचित्कालं सोढुं विपद्व्यथाम् ॥३५१॥
दृप्यन्पराजितं गर्गं[1] नष्टे तदनुजे विदन् । भोगसेनोथ तां वार्तामशृणोत्प्रलयोपमाम् ॥३५२॥
व्यावृत्य प्रत्यवस्थातुकामः पश्यन्पलायिनः । योधान्स्वैः सहितः कैश्चित्ततः क्वापि भयादगात् ॥३५३॥
इत्थं निहतविध्वस्तनायका द्रोग्धृसंहतिः । स्वदोर्मात्रसहायेन गर्गचन्द्रेण सा कृता ॥३५४॥
355 सत्त्वं साहससिद्धिं च नेतिहासेष्वपि क्वचित् । अश्रौषं तादृशं यादृक्तस्यास्ते स्म प्रतापिनः ॥३५५॥
निशां प्रहरमह्नश्च राज्यं कृत्वा स लब्धवान् । द्रोहकृच्छड्डराजाख्यां गतिं कुकुनिनामगात् ॥३५६॥
यशस्करकुले जन्म द्रोग्धृभिस्तैः प्रमाणितम् । क्षणभङ्गुचभजद्राज्यं यस्माद्वर्णटदेववत् ॥३५७॥
दावोद्दीपनकूटयन्त्रघटनैः सिंहादिसंहारिणो यान्त्याकस्मिकगण्डशैलपतनैरन्तं किराता वने ।
एकेनैव ननु प्रधावति जनः सर्वोपि मृत्योः पथा हन्ताहं[1] निहतोयमेष तु मितं कालं विभेदग्रहः ॥३५८॥
स्वोद्वाहे ललनौघमङ्गलरवो यैर्धृतैः श्रूयते दीनैस्तैर्दयिताविलाप उदयन्नाकर्ण्यतेन्त्यक्षणे ।
योपि प्रत्नहितं प्रहृष्यति परः स्वं प्रान्तमन्ते मुदोद्धृत्तं सोप्यवलोकयत्यहह धिङ्मोहोग्रमान्ध्यावहः ॥३५९॥
360 सायं विचिन्तितो रात्रौ फलितोन्यत्र वासरे । दुर्विपाकप्रदाताभूद्द्रोग्धृणां साहसद्रुमः ॥३६०॥
अथ सिंहासनस्यान्तः कार्यान्ते त्यक्तविग्रहः । गर्गः प्रक्षालितामर्षश्चक्रन्द स्वामिनं चिरम् ॥३६१॥
तस्मिन्रुदति सर्वोपि पौरलोको भयोज्झितः । संग्रामावसरो भूपं व्यलापील्लोकवत्सलम् ॥३६२॥
कारुण्योत्पत्तये दत्त्वा कोशं जीवितकामया । जयमत्या तदावादि गर्गः कपटशीलया ॥३६३॥

---

३४३. [1]) These words written by $A_1$ after verse 342, belong apparently to a verse of which the beginning is lost; the *lacuna* in the text is not indicated in A. Perhaps, more verses have been lost here.—[2]) A तविति°.
३४८. [1]) Thus corr. by $A_1$ from गर्गाः. ३५२. [1]) Thus corr. by $A_1$ from गर्गौ. ३५८. [1]) $A_1$ gloss अहं हन्ता.

कुरु मे संविदं भ्रातरिति सन्त्वमयस्तु सः । तत्प्रक्रियावचो ज्ञात्वा चितिं तस्या अकल्पयत् ॥३६४॥
चिकुरनिचये यत्कौटिल्यं विलोचनयोश्च या तरलतरता यत्काठिन्यं तथा कुचकुम्भयोः ।
वसति हृदि तथासां पिण्डीभवन्ननु ता इमा गहनहृदया विज्ञायन्ते न कैश्चन योषितः ॥३६५॥ 365
दौःशील्यमप्याचरन्त्यो घातयन्त्योपि वल्लभान् । हेलया प्रविशन्त्यग्निं न स्त्रीषु प्रत्ययः क्वचित् ॥३६६॥
धुर्याधिरूढा सा यान्ती मार्गन्मार्गे व्यलम्बत । अमतो विज्जला तावन्निर्गत्य प्राविशच्चिताम् ॥३६७॥
अथ तस्याश्चितारोहं कुर्वन्त्या भूषणार्थिभिः । लुण्ठकैर्लुण्ठ्यमानाया व्यथा गात्रेषु पप्रथे ॥३६८॥
सच्छत्रचामरे राज्ञ्यौ[1] दह्यमाने विलोकयन् । लोकः सर्वोपि साक्रन्दो दग्धदृष्टिरिवाभवत् ॥३६९॥
औचित्यं तेन च तदा निन्येत्यन्तपवित्रताम् । सर्वैर्यदर्थ्यमानोपि नोपाविक्षन्नृपासने ॥३७०॥ 370
हतमुच्चलदेवस्य बालमङ्के निधित्सता । राज्येभिषेक्तुं ते केचित्तेनान्विष्यन्त[1] यत्नतः ॥३७१॥
लोको येष्वद्य केषांचित्तत्त्वमालोक्य सस्मितः । भिक्षामप्यटितुं जाने नैव जानाति योग्यताम् ॥३७२॥
राज्यां श्वेताभि[1]नायां मल्लराजस्य ये सुताः । सल्हणाद्यास्त्रयोभूवन्मध्यमे प्राक्क्षयं गते ॥३७३॥
हन्तुं ज्येष्ठकनिष्ठौ द्वौ शेषौ सल्हणलोठनौ । अन्विष्टौ शङ्कराजेन भयाश्रवमठं गतौ ॥३७४॥
निर्लज्जैर्निहतान्द्रोग्धृन्निशाय मिलितैः पुनः । तन्त्र्यश्वारोहसचिवैरानीतः कृतचाक्रिकैः ॥३७५॥ 375
दृष्ट्वा राज्यार्हमप्राप्य कंचिज्ज्यायांस्तयोस्तदा । गर्गेण राज्ये संरम्भादभ्यषिच्यत सल्हणः ॥३७६॥
हा धिक्चतुर्णां यामानामन्तरे नृपतित्रयी । अहस्त्रियामे तत्रासीद्दृश्या या पुरुषायुषैः ॥३७७॥
ये सायमुच्चलनृपं प्राह्णे रड्डं सिषेविरे । मध्याह्ने सल्हणं प्रापुर्दृष्टास्ते राजसेवकाः ॥३७८॥
अथ लोहरकोट्टस्थः सार्धाह्नि गलिते नृपः । सुस्सलो भ्रातृमरणं श्रुत्वा तुङ्गान्तमानसः ॥३७९॥
गर्गेण प्रहितो दूतः स क्रन्दन्स्वं क्षिपन्क्षितौ । ततस्तं वीतसंदेहं चकारार्तप्रलापिनम् ॥३८०॥ 380
आद्यात्सल्हणवृत्तान्तपर्यन्तां नाशृणोत्कथाम् । गर्गदूताद्भ्रातृवधं स्वस्याह्वानं च केवलम् ॥३८१॥
अश्रद्धानस्तं शीघ्रमरिच्छेदं सुदुष्करम् । तदाह्वानाय गर्गो यं प्राहिणोत्तं चलन्गृहात् ॥३८२॥
आक्रन्दमुखरो भूत्वा तां रात्रिमरुणोदये । कश्मीराभिमुखो यात्रामसंभृतबलोप्यदात् ॥३८३॥
अन्योथ गर्गदूतस्तं पथि संघटितोभ्यधात् । कृत्स्नमावेद्य वृत्तान्तं नागन्तव्यमिति ध्रुवम् ॥३८४॥
क्षिप्रं हतेषु द्रोहेषु त्वय्यसंनिहितेनुजः । कृतस्तु सल्हणो राजा कृत्यमागमनेन किम् ॥३८५॥ 385
श्रुत्वेति गर्गसंदेशं कोपादसहनो नृपः । अभयार्णैषिणो भृत्यान्विहस्यैवं वचोब्रवीत् ॥३८६॥
नास्माकं पैतृकं राज्यं यदि रिक्थहरोनुजः । मज्ज्यायसा मया चैतद्भुजाभ्यामर्जितं पुनः ॥३८७॥
राज्यं स्वीकुर्वतोरन्यो न दाताभूत्तदावयोः । येनाहृतमिदं पूर्वं स क्रमः क्व गतोधुना ॥३८८॥
इत्युक्त्वाचिरतैरेव वहन्नासीत्प्रयाणकैः । दूतांश्च पार्श्वं गर्गस्य स्वीकृत्यै प्राहिणोद्बहून् ॥३८९॥
स काष्ठवाटं संप्राप सल्हणस्य हितैषिणा । निर्गत्य गर्गचन्द्रेण चक्रे हुष्कपुरे पदम् ॥३९०॥ 390
प्रवृत्तायां विभावर्यां दूतैः कृतगतागतैः । तस्याङ्गीकृतसामापि गर्गो द्रोग्धाभ्यधीयत ॥३९१॥

---

३६९. [1]) Emended; A राज्ञी. ३७१. [1]) Emended with C; A °न्वेष्यन्त. ३७३. [1]) Thus $A_4$ C R; $A_1$ वं.

कार्यमध्यगतो राजा तथापि ग्राहिणोत्तदा । धात्रेयं भ्रातरं गर्गोभ्यर्णे हितहिताभिधम् ॥३९२॥
भोगसेनः क्षणे तस्मिन्नाययौ दैवमोहितः । स्वाशाकान्विल्ववनजान्मध्येकृत्य नृपान्तिकम् ॥३९३॥
सोभ्यर्णे कर्णभूत्याख्यमश्वारोहं महीपतेः । विसृज्य गर्गं जेष्यामीत्युत्काभूल्लोभमोहितः ॥३९४॥
395 कालापेक्षामपि त्यक्त्वा हन्तुं भ्रातृद्रुहं स तम् । योग्यं प्रसङ्गमन्विष्यन्नूचे लोकैरसज्जनः ॥३९५॥
यस्य भ्रातृद्रुहः पार्श्वे स त्वमाभीयसे कथम् । गर्गोपि तमुपालेभे दूतैरित्यादि संदिशन्[1] ॥३९६॥
स तु मार्गात्पलाय्यायं समसीति विलम्बकृत् । दत्तास्कन्दः क्षपापाये तं सानुगमघातयत् ॥३९७॥
पतन्रणे कर्णभूतिर्वीरवृत्त्या व्यरोचत । तस्य द्वैमातुरो भ्राता तेजःसेनोप्यनूनया ॥३९८॥
तेजःसेनस्तु भूलाभे नृपादेशाच्चवेद्यत । मरिचो लवराजस्य तनूजोश्वपतेरपि ॥३९९॥
400 अवष्टम्भेन भूपोभूत्तिमहायमदक्षमः । न येनासितुमप्यास्था तावदासीत्तु तद्बलम् ॥४००॥
पुरोगोपि कृतः पश्चाद्योतीतेह्नि महीभुजा । स सञ्जपालस्तत्पार्श्वमथादायाययौ हयान् ॥४०१॥
तेष्वायातेष्ववष्टम्भं यातं किंचिच्च तद्बलम् । प्रापथ गर्गसेनानीः सूर्याख्योनल्पसैनिकः ॥४०२॥
दुधुक्षुर्वीक्ष्य तानाप्तैर्नृपोश्वमधिरोपितः । उत्सेकशठधीर्वर्म कृच्छ्राच्च परिधापितः ॥४०३॥
गगनं शलभच्छन्नमिव कुर्वन्नथापतत् । शरासारो रिपुबलात्सर्वतोविच्छिन्नसंततिः ॥४०४॥
405 ओंकारं शरभूत्कारैः कृत्वा द्रोहस्य दुःसहाः । प्राहरन्राजकटके सर्वान्सर्वायुधैर्द्विषः ॥४०५॥
हतविक्षतविध्वस्तसैन्यः साहसिको नृपः । वेगादपससारैको मध्यान्निर्गत्य वैरिणाम् ॥४०६॥
गर्जत्सिन्धुरयाभ्रान्तनत्युन्नतिरलङ्घ्यत । सवाजिना तेन सेतुर्दुर्लङ्घ्यः पक्षिणामपि ॥४०७॥
सञ्जपालादयो द्विषाः शेकुस्तमनुवर्तितुम् । पृष्ठलग्ना निरुन्धन्तः स्थाने स्थाने विरोधिनः ॥४०८॥
वीरानकाभिधं वीरः स खशानां निवेशनम् । त्रिंशद्विंशैः समं भृत्यैः प्रविष्टस्तस्यजेरिभिः ॥४०९॥
410 निरम्बरैर्निराहारैस्तिष्ठन्कतिपयैः समम् । स तत्र नित्रमाक्रम्य निर्भयो दण्डयन्खशान् ॥४१०॥
क्रमेण च हिमापातदुर्लङ्घ्याध्वनि संकटे । अविपन्नो भाग्ययोगात्प्रययौ लोहरं पुनः ॥४११॥
पदे पदे प्राप्तमृत्युरायुःशेषेण रक्षितः । तथाप्यासीत्स कश्मीरप्राप्तिमेव विचिन्तयन् ॥४१२॥
वराकं द्वारसेत्वयाद्गर्गो हितहितं क्रुधा । विरुद्धधीर्वितस्तायां बद्धपाण्यङ्घ्रिमक्षिपत् ॥४१३॥
तस्मिन्प्रक्षिप्यमाणेप्यक्षेमाख्यः स्वं क्षिपन्पुरः । दासोस्योच्चैःपदारोहमधःपातेपि लब्धवान् ॥४१४॥
415 राज्यप्रदः क्षतारिश्च गर्गः प्राप्तोन्तिकं ततः । प्राप सल्हणराजस्य सविशेषमधीशताम् ॥४१५॥
स भूभृन्मन्त्रिविक्रान्तिहीनो राज्यमवाप्तवान् । चक्रभ्रममिवापश्यत्सर्वतो भ्रान्तमानसः ॥४१६॥
न मन्त्रो न च विक्रान्तिर्न कौटिल्यं न चार्जवम् । न दातृता न लुब्धत्वं तस्योद्रिक्तं किमप्यभूत् ॥४१७॥
तद्राज्ये राजधान्यन्तर्मध्याह्नेपि मलिम्लुचः[1] । लोकं मुमुषुरन्याध्वसंचारस्य कथैव का ॥४१८॥
चकुरप्यङ्गना कालं कान्त्या यशास्यतादयत् । पुमानप्यभवत्तत्र साध्वसाध्वसधीरसौ ॥४१९॥
420 यामथ सल्हणोन्वेषुर्भेजे तां लोठनः[1] स्त्रियम् । साधारण्यं गतो राज्यभोग इत्यभवत्तयोः ॥४२०॥
पुरुषान्तरविज्ञानविहीनस्य प्रमादतः । सर्वोपि तस्य तन्त्रीशैर्व्यवहारो व्यहस्यत ॥४२१॥

---

३९६. [1]) Emended with C; A सन्दिशत्. ४१८. [1]) Thus A. ४२०. [1]) Emended with C; A लोहनः.

श्वशुरो लोठनस्योजसूहस्तेन व्यधीयत । द्वारे तापसगोष्ठीषु योग्यो विक्रमनिष्ठुरे ॥४२२॥
यः सुस्सलभयोच्छेदमङ्गीकुर्वंस्तदागमे । स्वमन्त्रलक्षजापेन सिद्धिं मन्त्रक्षणेऽभ्यधात् ॥४२३॥
जिह्मो गर्गाज्ञया राजा तदप्रियमपातयत् । बद्धाश्मानं वितस्तायां बिम्बं नीलाश्वडामरम् ॥४२४॥
राजानुग्राहको गर्गस्तांस्तान्व्यापादयन्रिपून् । हालाहाण्डामरान्भूरीन्रक्तभोज्यानघातयत् ॥४२५॥ 425
राज्यकिंचित्करे गर्गायत्तजीवितमृत्यवः । बाह्याभ्यन्तरे चासन्नल्पे वा पृथवोपि वा ॥४२६॥
कदाचिल्लहराद्गर्गे प्रविष्टेथ नृपान्तिकम् । चुक्षोभ नगरे लोकः सर्व एव भयाकुलः ॥४२७॥
तदा क्षुद्रचरद्वार्ता शूलान्यारोप्य नैषु यत् । कुप्यन्गर्गोयमायातो हन्तुं सर्वान्नृपाश्रितान् ॥४२८॥
गर्भिणीगर्भपातिन्या तादृश्या भयवार्तया । छिद्राण्यहान्यन्वभावि जनैर्ज्वर इवाखिलैः ॥४२९॥
ततस्तिलकसिंहाद्यैरुद्रेकाद्द्वागदीयत । अनपेक्ष्य नृपादेशमास्कन्दो गर्गमन्दिरे ॥४३०॥ 430
देशधास्युल्वणः कृत्स्नो धावति स्म धृतायुधः । मत्यमहीशानखिलान्गर्गचन्द्रस्त्वविह्वलः ॥४३१॥
निर्लज्जा दिल्हभट्टारलक्काद्यास्तुरंगमैः । भ्राम्यन्तस्तत्रादृश्यन्त गर्गावसथवीथिषु ॥४३२॥
निषिषेध न ताञ्जाता प्रस्तुतास्कन्ददायिनाम् । लोठनं कुण्डशक्तीनां तेषां स्फूर्तिं व्यसर्जयत् ॥४३३॥
तेनापि योधैर्गर्गस्य रुद्धमार्गेण मन्दिरम् । न रुद्धं नापि निर्दग्धुं पारितं दत्तवह्निना ॥४३४॥
धानुष्कः केशवो नाम मठेशो लोठिकामठे । अबाधतैव नाराचैस्तद्योधान्पातयन्परम् ॥४३५॥ 435
प्रकाशेन समं राजलोके विरलतां गते । सायं सानुचरो गर्गो हयारूढो विनिर्ययौ ॥४३६॥
समैरप्रतिहतो निनाय लहरं व्रजन् । बद्धोजसूहमस्वस्थमासीनं त्रिपुरेश्वरे ॥४३७॥
तापसेन किमेतेनेत्युक्त्वान्येद्युर्मुमोच तम् । तं सुस्सलेपि विधुरे नृपतिं नोदपाटयत् ॥४३८॥
क्षणे क्षणेभवद्देशस्ततः प्रभृति सर्वतः । गर्गागमनसंत्रस्तपौरार्गलितमन्दिरः ॥४३९॥
अथार्तस्य महीभर्तुर्गर्गसंधानमिच्छतः । महत्तमः सहेलोभूल्लहरे दूत्यमाचरन् ॥४४०॥ 440
तेनाङ्गीकारितो गर्गः कथंचित्कन्यकार्पणम् । भृत्यास्तु तेन संबन्धं नैच्छन्भूतस्य भूपतेः ॥४४१॥
ततः सुस्सलदेवेन सह संधिं निबद्धवान् । पश्चात्संप्रार्थ्यमानोपि संबन्धं न व्यधत्त सः ॥४४२॥
मण्डले विशरारुत्वमेवं याते नृपोवधीत्[1] । सज्जं हंसरथं नोनरथं चासादितांश्चरैः ॥४४३॥
तानपि कणसूच्यादिप्रवेशी[1] — — — जनैः । अत्यक्तानसुभिर्घोरामवस्थामन्वभीर्भवत्[2] ॥४४४॥
भोगसेनाङ्गनां मल्लामनुमेने स यन्नृपः । अनुसर्तुं पतिं दग्धं वसन्ती[1] साधु तद्व्यधात् ॥४४५॥ 445
तादृग्दृष्ट्वापि वैक्लव्यं शङ्कितेन तदन्तरे । प्रभिन्ने दिल्हभट्टारो रसदानेन भूभुजा ॥४४६॥
न राजबीजी नोद्दण्डविक्रमो वा बभूव सः । शमितो गुडदण्डेन यत्तथा तेन पापिना ॥४४७॥
तं या निनिन्दानिष्पन्नपौरुषं तत्स्नुषस्तदा । तस्या वह्निप्रवेशेन सिद्धं मानवतीव्रतम् ॥४४८॥
सोल्पोपि राज्यकालोभूद्देवमातृकदुःसहः[1] । दीर्घस्याद्दृश्यमानदीर्घदुःस्वप्नसंनिभः ॥४४९॥
कालविस्सुस्सलो गर्गाद्बद्धसंधिरपि व्रजन् । न्ययुङ्क्ताथ सज्जपालं काश्मीरीन्मुख्यभाक्ततः ॥४५०॥ 450

---

४२२. [1]) Emended; A °स्योजस्तूह°. Cf. viii. 437. ४४३. [1]) Emended; A नृपोभवीत्. ४४४. [1]) A₁ °प्रवेशो जनैः, without indicating the *lacuna*; C °वेशोरिह दुर्जनैः.—[2]) Emended; A °भीभवत्. ४४५. [1]) Thus corr. by later hand from A व्रजन्ती. ४४९. [1]) Emended with R C; A राजका°.

द्वारेण सह दत्तार्घो लक्ष्मकः सल्हभूभुजा । वराहमूलं संप्राप कथंचित्प्रस्थितिं भजन् ॥४५१॥
गर्गः स्मरन्नवस्कन्दं पश्चादभ्येत्य नाशयन् । वाराहमूलेन[1] समं तस्य सैन्यमलुण्टयत् ॥४५२॥
छिन्नर्द्धी स तु तद्योधैर्हतैश्च परिषस्वजे । अविद्धैर्मेदिनी दिव्यैर्देहैस्त्वप्सरसां गणः ॥४५३॥
नायके गलिते भुग्नवृत्तैः सद्वंशजैर्मही । पतितैरप्यक्षुद्रैर्भूषिता मौक्तिकैरिव ॥४५४॥
455 आगच्छता छिन्नभीतिः सञ्जपालेन लक्ष्मकः । निराभयः संप्रपेदे पार्श्वं सुस्सलभूपतेः ॥४५५॥
सोऽथ भूभृत्सञ्जपाले दूरं क्रान्तरिपौ गते । आजगामान्तिकं प्रीतिः प्रेरितः पौरडामरैः ॥४५६॥
संधिं तव विधास्यामि सार्धं सुस्सलभूभुजा । इत्युक्त्वा सल्हणं प्रायात्तदभ्यर्णं सहेलकः ॥४५७॥
काङ्क्षिताभ्युदयं पौरैश्चातकैरिव वारिदम् । आशिश्रियन्राजवर्गं सर्व एवोज्ज्वलानुजम् ॥४५८॥
गर्गस्य गृहिणी क्षुद्राभिधानाय तदन्तिकम् । कन्यकाद्वयमादाय परिणेतुमुपाययौ ॥४५९॥
460 उपयेमे स्वयं राजा राजलक्ष्म्यभिधां तयोः । गुणलेखां सुपास्वेन स्वीचक्रे तद्यवीयसीम् ॥४६०॥
सल्हणे सानुजेऽभ्येत्य सञ्जपालेन वेष्टिते । राजापि राजसदसः सिंहद्वारं समासदत् ॥४६१॥
साक्षाद्विरोधिभृत्येन[1] द्वारमेकेन पातितम् । अभून्मोघं तमप्राप्य सार्धं वैरिमनोरथैः ॥४६२॥
ससैन्यैर्गलितद्वारराजवेश्मस्थिते रिपौ । गर्गास्कन्दधिशङ्कयासीच्चकितं सौस्सलं बलम् ॥४६३॥
गर्गे वितीर्णकन्येऽपि राजसैन्यमविश्वसत् । तस्थौ स्यातव्यमित्येव तृणस्पन्देऽपि शङ्कितम् ॥४६४॥
465 अस्ताभिलाषिणि दिने तादृक्कासहते बले । केशवद्दहति क्ष्मापे दुर्भेदौकःस्थितान्रिपून् ॥४६५॥
प्रविश्य प्रावनिर्भुग्नकवाटेन[1] तमोरिणा । द्वारं विवृत्याक्रान्तस्थैः सञ्जपालोऽग्रहीद्रणम् ॥४६६॥
तस्य निश्चित्य पातंगीं वृत्तिं भूयस्यरिव्रजे । अनुप्रवेशं विदधे पदातिर्लक्ककाभिधः ॥४६७॥
दरदानयने काष्ठवाटसंकटविक्रमे । यस्तस्य सदृशो योधः प्रतिबिम्ब इवाभवत् ॥४६८॥
स केशवश्च स मठाधीशस्तमनुसस्रतुः । शैनेयमारुती पार्थमिव प्रार्थितसैन्धवम् ॥४६९॥
470 निर्गत्य मण्डपाद्यमप्रहारैस्तैः कथंचन । विवृते प्राङ्गणद्वारे धीरो राजाविशत्स्वयम् ॥४७०॥
निर्विभागे वर्तमाने संगरे सैन्ययोर्द्वयोः । प्राङ्गणे प्रमयं प्रापुर्भूयांसस्तत्र शस्त्रिणः ॥४७१॥
सचिवः सल्हराजस्य पतंगग्रामजो द्विजः । आजौ प्रापाज्जको नाम स्वःस्त्रीसंभोगभागिताम् ॥४७२॥
कायस्थेनापि रुद्रेण लब्ध्वा गञ्जाधिकारिताम् । स्वामिप्रसादः साफल्यं निन्ये त्यक्त्वा तनुं रणे ॥४७३॥
सायं वनस्पतिर्लीनैः खगैर्वाचालितो यथा । प्राह्णि प्रविष्टे प्रोड्डीननिःशब्दविहगोऽभवत् ॥४७४॥
475 आयोधनोर्वी वाचाला चक्रे विप्रार्थितेव सा । तथा सुस्सलभूपेन तुरंगस्थेन तर्जिता ॥४७५॥
अनारूढेऽङ्गनान्तःस्थे तस्मिन्सिंहासनं ध्वनिः । सुस्सलो जयतीत्येवं ढक्कावाद्यं च शुश्रुवे ॥४७६॥
मल्लराजगृहे तादृङ्गान्यस्याप्युदपद्यत । अगातां तत्र वैक्लव्यं यादृक्सल्हणलोठनौ ॥४७७॥
आबद्धकवचावश्वाक्रान्तावालिङ्ग्य सुस्सलः । बालौ युवामिति वदन्धूर्तोऽत्याजयदायुधम् ॥४७८॥
आदिश्य मण्डपेऽन्यस्मिन्बद्धयोश्च स्थितिं तयोः । प्राप्तराज्यस्ततो राजा विवेशास्थानमण्डपम् ॥४७९॥
480 त्र्यहोनांश्चतुरो मासान्भुक्तराज्यं बबन्ध तम् । सितस्य षडशीतेऽब्दे राधस्य त्रितयेऽहनि ॥४८०॥

४५२. [1]) Thus A. ४६२. [1]) Emended with C; A साचाद्वि°. ४६६. [1]) Emended; A प्रावणि°.

तेन सिंहासने क्रान्ते भास्वतेव नभस्तले क्षणादेवाखिलो लोकः क्षोभमब्धिरिवात्यजत् ॥४८१॥
विकोशशस्त्रः सन्द्रोहावेक्षणक्षोभतः सदा । व्याधलोके व्यात्तवक्त्रो मृगराज इवाभवत् ॥४८२॥
भ्रातृद्रुहां कुलच्छेदमन्विष्यान्विष्य कुर्वता । न तेन नीतिनिष्ठेन शिशवोप्यवशेषिताः ॥४८३॥
जनस्य वीक्ष्य दौर्जन्यमधृष्टाकारतां वहन् । स कार्यापेक्षयाप्यासीन्न क्वाप्याहितमार्दवः ॥४८४॥
वस्तुतस्त्वार्द्रहृदयः क्रूरं दमयितुं जनम् । अवाप्तत्वं तद्धीमत्त्वाद्भिन्निम्याल इवादधे ॥४८५॥ 485
कालवित्समयत्यागी प्रगल्भः प्रतिभानवान् । इङ्गितज्ञो दीर्घदृष्टिः स एवान्यो न कोप्यभूत् ॥४८६॥
अधिकः कोपि कोप्यूनः कोपि तस्य समो गुणः । दोषोपि वा पूर्वजस्य स्वाभाविक्येप्यदृश्यत ॥४८७॥
अन्वकारि समानेपि कोपे तत्पूर्वजन्मनः । कोपेन विषमालर्कं तदीयेन तु सारघम् ॥४८८॥
न बभूव स वेशादौ सासूयोनुचितं पुनः । स्थितिभेदभयात्सेहे नोत्सेकमनुजीविनाम् ॥४८९॥
नैच्छत्स द्वन्द्वयुद्धादिसंधानैर्मानिनां वधम् । तस्मिन्प्रमादान्निर्व्यूढे स्वदीयत कृपाकुलः ॥४९०॥ 490
वाक्पारुष्यं नृपस्यासीदायस्यातङ्कदुःसहम् । तस्य तु प्रणयप्रायं हिंसाबाधावर्जितम् ॥४९१॥
तस्यार्थगृध्नोरुत्पादो भूयानास्ते स्म संपदाम् । त्यागो विषयकालादिनैयत्यात्तु मितोभवत् ॥४९२॥
नवकर्माभ्रबाहुल्यप्रिये तस्मिन्दरिद्रताम् । तत्यजुः कारवो वाजिविक्रेतारश्च दैशिकाः ॥४९३॥
दुःसहव्यसनोत्पत्तौ जिगीषोः प्रशमैषिणः । तस्यासीदपरित्याज्यं न किंचिद्वसुवर्षिणः ॥४९४॥
तस्येन्द्रद्वादशी भूरिपरार्ध्यांशुकदायिनः । यथा नृपस्य शुशुभे तथा नान्यस्य कस्यचित् ॥४९५॥ 495
यथा प्रागुच्चलो राजा सुप्रापः प्रियसेवकः । स तथा सेवकैरासीन्नूनं दुर्लभदर्शनः ॥४९६॥
नोच्चलादपरस्यासीद्व्यसनं हयवाहने । नान्यस्य सुस्सलनृपादाढ्यं तत्र च पप्रथे ॥४९७॥
शममुत्पन्नमुत्पन्नं निन्ये दुर्भिक्षमुच्चलः । राज्ये सुस्सलदेवस्य न तत्स्वप्नेप्यदृश्यत ॥४९८॥
किमन्यदखिलैः सोभूदग्रजादधिको गुणैः । त्यक्त्वा त्यागार्थनस्पृहसुप्रापत्वानि केवलम् ॥४९९॥
औच्चलेः पालको गर्गो यं राज्ये कर्तुमैहत । सह्लमङ्गलस्तेन निरवास्यत स क्रुधा ॥५००॥ 500
तस्मिन्भद्रावकाशस्थे प्रासनामा तदात्मजः । काञ्चनोत्कोचवश्चक्रे डामरैः सह चाक्रिकाम् ॥५०१॥
असंस्थजमुच्चलजं पितृव्येणार्थितं शिशुम् । प्रसङ्गे तत्र गर्गोपि प्रातिकूल्यमदर्शयत् ॥५०२॥
प्रहितानां नरेन्द्रेण तृणानामिव शालिनाम् । गर्गदावाग्निदग्धानां निःसंख्यानामभूत्क्षयः ॥५०३॥
गर्गस्यालोपि विजयः स देवसरसोद्भवः । प्रातिलोम्येन नृपतिसैन्यानां कदनं व्यधात् ॥५०४॥
राज्यप्राप्तेर्मासमात्रे दिनैरभ्यधिके गते । तेनोत्पिञ्जेन राज्ञोभूच्च धीरस्याकुलं मनः ॥५०५॥ 505
सुरेश्वर्यमरेशोर्वीवितस्तासिन्धुसंगमाः । गर्गेण राजसैन्यानां कृताः कदनकाङ्क्षिणः ॥५०६॥
संग्रामे तुमुलेमात्यौ भृङ्गारकपिलौ हतौ । कर्णभूत्रकनामानौ तन्त्रिणौ च सहोदरौ ॥५०७॥
निहतानन्तसुभटसमूहान्सरलक्षितान् । तादृशानपि निष्कर्षुं नासीत्कस्यापि पाटवम् ॥५०८॥
हर्षमित्रः कम्पनेशो भूभर्तुर्मातुलात्मजः । विजयेन हलानीको विदधे विजयेश्वरे ॥५०९॥

४९२. 1) Emended; A °नैयत्या तु. ४९८. 1) Emended with O; A स्वप्नेदृश्यत. ५०६. 1) Emended with C; A राजसै°.

510 पुत्रो मङ्गलराजस्य तिल्हो राजान्यवंशजः । तत्र बिम्बाकरमुखास्तन्त्रिणश्च प्रमिम्यिरे ||५१०||
राजानीके.सज्जपालः प्रवीरप्रवरोभवत् । भूरिसैन्येन गर्गेण नाल्पसैन्योपि यो जितः ||५११||
संस्तम्भ्य विजयक्षेत्रे लक्ककाद्यैर्विसर्जितैः । धीरो राजा बलं भग्नं स्वयं गर्गोन्मुखं ययौ ||५१२||
सोन्तिष्य गर्गेण हतान्योधान्नाशीकृतान्बहून् । निरदाहयदन्येषुरसंख्यैर्वेधिताभिभिः ||५१३||
बलिना भूभुजा गर्गः पीड्यमानः शनैः शनैः । ततः स्ववसतीर्दग्ध्वा हल्लोहाभिमुखोभवत् ||५१४||
515 स तत्र रत्नवर्षाख्यं गिरिदुर्गं समाश्रितः । हताश्वोनुचरैस्त्यक्तो नृपेणारादवेष्ट्यत ||५१५||
अन्वारूढेन तत्रापि सज्जपालेन वेष्टितः । चरणौ शरणीचक्रे राज्ञो दत्त्वोत्पलात्मजम् ||५१६||
अन्तिकस्थं नृपे कर्णकोष्ठजं मल्लकोष्ठकम् । विरुद्धं रुद्धवत्याशु गर्गो विश्वासमाययौ ||५१७||
गृहीतप्रणतिस्तस्य नष्टेषु विजयादिषु । शमितोपप्लवो राजा विवेश नगरं शनैः ||५१८||
गत्वाथ लोहरे न्यस्य बद्ध्वा सल्हणलोठनौ । स कल्हसोमपालाद्यै रेमे संसेवितो नृपैः ||५१९||
520 भूयः प्रविष्टः कश्मीरान्सेव्यः सर्वातिशायिभिः । गर्गं प्रसादैरनयत्प्रवृद्धिमधिकाधिकैः ||५२०||
ग्रीष्मार्कप्रतिमे तस्मिन्ह्लादिनावनुचक्रतुः । महादेवी कुमारश्च द्रुमच्छायावनानिली ||५२१||
डामरौ देवसरसोद्भवौ त्रिजयगोत्रिणौ । बृहट्टिकस्तथा सूक्ष्मटिक्को वेलां प्रचक्रतुः ||५२२||
सानाथ्यकाङ्क्षिणौ पार्थिवस्य प्रविशतः पुरः । लोकपुण्ये तस्थतुस्तौ क्रन्दद्भिः स्वानुगैः समम् ||५२३||
त्रिजये गर्गसंबन्धात्सदाक्षिण्यो महीपतिः । सदाचारं परित्यज्य वेत्रिभिस्तावताडयत् ||५२४||
525 तौ मानिनश्च तद्भृत्याः कृष्टशस्त्रास्ततो व्यधुः । साहसं सुमहत्सैन्ये प्रहरन्तो महीपतेः ||५२५||
श्वपाकोभोगदेवाख्यः कृपाण्या प्राहरन्नृपम् । धीरो गज्जकनामा च करवालेन पृष्ठतः ||५२६||
सावशेषतया भूपस्यायुषो मोघतां ययुः । द्विषत्प्रहतयो वाहतुरगी तु व्यपद्यत ||५२७||
नृपस्यान्तरयन्वैरिप्रहर्तिं बाणवंशजः । निहतस्तत्र भृङ्गारसीहः सादीशसस्यकः ||५२८||
सैनिकैस्तैर्बृहट्टिकाभोगदेवादयो हताः । सूक्ष्मटिक्कस्तु निस्तीर्णो हेतुर्भाविनि विप्लवे ||५२९||
530 शूले व्यापादिता गज्जकादयो द्रोहसंश्रिताः । संदेहितासुरित्यासीद्राजा गर्गानुकूल्यभाक् ||५३०||
न भवेत्पविपातेपि प्रमयः समयं विना । प्रसूनमप्यसून्हन्ति जन्तोः प्राप्तावधेः पुनः ||५३१||
ज्वालाभिरौर्वदहनस्य पयोधिमध्ये न म्लानतामपि हि यानि मुहुः स्पृशन्ति ।
तान्येव यान्ति विलयं किल मौक्तिकानि कान्ताकुचेषु युवभावभुवोष्मणापि ||५३२||
प्राक्सेवामपि विस्मृत्य परोत्सेकासहिष्णुना । मण्डलात्सज्जपालाद्या निरवास्यन्त भूभुजा ||५३३||
संबन्धी काकवंश्यानां यशोराजाभिधस्ततः । सहस्रमङ्गलाभ्यर्णे राज्ञा निर्वासितो ययौ ||५३४||
535 तमन्यांश्च विनिर्यातान्देशाद्बृहत्समृद्धिमान् । ऐच्छल्लब्धप्रतिष्ठः स राज्ञः प्रत्यभियोगिताम् ||५३५||
तत्पुत्रः कान्दमार्गेण विविक्षुः क्ष्मापसैनिकैः । यशोराजे क्षते प्रासैः प्रत्यावृत्य ययौ भयात् ||५३६||
अथान्येष्वपि भृत्येषु राज्ञा निर्वासितेषु सः । मिलितेषु प्रथां यावद्यावदुपलब्धवान् ||५३७||

---

५१४. ¹) Emended; A फलाहा°. Cf. हालाहाण्डामराम् viii. 425. ५१७. ¹) Emended; A with diplography मल्लकोष्ठका ष्ठकम्. ५१९. ¹) Emended with C; A राजा.

जयराजे गते स्वर्गे पार्वतीयास्त्रयो नृपाः । चाम्पेयो आसटो वज्रधरो वल्लापुराधिपः ॥५३८॥

राजा सहजपालश्च वर्तुलानामधीश्वरः । युवराजौ त्रिगर्तीयवल्लापुरनरेन्द्रयोः ॥५३९॥

कल्ह आनन्दराजश्च पञ्च संघटिताः क्वचित् । मज्जनार्थं कृतरणाः कुरुक्षेत्रमुपागताः ॥५४०॥ 540

आसमत्याडनं तावदभ्येत्य नरवर्मणः । प्रापुर्भिक्षाचरं तेन दत्तपाथेयकाञ्चनम् ॥५४१॥ कुलकम् ॥

स आसटेन संबन्धिस्नेहाद्विहितसत्कृतिः । नीतोन्यैश्च समं भूपैर्वल्लापुरमथाययौ ॥५४२॥

देशाद्विनिर्गतैर्भिक्षुमनुजैर्वर्धितप्रथे । तस्मिन्प्राप्ते सहलस्य प्रतिष्ठा लघुतामगात् ॥५४३॥

पौत्रोयं हर्षदेवस्य क एते राज्य इत्यथ । उक्त्वा त्यक्त्वा सहलादींस्तमेवाशिश्रियञ्जनाः ॥५४४॥

कृतप्रभावमुत्सृज्य संबन्धिस्नेहमोहितः । दर्पको[1] राजपुत्रस्तं राज्ञा निर्वासितोप्यगात् ॥५४५॥ 545

पुत्रः कुमारपालस्य तत्पितुर्मातुलस्य सः । वृद्धिं सुस्सलदेवेन पुरा निन्ये हि पुत्रवत् ॥५४६॥

प्रेरितो युवराजेन आसटेन च कन्यकाम् । वल्लापुरेशः प्रददौ भिक्षवेथ स पद्मकः ॥५४७॥

तद्देशठक्कुरो भूपान्संघट्याखिलांस्ततः । तमैच्छद्गयपालाख्यः कर्तुं पैतामहे पदे ॥५४८॥

तां वार्तां श्रुतवान्राजा यावदासीत्समाकुलः । गयपालो हतस्तावद्द्रोहजैश्छद्मना बली ॥५४९॥

पद्मकं तान्प्रतिगते[1] योद्धुं प्रधनमध्यगः । भिक्षाचरचमूधुर्यो दर्पकोपि व्यपद्यत ॥५५०॥ 550

तेन प्रधाननाशेन ततो भिक्षाचरो ययौ । अकिंचित्करतां मेघ इवावग्रहवारितः ॥५५१॥

आसमत्यां प्रयातायां क्षीणे[1] पाथेयकाञ्चने । श्वशुरोपि ययौ तस्य शनैर्मन्दोपचारताम् ॥५५२॥

चतुष्पञ्चानि वर्षाणि तिष्ठन्नासटमन्दिरे । मासाच्छादनमात्रं स ततः क्लेशात्समासदत् ॥५५३॥

ठक्कुरो देङ्गपालोथ चन्द्रभागातटाश्रयः । दत्त्वा सुतां बप्पिकाख्यां तं निनाय निजान्तिकम् ॥५५४॥

प्राप्तसौख्यो वसंस्तत्र कंचित्कालं भयोज्झितः । स राजबीजी दैन्येन शैशवेन च तत्यजे ॥५५५॥ 555

तदन्तरे साहसिकः प्रासः साहलिरुन्मदः । गतागतानि कुर्वाणः संरम्भमनयन्नृपम् ॥५५६॥

स सिद्धपथमार्गेण विविक्षुर्विप्लवोन्मुखः । स्वैरेव भृत्यैर्भूभर्तुर्बद्ध्वा पाशैः समर्पितः ॥५५७॥

तत्रोत्पिञ्जे परं सत्त्वं सज्जपालस्य पप्रथे । खिन्नोपि द्रोहविमुखो यस्तु देशान्तरं ययौ ॥५५८॥

तस्मिञ्छूरे कुलीने च किं वाच्यं स दिगन्तरे । शौर्येणैव यशोराजः पप्रथे यत्तदद्भुतम् ॥५५९॥

अथ राजा निवार्यान्यान्सहेलादीन्महत्तमान् । सर्वाधिकारे विदधे कायस्थं गौरकाभिधम् ॥५६०॥ 560

स तापसस्य संबन्धी कस्यचिद्विजयेश्वरे । सेवया लोहरस्थस्य तस्य वाल्लभ्यमाययौ ॥५६१॥

शमिते पूर्वकायस्थवर्गे तेन ततः क्रमात् । नीतः सर्वाधिकारित्वं सोन्यामेव स्थितिं व्यधात् ॥५६२॥

अशेषकर्मस्थानेभ्यो वृत्तिं राजोपजीविनाम् । निवार्य[1] कोशे भरणं तेनाकार्यनिशं प्रभोः ॥५६३॥

अदृश्या पाप्मिनस्तस्य नाज्ञायि क्रूरता जनैः । मधुरिम्णा विषस्येव शक्तिः प्राणापहारिणी ॥५६४॥

न्यधात्कृपणवित्तं स पूर्वसंचितनाशकृत् । विशुद्धे नृपतेः कोशे हिमे हिममिवाम्बुदः ॥५६५॥ 565

कोशः कृपणवित्तेन प्रविष्टेन हि दूषितः । मुच्यते भूमिपालानां तस्करैरथ वारिभिः ॥५६६॥

---

५३८. [1]) Comp. vii. 588. ५४५. [1]) A₁ with diplography दर्पको राजको राजपुत्रस्तं. ५५०. [1]) Emended; A प्रतिगतो. ५५२. [1]) Emended; A क्षये. ५६३. [1]) Emended; A निर्वार्य.

लोभाभ्यासेन भूयोपि संचिन्वन्कोशमन्वहम् । आस्ते स्म लोहरगिरौ प्रक्षिपन्सर्वसंपदः ॥५६७॥
गौरकाभयिभिर्बद्धपञ्जकार्यैर्नियोगिभिः । विधीयते स्म निःसारा महोत्पातैरिव क्षितिः ॥५६८॥
उच्चलक्ष्मापतौ शान्ते मूर्धाक्कडशिलोपमे । अबाधन्त पुनर्लोकं व्याधा इव नियोगिनः ॥५६९॥
570 प्रशास्तकलशस्यान्ते तद्भ्रातृतनयः परम् । कायस्थः कनको नाम श्लाघ्यामकृत संपदम् ॥५७०॥
नानादिगन्तरायातो दुर्भिक्षपतितो जनः । येनाविच्छिन्नसत्त्रेण शान्तव्यापद्व्यधीयत ॥५७१॥
संजातमुच्चलस्यान्ते येषां तत्त्वपरीक्षणम् । त एव चक्रिरे राज्ञा प्रमसेनाधिकारिणः ॥५७२॥
द्वारे तिलकसिंहः स तादृक्तेन व्यधीयत । राजस्थाने च जनकः काणस्तस्य सहोदरः ॥५७३॥
प्रतापैर्नृपतेस्तीक्ष्णैः करमाक्रान्तमण्डलः । जिताद्वाराधिपः सोपि स्वीचकारोरशाधिपात् ॥५७४॥
575 काकवंश्यस्तु तिलकः क्ष्माभुजा दत्तकम्पनः । निन्ये प्रकम्पमंहितान्प्रकम्पन इव द्रुमान् ॥५७५॥
याम्यशाखभृता शोडराजस्थानाधिकारिणा । नृपप्रतापैरहिताः सज्जकेनापि निर्जिताः ॥५७६॥
काकवंशाभयार्चाग्रराजद्वारेण धीमता । अहमेलकभृत्येनाप्यथापीष्टेन मन्त्रिता ॥५७७॥
एवं स्वाहंक्रियात्यक्तगुणापेक्षेण मन्त्रिणः । कुर्वतोच्चावचांस्तेन कश्चित्कालोत्यवाह्यत ॥५७८॥
वितस्तापुलिने सोथ कर्तुं प्रारभतोन्नतम् । स्वस्य श्वश्र्वाश्च पत्न्याश्च नाम्ना सुरगृहत्रयम् ॥५७९॥
580 उत्पातवह्निना दग्धो निःसंख्यधनदायिना । तेन दिद्दाविहारोपि नूतनत्वमनीयत ॥५८०॥
पुरीमल्लिकां[1] जातु स प्रयातोन्तिकस्थितैः । भ्रातैः प्रैर्यत कल्हाद्यैर्गर्गोच्छेदाय भूपतिः ॥५८१॥
गार्गिः कल्याणचन्द्राख्यस्तानतिक्रम्य हि स्फुरन् । मृगयारक्षणे तेषामसूयामुदपादयत् ॥५८२॥
सर्वाभ्यधिकसामर्थ्यं तं निपात्य निवेद्य ते । नित्योपजपनैर्गर्गे विक्रियामनयन्नृपम् ॥५८३॥
बद्ध्वा त्वां लोहरे भूभृदिच्छति क्षेप्तुमित्यथ । गर्गः शशङ्के भृत्येन राज्ञा चैकेन बोधितः ॥५८४॥
585 ततः स सन्नतस्तत्र पलाय्य स्वभुवं ययौ । दिनैर्भूपोपि संप्राप्तः प्रविवेश स्वमण्डलम् ॥५८५॥
अन्योन्यशङ्कया भेदं यातयो राजगर्गयोः । व्याक्तिकैः कृतसंचारैर्वैरं प्रौढिमनीयत ॥५८६॥
स्यालं गर्गस्य विजयं खेदशोषवशंवदः । समीपात्स त्यजन्राजा पश्चात्तापेन पस्पृशे ॥५८७॥
कारायां गर्गशत्रुर्यस्तेन पूर्वं व्यधीयत । स मल्लकोष्ठकस्तस्मिन्कालेमुच्यत बन्धनात् ॥५८८॥
निबद्धयौनसंबन्धं डामरैरपरैः समम् । तं कारयित्वा सामर्षो निनाय बलितां नृपः ॥५८९॥
590 शनैर्युद्धाय निर्याते राजसैन्येथ पूर्ववत् । गर्गेण कदनं चक्रे योधानाममरेश्वरे ॥५९०॥
तत्र सर्वातिशायिन्या वीरवृत्त्या नृपाश्रितः । शमालाडामरः प्राप प्रथां पृथ्वीहरः परम् ॥५९१॥
रणे द्वारपतेर्गर्गनिर्जितस्य पलायने । शौर्यं तिलकसिंहस्य प्राप सर्वोपहास्यताम् ॥५९२॥
हतशेषाः क्षताः शस्त्रवस्त्रादि त्याजिता भटाः । तदीया गर्गचन्द्रेण कारुण्यात्केपि रक्षिताः ॥५९३॥
वह्निसात्क्रियमाणेषु वीरदेहेषु सर्वतः । राजसैन्ये चिताग्नीनां गणना कापि नाभवत् ॥५९४॥
595 कृष्टसैन्येन राज्ञाथ गर्गो निर्दग्धमन्दिरः । संत्यज्य लहरं प्रावाद्गिरिं धुडावनाभिधम् ॥५९५॥
गिरिमूलोपविष्टस्य भूपतेः सैनिकैः समम् । तेषु तेष्वकरोन्नित्यं गिरिमार्गेषु संगरम् ॥५९६॥

५७५. [1]) Emended with C; A प्रकम्प सहिता°. ५७७. [1]) Emended; A °अयाभ्याग्र°. ५८१. [1]) Thus A; cf. viii. 764. 831. 1947 (*C*).

कूटयुद्धैर्नृपानीकं प्रतिराड्युपतापयन् । रणे त्रैलोक्यराजादिप्रमुखांस्तन्निकणोवधीत् ॥५९७॥

फाल्गुने[1] हिमसंभारभीमे परिमितानुगः । स धीरो रात्र्यपि रिपौ न धैर्येण व्ययुज्यत ॥५९८॥

धैर्यवान्काकवंश्यस्तु तिलकः कम्पनापतिः । परं शिखरिशृङ्गस्थं शक्तोभूत्तं प्रधावितुम् ॥५९९॥

पीडितस्तेन संप्रेष्य स्वभार्यातनयेप्सितकम् । निन्येनुकूलतां भूपं प्रसादच्छादितक्रुधम् ॥६००॥ 600

गूढमन्युर्नृपः संधिं बद्ध्वा प्रचलितस्ततः । तं मल्लकोष्ठकं वृद्धिं निनाय न पुनः शमम् ॥६०१॥

स्थितेथ लहरे द्वित्रान्मासानविशदे नृपे । स मल्लकोष्ठकालक्ष्यस्पर्धी नीचविमाननाम् ॥६०२॥

तन्मध्ये नृपतिर्गूढं बिभेद तद्बलं नयन् । तदीयानकरोद्भृत्यान्कर्णादीन्स्वहितावहान् ॥६०३॥

स खिन्नो बीजदायादसमदीर्घिकयाथ तैः । प्रेरितः पार्थिवाभ्यर्णं[1] सदारतनयोविशत् ॥६०४॥

जातु प्रवृत्तः पार्श्वस्थं ज्ञानद्रोण्युपरिस्थितः । अथैकदा तमाक्षिप्तं शस्त्रमत्याजयन्नृपः ॥६०५॥ 605

कुर्यादास्थामनष्टम्भे कोन्यः पौरुषगर्वितः । आक्षेपसमये सोपि यत्क्लैब्यं भीरुवद्ययौ ॥६०६॥

उत्खातरोपितनृपः क्व नु सोभिमानः कार्पण्यभागितरलोकसमा क्व वृत्तिः ।
यद्वावशं घटयति प्रकटं विधातुरिच्छैव यन्त्रगुणपङ्क्तिरिवाथ जन्तुम् ॥६०७॥

अशक्नन्युधि ये द्रष्टुमपि तं नास्य ते शठाः । केपि राजप्रिया बाहू ग्रन्थिबद्धौ तथा व्यधुः ॥६०८॥

श्रीसंग्राममठाभ्यर्णमन्दिरस्था नृपे स्वयम् । संक्रान्ते[1] प्राङ्गणं युद्धात्कल्याणाद्या व्यरंसिषुः ॥६०९॥

जीवन्तं पितरं श्रुत्वा विदेहो गर्गनन्दनः । सान्त्व्यमानः स्वयं राज्ञा कृच्छ्राच्छस्त्रं समार्पयत्[1] ॥६१०॥ 610

गर्गः सदारतनयो राजौकस्येव भूभुजा । उपाचर्यत दाक्षिण्यादूढो भोगैर्निजोचितैः ॥६११॥

गार्गिः पलाय्य बालोपि चतुष्को निजमन्दिरात् । अवर्णभाजा कर्णेन दृष्ट्वा राज्ञः समर्पितः ॥६१२॥

छद्मच्छन्नप्रकोपस्य प्रसादस्य महीभुजः । अन्तःशुद्धिविहीनस्य व्रणस्येव न निश्चयः ॥६१३॥

दरद्राजे मणिधरे दिदृक्षायागते नृपः । तत्संगमाय निर्यातो गर्गं भृत्यैरघातयत् ॥६१४॥

द्वित्रान्मासान्सोनुभूतकारागारस्थितिर्निशि । सत्रा त्रिभिः सुतैः कण्ठबद्धरज्जुर्व्यपाद्यत ॥६१५॥ 615

निष्ठां बिम्बमुखान्निन्ये यथैव स नृपानुगैः । तथैव कण्ठबद्धाश्मा सपुत्रोक्षिप्यताम्भसि ॥६१६॥

तं चतुर्नवते वर्षे हत्वा भाद्रपदे नृपः । सुखेच्छुः प्रत्युत प्राप दुःखमुद्भूतविप्लवः ॥६१७॥

कल्हे कालिञ्जराधीशे महादेव्याथ मातरि । मल्लाभिधायां शान्तायां स ततोभूत्सुदुःखितः ॥६१८॥

तन्मध्ये नागपालाख्यः सोमपालस्य सोदरः । तेन प्रतापपालाख्ये हते द्वैमातुरेग्रजे ॥६१९॥

शङ्कितस्तन्निहन्तारं हत्वामात्यं पलायितः । त्यक्तस्वदेशः शरणं ययौ सुस्सलभूभुजम् ॥६२०॥ 620

क्रुद्धः स कारणात्तस्मात्प्रणयं वशवर्तिनः । अगृह्णन्सोमपालस्य निश्चिकायाभिषेणनम् ॥६२१॥

निश्चित्य सर्वोपायानामसाध्यं विधुरं नृपम् । स भिक्षाचरमानिन्ये तस्य वल्लापुराद्रिपुम् ॥६२२॥

निशम्यानीतदायादं तं प्रकोपाकुलो नृपः । दत्तास्कन्दोविशद्भीमतेजा राजपुरीं ततः ॥६२३॥

दत्त्वा राज्ये नागपालं सोमपाले पलायिते । सप्त मासान्स तत्रासीत्तांस्तान्संत्रासयन्रिपून् ॥६२४॥

---

५९८. [1]) A फाल्गुणे. ६०४. [1]) Emended with C; A पार्थिवा°. ६०५. [1]) Emended; A °विशदानां. ६०९. [1]) Emended, A सङ्ग्रामे प्रा°. ६१०. [1]) Emended with C; A समर्पयत्.

625 राज्ञां वज्रधरादीनां राजा वज्रधरोपमः । सेवावसरदानेन प्रसादविवशोभवत् ॥६२५॥
भ्रमतां चन्द्रभागादिसरित्तीरेषु सर्वतः । तत्सैन्यानां[1] मुखमपि द्रष्टुं शेकुर्न वैरिणः ॥६२६॥
अथगाम्भ्यभवत्तस्य तिलकः कम्पनापतिः । पृथ्वीहरो डामरश्च मार्गरक्षणदीक्षितः ॥६२७॥
धार्मिको नृपतिर्ब्रह्मपुरीं देवगृहांश्च सः । मण्डलं द्विषतो रक्षन्प्रपेदे मौलिकं फलम् ॥६२८॥
तस्येन्द्रविभवस्यान्यत्सामर्थ्यं वर्ण्यते कियत् । आययावध्यशालोपि सैन्ये यस्य स्वमण्डलात् ॥६२९॥
630 तत्र प्रसङ्गे तत्रासीभवन्सुजनवर्धनः । दूरस्थस्यानयद्वृद्धिं गौरकस्योपरि क्रुधम् ॥६३०॥
राष्ट्रगुप्त्यै स्वयं राज्ञा स्थापितः[1] स स्वमण्डले । अज्ञायि पैशुनाभुग्नबुद्धिना निखिलार्थहृत् ॥६३१॥
तत्संबन्धेन जनकं स निन्दनगराधिपम् । मनस्तिलकसिंहस्य तद्भ्रातुरुदवेजयत् ॥६३२॥
हृत्वाधिकारं त्वस्याथ क्रुद्धः पर्णोत्ससंभवम् । अनन्तात्मजमानन्दाभिधं[1] द्वाराधिपं व्यधात् ॥६३३॥
सोमपालादयः श्लाघ्यास्तदा प्रकृतयोभवन् । राज्ञस्तथा स्थितस्यापि न याः सविधमाययुः ॥६३४॥
635 स पञ्चनवते वर्षे वैशाखेथ स्वमण्डलम् । प्राविशन्नागपालोपि राज्यभ्रष्टस्तमन्वगात् ॥६३५॥
दुःसहातङ्कदूतेन लोभेन क्षोभितस्ततः[1] । अदण्डयच्च वास्तव्याननयच्चाल्पतां व्ययम् ॥६३६॥
निवार्य गौरकं कार्यात्कार्यिणस्तत्समाश्रितान् । तस्य दण्डयतः सर्वे विरागं मन्त्रिणो ययुः ॥६३७॥
अकाण्डे व्यवहारेषु स विपर्यासितेष्वभूत् । अवसन्नधनो गाढमपीडाजनमन्त्रिणाम् ॥६३८॥
सौवर्णीरिष्टिकाः कृत्वा प्राहिणोल्लोहरान्तरे । काञ्चनाद्रिप्रतीकाशान्स्वर्णराशीनढौकयत् ॥६३९॥
640 अथ दण्डयितुं गर्गभृत्यान्दण्डाधिकारिणम्[1] । लहरेऽकृत गर्गस्य मन्त्रिणं गज्जकाभिधम् ॥६४०॥
तं दण्डभीतैर्गर्गस्य सेवकैराश्रितस्ततः । विश्वस्तमवधीत्क्रुध्यंश्छद्मना मल्लकोष्ठकः ॥६४१॥
लहरे विद्रुते राजा द्वैमातुरमथाग्रजम् । मल्लकोष्ठस्यार्जुनाख्यं बबन्ध सविधस्थितम् ॥६४२॥
हस्तं च सज्जचन्द्रस्य पुत्रं गोत्रिणमप्यसौ । बद्ध्वा व्यधाद्द्विरकाख्यं तस्य तद्भ्रातरं हितम् ॥६४३॥
पूर्ववैरं स्मरन्सूर्यं सपुत्रं तं परास्तथा[1] । बबन्धानन्दचन्द्रादीन्नीत्युल्लङ्घनमाचरन् ॥६४४॥
645 निर्गते लहरं मल्लकोष्ठके विद्रुते ततः । आरोप्यार्जुनकोष्ठं तं शूले कोपाद्व्यपादयत् ॥६४५॥
निवेश्य सैन्यं तत्राथ प्रविष्टस्य पुरं ययुः । डामरा निखिलास्तस्य वैरं विश्वस्तघातिनः ॥६४६॥
क्रुध्यन्पृथ्वीहरायापि कृतसेवाय मन्त्रिभिः । आदिष्टैः कम्पनेशाद्यैरवस्कन्दमदापयत् ॥६४७॥
कथं चित्स तु निस्तीर्णो जयन्तीविषयौकसः । बन्धोः क्षीराभिधानस्य प्रविवेशोपवेशनम् ॥६४८॥
विनेवन्तिपुरादीनां पुराणामन्तरेण तम् । व्रजन्तं विधुरं केचिन्नाशकन्बाधितुं द्विषः ॥६४९॥
650 तद्वैधुर्यविधानं तत्प्रजासंहारकार्यभूत् । प्रमादाद्भूपतेः[1] क्रुद्धवेतालोत्थापनोपमम् ॥६५०॥
क्षीरोथ तीक्ष्णधीर्वृद्धः सह पृथ्वीहरेण सः । अढौकयच्छमाङ्गासान्तरेष्टादश डामरान् ॥६५१॥
अभेद्यसंघांस्ताञ्जेतुं निर्यातो विजयेश्वरम् । न्ययुङ्क्त भूभृत्संभ्रान्तस्तिलकं कम्पनापतिम् ॥६५२॥
संग्रामैः खण्डशः कुर्वन्स तानतुलविक्रमः । विद्रावयामास रयैः पुरोवायुरिवाम्बुदान् ॥६५३॥

---

६२६. [1]) Emended; A ताम्सैन्य°. ६३१. [1]) Emended with C; A स्थापितं. ६३३. [1]) Emended; A अनन्ताधिपमा°. Cf. viii. 713, 1005, 1042. ६३६. [1]) Emended; A क्षोभितस्ततः. ६४०. [1]) Emended with C; A °कारिणाम्. ६४४. [1]) Emended with C; A परस्त°. ६५०. [1]) Emended with C; A प्रमाद्भूपते:

प्रविष्टानां धुर्ये गहनकविकर्मप्रणयिनां प्रसक्तानां द्यूते नरपतिधुरायां विहरताम् ।
तटस्थत्वे मङ्क्षु स्खलितमसकृत्सोऽस्ति पदं प्रयोगे वैकल्यं स्वयमविकलो यो न भजते ॥६८२॥
तीव्रप्रयत्नो नृपतिस्तत्रापि विहितोद्यमः । निनाय मल्लकोष्ठादीन्किंचिन्मन्दप्रतापताम् ॥६८३॥
अथानिनाय विजयो विषलाटाध्वना शनैः । ममार हर्षदेवस्य तं भिक्षाचरमन्तिकम् ॥६८४॥
685 विविक्षन्दिवसरसं कम्पनापतिना ततः । विद्राव्यमाणः श्वभ्रापातप्रधावन्सोपतत्क्षितौ ॥६८५॥
परिज्ञाय हतस्याथ स तस्य विजयी शिरः । विससर्जान्तिकं राज्ञः फलं जयतरोरिव ॥६८६॥
तदप्यसत्कृतं कर्म भजन्भूभृत्कृतघ्नताम् । न तस्य तुष्टस्तुष्टाव न चकार च सत्क्रियाम् ॥६८७॥
अवजानंस्त्वथामात्यं प्रभावज्ञः कम्पनापतिः । तत्र कस्मात्त्वयोत्सेक इति तं संदिदेश च ॥६८८॥
सर्वप्रकारं तिलकः कृतघ्नं नृपतिं विदन् । अथ जातविरागः स द्रोहोन्मुख्यं समादधे ॥६८९॥
690 सतां स्यादनुपालम्भो मन्योर्मुख्यमेव चेत् । द्रोहेच्छया स तु तथा यथावपाक्षनामताम् ॥६९०॥
सेवायां स्थितिवमथ बोधितकृत्याकृत्यं नीतिप्रियाः प्रतिपदं समुदाहरन्तु ।
मानोन्नतास्तु विहितस्तुतयः कृतघ्नेऽप्यसून्परहितं घटयन्ति सन्तः ॥६९१॥
पदं वह्निस्पर्शोज्ज्वलितमहिवष्टो स्वच्छमरैः श्रुतिं यातं मन्त्रं पतननिरतां जीर्णवसतिम् ।
असेवार्हं भूपं व्यसनविमुखं स्निग्धमजहन्न धीरोऽप्युत्थानोपहतमहिमा शर्म लभते ॥६९२॥
इत्युपायं परित्यज्य न्याय्यं ये प्रभवे क्रुधि । द्रोग्धारः कथितास्तेभ्यः केऽन्ये पापीयसां धुरि ॥६९३॥
जन्मन्येकोपकारित्वं पित्रोः सर्वत्र च प्रभोः । अधिकाः पितृघातिभ्यः पापिनस्तत्प्रभुद्रुहः ॥६९४॥
695 निहते विजये शान्त्यप्रभावेष्वपरेष्वपि । नाज्ञायि कस्यचित्स्वास्थ्यं तत्त्वज्ञेनान्तरात्मनः ॥६९५॥
कंचित्क्षणं सोपसृतः प्रत्युतोपोपतापकृत् । विभ्रमसरो ज्ञातः सर्वैर्हुड इवोन्मदः ॥६९६॥
आनिनीषुस्ततो मल्लकोष्ठो[1] भिक्षाचरं पुनः । विषलाटां[2] तस्य पार्श्वे निजं सैन्यं व्यसर्जयत् ॥६९७॥
कम्पनेशस्तमायान्तं द्रोग्धाध्यावेदयत्ततः । राज्ञा न्यषेधि तद्रोधादेवं च समविद्यत ॥६९८॥
एवं धर्मण्यनुज्ञाते त्यज हन्यामहं ततः । पुरोगतं मृगव्यान्तः सृगालमिव वाजिभिः ॥६९९॥
700 वैराज्यकार्यमर्मज्ञभावेऽपि विधिवोदितः । कर्तव्ये तत्र शाठ्यं स नृपतिः प्रत्यपद्यत ॥७००॥
मर्मराजमुखादेवं लब्ध्वा द्रोग्धाथ डामरान् । तिलकोऽकारयच्छैलमार्गैर्भिक्षाचरागमम्[1] ॥७०१॥
स्थाने स्थाने ततः प्राप ततः कर्णोपकर्णिका । जनानां या ख्यातिहेतुर्भिक्षोः राज्ञस्तु भीतिदा ॥७०२॥
मांसस्कृतं चक्रि शिला भिनत्त्येकेषुणा दश । भ्रमान्तो योजनशतं यात्यायाति च संचरन् ॥७०३॥
इत्यादितादृङ्माहात्म्यभिक्षुस्तुत्यानयज्जनः । निखिलान्पलितश्वेतलम्बकूर्चोऽपि कौतुकम् ॥७०४॥ युग्मम्[1] ॥
705 भविष्यन्निव साम्राज्यस्यैक एकोऽर्धभागभाक् । वार्तामप्यनहर्तापि भिक्षोरूचेऽन्वियेष च ॥७०५॥
सारिस्थानगृहे श्रान्तो वृद्धाः क्षीणनियोगिनः । राजवेश्मन्यगणिता नाममात्रनृपात्मजाः ॥७०६॥
स्वभावदुर्मनाः केचिद्योधा योधाश्रकाङ्क्षिणः । कारयन्तोऽप्युपाध्यायाः शिष्यान्स्फिक्कर्पणं[1] नवैः ॥७०७॥

---

६९७. 1) Emended; A °कोष्ठ.—2) Emended; A विषलाटं. Cf. viii. 177. 1074. 1664(C). ७०१. 1) Emended; A °चरागम्. ७०४. 1) A₁ writes २ instead of युग्मम्. ७०७. 1) Thus corr. by A₂ from A₁ शिष्यान्स्फिक°.

कुष्माः छरीकोनर्तक्यो देवमासावपालकाः । वणिजो मुक्तविक्षेपाः पुस्तकभुक्तकस्पराः ॥७०८॥
प्रायोपवेशकुशलाः पारिषद्यद्विजातयः । ग्रामिणः कार्यकपाया नगरोपान्तडामराः ॥७०९॥
द्रवयन्तः स्वमन्यांश्च किमप्युत्पिञ्जवार्तया । एते प्रायेण देशेऽस्मिन्पार्थिवोपद्रवप्रियाः ॥७१०॥ कुलकम् ॥ 710
प्रवर्धमानया भिक्षाचरागमनवार्तया । वेपमानोऽभवल्लोको ययौ चिन्तां च भूपतिः ॥७११॥
पृथ्वीहरस्तदभ्यर्णे गिरिकण्ठे वसन्नथ । राजानीकं बभञ्जाजौ निर्गत्यातुलविक्रमः ॥७१२॥
अनन्तकाकयोर्भृत्यावानन्दहारनायकौ । चक्रे तिलकसिंहं च मन्त्रिणस्त्रीन्पलायिनः ॥७१३॥
निहते विजये ज्येष्ठे भुक्तवत्सु पराभवम् । तमापादस्य नृपतिः प्राप्ताभूद्विपदः पुनः ॥७१४॥
उड्डीकिनैर्गवां वृक्षमूर्धारोहेण भोगिनाम् । पिपीलककुलस्याण्डोपसंक्रान्त्यैव वर्षणम् ॥७१५॥ 715
प्रत्यासन्नं स राज्याय दुर्निमित्तैरुपद्रवम् । विचिन्त्याथात्मनुचितं कर्तव्यं प्रत्यपद्यत ॥७१६॥ युग्मम् ॥
तृतीयेऽह्नि शुचेः शुक्ले ततः प्रास्थापयत्सुतम् । देवीमन्यत्कुटुम्बं च स कोट्टं लोहरं पटुः ॥७१७॥
ताननुव्रजतस्तस्य सेतुभङ्गात्परिच्युताः । लोष्ठद्विजातयो भिया वितस्तायां विपेदिरे ॥७१८॥
स तेन दुर्निमित्तेन खिन्नो हुष्कपुरान्तिकम् । अनुगम्याथ तान्हित्वैर्दिनैर्भूयोऽविशत्पुरम् ॥७१९॥
विना पुत्रेण देव्या च स ततः प्रत्यपद्यत । प्रतापेन च लक्ष्म्या च परित्यक्त इवान्यताम् ॥७२०॥ 720
स मन्त्रो व्यापदि शुभः प्रत्यभात्तस्य तद्दशात् । अभ्यन्तरप्रकोपेऽपि सर्वाभ्युदयभागभूत् ॥७२१॥
स्वयमुत्थापितानर्थः सोऽपि दुर्बलनरेन्द्रवत् । अथापि सान्त्वशो नीत्या तया साम्राज्यभोगभाक् ॥७२२॥
आवचे लाहरैर्योधैरानीव बलशालिनाम् । भिक्षुर्मडवराज्यानां डामराणामथार्थ्यत ॥७२३॥
तेऽपि जन्या इव वरं श्वशुरालयसंनिभम् । प्रावेशयंस्तं लहरमनुयान्तः ससैनिकाः ॥७२४॥
सभाजयित्वा तान्मल्लकोष्ठमुख्या निजां भुवम् । व्यसर्जयन्कम्पनेशप्रमाथायं पृथुश्रियः ॥७२५॥ 725
सर्वतः परचक्रेऽथ पर्यापतति पार्थिवः । संग्रहीतुं प्रववृते पदातीनतुलव्ययः ॥७२६॥
तस्मिन्दुर्व्यसने राज्ञि वसुवर्षिणि सर्वतः । अकारि शस्त्रग्रहणं शिल्पिशाकटिकैरपि ॥७२७॥
नगरे सैन्यपतयः प्रतिमार्गमकारयन् । तुरगाकृष्टसंनाहाभ्यासासमरोन्मुखाः ॥७२८॥
मध्यग्रामस्थिते भिक्षावमरेश्वरवासिभिः । राजसैन्यैः समं युद्धमगृह्णंस्तस्य लाहराः ॥७२९॥
तैर्हिरण्यपुरोपान्ते प्रवन्धारब्धसंगरैः । श्रीविनायकदेवाद्या राजसेनाधिपा हताः ॥७३०॥ 730
आय एव रणे यातो राजानीकातिरोधिनः । लब्ध्वा वराश्वमायातानामन्यन्त नृपश्रियम् ॥७३१॥
राजधान्यन्तिके क्षिप्तिकाख्यायाः सरितस्तटे । पृथ्वीहरश्चकाराजावशेषभटक्षयम् ॥७३२॥
तिलके विजयेशस्थेऽभ्यगृह्णंस्तस्य डामराः । महासरित्तटे युद्धं खडूवीहोलडोकसः ॥७३३॥
ते रुद्धनगरा दाहं क्वापि क्वापि च लुण्ठनम् । वास्तव्यानां विदधिरे विनिघ्नन्तो दिवानिशम् ॥७३४॥
निर्यत्सत्तूर्यपृतनाः प्रविशत्त्वस्त्रविक्षताः । क्रन्दद्धताप्तनिवहाः प्रधावद्भग्नसैनिकाः ॥७३५॥ 735
प्रसरत्प्रेक्षिनिवहा वहद्दारुभारिकाः । संघार्यमाणसंनाहाः कृष्यमाणतुरंगमाः ॥७३६॥

---

७१६. ¹) A₁ writes here २ instead of युग्मम्. ७२५. ¹) च and मायाय supplied by A₂ in space left by A₁.
७२६. ¹) Emended; A संगृहीतुं. ७३३. ¹) A °होलकौ°. ७३६. ¹) Emended with C; A प्रसर°.

आबद्धग्राम्यसंमर्दप्रसरत्स्रोतसोऽनिशम् । दिने दिने राजपथा उपह्वरविसंकुलाः ॥७३७॥ तिलकम्[1] ॥
प्रतिमल्लमुपायास्तु सर्वारम्भेण वैरिषु । अद्य ध्रुवं जितो राजेत्यश्रावि प्रतिवासरम् ॥७३८॥
धीरः कः सुस्सलादन्यो न यः प्रत्यभियोगिनाम् । कृच्छ्रेणापि स्वराष्ट्रेण कर्तुं धैर्यादपार्यत ॥७३९॥
740 व्रणपट्टाञ्चनं शल्योद्धारं पथ्यधनार्पणम् । शस्त्रक्षतानां सततं कारयन्स व्यलोक्यत ॥७४०॥
प्रवासवेतनप्रीतिदायप्रैषण्यवृत्तिभिः । कलिलोके नरपतेर्निःसंख्योऽभूद्धनव्ययः ॥७४१॥
युद्ध एव विपन्नानां क्षतानां च स्ववेश्मसु । नित्यं नरतुरंगाणां सहस्राणि क्षयं ययुः ॥७४२॥
तुरंगबहलैर्हन्यमाना नृपबलैस्ततः । लाहरा मल्लकोष्ठाद्या मन्दोद्रेकत्वमाययुः ॥७४३॥
भित्तैराभ्यन्तरैरेव हतमन्त्राः सुरेश्वरीम् । ते निन्युर्भिक्षुमल्पेन तन्मार्गेण युयुत्सवः ॥७४४॥
745 सेतुना स्वल्पपार्श्वेन धन्विभावैः सरोन्तरे । अद्यापि तैर्जयो मोचिवाजिभ्यश्च भयं रणे ॥७४५॥
द्रोग्धाय कम्पनेशः स्वं[1] नियन्त्रिविजयेश्वरे । बलिनां डामराग्निन्ये मन्दोद्रेकं स्फुरत्क्षणे ॥७४६॥
लवन्यलोको मा ज्ञासीद्भ्रान्तिं मेघ गच्छतः । पृष्ठे निपत्य मा कार्षीद्बाधां चेति विचिन्तयन् ॥७४७॥
स प्रभावं दर्शयितुं प्रागस्य विजयेश्वरम् । अञ्जराजस्य सेनायां व्यावृत्य प्रस्थितोऽभवत् ॥७४८॥
सार्धां शतद्वयीं तस्य योधानां हतवानपि । संत्यज्य विजयक्षेत्रं श्रोहकुन्नगरं ययौ ॥७४९॥
750 पथि नान्वसरन्भीत्या प्रयान्तं डामराः क्वचित् । मदन्तोद्रिशिरोत्का मार्गान्सर्वांश्च तत्यजुः ॥७५०॥
त्यक्त्वा मडवराज्यं स प्रविष्टो व्यसनातुरम् । पूर्वचेष्टां स्मरन्भूपं जहास कृतसत्क्रियम् ॥७५१॥
इतरामात्यवत्स्थामस्थितोऽथ न निजोचितम् । रणे प्रादर्शयत्किंचित्साक्षिभूत इव स्थितः ॥७५२॥
ततो मडवराज्यास्ते समस्ता एव डामराः । अभ्येत्य प्रत्यपद्यन्त[1] तां महासरितस्तटीम् ॥७५३॥
उपायाः साममेदाद्या रिपुचक्रे प्रयोजिताः । राज्ञो विफलतां जग्मुर्बधिराग्रैः प्रकाशिताः ॥७५४॥
755 क्रान्ततत्तन्महीपालमण्डलस्यापि भूपतेः । फलं दोर्विक्रमस्याप्यमासीन्नगररक्षणम् ॥७५५॥
अमरेशो द्वारपतिः सार्धं तस्थौ नृपात्मजैः । राजानवाटिकोपान्ते राजस्थानीयमन्त्रिणः ॥७५६[1]॥
दूरद्वीपान्तरगता इव स्वीचक्रिरे भयात् । ते प्रवासधनं भूरि न चायुध्यन्त कुत्रचित् ॥७५७॥
कटका विहिताः सर्वे पर्यायेण जयाजयौ । लेभिरे विजयादन्यत्र तु पृथ्वीहरः क्वचित् ॥७५८॥
मधुमत्तेन तेनाजौ वेतालेनेव वल्गता । प्रायो वरा वराः सर्वे ग्रस्ता नृपचमूभटाः ॥७५९॥
760 उदयस्येच्छाटिकुलोद्भूतस्यैकस्य पत्तये । युवदेवस्यापि शौर्यमेकस्मिंस्तु तदाहवे ॥७६०॥
पृथ्वीहरस्यापजह्रे द्वन्द्वयुद्धाभिमानिना । प्रहृत्य कृष्टकूर्चेन कराग्रेणासिवल्लरी ॥७६१॥
युद्धे पुरोपकण्ठेषु वर्तमाने शराहताः । स्त्रीबालाद्या अपि वधं प्रमादात्प्रतिपेदिरे ॥७६२॥
एवं जनक्षये घोरे वर्धमाने किमप्यभूत् । अनुत्साहान्नृपो गेहादपि निर्गन्तुमक्षमः ॥७६३॥
तस्मिन्विरुद्धसंचारे सोमपालस्तदन्तरे । अलुण्ठयद्वाहलिकां[1] लब्धरन्ध्रो ददाह च ॥७६४॥
765 सिंहे गजाहवव्यग्रे तद्गुहामपरिग्रहे । समयो ग्रामगोमायोः पौरुषस्यापरोऽस्तु कः ॥७६५॥

७३७. [1]) A₁ writes ३ instead of तिलकम्. ७४६. [1]) Thus corr. by A₂ from A₁ कम्पनेशस्य. ७५३. [1]) Thus corr. by A₂ from A₁ °पद्यत. ७५६. [1]) A₁ writes here २ for युग्मम् which would be in its place after the following verse. ७६४. [1]) Emended; A °वाहलिकां. Cf. viii. 581. 881. 1947 (C).

राष्ट्रद्वयोपमर्देन राजा निःसदृशेन सः । तेन त्रपाविधेयोभूत्स्वमपि द्रष्टुमक्षमः ॥७६६॥
सर्वानौचित्यबहलः सर्वव्यसनदुःसहः । सर्वदुःखमयः कालस्तस्यावर्तत कोपि सः ॥७६७॥
तथाप्यस्खलिते तस्मिन्हिलण्याआविलापहः । राजामत्राटिकाविप्रैः प्रायश्चक्रे विरागिभिः ॥७६८॥
प्रार्थयन्ते स्म ते युद्धे तटस्थास्तव मन्त्रिणः । गृहीत्वा नीविरेतेभ्यो लोहराद्री विसृज्यताम् ॥७६९॥
न चेद्याप्य इवैतस्मिन्व्यसने स्थायितां गते । को दध्यात्र परैर्नीतं प्रत्यासन्नं शरत्फलम् ॥७७०॥ 770
न प्रत्यभैत्सीत्ताटस्थ्यं यत्कालापेक्षया नृपः । तस्मिंस्तैर्दर्शिते शङ्कां निखिला मन्त्रिणो दधुः ॥७७१॥
शक्तिस्तृणं कुब्जयितुं न यस्य स तदार्थिभिः । विसूत्रव्यवहारत्वं निन्ये राजा शठद्विजैः ॥७७२॥
कर्मस्थानोपजीव्युपपारिषद्यादिसंकुला । तत्पार्श्वात्प्रययौ वृद्धिमन्या सेनेव वैरिणाम् ॥७७३॥
तत्सान्त्वनक्षणे तैस्तैः प्रमादैरुत्थितैरगात् । देशो व्याकुलतां कृच्छ्रं लुण्ठिकापटलोत्कटा[1] ॥७७४॥
अदृष्टपार्थिवास्थानैः शठैरव्यवहारिभिः । ऊचे तैः सान्त्वयन्राजा दुःस्थितस्तत्तदप्रियम् ॥७७५॥ 775
लवन्यविग्रहात्राशः सोधिको विप्रयोभवत् । गलरोगः पादरोगादिव तीव्रव्यथावहः ॥७७६॥
काञ्चनोत्कोचदानेन तन्मध्येधिकचक्रिकाम् । कांश्चित्स्वीकृत्य स प्रायं कथंचिद्विन्यवीवरत्[1] ॥७७७॥
विजयो वर्णसोमादिशस्त्रिवंश्यो हठात्पुरम् । प्रविशन्भिक्षुसेनानीरश्वारोहैरहन्यत ॥७७८॥
तेनातिरभसात्स्थानं भित्त्वा प्रविशता पुरम् । प्रायशः कृत एवाभूत्तदा राज्यविपर्ययः ॥७७९॥
ईषन्मन्दप्रतापेन लवन्येष्वपि[1] भूपतेः । पृथ्वीहरेण संधित्सा भेदेच्छोः संप्रकाशिता ॥७८०॥ 780
तस्मिन्धुर्ये जिगीषूणां संधित्सौ भूभुजा समम् । द्वयेपि सैनिकाः शान्तं तममन्यन्त विग्रहम् ॥७८१॥
राज्ञा नागमठोपान्तमानेतुं प्रहितांस्ततः । श्रीप्रमास्त्वान्द्विविश्वस्तानागच्छंश्छद्मनावधीत् ॥७८२॥
धात्रेयो मम्मको गुङ्गो द्विजो रामश्च चारिकः । तेषां तिलकसिंहस्य पार्श्वे भृत्यास्त्रयो हताः ॥७८३॥
नीविर्दत्तो गौरकस्तु हतो भूनपतिं स्मरन् । दृष्टे त्वाक्रन्दिनि परैः प्रहृतं करुणोज्झितैः ॥७८४॥
तद्वैशसं शृण्वतो देशः सर्वो विरागकृत् । राजधान्यन्तरे राज्ञो दुरुक्तिमुखरोभवत् ॥७८५॥ 785
इषे शुक्लचतुर्दश्यां तद्विपर्यस्तमण्डलम् । अतिवाहयितुं कष्टं दिनमासीन्महीपतेः ॥७८६॥
अथ संजातवैक्लव्यो नेदमस्तीति चिन्तयन् । किं कृत्यमित्यसदृशानपि पप्रच्छ भूपतिः ॥७८७॥
विषमे वर्तमानस्य तस्य कश्चित्स नाभवत् । अन्तर्जहासं[1] यो नान्त ---[2] न तुतोष वा ॥७८८॥
तमपि व्यसनापातं तस्य सोढवतस्ततः । अभजन्त क्रमाद्भृत्याः प्रतिपक्षसमाश्रयम् ॥७८९॥
कम्पनेशस्य बिम्बाख्यो भ्राता द्वैमातुरोहितान् । समाश्रयद्द्वारकार्यं तद्दत्तं प्रत्यपद्यत ॥७९०॥ 790
गूढं जनकसिंहेन दूतान्प्रेषयतानिशम् । भिक्षवे भ्रातृतनया वाग्दत्ता निरवर्त्यत ॥७९१॥
असिवाजितनुशादि हत्वा भिक्षाचरान्तिकम् । अश्ववारा व्यभाज्यन्त प्रयान्तः प्रतिवासरम् ॥७९२॥
किमन्यद्व्यक्तमेवाह्नि येत्रसन्पार्थिवान्तिके । अलक्ष्यन्तायनो भिक्षोस्ते निशायां गतत्रपाः ॥७९३॥
इतो याति ततश्चैति लोको व्यक्तमतन्द्रितः[1] । इति राजनि कुण्ठाज्ञे कोप्यजृम्भत विप्लवः ॥७९४॥

७७४. [1]) Emended with C; A °पश्चिलोत्कटा. ७७७. [1]) $A_1$ has first written °विन्यवीवृतत् and then indicated the above reading between the lines. ७८०. [1]) Conjectural reading; A न चन्येष्वपि. ७८८. [1]) Emended with C; A °हासो.— [2]) Thus A; C मान्तर्वहिर्वा न. ७९४. [1]) $A_1$ has first written °तन्द्रितः and then indicated the above reading in margin.

795 डामरैः शरदुत्पत्तौ भीतायां सर्वतस्ततः । कान्दिशीकोभवल्लोकः कृत्स्नो धनजनोज्झितः ॥७९५॥
प्रयाते सुस्सलनृपे स्वर्णपूर्णामिमां महीम् । भिक्षुः कुर्यादिति मृषा लोकस्यासीद्विनिश्चयः ॥७९६॥
क दृष्टा त्यागिता भिक्षोः कुतो वा तस्य संपदः । परामर्शी[1] नैवेति गतानुगतिको जनः ॥७९७॥
संदृश्यते परिवृता चिरमम्बरेण रेखा स्वयं न खलु या शशिनो नवस्य ।
तस्यां जनः प्रकुरुते नतिमम्बरार्थी धिग्लुब्धतामपसरत्सदसद्विचाराम् ॥७९८॥
विजये राजवर्ग्याणां भुग्नग्रीव इवाभवत् । भिक्षुपक्षजये लोको दृप्यन्नासीद्विशृङ्खलः ॥७९९॥
800 द्विक्कौलेयकन्यायो राजडामरसंघयोः । ततोन्योन्यभयभ्रश्यद्वैरयोरुदजृम्भत ॥८००॥
राजाभ्यन्तरभेदेन राज्ञः स्थैर्येण चारयः । ऐच्छन्पलायितुं भीता अज्ञातान्योन्यनिश्चयाः ॥८०१॥
बान्धवानपि दुधुक्षु[1]र्नविश्वस्तो विदन्नृपः । स्थितौ पलायने वापि श्रद्दधे न स्वजीवितम् ॥८०२॥
तं महाव्यसने वासःस्वर्णरत्नादिवर्षणम् । नाभ्यनन्दन्गृहीतार्था निनिन्दुः शस्त्रिणः परम् ॥८०३॥
नष्टोयं नैव भवितेत्यभीतैर्जल्पतो जनात् । वचो रोगी भिषक्त्यक्त इव शृण्वन्स विव्यथे ॥८०४॥
805 अप्ययोपस्थितं किंचित्तदादेशेन ढौकयन् । सविलासं सगर्वं च तमैक्षिष्टानुगव्रजः ॥८०५॥
सोन्य एवाभवत्तस्मिन्क्षणे साहसिकोप्यहो । स्वगृहादपि निर्गन्तुं नाशकच्छङ्कयाकुलः ॥८०६॥
यावदैच्छन्संघभेदाच्चलितुं डामरव्रजाः । स्वैरेव शस्त्रिभिस्तावन्निन्ये भूभृद्विलक्षताम् ॥८०७॥
ते क्रुष्टशस्त्रा द्वाराणि रुन्धन्तो नृपमन्दिरे । प्रवासवित्ते लब्धव्ये प्रायं चक्रुः पदे पदे ॥८०८॥
ददद्धनं धनेशाभीर्देयादप्यधिकं नृपः । तेषामभिमतो नाभूदवमानाभिलाषिणाम् ॥८०९॥
810 मर्तुं चिचलिषु[1]स्तीर्थमृणिकैरिव सामयः । स रुद्ध्वा निखिलैर्देयं दापितोथ गतत्रपैः ॥८१०॥
स्थानपालैरपि प्रायकृद्भिराक्रम्य दापितः । धनं सुवर्णभाण्डादि चूर्णीकृत्य विशृङ्खलैः ॥८११॥
सयुद्धबालं नगरं ततः क्षुभ्यत्क्षणे क्षणे । सोभूदभिमित्रोद्वृत्तं न संस्थापयितुं क्षमः ॥८१२॥
एकदा प्रातरेवान्यै रुद्धद्वारः स्वशस्त्रिभिः[1] । सर्वतः क्षोभमागच्छन्नगरं स व्यलोकयत् ॥८१३॥
ततः क्षोभं शमयितुं जनकं नगराधिपम् । पुरभ्रमार्थमादिश्य चलितुं क्षणमैक्षत ॥८१४॥
815 कथंचिद्दानमानाभ्यां तानावर्ज्यापि शस्त्रिणः । सावरोधः स संनद्धो राजधान्या विनिर्ययौ ॥८१५॥
अङ्गना[1]तुरगारूढो बहिर्यावन्न निर्ययौ । राजधान्यन्तरे लुण्ठितुं तावदारम्भि तस्करैः ॥८१६॥
अरुदन्केपि केप्युच्चैरनदन्केप्यलुण्ठयन् । तद्भृत्याज्यमुत्सृज्य तस्मिन्व्रजति शस्त्रिणः ॥८१७॥
विशृङ्खलस्वपाकोपशङ्काभिः शस्त्रिणां नृपः । सहस्रैः पञ्चभिरासीद्व्रजन्ननुगतोध्वनि ॥८१८॥
वर्षे षण्णवते[1] कृष्णषष्ठ्यां मार्गे विनिर्गतः । याममात्रावशेषेह्नि सभृत्यो द्रोहविह्वलः ॥८१९॥
820 निजैर्द्रोहिभिरव्याधि त्यज्यमानः पदे पदे । स प्रतापपुरं प्राप क्षपायामल्पसैनिकः ॥८२०॥
तिलकस्य पुरो गत्वा प्रागस्थामं च विश्वसन् । तत्र बन्धोरिवाश्रूणि चिरं दुःखोल्बणोमुचत् ॥८२१॥
द्रोहं न कुर्यादेषं मे चिन्तयित्वेति सत्वरम् । वेश्म हुष्कपुरेन्येद्युस्तस्य च प्राविशत्स्वयम् ॥८२२॥

---

७९७. [1]) Emended; A °मर्षे. ८०२. [1]) Emended; A दुदुक्षुन°. ८१०. [1]) Emended with C; A चिचालि°. ८१३. [1]) Emended; A स शस्त्रिभिः. ८१६. [1]) Emended; A आङ्गना°. ८१९. [1]) Emended with C; A षण्णवते.

लहरदेशेन चाक्रादि कृत्वैक्यसैन्यसंग्रहम् । प्रविश्य क्रमराज्यं स कर्तुं भूयो जयोत्सुकः ॥८२३॥
गूढं पृथुस्थून्कल्याणवाडादीनथ डामरान् । आनीय स पुरस्तस्य धैर्यभ्रंशमकारयत् ॥८२४॥
गृहासेन तया युक्त्या निष्कृष्टः स ततो ययौ । स्वीकुर्वन्स्वर्णदानेन दस्यून्मार्गविरोधिनः ॥८२५॥ 825
प्रयान्तं तत्र एवौज्झीत्सिल्लकस्तस्य सोदरः । प्रयाणमेकमानन्दो दाक्षिण्यादन्वगात्तु तम् ॥८२६॥
भूत्यत्यक्तः स दानेन विक्रमेण च तस्करान् । अगान्मार्गेण शमयन्नायुःशेषेण रक्षितः ॥८२७॥
त्राणं सिंहनखा द्रुमाद्रिगहनस्याटाटरण्यस्य ये तेषां बालगलाश्रयावपि भवेत्कालातिवाहः क्रमात् ।
ये दन्ताः करिणां रणप्रहरणं तेष्वामुमुर्दीव्यतां क्रीडायां करताडनानि न वृथा शौर्यस्य काऽपि क्वचित् ॥८२८॥
जन्तूनां विक्रमत्यागयशःप्रज्ञादयो गुणाः । भवे चित्रस्वभावेऽस्मिन्न भवेयुरभङ्गुराः ॥८२९॥
भास्वानप्यौष्ण्यमृदुतां भिक्षार्थस्थां दिने दिने । तां तामायाति जन्तूनां कः प्रभावेषु निश्चयः ॥८३०॥ 830
अशक्नुवन्नह्लिकामारिप्रुष्टां निरीक्षितुम् । मन्युनिःशब्दसैन्योऽग्रिमारुरोह स लोहरम् ॥८३१॥
स्वं कलत्रमपि द्रष्टुं तत्रातित्रपयाक्षमः । शयनीयविमुक्ताङ्गस्तप्यते स्म दिवानिशम् ॥८३२॥
दन्तदीपाहनिर्गच्छन्नन्तर्गेहादिनेष्वपि । दाक्षिण्यादर्शनं प्रादाद्भृत्यानां भोजनक्षणे ॥८३३॥
विलेपनानि नास्प्राक्षीन्नारुरोह तुरंगमान् । गीतनृत्तादि नैक्षिष्ट सुखगोष्ठीर्न चादधे ॥८३४॥
ताम्बूलस्थलस्थमौत्सुक्यैस्तैश्चण्डप्रासादि दर्शितम् । एकैकेन च स्मृत्वा स्मृत्वा देव्यै न्यवेदयत् ॥८३५॥ 835
अन्वगात्त्वां भुवं त्यक्त्वा मामेतेऽन्वगुरित्यपि । निन्ये वृद्धिं परार्ध्यभीः स दाक्षिण्याद्गमार्पणैः ॥८३६॥
कश्मीरेषु गते तस्मिंस्तदैवाखिलमन्त्रिणः । पुराणराजधान्याये ससैन्याः समगंसत ॥८३७॥
मन्थ्यश्वारोहसामन्ततन्त्रिपौरादिसंमतः । तेषां जनकसिंहोऽभूदग्रणीर्नगराधिपः ॥८३८॥
स भिक्षोर्मल्लकोष्ठाद्यैरामैः कृतपक्षपातैः । विश्वासाय व्रतभ्रातृद्वारी नीर्थे प्रदापितः ॥८३९॥
प्रावर्तत भयभ्रश्यत्स्त्रीबालाद्यावृते पुरे । अराजकाय रजनी सर्वभूतभयावहा ॥८४०॥ 840
निहताः केऽपि मुषिताः केऽपि केऽप्यरिभिः पुरे । दग्धागारा व्यधीयन्त दुर्बला राजवर्जिते ॥८४१॥
सैन्यैरन्येद्युरुत्साहैर्निरुद्धाखिलदिक्पथः । सिन्दूरारुणपुण्ड्राञ्चत्सादिमण्डलमध्यगः ॥८४२॥
विकोशशस्त्रकदलीषण्डदुर्लक्ष्यविग्रहः । मृगेन्द्र इव लोकस्य भयकौतूहलावहः ॥८४३॥
वीरपट्टाञ्चलश्लिष्टैर्यौवनोद्भेदचित्रैः कचैः । अवन्द्यैः शोभितः पृष्ठे जयश्रीबन्धशृङ्खलैः ॥८४४॥
कुण्डलद्योतिना स्निग्धधवलायतदृष्टिना । प्रत्यग्रश्मश्रुणा चारुचन्दनोल्लेखशोभिना ॥८४५॥ 845
ताम्राधरेण वक्त्रेण श्रीसांनिध्याधिकत्विषा । पक्षपाति विपक्षाणामपि संपादयन्मनः ॥८४६॥
असेर्विकोशस्यान्तःस्थां श्रियमश्वेन वल्गता । केसरच्छटया चापि चामरेणेव वीजयन् ॥८४७॥
पदे पदे निवृत्ताश्वः सामन्तैरुपपादिताम् । स्वीकुर्वन्नर्हणां भिक्षुः प्राविशन्नगरं ततः ॥८४८॥ कुलकम् ॥
तस्यार्भकस्य धात्रीव पृष्ठस्थो मल्लकोष्ठकः । प्रययावप्रगल्भस्य सर्वकार्योपदेष्टृताम् ॥८४९॥
अयं पितुः प्रियस्तेऽभूत्त्वमस्याङ्के विवर्धितः । राज्यस्यायं मूलमिति प्रत्येकं समदर्शयत् ॥८५०॥ 850

८२३. [1]) Emended; A जयोत्सुकः. ८२४. [1]) A °न्कल्याणवाडाद्री°. ८३०. [1]) Emended with C; A भिक्षार्थस्थां. ८३७. [1]) Doubtful emendation; A पुराणि राज°. ८४७. [1]) A omits here two *aksharas* without indicating a *lacuna*; चापि supplied with C.

गृहं जनकसिंहस्य प्राक्तन्यायात्प्रवेविशत् । राजलक्ष्मीं स संप्रापुं राजधानीं ततः परम् ॥८५१॥
दूरनष्टे कुले तेन पुनरुद्वेचिते ययौ । बद्धास्थो गर्भगेपत्ये स्त्रीजनोनवहास्यताम् ॥८५२॥
दृष्टेन तादृशा भिक्षोरिति वृत्तेन शत्रुषु । विश्वस्तेष्वपि साशङ्का नोपहास्या जिगीषवः ॥८५३॥
प्रावर्तन्त धनाधीशश्रियः सुस्सलभूपतेः । कोशेन नीतशेषेण विलासा नवभूपतेः ॥८५४॥
855 वाजिवर्मासिभूयिष्ठां राजलक्ष्मीं विभेजिरे । राजडामरलुण्ठाकमन्त्रिणो यन्त्रणोज्झिताः ॥८५५॥
पुरे स्वर्ग इवास्वादं भोगानामुपलेभिरे । दस्यवो ग्रामभोगार्हाः पिशाचा इव गह्वराः ॥८५६॥
आस्थाने न बभौ भूभृद्ग्रामीणैः सर्वतो वसन् । प्रलम्बकम्बलप्रायविलासावरणैः समम् ॥८५७॥
भिक्षाचरस्यासंभाव्यप्रादुर्भावतया प्रथाम् । डामरा अवतारोयमित्यन्यां निन्यिरे प्रथाम् ॥८५८॥
राज्यस्यानन्यदृष्टस्य कर्तव्येषु मुमोह सः । अदृष्टकर्मेव भिषग्भैषज्यस्य पदे पदे ॥८५९॥
860 शनैर्जनकसिंहेन कृतभ्रातृसुतार्पणम् । कम्पनाधिपतिर्दत्तकन्योपि तमाशिश्रियत् ॥८६०॥
जुक्को राजपुरीयस्य राज्ञः कटकवारिकः । पादाग्राधिकृतोद्राक्षीत्स्वार्थमर्थं न तु प्रभोः ॥८६१॥
सर्वाधिकारिणं राजलक्ष्मीर्बिम्बमाशिश्रियत् । राजशब्दस्यैव पात्रमभूद्भिक्षाचरः परम् ॥८६२॥
वेश्यायत्तीकृतैश्वर्यः प्राकृताचारभागपि । अन्तरङ्गः सदसतां किंचिद्बिम्बस्तदाभवत् ॥८६३॥
द्वैमातुरो दर्यकस्य भ्राता साश्चर्यशौर्यभूः । नृपान्तरङ्गज्येष्ठत्वं ज्येष्ठपालोप्यशिश्रियत् ॥८६४॥
865 मन्त्रिणो भूतभिक्षाद्यास्तस्य पैतामहा अपि । लक्ष्मीसरोजिनीभृङ्गा बहवोन्ये जजृम्भिरे ॥८६५॥
मुग्धे राज्ञि प्रमत्तेषु मन्त्रिरूपेषु दस्युषु । उत्थानोपहतं राज्यं नवत्वेपि बभूव तत् ॥८६६॥
स्त्रीभिर्नवनवाभिश्च भोज्यैः प्राज्यैश्च रञ्जितः । भिक्षुर्नैक्षिष्ट कर्तव्यं सुखानुभवमोहितः ॥८६७॥
स सुखानुभवप्रावृड्विद्रान्धो विजयोद्यमे । स्वैः प्रेरितः सभामध्ये स्वप्तुमैच्छन्मदालसः ॥८६८॥
दर्पेण सचिवे ग्राम्यं कथयत्यनुकम्पिकाम् । न स चुक्रोध मुग्धस्तु पितरीवान्वरज्यत ॥८६९॥
870 निष्प्रतिष्ठैः सेव्यमानो वेश्योच्छिष्टैरशिष्टवत् । अट्टभेटोचिताश्चेष्टा विटैः प्रैर्यत सेवितुम् ॥८७०॥
पानीयरेखाप्रतिमस्थैर्यस्याखिलवस्तुषु । तस्याप्रमाणवचसः सेवां प्रणयिनो जहुः ॥८७१॥
यदूचुः सचिवास्तत्तानन्ववोचत्स भूभृतः। वचः सुषिरगर्भस्य तस्य किंचित्समुद्ययौ ॥८७२॥
सचिवैः स्वगृहान्नीत्वा दत्तभोज्यः स मुग्धधीः । धनी विपन्नपितृक इव प्रमुषितो विटैः ॥८७३॥
आहारमुष्टीर्बिम्बस्य गृहे बिम्बनितम्बिनी । तस्याश्वस्येव वडवा रागिणोग्रगताहरत् ॥८७४॥
875 वञ्चयित्वा दृशौ पत्युर्दर्शितैः स्मेरया तया । कुचकक्षकटाक्षैः स लुप्तधैर्यो व्यधीयत ॥८७५॥
पृथ्वीहरो मल्लकोष्ठश्चान्योन्योद्भूतमत्सरौ । क्षोभं व्यधत्तां संरब्धौ राजधान्याः क्षणे क्षणे ॥८७६॥
स्वयं राज्ञा सुतोद्वाहं गृहान्गत्वापि कारितौ । तावन्योन्यमुपेक्षेतां न मन्युं विक्रमोन्मदौ ॥८७७॥
अथ पृथ्वीहरगृहात्कृतोद्वाहः स्वयं नृपः । जातामर्षेण सुस्पष्टं मल्लकोष्ठेन तत्यजे ॥८७८॥
सुषञ्जनककार्णोपि संबन्धापेक्षयोज्झितः । विरागमोजानन्दादीन्निन्ये ब्राह्मणमन्त्रिणः ॥८७९॥

---

८५१. [1]) Thus A. ८५४. [1]) A कोषेण. ८६२. [1]) Emended with C, A राजा लक्ष्मीबिम्बमशिश्रयम. ८६५. [1]) Emended; A भूतबिक्षा°. Cf. vii. 1695. viii. 94. ८७०. [1]) Emended with C; A वेश्यैच्छि°. ८७४. [1]) Emended; A °मुष्टिर्बि°.— [2]) Emended with C; A तस्याश्वेव ८७७. [1]) Emended; A °मुपेक्षेतां.

तटस्थो द्रोग्धुर्बुद्धिप्रायभृत्यविधेयधीः । विसूत्रव्यवहारत्वं निम्नत्वं च ययौ नृपः ॥८८०॥ 880

डामरस्वामिके लोके प्राभवत्को न विप्लवः[1] । ब्राह्मण्यो धर्षणं यत्र श्वपाकेभ्योपि लेभिरे ॥८८१॥

अराजकेथ वा भूरिराजके मण्डले तदा । समस्तव्यवहाराणां स्फुटं तुत्रोट पद्धतिः ॥८८२॥

दीनारा भैक्षवे राज्ये निष्पचाराः पुरातनाः । तच्छतेन तु मद्यानामशीतेरभवत्क्रयः ॥८८३॥

राजपुर्यध्वना बिम्बं ससैन्यमथ पार्थिवः । लोहरं प्राहिणोत्कर्तुं सुस्सलास्कन्दमुन्मदः ॥८८४॥

तुरुष्कसैन्यमानिन्ये सोमपालेन सोन्वितः । साहायकाय सज्ञारे विस्मये मित्रतां गते ॥८८५॥ 885

संदर्श्य पाशमेतेन बद्ध्वा कर्ष्यामि सुस्सलम् । इत्येक एकोश्वारोहस्तुरुष्काणामकत्थत ॥८८६॥

काश्मीरिकंखशम्लेच्छयोधव्यतिकरोभवत् । न केषां नाम संभाव्यो विश्वोत्पाटनपाटवः ॥८८७॥

भिक्षाचरः प्रयाते तु बिम्बे विगलिताङ्कुशः । न कासामव्यवस्थानां मूढः स्थानमजायत ॥८८८॥

स निमन्त्र्य निजं नीतो गृहं बिम्बाग्रहद्धया । भोगसंभोगदानेन धर्षण्या पर्यतोष्यत ॥८८९॥

कार्यापेक्षापि तस्यासीन्न मन्त्रिस्त्रीसमागमे । कौलीनभीतेरासन्ननिपातस्य कथैव का ॥८९०॥ 890

आयूनानुगुणं[1] भोज्यं कुम्भकांस्यादिवादनम् । तत्र प्राकृतकामीव न स जिह्राय शीलयन् ॥८९१॥

शनैः शनैस्ततो नष्टावष्टम्भस्य महीपतेः । काले भोज्यमपि प्राप्यं नासीद्गलितसंपदः ॥८९२॥

तावत्प्रलोभकौर्यादिक्रान्तो यः प्रागगर्ह्यत । स सुस्सलोथ लोकानामभिनन्द्यत्वमाययौ ॥८९३॥

धनमानादिनाशं या विरक्तास्तस्य चक्रिरे । काङ्क्षन्ति स्म घनोत्कण्ठास्ता एवागमनं प्रजाः ॥८९४॥

प्रत्यक्षदर्शिनोप्यापि साश्चर्यो वयमस्य यत् । ताः प्रजाः कोपिताः केन केन भूयः प्रसादिताः ॥८९५॥ 895

क्षणाद्वैमुख्यमायान्ति सांमुख्यं यान्ति च क्षणात् । न हेतुं कंचिदीक्षन्ते पशुप्रायाः पृथग्जनाः ॥८९६॥

ते मल्लकोष्ठजनकादयो दूतैर्विसर्जितैः । त्यक्तराज्यं पुनर्भूपं जयोद्यममजिग्रहन् ॥८९७॥

अक्षोभुत्रापहारेथ लोकैष्ठिकस्य लुण्ठिते । नमस्या ब्राह्मणाः प्रायं नृपमुद्दिश्य चक्रिरे ॥८९८॥

तैश्चान्यैश्चाग्रहारैश्च संभिन्नैर्विजयेश्वरे । राजानवाटिकाप्रायो नगरेपि न्यविक्षत ॥८९९॥

ओजानन्दादिभिर्मुख्यद्विजैरुत्तेजितास्ततः । गोकुलेपि व्यधुः प्रायं त्रिदशालयपर्षदः ॥९००॥ 900

युग्यार्पितैः सितच्छत्रवस्त्रचामरशोभिभिः । विबुधप्रतिमावृन्दैः सर्वतश्छादिताङ्गनः ॥९०१॥

काहलाकांस्यतालादिवाद्यक्षोभितदिङ्मुखः । अदृष्टपूर्वो ददृशे पारिषद्यसमागमः ॥९०२॥

ते सान्त्वमाना भूभर्तुर्दूतैरुल्लेकवादिनः । न विना लम्बकूर्चं नो गतिरित्यब्रुवन्वचः ॥९०३॥

ते हेलया लम्बकूर्चाख्यया सुस्सलभूपतिम् । तं निर्दिशन्तोमन्यन्त क्रीडापुत्रकसंनिभम् ॥९०४॥

प्रायं प्रेक्षितुमायातैः पौरैः सह दिने दिने । अमन्त्रयत कां कां न व्यवस्थां पर्षदां गणः ॥९०५॥ 905

नृपापातभयात्क्षोभं मुहुर्मुहुरुपागतैः । पारिषद्यैश्च पौरैश्च वोढुमास्थीयतोद्धतम् ॥९०६॥

वश्यं जनकसिंहस्य नगरं तन्मतेन तत् । सज्जं सुस्सलदेवस्य कृत्स्नमानयनेभवत् ॥९०७॥

प्रायाद्दारयितुं पूर्वमपहारद्विजान्नृपः । प्रययौ विजयक्षेत्रं तत्रासीच्च हतोद्यमः ॥९०८॥

---

८८१. [1]) $A_1$ had first repeated here the second half of verse 878, but has subsequently erased it and written as above. ८८६. [1]) Conjectural reading; A °स्तुरुष्कामकत्थत; C °तुरुष्कैः समकत्थत. ८८७. [1]) Emended; A काश्मीरक°. ८९१. [1]) Emended with C; A °गुणौ.

तन्मध्ये निखिलांस्तत्र डामरांस्तिलकोऽब्रवीत् । व्यापादयेति तं तत्र सत्यैकाग्रो न सोऽग्रहीत् ॥९०९॥

910 राज्ञ एव मुखाद्बुद्ध्वा लब्धन्यासास्तद्विशश्वसुः । तस्मिन्पृथ्वीहरमुखास्तत्रसुस्तिलकात्पुनः ॥९१०॥

भागिनेयं प्रयागस्य क्षत्तारं लक्ष्मकाभिधम् । बन्धुमैच्छन्नृपोऽस्निग्धं प्रययौ स तु सुस्सलम् ॥९११॥

ततः प्रविश्य नगरं संनिपत्याखिलं जनम् । अकारणविरक्तानां पौराणां प्रददौ सभाम् ॥९१२॥

शुल्कमप्युक्तवांस्तत्र हतोक्तिः शठबुद्धिभिः । पौरैः स चक्रे नास्त्येव भेषजं विप्लवस्पृशाम् ॥९१३॥

अत्रान्तरे सोमपालबिम्बाद्या लोहरे स्थितम् । योद्धुं सुस्सलभूपं ते सर्वे पर्णोत्समाययुः ॥९१४॥

915 तं च पद्मरथो नाम राजा कालिञ्जरेश्वरः । मैत्रीं संस्मृत्य कल्हाधीराययौ तत्कुलोद्भवः ॥९१५॥

सोऽथ शुक्लत्रयोदश्यां वैशाखे बलिभिः समम् । तैर्मानी सुस्सलो राजा संग्रामं प्रत्यपद्यत ॥९१६॥

प्रेक्षकैर्वर्ण्यतेऽद्यापि स पर्णोत्सान्तिके रणः । तस्याद्भुतोऽवमानाभिक्षालनप्रथमक्षणः ॥९१७॥

कुतोऽप्येत्य निजस्कारस्ततः प्रभृति भूपतिम् । तमशून्यं पुनश्चक्रे मृगेन्द्र इव काननम् ॥९१८॥

भयस्खलितपाशानां कालपाशैः समागमम् । स चकार तुरुष्काणां क्षणात्पुष्कलविक्रमः ॥९१९॥

920 मातुलं सोमपालस्य निन्ये कवलतां बली । रणे तत्कोपवेतालो विशोकासरितस्तटे ॥९२०॥

किमन्यदल्पसैन्यः स बहूनपि स नाव्यधात् । हतविद्रुतविध्वस्तान्यथात्मपरिपन्थिनः ॥९२१॥

काश्मीरिकाणामौचित्यं किं नाभूत्स्वामिनो ददुः । एकस्य ये रणे नष्टाः कुकीर्तिमपरस्य च ॥९२२॥

तुरुष्कैः सह यातेऽथ सोमपाले गतत्रपाः । बिम्बं काश्मीरिकास्त्यक्त्वा राजान्तिकमशिश्रियन् ॥९२३॥

ते धनूंषि शिरांस्यथ नमयन्तोऽनृताशयाः । कुलप्रभोः पुरः स्पष्टं न ते धृष्टा ललज्जिरे ॥९२४॥

925 आगच्छद्भिस्ततः पौरैर्डामरैश्च समं नृपः । प्रतस्थे दिवसैर्द्वित्रैः कश्मीराभिमुखः पुनः ॥९२५॥

राजपुत्रः साहदेविः कल्हणो विशतः प्रभोः । डामरान्क्रमराज्यस्थान्संगृह्याग्रेसरोऽभवत् ॥९२६॥

य एव प्रथमं राजसैन्याद्भिक्षुमशिश्रियत् । स एव बिम्बो राजानं तमुत्सृज्य समाययौ ॥९२७॥

अन्ये जनकसिंहस्य संमता मन्त्रिमन्त्रिणः । प्रत्युद्यान्तो व्यलोक्यन्त नृपतिं निरपत्रपाः ॥९२८॥

काण्डिल्लेत्राभिधग्रामजन्मा शस्त्री सुलक्षणः । भाङ्गिले कश्चिदभवच्छून्ये क्रान्तोपवेशनः ॥९२९॥

930 भिक्षुर्वितीर्णमार्गं तं सुस्सलान्तिकगामिनः । लोकस्यात्रान्तरे जेतुं सहपृथ्वीहरो ययौ ॥९३०॥

जितवांस्तं बबन्धेच्छां निहन्तुं सुस्सलोन्मुखम् । क्रोधाज्जनकसिंहं च वार्तां तां च विवेद सः ॥९३१॥

नगरस्थेन तेनाथ पौराश्वारोहमन्त्रिणः । संघट्याखिलान्भिक्षोः प्रातिपक्ष्यमगृह्यत ॥९३२॥

जानंस्तेनावृतं राज्यं ततो भिक्षाचरो नृपः । पृथ्वीहरेणानुयातो नगरं सहसाविशत् ॥९३३॥

सेतौ सदाशिवाग्रस्थे तत्सैन्यैः सह संगरम् । दृप्यज्जनकसिंहोऽथ सान्त्वमानोऽपि सोऽग्रहीत् ॥९३४॥

935 दृष्टं जनकसिंहस्य योधानां वल्गतां मदात् । अविशङ्क्य पराभूतिं मुहूर्तं सुभटायितम् ॥९३५॥

अलकेन समं पृथ्वीहरस्तद्भ्रातृसूनुना । अन्येन सेतुना तीर्त्वा तस्य सैन्यमनाशयत् ॥९३६॥

तन्व्यश्वारोहपौरेषु विद्रुतेषु सबान्धवः । नक्तं जनकसिंहोऽथ पलाय्य लहरं ययौ ॥९३७॥

---

९१०. [1]) Emended; A मुखाद्भुक्ता. ९११. [1]) Emended; A बन्धुमै°. ९१४. [1]) Emended; A लहरे. ९२१. [1]) Emended; A °ध्वस्तयथा°. ९२२. [1]) Emended; A काश्मीरका°. ९२३. [1]) Emended; A काश्मीरका°. ९२९. [1]) Emended with C; A °वेशनः. ९३१. [1]) Emended with C; A स. ९३७. [1]) Emended with C; A तन्वश्वारोह°.

भिक्षुपृथ्वीहरौ प्रातस्तत्पृष्ठग्रहणोद्यतौ । तत्पथासेधवाराद्या धृष्टा भूयोऽप्यशिश्रियन् ॥९३८॥
छित्त्वा क्षिप्रं स्वकक्ष्यान्तर्निबुधप्रतिमा भयात् । ते पारिपन्थिमाद्याः प्रागमुत्सृज्य विद्रुताः ॥९३९॥
मुख्यानि ध्वरयुग्यानि रक्षन्तः केपि भिक्षुणा । प्रायाभिवृत्ता वधमित्युक्तवन्तो न बाधिताः ॥९४०॥ 940
यो जानके भैक्षवेय वल्गत्तुङ्गतुरंगमान् । दृष्टवन्तो वधं सैन्ये सादिनोद्यापि साद्भुताः ॥९४१॥
भिक्षुराजप्रदीपेन द्योतितः क्षणभङ्गिना । पैतृव्येणाधिकारेण स्वालस्तिलकसिंहजः ॥९४२॥
गते जनकसिंहेऽथ प्रतिपक्षानुसारिणाम् । विधातुं वेश्मभङ्गादि लब्धं भिक्षुमहीभुजा ॥९४३॥
अत्रान्तरे हुष्कपुरे मिलितेषु तिलकादिषु । भङ्गं सुल्हणसिम्माद्यैः समेतानन्तसैनिकैः ॥९४४॥
अथायातैर्मल्लकोष्ठजनकाद्यैः ससैनिकैः । अपरैरपि सामन्तैर्बलबाहुल्यशालिभिः ॥९४५॥ 945
अन्वीयमानो दिवसैर्द्वित्रैराक्रान्तमण्डलः । विशोकहरमार्गेण विपक्षालक्षितोऽपतत् ॥९४६॥
नगरापणवीथ्यन्तर्हयारोहमुखान्पुरः[1] । द्रोहयोधानुपायातांस्तदैवोज्झितसाध्वसः ॥९४७॥
वेष्टितालम्बकूर्चेन वक्त्रेण[1] भ्रुकुटीभृता । कोपकम्पिततारेण फुल्लनासापुटस्पृशा ॥९४८॥
कांश्चित्संतर्जयन्निन्दन्नन्यान्प्रभ्रंशयन्परान् । तीव्रातपव्यामवपुस्ताम्यन्काल इवोल्बणः ॥९४९॥
आशीर्घोषकृतां पुष्पवर्षिणां पुरवासिनाम् । पूर्वोपकारिणां श्रेणीष्ववज्ञान्यस्तलोचनः ॥९५०॥ 950
स्कन्धमात्रोपरि न्यस्तं कवचं हेलया दधत् । केशान्तशिरस्त्रान्तनिःसृतान्धूलिधूसरान् ॥९५१॥
पक्ष्ममालां च बिभ्राणः सकोशासिस्तुरंगिणाम् । आकृष्टखड्गमालानामन्तर्वल्गत्तुरंगमः ॥९५२॥
ससिंहनादैरश्रान्तैर्भेरीभांकारनिर्भरैः । बलैर्भरितदिक्कोष्ठः सुस्सलः प्राविशत्पुरम् ॥९५३॥ कुलकम् ॥
षड्भिः सहाष्टादशदिनैर्मासैर्ज्यैष्ठे सितेऽहनि । स सप्तनवताब्दस्य तृतीये पुनराययौ ॥९५४॥
राजधानीमप्रविष्टो भिक्षुं पूर्वपलायितम् । अन्विष्यन्क्षिप्तिकातीरे सलवन्यं[1] व्यलोकयत् ॥९५५॥ 955
सरित्पारे रिपौ प्राप्ते स सपृथ्वीहरो गतः । मार्गे लवन्यैर्मिलितैरन्यैः साकं न्यवर्तत ॥९५६॥
तं विद्राव्य रणे राजा बद्ध्वा प्रकृतिविक्षतम् । सिंहं पृथ्वीहरभ्रातिं राजधानीमथाविशत् ॥९५७॥
उपभोगैः सपत्नस्य तत्कालनिःसृतस्य सा । अङ्किता मानिनस्तस्य वेश्मयेवोद्वेगदाभवत् ॥९५८॥
भिक्षुः संत्यज्य कश्मीरान्सह पृथ्वीहरादिभिः । ग्रामं पुष्याणनाडाख्यं सोमपालाश्रयं ययौ ॥९५९॥
प्रस्थिते[1] डामरान्सर्वानाज्ञा स्वीकृत्य तु व्यधात् । खेर्यां वहात्मजं मल्लं हर्षमित्रं च कम्पने ॥९६०॥ 960
पूर्वापकारं स्मरतो देशकालानपेक्षिणः । ..............................[1] ॥९६१॥
भिक्षुसंपर्कजं गन्धमपि सोढुमशक्नुवन् । भृत्येभ्यः खण्डशः कृत्वा हेमासिंहासनं ददौ ॥९६२॥
अनयोपार्जितां त्यक्तुमनीशा डामराः श्रियम् । समन्योऽथ नृपाक्रीता नात्यजन्विप्रयोगमम् ॥९६३॥
भिक्षुस्तु राज्यविभ्रष्टः ष्ठुरको विषये वसन् । वत्सरं सोमपालस्य दानमानैः पुनर्दधौ ॥९६४॥
बिम्बः साहायकप्रार्थी विस्मयस्यान्तिकं गतः । तस्मिन्विरोधिभिर्वेद्धे[1] रणे धीरस्तनुं जहौ ॥९६५॥ 965
भिक्षाचरो[1] बिम्बभूत्यो भजन्दुर्नयपात्रताम् । अनैषीद्वरदास्यं तत्प्रियां तां गतत्रपः ॥९६६॥

---

९४९. [1]) Emended; A सिद्धर्जय°. ९४७. [1]) Emended; A °ग्रुखान्पुरः. ९४८. [1]) Emended with C; A वक्तेण. ९५५. [1]) Emended; A सलवन्यौ. ९६०. [1]) Thus A; perhaps to be emended प्रस्थितो. ९६१. [1]) Here two *pādas* are missing. A does not indicate the *lacuna*; C supplements पूर्वैर्विहितविघ्नस्य न कृपां प्रतिपेदिरे. ९६५. [1]) Emended; A °वेद्धे; C °बैद्धे. ९६६. [1]) Emended with C; A भिक्षाचरे.

निपत्य स्वल्पसैन्योपि ततः शूरपुरे बली । जित्वा पृथ्वीहरो वड्डात्मजं व्यग्रांचयग्रणात् ॥९६७॥
तस्मिन्पलायिते भिक्षुं पुनरानीय सोविशत् । भुवं मडवराज्यानां दस्यूनां स्वचिकीर्षया ॥९६८॥
तद्वर्यैर्मङ्गजन्याद्यैर्डामरैः स्वीकृतैः समम् । जगाम विजयक्षेत्रं विजेतुं कम्पनापतिम् ॥९६९॥
970 जितस्तेनाहवे हर्षमित्रो निहतसैनिकः । विजयेश्वरमुत्सृज्य भीतोवन्तिपुरे ययौ ॥९७०॥
विजयक्षेत्रजास्तत्पुरग्रामोद्भवा अपि । जना भयेन प्राविक्षन्नथ चक्रधरान्तिकम् ॥९७१॥
योषिच्छिशुपशुव्रीहिधनैःपितैरपूर्यत । स्थानं तत्तैश्च राज्ञश्च योधैः सायुधवाजिभिः ॥९७२॥
अन्याक्रुष्टैरथ स्पष्टं लोकोल्लुण्ठनलालसैः । ते¹ भैक्षवैरवेष्ट्यन्त कटकैर्व्याप्तदिक्तटैः ॥९७३॥
तान्दाहमयवमीवहारगुप्ते सुरौकसः । अङ्गने¹ तिष्ठतो हन्तुं बन्द्धुं वा नाशकन्द्विषः ॥९७४॥
975 तदन्तरस्थितं दग्धुं कर्पूराख्यं स्ववैरिणम् । कश्चित्कतिस्थलीग्रामजन्मा निर्गुण¹डामरः ॥९७५॥
पापो जनकराजाख्यस्तत्राग्निमुददीदिपत् । मूढस्तादृगपर्यन्तजन्तुसंहारनिर्घृणः ॥९७६॥
तमापतन्तं ज्वलितं ज्वलनं वीक्ष्य सर्वतः । भूतग्रामस्य सुमहान्हाहाकारः समुद्ययौ ॥९७७॥
विशल्कृतान्तवाहारिभियेव छिन्नबन्धनैः । अश्वैरसर्वासंचारा भ्रमद्भिर्जघ्निरे जनाः ॥९७८॥
प्राच्छाद्यत चलज्ज्वालाकरालैर्धूमराशिभिः । व्योम पिङ्गकचश्मश्रुजालैर्नक्तंचरैरिव ॥९७९॥
980 निर्धूमस्य विसारिण्यो ज्वाला हव्यभुजो बभुः । संतापद्रुतहेमाभ्रसुवर्णलहरीभ्रमम् ॥९८०॥
संतापविद्रुतव्योमचारिमौलिपरिच्युताः । रक्तोष्णीषा इव भेमुर्ज्वालाभङ्गा नभोङ्गने ॥९८१॥
दीर्घदारुग्रन्थिभङ्गजन्मा चटचटारवः । तापप्रकाथ्यमानाभ्रगङ्गाघोष इवोद्ययौ ॥९८२॥
स्फुलिङ्गैः प्लोषविभ्रस्तजन्तुजीवितसंनिभैः । अभाहि गहनव्योममार्गभ्रमणसंभ्रमः ॥९८३॥
शकुनैः शावसंचारशोकादाक्रन्दिभिर्नभः । मानुषैर्दह्यमानैश्च भूमिर्मुखरिताभवत् ॥९८४॥
985 भ्रातॄन्भर्तॄन्पितॄन्पुत्रानालिङ्ग्याक्रन्दनिर्भराः । भीमीलितदृशो नार्यो निरदह्यन्त वह्निना ॥९८५॥
तदन्तरात्साहसिका ये केचिन्निरयासिषुः । बहिस्ते निहताः क्रूरैर्डामरैर्मृत्युचोदितैः ॥९८६॥
तावन्तो जन्तवस्तत्र व्यपद्यन्त तदा क्षणात् । स्विन्ना एव न ये दग्धास्तात्रतापि कृशानुना । ९८७॥
अन्तः शान्तेषु सर्वेषु बहिः शान्तेषु हन्तृषु । क्षणादेव प्रदेशः स निःशब्दः समजायत ॥९८८॥
वह्नेः कहकहाशब्दो ह्रस्वीभूतार्चिषः परम् । स्विद्यतश्च शरीरस्य श्रुतः सिमसिमाध्वनिः ॥९८९॥
990 विलीनासृग्वसामेदोनिःस्यन्दाः सरणीशतैः । प्रसस्रुर्विस्रगन्धश्च योजनानि बहून्यगात् ॥९९०॥
एकः सुश्रवसः कोपाद्द्वितीयो वस्तुविप्लवात् । ईदृग्घुत¹वहाबाधो घोरश्चक्रधरेभवत् ॥९९१॥
भूतग्रामस्य संहारः¹ संवर्त इव वह्निना । तादृक्त्रिपुरदाहे वा खाण्डवे तत्र वाभवत् ॥९९२॥
पुण्येह्नि शुक्लद्वादश्यां नभसः कुकृतं महत् । तद्विष्णुः कृतवान्राज्यलक्ष्म्या भाग्यैश्च तत्यजे ॥९९३॥
सकुटुम्बेषु दग्धेषु तदार्षी गृहमेधिषु । पुरग्रामसहस्रेषु गृहाः शून्यत्वमाययुः ॥९९४॥
995 मङ्गाख्यो डामरश्चिन्वङ्धावाज्ञौ नगरो¹द्भवः । प्रीतिं मांसैस्तदीयार्थैः कापालिक इवाययौ ॥९९५॥

---

९६७. ¹) Emended with C; A विम्राव°. ९७३. ¹) Emended: A तैर्भैक्षवै°. ९७४. ¹) Emended with C; A आङ्गणे. ९७५. ¹) Emended; A निर्गुंडडा°. ९९१. ¹) Emended with C; A ईदृग्युत°. ९९२. ¹) Emended; A भूतग्रामसंहार°; C भूतग्रामारिष्ट°. ९९५. ¹) Emended; A °ज्ञौगरोद्भवः.

अवच्छोथ विजयक्षेत्रे भिक्षाचरस्ततः । लब्ध्वा नागेश्वरं पापं यातनाभिरमीमरत् ॥९९६॥
गर्भे पैतामहे देशे किं नासीत्तस्य चेष्टितम् । पितृद्रुहः स तु वधः सर्वप्रीतिकरोभवत् ॥९९७॥
गृहिणी हर्षमित्रस्य पत्न्यौ त्यक्त्वा पलायिते । पृथ्वीहरेण संप्राप्ता विजयेशाङ्गनान्तरात् ॥९९८॥
निमित्तभूतमेतादृक्प्रजासंहारवैशसम् । स्वं निन्दन्सुस्सलो राजा ततो योद्धुं विनिर्ययौ ॥९९९॥
संवेगात्पाप्मनः शीघ्रं निरयक्लेशभुक्तये । प्राप्तो जनकराजेन वधोवन्तिपुरान्तिके ॥१०००॥ 1000
यत्कृते क्रियते कर्म लोकान्तरसुखान्तकम् । स मूढैः सुलभापायः कायश्चिरं न गण्यते ॥१००१॥
कम्पनाधिपतिं सिम्बं कृत्वा डामरमण्डलम् । चकर्ष विजयक्षेत्रादन्यतोपि ततो नृपः ॥१००२॥
शमालां प्रययौ पृथ्वीहरो मडवराज्यतः । विजित्य मल्लकोष्ठेन त्याजितो निजमण्डलम् ॥१००३॥
क्षिप्ताः केचिद्विलस्तायां केचिच्चक्रधराङ्गने । अक्रियन्ताग्निसात्कर्तुमशक्या बहवः शवाः ॥१००४॥
क्रमराज्येथ कल्याणवाडादीञ्जिल्हणोजयत् । आनन्दोनन्तजस्तत्र ततो द्वाराधिपोभवत् ॥१००५॥ 1005
शूले प्रमापितं सिंहं नयन्पृथ्वीहरो बली । सार्धं जनकसिंहाद्यैरयुध्यत्क्षिप्तिकातटे ॥१००६॥
तीर्थे प्रस्थाप्यमानेषु विपन्नास्थिष्विहास्यहः । भाद्रे मास्येकमबलाक्रन्दिताक्रान्तदिक्पथम् ॥१००७॥
हतवीराबलाक्रन्दमुखरे नगरान्तरे । पृथ्वीहराहवे सर्वैर्दिवसैरन्वकारि तत् ॥१००८॥ युग्मम् ॥
अथायातो यशोराजस्यालः शूरो दिगन्तरात् । श्रीवक्रो विदधे राज्ञा खेरीकार्याधिकारभाक् ॥१००९॥
अप्रियं स लवन्यानां तेपि वा तस्य नाचरन् । कालं तु गूढसौहार्दैरन्योन्यस्यास्यवीवहन् ॥१०१०॥ 1010
पुनराश्वयुजे राजा शमालां निर्गतस्ततः । परैर्मनीमुषग्रामे युधि भङ्गमनीयत ॥१०११॥
नित्याभ्यासेन युद्धानां लब्धोत्कर्षो न्यदर्शयत् । सर्वश्रीरामणीर्भिक्षुस्तत्पूर्वं तत्र विक्रमम् ॥१०१२॥
तुक्कद्विजादयो मुख्या भिक्षुपृथ्वीहरादिभिः । आसारापातविवशा निहताः सौस्सले बले ॥१०१३॥
प्रधानवीरभूयिष्ठे सैन्यद्वन्द्वे न कोप्यभूत् । स वीरश्चरतः संख्ये भिक्षोरैक्षिष्ट यो मुखम् ॥१०१४॥
पृथ्वीहरस्य भिक्षोश्च संग्रामे भूरिवार्षिके । कादम्बरीपताकाख्ये द्वे अश्वे पीतपाण्डुरे ॥१०१५॥ 1015
आस्तामत्यद्भुते याभ्यामनेकतुरगक्षये । न विपन्नं प्रहतिभिर्नान्वभाव्यत वा श्रमः ॥१०१६॥
सैन्यानां संकटे त्राणमभ्रान्तिरविकत्थनः । अभूत्क्लेशसहो वीरो नान्यो भिक्षाचरात्क्वचित् ॥१०१७॥
योधानां सौस्सले सैन्ये विद्रवेषु न कश्चन । त्राणं बभूव तेनैते बहवो बहुधा हताः ॥१०१८॥
नष्टेषु डामरानीकाः केचिद्भङ्गेषु सैनिकाः । भिक्षाचरगजेन्द्रेण कलभा इव पालिताः ॥१०१९॥
नान्यस्योत्थानशीलत्वं दृष्टं पृथ्वीहरात्तदा । स्वयं यो भैक्षवे द्वारे जजागार प्रतिक्षपम् ॥१०२०॥ 1020
ततः प्रभृत्यभूद्धोमा पुरः पश्चाच्च सर्वदा । विश्वेदेव इव श्राद्धे युद्धे भिक्षुर्महाभटः ॥१०२१॥
आहवे साहसं कुर्वन्सर्वतः सोभ्यधाद्द्विजान् । एवमस्खलितस्थैर्यमुपपत्तिमसंत्यजन् ॥१०२२॥
न मे राज्याय यत्नोयं पर्याप्तं दुर्यशः पुनः । कृत्ये प्रसक्तुं पूर्वेषां व्यवसायं व्यपोहितुम् ॥१०२३॥
अनाथा इव ते नाथा विप्रां व्यापादनक्षणे । ज्ञात्वा नष्टं कुलं मायवत्यो नूनं स्पृहां दधुः ॥१०२४॥

---

१००३. ¹) Emended with C; A मल्लम. १००५. ¹) A °वाळादी°.—²) Emended with C; A °जील्हणो°. १००८. ¹) Emended; A °बलाक्रान्दम्°. १००९. ¹) Emended; A अथ यातो.

1025 इति मत्वा सोढकष्टश्चेष्टे[1] दृढनिश्चयः । दूयमानोस्मि दायादुःखदायी दिने दिने ॥१०२५॥
नास्त्येषामामकालस्य[1] विपत्तिरिति जानतः । कस्य साहसवैमुख्यमुत्पद्येत यशोर्थिनः ॥१०२६॥
किं कार्यगतिकौटिल्यैरुक्तैस्तान्यथवा कथम् । न वदामः प्रतिज्ञाय स्वयमार्येऽध्वनि स्थितिम् ॥१०२७॥
सोत्कर्षपीडयाक्लिष्टोरक्षाक्लिश्यत डामराः । ततो दायादविच्छेदं नास्याकृषत जातु चित् ॥१०२८॥
प्रायाज्याधिगमाद्राज्ञामन्येषां राजबीजिनः । चिन्तयन्तो व्यवहर्तिं व्युत्पद्यन्ते शनैः शनैः ॥१०२९॥
1030 पितुः पितामहस्याथ न दृष्टं तेन किंचन । अत एवाभजन्मोहं राज्यं संप्राप्तवान्पुरा ॥१०३०॥
तस्य भूयोपि येदाप्त्यर्थ्यैकैव[1] वार्ता विघाटने । सापेक्षं वीक्षितुं जाने न दैवेनाप्यशक्यत ॥१०३१॥चकलकम्[2]॥
जानंल्लवन्यकौटिल्यं प्रमादात्स हतेहिते । प्राप्नुयां राज्यमित्याशां बद्धाहान्यत्ययाहयत् ॥१०३२॥
दस्यूनां सुस्सलो राजा मेने तत्त्वहितं मतम् । जिगीषुर्नीतिविक्रान्त्योः प्रवृत्तौ लिप्सुरन्तरम्[1] ॥१०३३॥
युद्धे स्वान्स स्मरन्वैरं नापासीत्तेन तेभजन् । नास्मिन्विश्वासमेतस्माद्धेतोर्नास्याभवज्जयः ॥१०३४॥
1035 इत्थं नानामतैः पक्षप्रतिपक्षैरुपेक्षितम् । राष्ट्रं निखिलमेवागात्सर्वतः शोचनीयताम् ॥१०३५ ॥
यत्संबन्धाद्विटपिनिवहैर्निर्दहव्यप्रबन्धव्याधप्रतानलपरिभवः कोपि नन्वन्वभावि ।
हा धिग्दन्ती विघटनपरः सोपि मातङ्गमीनां लब्धं भेदो विधिविधुरितैर्नान्यतो न स्वतोपि ॥१०३६॥
द्वैराज्ये प्रभवस्येवमकाण्डपतितैर्हिमैः । विवशं सुस्सलक्ष्माभृदजयद्भैक्षवं बलम् ॥१०३७॥
पुष्याणनाडं[1] भूयोपि भिक्षुपृथ्वीहरौ गतौ । अन्यैर्लवन्यैर्भूभर्तुर्नतिर्दत्तकरैः कृता ॥१०३८॥
सिम्बोपि कम्पनाधीशो व्यधाद्विजितडामरः । सर्वां मडवराज्योर्वीं वीरः शमितविप्लवाम् ॥१०३९॥
1040 तावत्यापि विपक्षाणां शान्त्या शीतलतां गतः । पूर्ववैरं स्वपक्ष्याणां प्रादुश्चक्रेथ भूपतिः ॥१०४०॥
जिघांसौ कथिते राजन्युल्हणेन पलायितः । मल्लकोष्ठः सोपि कोपाद्राज्ञा राष्ट्रात्प्रवासितः ॥१०४१॥
अनन्तात्मजमानन्दं बद्ध्वा द्वाराधिकारिणम् । व्यधत्त सैन्धवं प्रज्जिनामानं राजबीजिनम् ॥१०४२॥
गतोथ विजयक्षेत्रं सिम्बेन सहितोविशत् । नगरं तं च विश्वस्तं बद्ध्वा कारागृहेक्षिपत् ॥१०४३॥
अनुस्मृतिमहावात्याप्रेरितोमर्षपावकः । आशशाम क्षमावारि तस्य भृत्यान्दिधक्षतः ॥१०४४॥
1045 सिंहचक्रनसिंहाभ्यामनुजाभ्यां सहावधीत् । शूलेधिरोप्य सिम्बं स रोषावेशविलुप्तधीः ॥१०४५॥
कम्पने श्रीवकं चक्रे सुज्जिं प्रज्जेः सहोदरम् । बद्ध्वा जनकसिंहं च राजस्थाने न्ययोजयत् ॥१०४६॥
आप्ताश्च नान्त्रिणधासंसत्स्य वैदेशिकास्ततः । स्वदेशजस्तु सोभूयो लोहरस्थं तमन्वगात् ॥१०४७॥
अथ सर्वेपि साशङ्कास्तं त्यक्त्वाभ्यर्थयन्रिपून्[1] । शतिकीयः कश्चिदासीद्राजधान्यां नृपाश्रितः ॥१०४८॥
तेनाप्रतिसमाधेयो भूयः शान्तेप्युपद्रवे । इत्थमुत्थापितोनर्थो न पुनर्यः शमं ययौ ॥१०४९॥
1050 एकाक्षेपे परेपि स्युर्यत्र भृत्या विशङ्किताः । तत्रापराधे प्राज्ञस्य राज्ञोवज्ञैव शस्यते ॥१०५०॥
माघेथ मल्लकोष्ठाद्यैराहूताः[1] पुनराययुः । ते शूरपुरमार्गेण भिक्षुपृथ्वीहरादयः ॥१०५१॥
वितस्तापरिखाक्षिप्ता शूरगम्या द्विषामियम् । इति मायाग्रवमठं त्यक्त्वा राजगृहं नृपः ॥१०५२॥

---

१०२५. [1]) $A_2$ gloss स्वयं. १०२६. [1]) Emended with C; A नास्त्येषाममाम°. १०३१. [1]) Emended; A येदाप्त्यैकैव.—[2]) $A_1$ writes here ४ instead of चकलकम्. १०३३. [1]) Doubtful emendation; A जिगीषोर्नी° and प्रवृत्तौ लिप्सुरन्तरम्; C जिगीषोर्नी° and प्रवृत्तौ लिप्सुरन्तरः. १०३८. [1]) A पुष्पाण°. १०४८. [1]) Emended; A त्यक्त्वाभिश्च°. १०५१. [1]) Emended; A °कोष्ठाद्यो आहूता.

वर्षेहागवते चैवं डामरेषु मुहुर्मुहुः । अभ्येत्य मल्लकोष्ठेन मार्गेवाथापि संगरः ॥१०५३॥
लोष्ठधाद्यैः सह रणं चकार नगरान्तरे । नृपावरोधैः सौधाग्रालोकितमथाकुलैः ॥१०५४॥
भिक्षुणा क्षिप्तिकातीरे स्कन्धावारं न्यबध्यत । ..................[1] ॥१०५५॥ 1055
नृपोऽप्यगाद्दुमाविन्दुरिन्धनाय महानसे । दूर्वाङ्कुरान्मन्दुराभ्यो वाहभोज्याय डामराः ॥१०५६॥
पृथ्वीहरस्तु संगृह्णन्वस्तूनि मडवराज्यजान् । चकार विजयक्षेत्रे यावत्कटकसंभ्रमम् ॥१०५७॥
तावत्प्रज्जिमुखान्मल्लकोष्ठमुखाश्च भूपतिः । आदिश्यादादेवस्कन्दं[1] वैशाखे साहसोन्मुखः ॥१०५८॥
अकस्मात्पतिते तस्मिन्स्तावकाभ्यधिक्षताः[1] । प्रययुः सेतुमुत्क्रम्य जीवाशलाः कथंचन ॥१०५९॥
नगरं मल्लकोष्ठाजिज्ञासये मज्जावयाविशात् । पृथ्वीहरानुजः सुज्जिं निर्जित्य मनुजेश्वरः ॥१०६०॥ 1060
परं पारं वितस्तायां सेतुच्छेदादनाप्नुवन् । अर्वाचि तीरे स गृहान्दग्ध्वागात्क्षिप्तिकां ततः ॥१०६१॥
लवन्यैर्नगरं प्राप्तं मत्वा सुस्सलभूपतिः । आगमी विजयक्षेत्रात्सैन्यमुत्थाप्य विह्वलः ॥१०६२॥
अहंपूर्विकयारातिशङ्कितैव निजैर्भटैः । पीडितस्तस्य गम्भीरासिन्धुसेतुरभज्यत ॥१०६३॥
स कृष्णषष्ठ्यां ज्येष्ठस्य तस्याक्षयमभूद्भवः । ययाग्निना चक्रधरे तथा तत्राम्भसा मृतः ॥१०६४॥
भुजमुद्यम्य शमयन्सैन्यानां संभ्रमं नृपः । मत्तैर्भटैस्तथा पृष्ठे पतितः सरिदन्तरे ॥१०६५॥ 1065
अनभ्यस्ताम्बुतरणैराश्लिष्य भुजितोऽसकृत् । तरदायुधविद्धाङ्गः स निस्तीर्णः कथंचन ॥१०६६॥
अनुत्तीर्णं बलं त्यक्त्वा पारे सामन्तसंकुलम् । लवशेषेण सैन्यस्य तीर्णेनानुगतो ययौ ॥१०६७॥
संत्यक्तानन्तसैन्योऽपि सोत्कण्ठममयो नृपः । प्रविश्य नगरं मल्लकोष्ठमुख्याक्षेपमहीत् ॥१०६८॥
विजयस्याथ जननी सिल्लाख्या स्वामिनोज्झितम्[1] । निनाय देवसरसं सैन्यं तद्विजयेश्वरात् ॥१०६९॥
साथ पृथ्वीहरेणैत्य हता तत्रोपवेशने । ढिक्कश्च दग्धो भूपालसैन्यं विद्रावितं च तत् ॥१०७०॥ 1070
परं व्यायामविद्याविहिते निखिले बले । द्विजः कल्याणराजाख्यः समरेऽभिमुखो हतः ॥१०७१॥
मन्त्रिडामरसामन्तसंकुलात्सौस्सलाद्बलात् । पृथ्वीहरेणागृह्यन्त बद्धा वृन्दानि शस्त्रिणाम् ॥१०७२॥
अच्छगल्लं वितस्तान्तं यावत्सान्विद्रुतान्बलात् । ओजानन्दद्विजादींश्च बद्ध्वा शूले व्यपादयत् ॥१०७३॥
मन्त्रिणो जनकश्रीवकाका राजात्मजास्तथा । तीर्थाद्रि विपल्लाटायां शरणं प्रययुः खशान् ॥१०७४॥
इत्थं पृथ्वीहरो लब्धजयः संगृह्य डामरान् । जिगीषुर्भिक्षुणा सार्धं नगरोपान्तमाययौ ॥१०७५॥ 1075
भूयोऽपि मातुपार्श्वोपसंपत्तौ सर्वतस्ततः । रणः प्रववृते प्राग्वत्पुरे चट्टस्य भूपतेः ॥१०७६॥
निर्निरोधः पथानेन नृपावसथ इत्यभूत् । सैन्ये मडवराज्यानां स्वयं पृथ्वीहरोऽग्रणीः ॥१०७७॥
तत्रस्थसामन्तकुलजैर्वीरैः काश्मीरकैर्भटैः । समेतं डामरकुलं दुर्जयं सर्वतोऽभवत् ॥१०७८॥
काश्मीरकाः शोभकाद्याः काकवंश्याः सहस्रशः । प्रख्याता भिक्षवे पक्षे रजाप्याद्याः परेऽस्फुरन् ॥१०७९॥
नदतः स्वबलाद्वाद्यं तुमुलं शृण्वतोऽन्वहम् । पृथ्वीहरेणानण्यन्त वाद्यभाण्डानि कौतुकात् ॥१०८०॥ 1080
छित्त्वा भूर्यंश तूर्याणि परिच्छेत्तुं स कौतुकी । श्वपाकदुन्दुभीभाण्डशतानि द्वादशाकरत् ॥१०८१॥

१०५५. [1]) Here two *pâdas* seem to be lost; A does not indicate the *lacuna*. C adds दानेन सागरी सेना यथा पार्थोपिवेशदी. १०५८. [1]) Emended; A °स्वाकारचरस्कन्दं. १०५९. [1]) Emended with C; A °विक्षतः. १०६९. [1]) Emended with C; A °स्वामावारिक°.

तथा विनष्टसैन्योपि विग्राहिशैर्नृपात्मजैः । मितैः स्वदेशजैश्चारीन्प्रतिजग्राह सुस्सलः ॥१०८२॥
राजन्याविच्छटिकुलोद्भूतावुदयधन्यकौ । चम्पावल्लापुराधीशावुदयब्रह्मजज्जलौ ॥१०८३॥
ओजो मल्हणहंसानां धुर्यौ हरिहडीकसः । क्षत्रिकाभिक्षिकास्थानसव्यराजादयस्तथा ॥१०८४॥
1085 बिडालपुत्रा नीलाद्या भावुकान्वयसंभवाः । रामपालः सहजिको युवा तस्य च नन्दनः ॥१०८५॥
नानावंश्याः परेऽप्युग्रसंग्रामव्यग्रताजुषः । पुरोपरोधसंनद्धानरुन्धन्सर्वतो रिपून् ॥१०८६॥
तनूजनिर्विशेषेण रिल्हणेन महीभुजः । रणाग्रेसरतावाहि विजयाद्यैश्च सादिभिः ॥१०८७॥
स्वयमुद्यमिना राज्ञा वर्मणेव निजौ भुजौ । सुज्जिप्रज्जौ पाल्यमानावभूतां रणकर्मठौ ॥१०८८॥
ताभ्यां साधारणीकुर्वन्राज्योत्पत्तिं महीपतिः । स महाव्यसने तस्मिन्सम्यग्गूढधुरोऽभवत् ॥१०८९॥
1090 तत्पक्षा भागिकशरद्भासिमुम्मुनिमुङ्कटाः । कलशाद्याश्च कुशला विपक्षक्षोभणेऽभवन् ॥१०९०॥
भूभर्तुष्टक्कविषये लवराजस्य नन्दनः । आसीत्कमलियश्चास्य संग्रामाग्रेसरः प्रभोः ॥१०९१॥
प्रहारं बलिनस्तस्य चामरध्वजशोभिनः । प्रभिन्नस्येव नागस्य हयारोहा न सेहिरे ॥१०९२॥
अनुजः साङ्गिकः पृथ्वीपालो भ्रातुः सुतोऽस्य च । पाञ्चालाः फल्गुनस्येव पार्श्वरक्षित्वमाययुः ॥१०९३॥
एतावद्भिर्भृत्यरत्नै राष्ट्रेऽपि कुपितेऽभवत् । भूरिस्वर्णार्पणोपात्तैर्वाजिभिश्च महीपतिः ॥१०९४॥
1095 तत्र तत्राहवे सोऽपि बभ्रामाक्लमो नृपः । उत्सवे गृहमेधीव मण्डपे मण्डपे स्वयम् ॥१०९५॥
तस्य हि व्यसनं त्रासहेतुः प्राभूदुपक्रमे । प्रवृद्धिं प्रागभवद्धैर्यौदार्यञ्च धीमतः ॥१०९६॥
हैम्यकुम्भयमापाते मध्यपाते न तादृशम् । करस्थितं यथा शीतं मज्जने न तथा पयः ॥१०९७॥
वैरिसैन्यतमो यत्र यत्र व्योमेव निर्ययौ । सितासिता च भूभर्तुस्तत्र तत्रास्य वाहिनी ॥१०९८॥
एकदा कृतसंकेतास्तुल्यमाहवमेलके । महासरितमुत्तीर्य डामरा नगरेऽपतन् ॥१०९९॥
1100 अतीतनगरस्थानविभक्तकटको नृपः । परिमेयाश्ववारस्तान्विज्ञातः स्वयमाद्रवत् ॥११००॥
तमभञ्जड्डामरानीकस्तेन विद्रावितो धृतिम् । हेमन्तमरुता कीर्णपर्णराशिरिवेरितः ॥११०१॥
ज्यानन्दः काककुलजो लोष्टशाह्यमल्लादयः । अन्ये च डामरानीके ख्याता भूभृद्भटैर्हताः ॥११०२॥
लग्नाभिघातानानीतानाशः क्रूरस्य रुक्पथम् । बहूञ्जघ्नुश्चण्डाला इव राजोपजीविनः ॥११०३॥
भयाद्गोपाद्रिमारूढा अपरे भिक्षवास्ततः । आसन्नमृत्यवोऽभूवन्कटकैर्वेष्टिता द्विषाम् ॥११०४॥
1105 यो मार्गो दुर्गमः पक्षिणोऽपि यातुं ततः स तान् । तत्र व्यापारयामास भिक्षुर्मानी तुरंगमान् ॥११०५॥
कथंचित्पक्षिणा विक्रमीवस्तस्यामहीन्मुहुः । पार्श्वे पृथ्वीहरो कार्डे द्विजाद्यान्ये महाभटाः ॥११०६॥
वेलाद्रिभिरिवोद्वृत्तैः सिन्धौ सैंहिपतौ बले । रुद्धे गोपाचलं त्यक्त्वा तेऽन्यानारुरुहुर्गिरीन् ॥११०७॥
अथोदतिष्ठद्वामेन राजानीकस्य वाहिनी । मल्लकोष्ठस्य पश्यतोऽभिताशेषदिक्तटा ॥११०८॥
अरिपृष्ठमहव्यग्रैस्तिष्ठन्स्वैर्वर्जितो बलैः । तदाशङ्क्यखिलैरेव हतो राजेत्यसंशयम् ॥११०९॥
1110 आपातं सुस्सलो राजा यावत्तस्याविसोढवान् । तावत्सावरजः प्रर्ज्जिराजगाम रणाङ्गणम् ॥१११०॥

१०८४. [1]) Thus $A_2$ in margin; $A_1$ सैजो in text. १०९०. [1]) Thus A; perhaps to be emended मुद्गटाः; cf. vii. 589. १०९३. [1]) Emended (i.e. पाञ्चालाः); A पाञ्चाली.—[2]) Thus A; perhaps read with C फाल्गुन°. ११०४. [1]) Thus $A_2$; $A_1$ दिवाम्. ११०८. [1]) Emended; A °तिष्ठ°मेन; C °तिष्ठत् सुस्सेन. १११०. [1]) Emended with C; A प्राञ्जि°.

आषाढबहुलाष्टम्यां स हयारोहमेलकः । निजशस्त्राश्वमिषवसाधुवादो महानभूत् ॥११११॥
ताभ्यां स शमिति युद्धे ससनुः ससमीरणः । हावो नभोनभस्याभ्यामिव भाषाम्बुवृष्टिभिः ॥१११२॥
संग्रामबहले काले तादृगन्यो न कोऽप्यभूत् । यादृक्स दिवसो वीर्यशौटीर्यनिकषोपलः ॥१११३॥
अनीकिनी लाहरी सा विलम्बेनावबाधिति । तेषामुत्पाटनेच्छूनां नाभवद्धस्तमेलकः ॥१११४॥
अन्योन्यस्य परिज्ञाता दिवसे तत्र संकटे । भिक्षोर्भूमिभृता शक्तिर्भूमिभर्तुश्च भिक्षुणा ॥१११५॥ 1115
ततो मडवराज्यांस्तान्योद्धुं तत्रैव निर्दिशन् । क्षिप्तिकारोधसा युद्धमेत्य पृथ्वीहरोऽमहीत् ॥१११६॥
दिगन्तरादथायातो यशोराजो महीभुजा । मण्डलेश्वरतां निन्ये रिपून्प्रतिजिहीर्षुणा ॥१११७॥
खेरीकार्ये पुरा तस्य लवन्या दृष्टविक्रमाः । रणेषु मुखमालोक्य शतशः प्रचकम्पिरे ॥१११८॥
कुङ्कुमालेपनच्छत्रहयादिप्रतिपत्तिदः । सर्वेषामभिनन्द्यत्वं तं राजा स्वमिवानयत् ॥१११९॥
दीर्घोपद्रवयाप्येन दुःस्थितः स्वास्थ्यलिप्सया । जनो बबन्ध तत्रास्थां नववैद्य इवातुरः ॥११२०॥ 1120
ज्यायांसं पञ्चचन्द्राख्यं शेषाणां गर्गजन्मनाम् । नृपतिर्मल्लकोष्ठस्य प्रातिपक्ष्ये न्ययोजयत् ॥११२१॥
शिशुश्चुडाख्यया मात्रा पालितः स शनैः शनैः । आश्रीयमाणोऽनुचरैः पित्र्यैः किंचित्प्रथां ययौ ॥११२२॥
यशोराजानुयातेन राज्ञा जन्येषु निर्जिताः । केचित्सत्पक्षमभजन्भग्नाः केचिच्च डामराः ॥११२३॥
सभिक्षुः प्रययौ पृथ्वीहरः स्वमुपवेशनम् । मल्लकोष्ठोन्मुखो राजा निर्जगामामरेश्वरम् ॥११२४॥
अत्रान्तरे मल्लकोष्ठो विसृज्य निशि तस्करान् । सदाशिवान्तिके भूत्वा राजधानीमदाहयत् ॥११२५॥ 1125
पृथ्वीहरेण भूयोऽपि योद्धुमारब्धवानसकृत् । भज्जिसुज्जिमुखा युद्धमकुर्वन्क्षिप्तिकातटे ॥११२६॥
वारं वारं लवन्यः स नगरे निर्दहन्गृहान् । प्रायः शून्यत्वमनयद्वितस्तातीरमुत्तमम् ॥११२७॥
तत्र तत्र रणान्कुर्वन्प्राणसंदेहदायिनः । आचक्रामाथ नृपतिर्लहरं बहलैर्बलैः ॥११२८॥
निःसेतुं तरतः सिन्धुं वृतिभङ्गाश्रयुर्जले । मन्दिरं कन्दराजाख्यास्तदीयाः समवर्मिनः ॥११२९॥
दरदेशं ययौ मल्लकोष्ठो राज्ञा निराकृतः । सपुत्राप्यभजच्छुड्डा प्रारोहं लहरान्तरे ॥११३०॥ 1130
आनिन्यिरे जय्यकेन लवन्येन नृपान्तिकम् । विषलाटान्तरात्तेथ जनकश्रीवकादयः ॥११३१॥
लहरात्प्रत्यतिक्रान्तनिदाघः शरदागमे । शमाल्लां निर्ययौ राजा यशोराजान्वितस्ततः ॥११३२॥
भग्नं पृथ्वीहरत्रासात्सैन्यं रक्षन्मनीमुखे । आजौ सज्जात्मजो डोम्बनामा राजसुतो हतः ॥११३३॥
युद्धं सुवर्णसानूरग्रामभुरपुरादिषु । कुर्वञ्छश्वन्नृपः प्राप पर्यायेण जयाजयौ ॥११३४॥
श्रीकल्याणपुराद्भङ्गं नीते पृथ्वीहरादिभिः । श्रीवके नागवट्टाद्या युधि प्रापुः प्रमापणम् ॥११३५॥ 1135
पौत्रं सुवर्णसानूराग्निहन्तुं मातुरन्तकम् । टिक्कं स देवसरसं व्यसृजद्गर्भवल्लभाम् ॥११३६॥
स्वेन राज्ञश्च सैन्येन सहिता साऽजिताहिता । अकस्मात्तत्र टिक्केन निपत्य निहता युधि ॥११३७॥
स स्त्रीवधं व्यधात्पापी द्वितीयमपि निर्घृणः । विशेषः कोऽत्र वा तिर्यङ्म्लेच्छतस्कररक्षसाम् ॥११३८॥
अबलां स्वामिभिर्यां हन्यमानां त्यक्त्वा पलायिताः । चित्रं पशुपमाः शस्त्रं स्त्रीचकुर्लाहराः पुनः ॥११३९॥

---

१११२. ¹) The text of this verse appears to be defective. १११४. ¹) A विलम्बेन. ११२१. ¹) Emended with C; A प्रातिपक्षे. ११२३. ¹) Emended with C; A °सत्पक्ष°. ११३६. ¹) Conjectural reading; A मातुरन्तिकम्. Cf. viii. 1069 ff. and 1138. ११३८. ¹) Emended with C; A द्वितीयामपि. ११३९. ¹) Emended with C; A °यिता:.

1140 ईषत्प्रागागतं शय्यां भूय एवोल्बणं नृपः । ज्ञात्वा मड्डवराज्यं स ययौ विजयेश्वरम् ॥११४०॥
मल्लराजतनूजानां निजा जिह्वेव दुर्जना । बभूव प्रभविष्णुत्वे व्यापदापातदूतिका ॥११४१॥
प्रायश्चायतने काले भृत्यास्तिलतुषवृत्तयः । दर्शयन्ति समुत्सार्य सारं दोषतुषग्रहम् ॥११४२॥
आ बाल्यात्संस्तुताश्लीलवचःपरुषभाषितैः । निर्गौरवैर्यशोराजो राज्ञि तस्मिन्व्यरज्यत ॥११४३॥
स दुर्जातिर्महासैन्ययुतोऽवन्तिपुरस्थितः । अभजत्तत उत्थाय प्रतिपक्षसमाश्रयम् ॥११४४॥
1145 वैरिपक्षगते तस्मिन्बलैः सर्वोत्तमैः समम् । विह्वलो विजयक्षेत्रात्पलायिष्ट महीपतिः ॥११४५॥
धिग्राज्यं यत्कृते सोऽपि सेहे प्राणाभिरक्षिषुः । मुष्णद्भिश्चौरचण्डालप्रायैः परिभवं पथि ॥११४६॥
माघे पलाय्य नगरं प्रविष्टः स वथाभिधे । भृत्ये द्रोग्धर्यशङ्किष्ट स्वेषामपि तनूरुहाम् ॥११४७॥
काश्मीरके[1] जनेऽशेषे निराशो[2] नितरां ततः । अकुन्यस्तोत्तमाङ्गोऽभूत्प्रज्ञिपक्षे क्षमापतिः ॥११४८॥
मुद्रिता रुद्रपालादिपूर्वराजात्मजप्रथा । प्रज्ञिना विक्रमत्यागन्यायद्रोहादिभिर्गुणैः ॥११४९॥
1150 तेनैव वर्धितामुत्र देशे विशदकीर्तिना । कालदीराम्यलुठिता प्रतिष्ठा शस्त्रशास्त्रयोः ॥११५०॥
अमन्त्रयत संगम्य यशोराजस्तु भिक्षुणा । नेच्छन्ति डामरा राज्यं तत्र विक्रमशङ्किताः ॥११५१॥
उत्पाद्य पुनरुत्पिञ्जं साधिष्ठानबला वयम् । राज्यं स्वयं महीष्यामो यास्यामो वा दिगन्तरम् ॥११५२॥
इति तैर्मन्त्रिते क्षुब्धां[1] हतां श्रुत्वा दरत्पुरात् । आगत्य मल्लकोष्ठोऽपि प्राविशत्स्वोपवेशनम् ॥११५३॥
वर्षोऽथ दुस्तरः ख्यात एकान्नशतसंख्यया । सर्वभूतान्तकृल्लोके प्रावर्तत सुदारुणः ॥११५४॥
1155 वसन्ते डामराः सर्वे प्राग्वन्मार्गैर्निजैर्निजैः । आगत्य भूयो भूपालं नगरस्थमवेष्टयन् ॥११५५॥
धीरः सुस्सलदेवोऽपि पुनरासीद्दिवानिशम् । निःसीमसमरस्तोमारम्भसंरम्भभाजनम् ॥११५६॥
दाहलुण्ठनसंग्रामकर्मशौण्डैः स डामरैः । प्राग्विप्लवेभ्योऽप्यधिको विप्लवः पर्यवर्धत[1] ॥११५७॥
महासरित्पथे निर्निरोधे तस्थुर्विविक्षवः । नगरं ते यशोराजभिक्षुपृथ्वीहरादयः ॥११५८॥
ततः कतिपुचिषुद्राहेषु यातेषु संगरे । निजैनैव यशोराजः परकीयभ्रमाद्धतः ॥११५९॥
1160 कृत्यात्मजेन हि समं विजयाख्येन सादिना । सौस्सलेन तु संग्रामे परावृत्तीः प्रदर्शयन् ॥११६०॥
विप्रलब्धैः सवर्णाश्वकवचावेक्षणाद्विजैः । शूलायुधिभिरुद्दामैः शूलाघातैरहन्यत ॥११६१॥
भिक्षो राज्यं समर्थोऽयं दातुं हन्तुं ततश्च नः । भीत्वा तैर्डामरैरेव स घातित इति श्रुतिः ॥११६२॥
यथैव तेन विश्वस्तः स्वामी द्रोहेण वञ्चितः । तथैव प्राप विश्वस्तः क्षिप्रमेव वधं मृधे ॥११६३॥
पृथ्वीहरस्तत्र तत्र योधयित्वाथ डामरान् । क्षितिकारोधसा भूयोऽभ्येत्य संग्राममग्रहीत् ॥११६४॥
1165 तत्राधिष्ठानयोधानां भिक्षुपक्षोपजीविनाम् । पौरुषं स्वपरोत्कर्षपरिभावि व्यभाव्यत ॥११६५॥
वह्निदानमहायोधसंहाराद्यैरुपद्रवैः । एकमेकमहस्तत्रानेहस्यासीद्भयावहम् ॥११६६॥
अतपत्तरणिस्तीक्ष्णमभीक्ष्णं भूरकम्पत । ववुर्द्रुमाद्रीन्भञ्जन्तो महोत्पातप्रभञ्जनाः ॥११६७॥
पवनोत्थापितैः पांसुकूटैर्दध्रे महोद्धतैः[1] । व्योम्नि प्रोत्तम्भनस्तम्भभङ्गिर्निर्घातदारिते ॥११६८॥

---

११४८. [1]) A काश्मीरिके.—[2]) Emended; A निराशी. ११५३. [1]) Emended with C; A °न्वितेच्छुद्रां. ११५७. [1]) Thus corr. by $A_2$ from $A_1$ - - - - भूत. ११६८ [1]) Thus A; G महोद्धतैः.

ज्येष्ठस्य भुक्षिकादद्यां प्रवृत्तेथ महारणे । काष्ठीले डामरा वह्निमेकस्मिन्प्रददुर्गृहे ॥११६९॥
सोमिर्वा मारुतोद्भूतः प्रसरन्वैद्युतोथ वा । जज्वालैकपदे कृत्स्नं नगरं निरवग्रहः ॥११७०॥ 1170
ददहस्तदानीमेतावद्गजम्बूह इवापतन्[1] । माक्षिकस्वामिनो धूमो बृहत्सेतौ यदुत्थितः ॥११७१॥
अथेन्द्रदेवीभवनविहारं सहसागमत् । ततो नगरमुज्ज्वालं क्षणात्सर्वमदृश्यत ॥११७२॥
न भूमिर्न दिशो न द्यौर्धूमध्वान्ते व्यभाव्यत । हुडुक्कामुखचर्माभो दृश्यादृश्योभवद्रविः ॥११७३॥
धूमान्धकारसंच्छन्नास्ततः प्रज्वलताग्निना । अपुनर्दर्शनायेव मुहुराविष्कृता गृहाः ॥११७४॥
वितस्ता दृश्यतोज्ज्वालवेश्माश्लिष्टतटद्वया । रक्ताक्तोभयधारेव कृतान्तस्यासिवल्लरी ॥११७५॥ 1175
ब्रह्माण्डोर्ध्वकवाटान्तसंस्पर्शोत्पतितोन्नतैः । ज्वालाकलापैः संवृद्धैर्हेमच्छत्त्रघनाचितम् ॥११७६॥
उच्चावचैर्युतो ज्वालाभृङ्गैर्हेमाद्रिसंनिभः । वह्निर्धूमच्छलान्मूर्ध्नि बभाराम्बुधरावलिम् ॥११७७॥
आविर्भवन्तो[1] ज्वालाभ्यो गृहाश्चक्रुर्मुहुर्मुहुः । अदग्धा एतं इत्याशां विमुग्धगृहमेधिनाम् ॥११७८॥
ज्वलितैस्तापितजला वितस्ता पतितैर्गृहैः । और्वोष्मवेदनाक्लेशं विवेद सरितां प्रभोः ॥११७९॥
दीप्तपक्षैः खगैः सार्कं ज्वलिता बालपल्लवाः । उद्यानद्रुमषण्डानां व्योमोड्डयनमादधुः ॥११८०॥ 1180
सुधासिताः सुरगृहा ज्वालासंवलिता व्यधुः । क्षयसंध्याम्बुदाश्लिष्टहिमाद्रिशिखरभ्रमम् ॥११८१॥
मज्जनायासनौसेतुकदम्बैः प्लोषशङ्कया । अपास्तैर्नगरस्यान्तर्ययुर्नद्योपि शून्यताम् ॥११८२॥
किमन्यन्मठदेवौकोगृहाट्टादिविवर्जितम् । नगरं क्षणमात्रेण दग्धारण्यमजायत ॥११८३॥
लोष्टावशेषे नगरे धूमश्यामो निरास्पदः । उच्चैरेको बृहद्बुद्धो दृष्टो दग्धद्रुमोपमः ॥११८४॥
सैन्येषु ज्वलितावासत्राणाय चलितेष्वथ । शतमात्रेण योधानां युतो भूभृदजायत ॥११८५॥ 1185
पारं गन्तुं वितस्ताया भिन्नसेतुं तमक्षमम् । लब्धरन्ध्रा द्विषोनन्ता निहन्तुं पर्यवारयन् ॥११८६॥
पुरं दग्धं स्वमुत्सन्नं[1] प्रजा नष्टाश्च चिन्तयन् । आसन्नं मरणं राजा निर्विण्णो बह्वमन्यत ॥११८७॥
मत्वाक्षमथ तं प्रत्यङ्मुखमाशङ्क्य विद्रुतम् । संज्ञितोन्यैः कमलियः क्व देवेत्यब्रवीद्वचः ॥११८८॥
संरम्भस्मितविद्योति मन्दलोल्लेखमाननम् । परिवर्त्य निरुद्धाश्वो धीरः स तमभाषत ॥११८९॥
तदद्य करवै भूमेः कृते हम्मीरसंगरे । चकार राजा भिज्जो यत्सोभिमानी पितामहः ॥११९०॥ 1190
कुतस्त्योप्येव[1] दायादो यद्वातस्माकमस्मि वा । स हर्षदेवोपदश्यत्वः कार्यशेषं पलायितः ॥११९१॥
को नाम मानिनां पङ्क्तौ प्रविष्टोन्ते निजां भुवम् । असिक्तां स्वाङ्गरक्ताक्तां[1] व्याघ्रः कृत्तिमिवोज्झति ॥११९२॥
इत्युक्त्वोदञ्चयन्वल्गामुत्क्षिप्ताग्रमुखं हयम् । संस्प्रष्टुमिच्छुः[1] पाणिभ्यां कृपाणमुदनामयत् ॥११९३॥
ततो निगृह्य[1] वल्गायां वाजिनं लवराजजः । कथं भृत्येषु सत्स्वमे प्रवेशार्हो न भूभुजः ॥११९४॥
प्रहारविक्षतस्तिष्ठन्गृहादेकोभ्युपाययौ । संकटे तत्र भूभर्तुः पृथ्वीपालोन्तिकं परम् ॥११९५॥ 1195
कौलपुत्र्यं स्तुवंस्तस्य वात्सल्यादेव भूपतिः । स्वस्यात्मनिष्क्रयां[1] मेने सेवाविष्कृत्युपक्रियाम् ॥११९६॥

---

११७१. [1]) Thus corr. by A₁ from °पतत्. ११७८. [1]) Emended with C; A °भवन्त्यो.—[2]) Emended; A वन. ११७९. [1]) Emended with C; A ज्वलिते°. ११८७. [1]) Emended; A स्वमुत्पन्नं. ११९१. [1]) Emended with C; A कुतस्त्येप्येव; doubtful. ११९२. [1]) Emended with C; A स्वाङ्गरक्तां. ११९३. [1]) Emended; A सम्प्रष्टुमिच्छुः; cf. viii. 1528 ११९४. [1]) Emended with C; A निगृह्य. ११९६. [1]) Emended with C; A स्वस्यात्मनिष्क्रया.

अथ स्थितास्त्रिभिर्व्यूहैरहितास्तेकिरञ्शरान् । हन्तुं वामेन ते योधाः सर्वे वाहनदुर्मदाः ॥११९७॥
स प्रेरयंश्च तुरगं दैवात्तस्य च तादृशः । सहस्राण्यपि भूरीणि व्यधीयन्त विरोधिनाम् ॥११९८॥
अल्पसैन्यो द्विषत्खड्गमण्डलप्रतिबिम्बितः । नृपः साहायकायातविश्वरूप इवाबभौ ॥११९९॥
1200 कलविङ्कानिव श्येनः कुरङ्गानिव केसरी । एको ऽद्रावयद्भूरीनरीन्सुस्सलभूपतिः ॥१२००॥
निपत्य पत्तीन्युध्यानान्खुराग्राण्यपि वाजिनाम् । प्राहरंस्ते हयारोहा व्यूहव्याहतरंहसः ॥१२०१॥
बिम्बितज्वलनज्वालाः सर्व एव महाभटाः । हन्यमानाश्च हताश्चासृक्स्रोतोरुणा इव ॥१२०२॥
स द्विषां कदनं कृत्वा दिनस्यान्ते न्यवर्तत । बाष्पायमाणोस्तकाशं हव्याशेनोज्झितं पुरम् ॥१२०३॥
तादृशेप्यजिते तस्मिञ्जयाशागौरवं द्विषः । स चौज्झीत्प्रमणीयस्य विनाशाज्जीवितादरम् ॥१२०४॥
1205 आमन्त्वपथ्यलंरक्षिष्वञ्जसभञ्च सोरिभिः । निर्गच्छेत्यमाहूतो न कैरप्यमीक्षितः ॥१२०५॥
अग्निनिर्दग्धसर्वान्नसंभारे मण्डलेखिले । दुःसहः सहसैवाथ घोरो दुर्भिक्ष आययौ ॥१२०६॥
दीर्घविप्लवसंक्षीणसंचया डामरैर्बहिः । उत्तब्धोत्पत्तयो दग्धसंभारा दग्धमन्दिराः ॥१२०७॥
अनाप्नुवन्तो विधुरे राज्ञि राजकुलाद्धनम् । दुर्भिक्षे तत्र सामन्ता अपि क्षिप्रं विपेदिरे ॥१२०८॥
वह्निनिष्ठ्यूतशेषाणि वेश्मान्यन्नाभिलाषिभिः । बुभुक्षार्तैर्जनैर्दग्धो ददाहाग्निर्दिने दिने ॥१२०९॥
1210 सरितां सेतवो वारिसंसेकोच्छूनविग्रहैः । दुर्गन्धाः कुणपै रुद्धप्राणैस्तीर्णास्तदा जनैः ॥१२१०॥
निर्मांसनरकङ्कालकपालशकलाकुला । उवाह सर्वतः श्वेता क्षितिः कापालिकव्रतम् ॥१२११॥
कृच्छ्रसंचारिणोक्षीभुवयामक्षामोन्नविग्रहाः । व्यभाव्यन्त बुभुक्षार्ता दग्धस्थाणुनिभा जनाः ॥१२१२॥
अथ प्रबन्धयुद्धेन दिनैः कापीशुणा क्षतः । पृथ्वीहरो मृत इति श्रुतिर्मिथ्यैव पप्रथे ॥१२१३॥
गाढप्रहारविवशे तस्मिन्प्रख्यापिते जनैः । तां वार्तां श्रुतवान्राजा ननन्दायुद्ध चोद्धतम् ॥१२१४॥
1215 धीरेव पुंश्चली व्याजौत्सुक्यसंदर्शनेन तम् । जयश्रीर्लोभयन्त्यासीन्न तु भेजे समुत्सुकम् ॥१२१५॥
एकान्तवामहृदयो विधिरानुकूल्यं मिथ्या प्रदर्श्य विशिनष्ट्यनुबन्धि दुःखम् ।
अन्धीकरोति भृशमभ्रमणं ज्वलन्तं भास्वन्महौषधिभिदे प्रकटय्य वधम् ॥१२१६॥
दीर्घदुःखानुभूत्यन्ते यदीयागमनोत्सवम् । तपःफलमिव क्ष्माभृत्काङ्क्षन्नासीन्मनोरथैः ॥१२१७॥
वात्सल्येनान्वितं प्रेम गौरवेण प्रियं वचः । औचित्येन च दाक्षिण्यं तापस्यमिव या दधे ॥१२१८॥
तस्योपकरणीभूतविभूतिर्गृहिणी प्रिया । तस्मिन्काले महादेवी विपेदे मेघमञ्जरी ॥१२१९॥तिलकम्॥
1220 विनोदशून्यनिर्विण्णलोकयात्रं जगद्विदन् । प्राणै राज्येन वा कृत्यं न स किंचिन्निरैक्षत ॥१२२०॥
सा भर्तुर्व्यसनोदन्तैः कृशा काश्मीरसंमुखी । औत्सुक्यात्तयाथासीच्छ्रान्ता फुल्लपुरान्तिके ॥१२२१॥
पूर्वं तद्दर्शनाशाया दुर्वार्तायास्ततोतिथिः । भवन्नतोधिकं राजा दुःखावेगेन पस्पृशे ॥१२२२॥
राज्ञीमज्ञातपारुष्यतयादूषितभक्तयः । अनुसस्रुस्ततस्ताः परिवारवरस्त्रियः ॥१२२३॥
अप्रत्यक्षे क्षयेप्यस्या भक्त्युद्रिक्तास्त्वमत्यजन् । तेजो नामाभवत्सद्यो वन्यो भृत्यान्तरेधिकम् ॥१२२४॥
1225 स द्यसंनिहितोन्यस्मिन्नह्न्यायातो निजं शिरः । तच्छितोपान्तकहेन भङ्क्त्वा प्राणाविशन्नदीम् ॥१२२५॥

११९७—११९८. [1]) The text in these two verses appears to be corrupt or incomplete. १२०३. [1]) Thus A. १२०४. [1]) Emended; A प्रपे°. १२११. [1]) Emended with C; A °कुला.. १२१९. [1]) $A_1$ writes here ३ instead of तिलकम्. १२२०. [1]) ण्ण supplied by $A_2$ in space left by $A_1$.

आहवाह्वानसंरम्भैः शोकविस्मृतिकारिभिः । राज्ञो द्विषः कार्यवशादुपकारित्वमाययुः ॥१२२६॥
स राज्यमथ निक्षेप्तुकामो निर्विण्णमानसः । व्युत्क्रान्तशैशवं पुत्रमानिन्ये लोहराद्बलात् ॥१२२७॥
मण्डलेश्वरतां भञ्जेर्भ्रातृव्यं भागिकाभिधम् । नीत्वा च गुप्तिमकरोल्लोहरे कोशदेशयोः ॥१२२८॥
वराहमूलं संप्राप्तमथायातः प्रियं सुतम् । आश्लिष्य विषयौ राजा बभूवानन्दशोकयोः ॥१२२९॥
राजसूनुस्त्रिभिर्वर्षैः प्रत्यायातः स्वमण्डलम् । स पश्यन्पितरं चान्तरत्युद्विग्नमतप्यत ॥१२३०॥ 1230
खेदनम्राननो लोष्टाश्वशेषं सोऽभिशल्पुरम् । अम्बुलम्बाम्बुदो दावनिर्दग्धमिव काननम् ॥१२३१॥
राज्येऽभ्यषिञ्चदाषाढस्याह्नि जनकोऽथ तम् । अवादीद्राज्यतन्त्रं च कृत्स्नमुत्काकुगद्गदः ॥१२३२॥
भ्रान्ताः पितृपितृव्यास्ते न यां वोढुमशक्नुवन् । धुरमुद्वह तां वीर त्वयि भारोऽयमर्पितः ॥१२३३॥
साम्राज्यप्रक्रियामात्रपात्रं पुत्रं नृपोऽव्यधात् । न त्वार्पयदधीकारं तस्मिन्दैवविमोहितः ॥१२३४॥
अभिषेकविधावेव राजसूनोः शमं ययुः । पुरोपरोधाश्वमाहव्याधिचौराद्युपद्रवाः ॥१२३५॥ 1235
संपन्नसस्या च तथा देवी संववृते मही । दुर्भिक्षं श्रावणे मासि यथावत्प्रशमं ययौ ॥१२३६॥
अत्रान्तरे सिंहदेवो रणे कुर्वन्नरिक्षयम् । कर्णेजपैर्जनयितुर्द्रोग्धायमिति सूचितः ॥१२३७॥
कोपादविमृशंस्तत्त्वं स बन्द्धुं तं व्यसर्जयत् । कण्ट्यालमकं राजसूनुस्तत्तु प्रागेव बुद्धवान् ॥१२३८॥
कोपस्मितोत्कटस्यापि स तस्याप्रतिभोऽभवत् । निनाय रक्षामात्रेण पार्थिवाज्ञाममोघताम् ॥१२३९॥
अभुक्तवान्मनस्तापात्प्रस्ययोदरक्षये पितुः । साकं तेन सुतोऽन्येद्युर्गन्तुं प्रावर्ततान्तिकम् ॥१२४०॥ 1240
आक्षेप्तुं शङ्कितोऽशक्य इति मत्वा स मन्त्रिभिः । मार्गाद्व्यवर्तयत तं पिता मिथ्या प्रसादयन् ॥१२४१॥
अन्तस्तु निश्चिकायेति प्रविश्यातर्कितागमः । बद्ध्वैनं स्थापयिष्यामि कारायामिति सोऽनिशम् ॥१२४२॥
धिग्राज्यं यत्कृते पुत्राः पितरश्चेतरेतरम् । शङ्कमाना न कुत्रापि सुखं रात्रिषु शेरते ॥१२४३॥
पुत्रपत्नीसुहृद्भृत्या येषां शङ्कानिकेतनम् । विस्रम्भभूर्भूपतीनां कस्तेषामिति वेत्ति कः ॥१२४४॥
साह्राभिधानप्रख्यातकुमारोपान्तवासिनः । खलपालस्य तनयः स्थानकाख्यस्य कस्यचित् ॥१२४५॥ 1245
शैशवे पांशुवाल्येन वर्धितो डामरोऽग्रवैः । गृहीतशस्त्रस्तन्नित्यं क्रमाट्टिक्कस्य लब्धवान् ॥१२४६॥
प्रथमाद्वारप्रभृत्यासदूरयो भूभर्तुरागताम् । प्रययावुत्पलो नाम वैरिविच्छेदमिच्छता ॥१२४७॥
स हि भिक्षाचरं टिक्कमथ व्यापादयेत्यमुम् । जगादाङ्गीकृतैश्वर्यदानष्टिक्कोपवेशने ॥१२४८॥
कृतप्रतिश्रवं तस्मिन्नर्थे तं च महर्द्धिभिः । दानैरुपाचरत्पञ्जपतिनाप्याप्ययोजयत् ॥१२४९॥
भोगलोभप्रभुद्रोहचिन्तादोलायमानधीः । स कार्यं परिहार्यं वा न कृत्यं निश्चिकाय तत् ॥१२५०॥ 1250
प्रासोष्टापत्यमत्रान्तस्तद्वधूः कार्यतो नृपः । तत्तच्च प्राहिणोत्तस्यै पितेव प्रसवोचितम् ॥१२५१॥
सा तस्यास्तूपचारस्य कारणं परिशङ्किता । पतिं पप्रच्छ निर्बन्धात्सोऽपि तस्यै व्यवर्णयत् ॥१२५२॥
न कार्यः स्वामिनो द्रोहः कृते चास्मिन्न सुस्थलः । स्वामेव शनकैर्हन्याद्द्रोग्धायमिति चिन्तयन् ॥१२५३॥
वरं स एव विश्वास्य व्यापाद्यस्तत्र चेद्वधः । अत्रैव स्वामिपुत्रादिकुटुम्बं स्याद्विभूतिभाक् ॥१२५४॥

---

१२३८. [1]) A °विसृर्य°.—[2]) Emended; A बन्धुं. १२४४. [1]) Thus A. १२५१. [1]) Emended with C; A मह्रिणो°.

1255 भार्येयेति प्रेर्यमाणः स निश्चयविपर्यये । टिक्कं विदितवृत्तान्तं कृत्वा वड्डोद्यमः कृतः ॥१२५५॥
गतागतानि कुर्वाणे तुधुक्षावथ पार्थिवः । स पुत्र इव विश्वासं ययौ दैवविमोहितः ॥१२५६॥
विपर्यस्ता मतिः पुत्रे विश्वासो वैरिसंभिते । जायते क्षीणभाग्यानां को नाम न विपर्ययः ॥१२५७॥
वैधेयैः स्वार्थलोभान्धैर्यद्दानर्थसमागमः । सरघोपद्रवः क्षौद्रलुब्धैरिव न चिन्त्यते ॥१२५८॥
तं पीडितं प्रडिज्जना च राज्ञा चावनतिं ततः । उत्पलोऽकारयट्टिक्कं नीविं चादापयद्द्रुतम् ॥१२५९॥
1260 राजाथ देवसरसं जितं संत्यज्य कार्तिके । चाटूकाख्यमगाद्ग्रामं खेरीविषयवर्तिनम् ॥१२६०॥
स कल्याणपुराभ्यर्णे रणैस्तैस्तैर्विलक्षताम् । भिक्षुकोष्ठेश्वरमुखानपि निन्ये महाभटान् ॥१२६१॥
मध्याद्भिक्षाचरादीनां सुज्जिः काककुलोद्भवम् । जीवग्राहं महावीरं युधि जग्राह शोभकम् ॥१२६२॥
भवकीयस्य कृत्वारी विजयस्य पराभवम् । भुभुजा तद्वृता वध्याः कल्याणपुरवर्तिनः ॥१२६३॥
दग्धे वडोसके भिक्षाचरो नष्टाभयो व्यधात् । त्यक्त्वा तां क्ष्मां शमालायां ग्रामे काकरुहे स्थितिम् ॥१२६४॥
1265 अनुजो भवकीयस्य विजयस्य भयावृपम् । संभिन्नस्तेन नृपेण बद्धा कारागृहेऽर्पितः ॥१२६५॥
भूरिसैन्यानुगं शूरपुरे विन्यस्य रिल्हणम् । आस्कन्दाशङ्किनीं राजा चक्रे राजपुरीमपि ॥१२६६॥
इत्थमुद्दण्डया वृत्त्या खण्डितोद्दण्डडामरः । स्तोकावशेषं सोऽपश्यत्कर्तव्यमरिनिर्जयम् ॥१२६७॥
भिक्षाचरो लवन्याश्च शक्तिक्षयमुपागताः । विदेशगमनं भीता रिपौ बलिनि मेनिरे ॥१२६८॥
किमन्यभाग्यावतारैर्भिक्षुपक्षजुषां यतः । जीवतामप्यनुल्लासान्निर्जीवत्वमिवाययौ ॥१२६९॥
1270 स सोमपालकौटिल्यं स्मरन्कुर्यां हिमात्यये । श्मशानोर्वीं राजपुरीमिति ध्यायन्व्यवर्तत ॥१२७०॥
शान्तप्रायस्वदेशोर्वीविप्लवस्य महीपतेः । तस्यार्णवान्तक्रमणप्रतीतिः समभाव्यत ॥१२७१॥
शातैकीयो बोधशिष्टो विप्लवक्षपिते जने । वर्षं वर्षं स तद्राज्ये युगदीर्घं त्वमन्यत ॥१२७२॥
अतुच्छत्रासदारिद्र्यप्रियनाशादिवैशसैः । स राज्यकालः सर्वस्य परितापावहोऽभूत् ॥१२७३॥
नरः पौरुषनैपुण्यशाठ्येन करोति किम् । विधातृवृत्तिवैचित्र्यपराधीनासु सिद्धिषु ॥१२७४॥
पुरोभूतं कंचित्परिहरति राशिं तम इव व्यतीते कस्मिंश्चिद्धरिरिव विवृत्याश्यति दृशम् ।
1275 स्वमुक्तकूपासत्वं क्वचन नृपतिं दर्दुर इव क्रमेस्त्वद्वृद्धः स्फुटमिति गतीनामनियमः ॥१२७५॥
विश्वासनिहतान्निन्वबुबलादीन्पुरावसत् । नित्यं विकोशशस्त्रो यः पुराविज्ञो निशम्य च ॥१२७६॥
त्रिदुरथादिवृत्तान्तं नादात्केलिक्षणे ध्रुवम् । स्त्रीषु संभुज्यमानासु विश्वासविशदां दृशम् ॥१२७७॥
स बन्धाविव निर्बन्धाद्विश्वास यदुत्पले । तत्र संभाव्यते केन दैवादन्यो विमोहकृत् ॥१२७८॥
टिक्कादयो भूमिपतेः सुज्जेर्वान्यतरे हते । स्वां तुल्यकार्यकर्तारं विद्म इत्यूचुरुत्पलम् ॥१२७९॥
1280 सुज्जिर्न व्यश्वसीत्तस्मिन्स जिघांसुस्तु भूभुजम् । तत्र तत्राभवत्सज्जः प्रसङ्गं नासदत्पुनः ॥१२८०॥
प्रतिभूतविलम्बेन समन्योरथ भूपतेः । प्रत्ययोत्पत्तये देवसरसाज्जीविमात्मजम् ॥१२८१॥

---

१२५८. ¹) A₂ gloss सरघा मधुमक्षिका ( *Amara.* ii. 5. 26 ). १२६२. ¹) Emended; A सुज्जि. १२६४. ¹) A वडोसके; perhaps read वडोत्सके. Cf. वाडेत्स: viii. 1306.—²) Emended with C; A स्थितं. १२७१. ¹) The last two *pâdas* have become in A partly illegible by an ink blot and have been repeated in the margin by the same hand which supplemented the gloss to i. 110. १२७४. ¹) Emended with C; A °वैचित्र्य°. १२७७. ¹) Emended with C; A त्रिदूरथा°. —²) Emended; A °मानास्वविश्वास°. १२७९. ¹) Emended; A °न्यतमे.

व्याघ्रमप्रशस्तराजादींस्तीक्ष्णांश्चात्मसमान्परान्[1] । आदाय कार्यमेतैर्मे सिध्येदित्युक्तवान्नृपम् ॥१२८२॥
उचितोचित्य सेवाभ्यो गृहीतैः साहसक्षमैः । शतैः समं त्रिचतुरैः पत्तीनामेकदा ययौ ॥१२८३॥ तिलकम्[1] ॥
समयान्वेषिणो हन्तुस्तस्यासन्नस्य सर्वदा । मिथ्याहारादिदानेन हन्तान्तःप्रीतिकार्यभूत् ॥१२८४॥
तुरंगं मन्दुरापालकावस्यैकं नगरस्थितम् । अस्वस्थमुक्तावयितुं तुरगव्यसनी नृपः ॥१२८५॥ 1285
स लक्ष्मक[1]प्रतीहारकव्याघ्रमप्रमुखान्निजान् । पार्श्वाद्विसृष्टवानासीत्क्षणे तस्मिन्मितानुगः ॥१२८६॥
भृङ्गारी लक्ष्मकापत्यं निशम्याप्तैर्निवेदितम् । व्यधात्प्रवृत्तिपत्रे राज्ञस्तदुत्पलचिकीर्षितम् ॥१२८७॥
विरुद्धे बन्धुभिर्दृष्टहिंसारम्भेऽपि संभवेत् । आसन्नजीवितान्तस्य जन्तोः सूनापशोरिव ॥१२८८॥
स शापो गान्धार्यास्तदपि सहजो भावितमृषेस्त उत्पाताश्चक्षुः स्वमपि तदमीमं प्रकटयत्[1] ।
कुलान्तं तत्त्राणाक्षममकृत वैकुण्ठमपि तद्विवश्यन्यस्यत्वं क इव भवितव्यस्य कुरुताम् ॥१२८९॥
मिथ्यैतदित्यधिक्षिप्य क्षितिपालः प्रदर्शयन् । तमङ्गुल्योत्पलादींस्तानपस्थानेयमब्रवीत् ॥१२९०॥ 1290
द्रोग्धुः क्षमोऽभवद्योगाद्विनिष्कम्प्यात्मयमेष मे । त्वां द्रुग्धुमुत्पलाचष्टे स्वेनान्यैर्वाथ चोदितः ॥१२९१॥
ते ज्ञापयन्तः स्मेरास्या धार्ष्ट्येन भयवैकृतम् । यत्किं देवो यदस्माभिर्वाच्यमित्येवमूचिरे ॥१२९२॥
निर्गतेष्वथ तेष्वीषत्साशङ्क इव निश्चलान् । द्वाःस्थेनाकारयद्विप्रानन्तिके मुख्यशस्त्रिणः ॥१२९३॥
उन्मनाथ किमप्यासीद्विनिःश्वस्य स चिन्तयन् । सानुज न रतिं लेभे नृत्तगीतादिदर्शने ॥१२९४॥
मेने वैदेशिकप्रायानाप्तानपि धृतभ्रमः । पुण्यक्षये पिपतिषुर्वैमानिक इवाम्बरात् ॥१२९५॥ 1295
राजान्तरङ्गाः साशङ्काः प्रभौ शाठ्येन मोहिते । फूत्कारमैच्छन्दातारमन्यं केचिदचेतनाः ॥१२९६॥
अयमेव स कालस्य बलात्कवलनग्रहः । विदन्तोऽपि यदायान्ति जन्तवः कृत्यमूढताम् ॥१२९७॥
सर्वान्तरक्षणेऽध्वस्तचक्षुषो दिवसद्वयम् । उत्पलाद्याश्च साशङ्काः कथमप्यत्यवाहयन् ॥१२९८॥
रहः क्षणप्रार्थिनस्तांस्तृतीयेऽह्न्यब्रवीन्नृपः । ज्ञात्वा प्रत्यूषे तत्पूर्वं भोक्तुं यात मुहुर्गृहम् ॥१२९९॥
देवतार्चनपर्यन्तमवसायाह्निकं विधिम् । आजुहावोत्पलं दूतैर्मध्याह्ने च रहःस्थितः ॥१३००॥ 1300
कार्यसिद्धिं प्रधानी वैजन्याद्राजसद्मनः । राज्ञोऽभ्यर्णे स साशङ्कं द्वाःस्थ[1]वद्दानुगोऽविशत् ॥१३०१॥
प्रावेशयद्द्वारि दृढं व्याघ्रं तदनुजं नृपः । शेषाणामपि भृत्यानामादिदेश बहिःस्थितिम् ॥१३०२॥
विलम्बमानेष्वाप्तेषु केषुचित्सस्तयो वचः । सत्यं तस्योद्ययावास्तां सोऽथ द्रोग्धा च इत्यपि ॥१३०३॥
ताम्बूलदायकः प्रौढयास्तेनाथशोषितः । सांधिविग्रहिको विद्याजाहिलश्चान्तिके परम् ॥१३०४॥
दूती टिक्कस्यार्यदेवातिथ्यवैश्याभिधावुभौ[1] । तत्र प्रसङ्गादासातामज्ञातोत्पलसंविदौ ॥१३०५॥ 1305
वाडोरसः[1] सुख[2]राजाख्यो डामरो भिक्षुसंमतः । प्रयास्यति प्रभोर्दृष्ट्वा पादौ तत्कार्यसिद्धये ॥१३०६॥
इत्युक्तवांस्तेऽव्यवहः स तं नृपं नातिदूरगम् । ससैन्यं डामरं[1] चक्रे स्वस्य त्राणार्थमुत्पलः ॥१३०७॥
तथा चैनं तत्त्विवासं कृत्यमस्त्यमुनेति च । उक्त्वा प्रशस्तराजं तं पार्श्वे प्रावेशयद्द्रुतम् ॥१३०८॥
प्रविष्टो निर्जनं बाह्यमाकलय्य स मण्डपम् । अलक्ष्यमाणव्यापारो द्वारमर्गलितं व्यधात् ॥१३०९॥

१२८२. [1]) Emended; A °स्तराम्परान्. १२८३. [1]) $A_1$ writes here ३ instead of तिलकम्. १२८६. [1]) Thus $A_1$; $A_2$ पक्ष्मक°.— [2]) त्र supplied by $A_2$ in space left by $A_1$. १२८९. [1]) Emended; A प्रकटयत्. १३०१. [1]) Emended; A द्वास्थ. १३०५. [1]) Emended; A °स्यार्यदेवातिथ्यवैश्य°; Cf. viii. 1543. १३०६. [1]) A वाळोरसः perhaps read वाडोरसः. Cf. वडोसके viii. 1264.—[2]) A सु×ख°. १३०७. [1]) A डमरं.

1310 जानार्द्रकेशां शीतालुतया प्रावारवेष्टितम् । कृत्वा कृत्स्नं वपुः कृष्टशस्त्रीकं विष्टरोपरि ॥१३१०॥
आसीनं वीक्ष्य नृपतिं प्रसक्तो नेदृशो भवेत् । विश्रमिं कुरु भूभर्तुरित्यूचे व्याघ्र उत्पलम् ॥१३११॥
स तया संज्ञया व्यग्रः पादप्रणतिकैतवात् । राज्ञोऽग्रमेत्य तच्छस्त्रीं विष्टरस्थामपाहरत् ॥१३१२॥
त्रिकोशां चाकरोत्पश्यंस्तां तयोर्भ्रान्तलोचनः । प्राह स्म हा धिक्किं द्रोह इति यावद्वचो नृपः ॥१३१३॥
प्राहरत्प्रथमं तावत्सव्ये पार्श्वे तथैव सः । तस्य प्रशस्तराजेन मूर्धनि प्रहृतं ततः ॥१३१४॥ युग्मम् ॥
1315 व्याघ्रेणाथ क्षतं वक्षस्ताभ्यामेवासकृत्तदा । प्रहृतं तत्र स पुनः प्राहरच्च त्रिरुत्पलः ॥१३१५॥
पूर्वमेव प्रहृत्या हि छिन्नपार्श्वास्थिमालया । मेने कृष्टान्त्रतन्त्रीकं स तं प्रोषितजीवितम् ॥१३१६॥
गत्वा तमोरिं पूत्कर्तुमिच्छन्व्याघ्रेण राहिलः । पृष्ठे कृताहतिर्छिन्ना नालिका नोज्झितोऽसुभिः ॥१३१७॥
ताम्बूलदायकस्त्यक्त्वा कञ्जोलाख्योऽञ्जको व्रजन् । दीनो निजेभ्यः कारुण्यादुत्पलेनैव रक्षितः ॥१३१८॥
अन्तः समुत्थिते क्षोभे बाह्यमण्डपवर्तिभिः । टिक्ककाद्यैः कृता लुण्ठिर्द्रोहगृहीतायुधैः ॥१३१९॥
1320 उत्पलो निहतो राज्ञेत्यवेत्य कटकस्थितैः । बहिःस्थान्हन्यमानान्स्वान्समाश्वासयितुं ततः ॥१३२०॥
रक्तार्द्रशस्त्रं संदर्श्य तमोरेर्वपुरुत्पलः । ऊचे मया हतो राजा न स्याच्छङ्का तदमूरिति ॥१३२१॥
तच्छ्रुत्वा दुःश्रवं राजभृत्याः क्वापि भयाद्ययुः । द्रोहानुगास्त्वङ्गनान्तर्लब्धोत्साहा व्यधुः स्थितिम् ॥१३२२॥
निर्यान्तो मण्डपात्तीक्ष्णा निजघ्नुर्नागकाभिधम् । द्वारात्प्रविष्टं निष्कृष्टकृपाणीकं नृपानुगम् ॥१३२३॥
भूपालशय्यापालस्य त्रैलोक्याख्यस्य सेवकः । निन्दन्द्रोहं टिक्ककाद्यैर्द्रोहस्थैको विपादितः ॥१३२४॥
1325 उत्कृष्टे नष्टसत्त्वानां मध्ये राजानुजीविनाम् । सखेटकासिं धावन्तं भावुकान्वयभूषणम् ॥१३२५॥
दृष्ट्वा सहजपालाख्यं पार्श्वद्वारेण निर्ययुः । तीक्ष्णाः स स्वपतद्भूमौ तद्भृत्यप्रहतिक्षतः ॥१३२६॥
जाते कुकीर्तिकालुष्यपात्रे राजात्मजव्रजे । वैलक्ष्यक्षालनं सिद्धं तस्य स्वक्षतजैः परम् ॥१३२७॥
हतो दैशिकसंज्ञादिदेहो राजात्मजभ्रमात् । विहाग्निजन्मा नोनाख्यस्तीक्ष्णपक्षैः पुरो गतः ॥१३२८॥
अक्षतान्व्रजतो वीक्ष्य तीक्ष्णान्धामान्तरोन्मुखान् । चित्रार्पिता इव क्रोधाद्धावन्कोऽपि शस्त्रिणः ॥१३२९॥
1330 राजवंश्या महीपालप्रीतिपात्रमथाययुः । स्थगयन्तोऽङ्गनं स्थूलकाया जनविवर्जितम् ॥१३३०॥
तांस्तान्कापुरुषान्हर्षदेवोदन्तात्प्रभृत्यलम् । स्मृत्वा च कीर्तयित्वा च कृतभारमहा इव ॥१३३१॥
जाता दुष्कृतसंस्पर्शात्खेदात्कर्तुं न शक्नुमः । पापात्पापीयसां येषां नामग्रहणसाहसम् ॥१३३२॥
अङ्गनान्मण्डपारूढं मन्वानाः पौरुषं महत् । पापिनः केऽपि तन्मुख्या ददृशुः स्वामिनं हतम् ॥१३३३॥
अधरेणाप्तसंस्कारलेशावेशप्रकम्पिना । वदन्तं दन्तदष्टेन स्वान्तस्थामनुतप्तताम् ॥१३३४॥
1335 वञ्चितः कथमेषोऽहमिति मानेति चिन्तया । निस्पन्दे जीवितान्तेऽपि तथैव दधतं दृशौ ॥१३३५॥
श्यामायमानं बाष्पेण व्रणवक्त्रैरुदञ्चता । अन्तःप्रशान्तामर्षाग्निशेषधूमलतात्विषा ॥१३३६॥
आननस्यास्फुटीभूतचन्दनोल्लेखकुङ्कुमम् । सक्तया लिखितस्येव घनक्षतजलाक्षया ॥१३३७॥
आश्यानास्रजटीभूतकेशं नग्नं भुवि च्युतम् । पर्यस्तपाणिचरणं स्कन्धावलम्बिकन्धरम् ॥१३३८॥

---

१३१३. 1) Emended with C; A विकोशां. १३१४. 1) A₁ writes here २ instead of युग्मम्. १३१८. 1) Emended; A कञ्जोला°. १३२४. 1) Conjectural reading; A °शय्यापालस्य.—2) Emended; A °द्रोहस्थैकौ.—3) Emended; A स्वपादितः. १३२८. 1) Emended; A हतदैशि°. १३२९. 1) The first *páda* of this verse has been first omitted and subsequently supplied by A₁ in margin. १३३८. 1) A कन्धरम्.

तं वीक्ष्य मोचितं किंचिदाचिरुत्से नराधमाः । वैजन्यस्य फलं भुक्त्वेत्याविगादधिचिक्षिपुः ॥१३३९॥

बद्धा तुरंगे कुब्जे वा न नैर्मातिथितामितात् । कर्तुं न वा पारितः स प्राणत्राणाय धावितैः ॥१३४०॥ 1340

आस्तां विलम्बसाध्यं वा कर्मैतद्गाढदारुणात् । सज्जामि चाभिसारेऽहमपि कश्चिन्न नाकरोत् ॥१३४१॥

राजवाजिनमेकैकं नेऽध्यारुह्य पलायिताः । निर्लुण्ठितस्तु कटको प्रजन्मामेषु डामरैः ॥१३४२॥

न पुत्रः पितरं पुत्रं पिता वा प्रत्यपालयत् । मृतं हतं लुण्ठितं वा प्रपलत्सहिमेऽध्वनि ॥१३४३॥

न कोऽपि शस्त्रभृत्सोऽभूत्स्मृत्वा मानोन्नतिं पथि । परैराक्षिप्यमाणो यः शस्त्रं वस्त्रं च नात्यजत् ॥१३४४॥

स्वराजयशोराजद्विजौ व्यायामवेदिनौ । कान्दश्च राजा निहता वीरवृत्त्या ययुः परम् ॥१३४५॥ 1345

अदूरादुत्पलाद्यास्तु कटकं वीक्ष्य विद्रुतम् । प्रविष्टा बाहुवं छित्त्वा शिरो निन्युर्महीपतेः ॥१३४६॥

गतेषु देवसरसं तेषु छिन्नशिरा नृपः । हतचौर इव प्राप ग्राम्याणां प्रेक्षणीयताम् ॥१३४७॥

एवं द्वौहैस्तृतीयाब्दामावास्यायां स फाल्गुने । पञ्चपञ्चाशतं वर्षानायुषोऽतीतवान्हतः ॥१३४८॥

विलासशयनस्थस्य सिंहदेवस्य सा श्रुतौ । प्रेमाक्रान्तैरिव दुर्वार्ता धात्रेयेण व्यधीयत ॥१३४९॥

संभाव्यते योऽनुभावः सशस्त्रस्याप्रियश्रुतौ । हतशस्त्रोऽपि तं प्राप स तदा पितृवत्सलः ॥१३५०॥ 1350

मोहलुप्तस्मृतिः स्मृत्वा चिरादुद्गतचेतनः । तद्दुःखाहतधृतिर्विललाप स्फुटास्फुटम् ॥१३५१॥

मदर्थं कुर्वता राज्यं प्रयत्नादपकण्टकम् । अधमे किं महाराज त्वयात्मा परिभावितः ॥१३५२॥

अहेतेः पश्यतः शत्रुमन्ते वैरविशुद्धये । अपि ते मानिनोऽगच्छंस्तात संभावनाभुवम् ॥१३५३॥

त्वया जिघांसिते वैरे पिता भ्राता च ते दिवि । निर्मन्युः संप्रति त्वं तु वर्तसे मन्युदुःस्थितः ॥१३५४॥

अनरण्यकृपद्रोणजामदग्न्यादिषु स्पृहाम् । कुल्यक्षालितवैरेषु मा कार्षीः कांचन क्षणम् ॥१३५५॥ 1355

शोच्यस्त्वदाश्रयो मन्युरहं शोधयिता नृप । द्रुये न तत्र यातं यत्त्रैलोक्यमभियोज्यताम् ॥१३५६॥

वात्सल्योत्पुलकस्मेरं स्निग्धोक्तिमधुरं मुखम् । मद्दर्शने यदासीत्ते तन्मे पुर इवाधुना ॥१३५७॥

इति चाभ्यस्य विलपन्गाम्भीर्यालक्ष्यवैकृतः । ह्रीशोकभयमूकान्स ददर्शाप्तान्पितुः पुरः ॥१३५८॥

अशिक्षयत यन्मन्युर्दाक्षिण्यं निरुरोध तत् । तथाप्येवं स तानूचे किंचिदाक्षेपकर्कशम् ॥१३५९॥

कोशैः सदृशतां वीक्ष्य कुर्वन्तः सत्क्रियां गताः । धिग्भवन्मध्य शस्त्रं च तातस्यान्ते विपर्ययम् ॥१३६०॥ 1360

यन्मत्पितृवधे निहते कृतमुच्छिष्टजीविभिः । मान्यानां भवतां सिद्धं हा धिक्तदपि नाधुना ॥१३६१॥

इत्युपालम्भमानस्तान्निःश्वैरन्तिकमागतैः । द्विवैरमात्यैः कर्तव्यभुक्तयेत्रहितः कृतः ॥१३६२॥

प्रस्थानं लोहरे केचिद्वभुः संत्यज्य मण्डलम् । त्वरां च तत्र राज्यन्ते वदन्तो भैक्षवं भयम् ॥१३६३॥

गर्भात्मजं पञ्चवर्षमालम्ब्य लहरस्थितम् । द्वैराज्याचरणायान्ये धीरप्राया बभाषिरे ॥१३६४॥

न हि स्वगृहवह्निक्षोभविक्षोभैर्नगरान्तरम् । अद्यापि प्रस्थानं केनाप्यसति सुस्सले ॥१३६५॥ 1365

आत्मन्यसंभावनया तादृशां मन्त्रिणां नृपः । सान्तःखेदं श्वो विधेयं द्रक्ष्यथेत्यब्रवीद्वचः ॥१३६६॥

कालापेक्षापरित्यक्तपितृव्यापत्तिदुःस्थितः । स कोशादिव्ययाविस्रब्धक्षिणस्त्राणदीक्षितान् ॥१३६७॥

---

१३४४. [1]) Thus A; cf. वाहुकं viii. 1459. १३४९. [1]) Emended; A धात्रीविन. १३५०. [1]) श्रुताव supplied by $A_2$ in space left by $A_1$. १३५५. [1]) Thus A. १३६०. [1]) Emended; A कुरुतः. १३६१. [1]) Emended with C; A न हते. १३६४. [1]) Emended; A °लम्भ. १३६६. [1]) तादृशां supplied by $A_2$ in space left by $A_1$.

इतश्चेतश्च बम्भ्रम्यमाणैः घोषप्लुतस्वरम् । अन्योन्याख्यायिभिर्लोकैः पुरं मुखरतामगात् ॥१३६८॥
प्रेतवेतालमालेव कालरात्र्याकुलेव च । बभूव सा यामवती सर्वभूतभयावहा ॥१३६९॥
1370 दीपैर्निर्वातनिष्कम्पैश्चिन्तास्पन्दैश्च मन्त्रिभिः । तिष्ठन्परिवृतो राजा स्वान्तरेवमचिन्तयत् ॥१३७०॥
निर्द्वारे सतमस्युग्रमायते शून्यवेश्मनि । तातोपि निहतः शून्ये मयि जीवत्यनाथवत् ॥१३७१॥
कष्टमेतावदाश्वासस्त्वैशसक्षालनावधि । कथं गोष्ठीषु शक्ष्यामि द्रष्टुं मानवतां मुखम् ॥१३७२॥
विरोधिपक्षवर्तिभ्यो देशेभ्यः सैन्यनायकाः । सहिमैरेव दुर्लङ्घैः कथमेष्यन्ति वर्त्मभिः ॥१३७३॥
इत्थं विमृशतस्तस्य तत्क्षणाभिषङ्गिनः । ययौ भीतिमतो भीमा कथंचित्सा निशीथिनी[2] ॥१३७४॥
1375 शान्तचतुष्किकां पौरसमाश्वासाय निर्गतः । नष्टं कटकमन्वेष्टुं सोश्वारूढान्व्यसर्जयत् ॥१३७५॥
मार्गानक्षीसंचारैस्तुषारैर्विवरोज्झितान् । आश्लिष्टवसुधा मेघाः कर्तुं प्रारेभिरे ततः ॥१३७६॥
नामाप्यलब्ध्वा सैन्यस्य प्रोषितेष्वेषु दूरतः । निवृत्तेषु नियुक्तेषु विमृश्य नृपतिः क्षणम् ॥१३७७॥
यथाक्षेमागते तत्सपरिस्पन्दे मयाधुना । दत्तं चारीठिभ्रतयतामभयं सागसामपि ॥१३७८॥
इत्याज्ञां भ्रमयामास पटहोद्घोषणैः पुरे । साशीर्घोषास्ततः पौरास्तत्रारज्यन्त सर्वतः ॥१३७९॥ तिलकम् ॥
1380 अनन्तरनृपाचारवैधर्म्याकारकलया । तया सोमपया वृत्त्या फलं सद्योनुभावितः ॥१३८०॥
क्षणादप्यूनसंख्यैर्यः स्थितवाननुगैः समम् । अनुरागवतैर्लोकैस्तत्कालं पर्यवार्यत ॥१३८१॥
मियोभ्यावेदनं प्रीतिदायोपायः प्रभोः पुरः । भजल्लोकस्याप्यमन्त्रिपदवीं लक्ष्मकोग्रहीत् ॥१३८२॥
राज्यं शून्यं नयत्येवं प्राज्ञे राज्ञि नयक्रमैः । याति मध्यं दिने भिक्षुर्विविक्षुः पुरमाययौ ॥१३८३॥
तस्य डामरपौराश्ववारलुण्ठाकसंकुलः । अदृष्टपूर्वो ददृशे सैन्यव्यतिकरस्तदा ॥१३८४॥
1385 इदं श्रुत्वा रिपुं राज्योत्सुकः स नगरं व्रजन् । राजा काकात्मजेनेति तिलकेनाभ्यधीयत ॥१३८५॥
इतः समस्तविद्वेष्यः स दैवाद्यदि सुस्सलः । कथं प्रकृतयो मधुर्गुणवन्तं तदात्मजम् ॥१३८६॥
पुरप्रवेशे का राजंस्तस्मादेकमहस्त्वरा । एहि पद्मपुरं यामो मार्गं रोद्धुं विरोधिनाम् ॥१३८७॥
आगच्छन्तो नष्टसैन्याः सुज्जिमुख्या महाभटाः । निहता यदि वा रुद्धास्तत्र सायुधवाहनाः ॥१३८८॥
प्रविष्टोसि ततो न्यस्तशस्त्रो द्वित्रैर्दिनैर्ध्रुवम् । नगरं नगरौकोभिः स्वयमभ्यर्थितागमः ॥१३८९॥
1390 अलमेतैर्जरन्मन्त्रैर्वदन्त इति चक्रिरे । स च कोष्ठेश्वराद्याश्च स्मेरास्तस्यावधीरणाम् ॥१३९०॥
राज्यं विदद्भिः संप्राप्तं[1] तांस्ताञ्शासनपट्टकान् । कृतमर्थ्यमानैश्च विलम्बं कारितो निजैः ॥१३९१॥
अतो बहुहिमापातविवशाशेषसैनिकः । आसदन्नगरोपान्तं समयेन स तावता ॥१३९२॥
एतस्मिन्नन्तरे लब्धे निःसैन्यस्य ससैनिकः । गर्गात्मजः पञ्चचन्द्रो नृपतेः पार्श्वमाययौ ॥१३९३॥
हतस्वामिपरित्यागमन्युक्षालनकाङ्क्षिभिः । राजपुत्रैः समं सोथ वीरो योद्धुं विनिर्ययौ ॥१३९४॥
1395 असंभावनसंग्रामान्वीक्ष्य तान्भिक्षुसैनिकाः । यावत्प्रारेभिरे योद्धुं तावत्किमपि सर्वतः ॥१३९५॥
क्षणेनैव ययुर्भङ्गं तांस्तान्वीक्ष्य हताश्रितान् । न संस्तम्भयितुं शेकुः स्वयमूथ पलायिनीः ॥१३९६॥

---

१३७३. [1]) Emended; A °नायकः. १३७४. [1]) A विमृषत°.—[2]) A निषीथिनी. १३७७. [1]) Thus A; perhaps read प्रेषितेष्वेषु.—[2]) A विमृष्य. १३७९. [1]) $A_1$ writes here ३ instead of तिलकम्. १३९१. [1]) Emended; A संप्राप्तांस्तान्°.

सेवानायाश्च ये मुक्ता भिक्षुपूर्वीहरादयः । अदृष्टपूर्वं संत्रासं तेऽप्यत्रासिविवशाययुः ॥१३९७॥

विद्रवन्तोऽनुयाताः स्युस्ते येद्रूरं नृपानुगैः । तन्नूनमवशिष्येत क्षणादेव न किंचन ॥१३९८॥

वैमुख्यं तेषु यातेषु चिरात्संमुखमाययौ । नवभूभृत्प्रभावेण नगरे विधुरे विधिः ॥१३९९॥

अन्यथा कल्पितो लोकैरन्यथा दैवयोगतः । इत्थं राज्ञोर्द्वयोरासीद्विजयाजयक्रमः ॥१४००॥

कंचिच्चिपातयति बद्धपदं क्षणेन कंचित्परं पिपतिषुं नयति प्रकर्षम् ।
संकल्पनिर्विषयविस्तरानुभाव ओघोऽम्भसामिव तटं पुरुषं विधाता ॥१४०१॥

अथ तत्रत्र्यस्थानश्रान्तः सुज्जिर्दिनात्यये । दामव्याप्ताद्विनिष्क्रान्तो निःशब्दोऽहिरिवाययौ ॥१४०२॥

मेघावर्कपुरग्रामस्थितः श्रुत्वा हतं नृपम् । स हि संमन्त्र्य राज्यन्तर्नीत्स्याववसत्परम् ॥१४०३॥

रिल्हणादीन्स्थिताञ्शूरपुरादौ सैन्यनायकान् । प्रतीक्षमाणस्तैः सार्कं निर्बाधं नगरेऽविशत् ॥१४०४॥

तन्निशायां प्रत्यभिज्ञाकृते तेषामनश्वरान् । स्वावासपृष्ठे ज्वलतो दीपानस्थापयत्ततः ॥१४०५॥

सैन्यस्यान्ते तु पत्तीनां विद्रुतानां पृथक्पृथक् । निशि क्वापि परिभ्रष्टा न तत्कटकमाययुः ॥१४०६॥

प्रत्यूषे प्रबलैस्तैस्तैः पृष्ठलग्नैः स डामरैः । न मुहूर्तमपि त्यक्तः प्रहरद्भिरितस्ततः ॥१४०७॥

वृद्धस्त्रीबालभूयिष्ठान्सहप्रस्थायिनो जनान् । ययौ रक्षन्पुरः कृत्वा पशुपालः पशूनिव ॥१४०८॥

पञ्चाशत्या हयारोहैः सह व्यावृत्त्य तिष्ठता । कंचित्क्षणं तेन रक्षा तेषां कर्तुमशक्यत ॥१४०९॥

ग्रावखण्डद्रुमव्यूहसंबाधेऽध्वन्यसाध्वसैः । बाध्यमानोऽरिभिर्लोकं सोत्याक्षीन्नु पदे पदे ॥१४१०॥

हतस्य स्वामिनः स्वामिसूनोश्च व्यसनस्थितेः । आनृण्याकाङ्क्षिणा तेन तत्र ह्यात्मैव रक्षितः ॥१४११॥

येषां प्राणपरित्यागे निश्चयं बध्नतामपि । न योग्यकालापेक्षास्ति किं तैर्हिक्षपभूपमैः ॥१४१२॥

हन्तुं तं नष्टमायान्तं दृष्ट्वा पद्मपुरान्तिकम् । अवसन्डामराः क्रूराः खडूवीविषयौकसः ॥१४१३॥

खेरीतस्तालद्ग्रामादुत्थाय पृथुसैनिकः । व्रजंस्तेनाययौ तत्र प्रसङ्गे श्रीवकः पथा ॥१४१४॥

तमनष्टानुगं सुज्जिरश्वावेति विशङ्किताः । निपत्य ते विदधिरे हतलुण्ठितसैनिकम् ॥१४१५॥

मेरुश्च सज्जनश्चाश्ववारौ तत्राहवे हतौ । क्षतो वहात्मजो मल्लो दिवसैर्यो व्यपद्यत ॥१४१६॥

उदीर्णविहितप्रभ्रवहत्सलिलसंकटम् । उदीपपुरबालाख्यं स्थानं तत्र क्षणेऽभवत् ॥१४१७॥

युद्ध्वा युद्ध्वा प्रचलतस्तत्र पद्मपुराद्बहिः । तत्सैन्यस्य विशिखः श्रीवकस्याविशद्गलम् ॥१४१८॥

प्रहारविवशो नासौ सुज्जिर्वास्त्विति डामरैः । स निर्लुण्ठ्य परित्यक्तः पूर्वमैत्र्यनुरोधतः ॥१४१९॥

लुण्ठितं श्रीवकानीककोशभारमहाधनैः । तैः कैश्चिद्दलितैरासीत्सुज्जेर्मार्गोऽनुपद्रवः ॥१४२०॥

प्रस्थिते पथिकैकस्मादन्वेयूत्सादयन्वने । आयुःशेषो मृगेन्द्रस्य विवध्यादध्वशोधनम् ॥१४२१॥

निःशब्दसैन्यो निर्यातः सुज्जिः पद्मपुरान्तरे । उदीपथप्रबधिं संप्राप्तोऽशापि डामरैः ॥१४२२॥

पदातिकोशदासादि मुष्णतः सोमपेल्यं तान् । तीर्त्वा श्वभ्रं वाजिगम्यां ताप्रवारो भुवं ययौ ॥१४२३॥

ततः परं प्रशान्तारिभयं दूराद्विरोधिनः । भूमकृत्तर्जनीकम्पकालपिरतर्जयत् ॥१४२४॥

---

१३९८. [1]) Emended with C; A ताद्भून°. १४०३. [1]) Emended; A मेघावर्क पुर°. १४१०. [1]) A₁ had written in margin a gloss of which only इति मायया is now legible. १४२०. [1]) Emended; A लुण्ठितः श्री°. १४२१. [1]) A °कोश°.— [2]) Emended with C; A वीनवीक्ष.

1425 संवत्सैरश्वकमार्गं तैस्त्यक्तमादाय च द्रुतम् । प्रविश्य नगरं सानुर्नृपतेः पार्श्वमाययौ ॥१४२५॥
ज्यायसि भ्रातरीयामं तस्मिन्ग्रामे जही नृपः । दुःखोष्णैरश्रुभिः सार्धं वैरिव्यापातसाध्वसम् ॥१४२६॥
महत्तमोनन्तसूनुरानन्दस्तत्र वासरे । लोचनोड्डारकग्रामे डामरैः प्रचलन्हतः ॥१४२७॥
तज्जन्मकुल्यदण्डादिदुःसहायासकारणाम् । स विपत्पतितो नाभूत्कस्यापि करुणावहः ॥१४२८॥
भासाभिधः सुज्जिभृत्यो लोकपुण्यात्पलायितः । भ्रान्तोवन्तिपुरं विक्षदवन्तिस्वामिनोङ्गनम् ॥१४२९॥
1430 कम्पनोद्ग्राहकः[1] क्षेमानन्दः स च तदन्तरे । अमर्षणैरवेष्टयेतां[2] डामरैर्होलडोद्भवैः ॥१४३०॥
इन्दुराजोपि सेनानीः कुलराजकुलोद्भवः । टिक्कं तद्दृष्टितो ध्यानोड्डारे[1] व्याजादशिश्रियत् ॥१४३१॥
पिञ्छदेवादयोन्येपि बहवः सैन्यनायकाः । अतिष्ठन्क्रमराज्यान्तर्डामरैः कृतवेष्टनाः ॥१४३२॥
पाते वनस्पतेः शाखा इव तत्क्रीडविच्युताः । इत्थं हताः क्षताधास्तत्र[1] तत्र नृपानुगाः ॥१४३३॥
निष्पादत्रा हिमप्लुष्टचरणा नग्नविग्रहाः । क्षुत्क्षामा बहवोभूवन्मार्गेषु गलितासवः ॥१४३४॥
1435 न व्यलोक्यत मार्गेषु तदा नगरगामिषु । पलालच्छन्नदेहेभ्यो मानुषेभ्यः परः क्वचित् ॥१४३५॥
घासं विलासवासस्त्वं तेपि चित्ररथादयः । निन्युर्यैरचिरेणैव महामात्यैर्भविष्यते ॥१४३६॥
द्वितीयेपि दिने रुद्धसंचाराः पक्षिणामपि । तुषारवर्षिणो मेघा न मुहूर्तं व्यरंसिषुः ॥१४३७॥
वनपूर्वाभिधग्रामस्थितस्य कटकाद्भटान् । भिक्षोर्निक्षिप्य धन्योथ सिंहदेवमशिश्रियत्[1] ॥१४३८॥
निशम्य कृतसत्कारं नृपं तदनुयायिनाम् । सर्वेपि भैक्षवास्तस्थुः सैनिका नगरोन्मुखाः ॥१४३९॥
1440 मन्दप्रतापे दायादे संग्रामावसरात्ततः । राज्यश्रतयो राजानमनुमन्तुं विनिर्ययुः ॥१४४०॥
परापातभयाच्छीतापाताच्च विवशैर्जनैः । न ता नेतुमशक्यन्त दूरस्थं पितृकाननम् ॥१४४१॥
चक्रिरे स्कन्दभवनोपान्ते देहांश्चिताग्निसात् । ते सत्वरं ततस्तासामदूरे राजसद्मनः ॥१४४२॥
राज्ञी चम्पोद्भवा देवलेखा तरललेखया । स्वसा सहाविशद्वह्निं रूपोल्लेखावधिर्विधेः ॥१४४३॥
गुणोज्ज्वला अज्जला —[1] मृता वल्लापुरोद्भवा । गग्गात्मजा राजलक्ष्मीरपि वह्नौ व्यलीयत ॥१४४४॥
1445 मत्वा हिमव्यपायान्तं राज्यरोधं निजप्रभोः । डामरा नवभूभर्तुर्हिमराजाभिधां व्यधुः ॥१४४५॥
ददर्श सौस्सलं मुण्डमथ भिक्षुरुपागतम् । गाढामर्षाभिसंदीप्तैर्दृक्पातैर्निर्दहन्निव ॥१४४६॥
कोष्ठेश्वरज्येष्ठपालादयस्तत्सत्क्रियोद्यताः । असहासन्नतां वैराद्व्रजता तेन वारिताः ॥१४४७॥
नगरं हिमवृष्टयन्ते स यियासुर्युयुत्सया । ताटस्थ्येनाहिताकूतान्भृत्याञ्ज्ञात्वाब्रवीद्वचः ॥१४४८॥
प्रसह्य प्राप्नुयां राज्यमिति पृथ्वीहरे सति । हते तु तस्मिन्दायादेविपन्नः[1] स्यां पतिर्भुवः ॥१४४९॥
1450 इत्यचिन्तयमेतत्तु दैवात्संजातमन्यथा । राज्यस्याशापि विरता हते प्रत्युत यद्रिपौ ॥१४५०॥
किं राज्येनाथ वा कृत्यं भोगमात्रोपयोगिना । जिगीषोरुचितं कस्य ममेवान्यस्य सेत्स्यति ॥१४५१॥
मुण्डं व्यपातयद्भूमौ यः पूर्वेषां पुरा मम । सिंहद्वारे मदीयेथ तन्मुण्डं वर्तते लुठत् ॥१४५२॥
दश मासान्मदाप्तानां सुखच्छेदं व्यधत्त यः । तद्दुःखं स तु मया दशाब्दाननुभावितः ॥१४५३॥

१४३०. 1) Doubtful emendation; A कोद्ग्राहक:—2) Emended with C; A °रवेष्टयेत. १४३१. 1) Emended; A °डारं. १४३३. 1) A क्षताश्चाश्चास्तत्र with diplography. १४३८. 1) Emended; A °शिश्रयत्. १४४१. 1) Thus A1; corr. by later hand into ताभेतु°. १४४४. 1) One *akshara* wanting, the *lacuna* not indicated in A; C supplements सा. १४४९. 1) Emended; A विपन्नो; C °दायादे विपन्नः

एवं विमूढकर्तव्यतया नेच्छाम्यनश्वताम् । उपशाम्यन्मनस्तापः सुस्थित्वा शेषमायुषः ॥१४५४॥
इत्याद्युक्त्वा गलच्छिकाभ्यर्णे तं प्रणतं व्यधात् । प्रीत्या स हेमघटिकश्वेतच्छत्रादिभाजनम् ॥१४५५॥
तद्विलम्बेन राज्याशापिशाच्योदितया पुनः । गृहीतोऽभ्येत्य शीतार्तैस्तस्यान्तर्विचिन्तयन् ॥१४५६॥
अत्यन्तानुचितं याच्यत्वबन्धैः संविभिदुभिः । रक्षितं रक्षिणो न्यस्य हतक्ष्माभृत्कलेवरम् ॥१४५७॥
विपक्षाश्रयणेऽप्यस्मिन्स्वामिनोऽन्ते किमीदृशी । दशा शारीरस्येत्यन्तः कृतघ्नत्वेन चिन्तयन् ॥१४५८॥
दिदृक्षाध्यागतः सज्जकाख्यो नगरशस्त्रभृत् । आयातो बाहुकं गोमृत्युर्जित्वाभिसाव्यधात् ॥१४५९॥तिलकम्॥
स चतुर्नवताद्वर्षादारभ्यासादितच्छलैः । मृतैरधिष्ठितस्तिष्ठन्प्रजासंहारकार्यभूत् ॥१४६०॥
देवताधिष्ठिताविष्टदेहिवाक्यादिति श्रुतिः । भावितद्भुतसंवादजनितप्रत्ययोदयी ॥१४६१॥
मदीयामन्यथात्वेन छेत्ता भ्रमयिता च यः । तन्मुण्डस्यास्य स पुमांल्लब्धः क्षमो मृतस्तथा ॥१४६२॥तिलकम्॥
भिक्षुः कापुरुषाचारहतौचित्यो व्यसर्जयत् । प्राधण्यख्यातये मुण्डमथ राजपुरीं रिपोः ॥१४६३॥
उच्छलात्मजया तत्र देव्या सौभाग्यलेखया । नेतृम्पितृव्यमुण्डस्य जिघांसन्त्या निजानुगैः ॥१४६४॥
राजपुर्यामाकुलत्वं नीतायामाससाद तत् । तद्भर्तुः सोमपालस्य दूरस्थस्यान्तिकं चिरात् ॥१४६५॥युग्मम्॥
आदीनत्वं मधुलिप्स्यापाध्वधर्मादिकर्मसु । तिरश्च इव शोच्यस्य नेयबुद्धेः खशप्रभोः ॥१४६६॥
सभ्यैरुपायवत्तं तत्र कर्तव्यं परिचिन्तितम् । स्वोचितं व्यञ्जितौचित्यामौचित्यं निरवग्रहैः ॥१४६७॥
नागपालस्तु सौभ्रात्रं लब्ध्वा भ्रातुः स्थितोऽन्तिके । सेहे मुण्डावशेषस्य नोपकर्तुर्विमाननाम् ॥१४६८॥
क्रूरैर्विदर्शितोऽप्यन्ते कश्मीरेभ्यः पराभवम् । विशङ्क्योचुः सर्वथेदं सत्कार्यं वः शिरः प्रभोः ॥१४६९॥
क्रियते येन नियतेरन्यथात्वं सनाथताम् । विनिहत्य हरेर्दृष्टाः कुर्वन्तो यत्र जम्बुकाः ॥१४७०॥
तद्गोपालपुरे कालागुरुचन्दनदारुभिः । काष्ठैर्निन्द्यं शिरो निन्ये वीतिहोत्रेण शत्रुभिः ॥१४७१॥
यथा प्राप्तिभ्रंशा धरणिपतिभावस्य विविधा यथा ह्रासोल्लासा अपि समरसीमासु बहुशः ।
यथा तच्छीर्षेऽस्यसमविनिपातानुभवनं तथा दृष्टस्तस्य प्रमयसमयेऽप्यद्भुततरः ॥१४७२॥
कस्यापरस्य तस्येव लेभिरे वह्निसत्क्रियाम् । एकत्रेतरगात्राणि मुण्डमन्यत्र मण्डले ॥१४७३॥
टिक्कादयोऽथ नगरं यान्तोऽवन्तिपुराध्वना । तत्र हन्तुं व्यलम्बन्त भासादीन्पूर्ववेष्टितान् ॥१४७४॥
युद्धाग्न्युपलपातप्रहारच्छेदकारिभिः । न ते जेतुमशक्यन्त तैः प्रयत्नपरैरपि ॥१४७५॥
स्थितैर्महाश्मप्राकारगुप्ते सुरगृहाङ्गने । तैर्दैन्यमासमास्ते स्थातुं गन्तुं वा नाभवन्क्षमाः ॥१४७६॥
एवं प्राप्तविलम्बेषु तेषु लब्धान्तरः सुधीः । स्वीचकार प्रदानेन खडूवीडामरान्नृपः ॥१४७७॥
गृहीतमौल्येन तेषां मुञ्जिः प्रायोजि सत्वरम् । तेन भासादिमोक्षाय पञ्चचन्द्रादिभिः समम् ॥१४७८॥
प्रापावन्तिपुरं यावत्स तावत्तदध्वगान् । क्रुध्यात्मजादीनालोक्य भग्नं टिक्कादयो ययुः ॥१४७९॥
देवागाराद्विनिर्याता भासाद्यास्ते च विद्विषाम् । भग्नानामनुगान्हत्वा मुञ्जेरन्तिकमाययुः ॥१४८०॥

---

१४५६. 1) Emended with C; A शीर्तार्तै°. १४५९. 1) Thus A; cf. बाहुकं viii. 1846. — 2) A₁ writes here ३ instead of तिलकम्. १४६२. 1) A₁ writes here ३ instead of तिलकम्. १४६५. 1) A₁ writes here २ instead of युग्मम्. १४६६. 1) Emended; A आर्तीनात्व. १४७०. 1) Emended with C; A नै. १४७३. 1) Emended with C; A एकत्रेतरगा°.

लब्धप्रतापे नगरं प्रविष्टे कम्पनापतौ । आययाविन्दुराजोपि टिक्कं संत्यज्य सानुगः ॥१४८१॥
चक्रे चित्ररथश्रीवभासादीनपि भूपतिः । पादाग्रहारखेर्यादिकर्मस्थानाधिकारिणः ॥१४८२॥
यथापूर्वमधीकारानजहत्सुज्जिरप्यभूत् । प्रतीहारमुखप्रेक्षी का कथेतरमन्त्रिणाम् ॥१४८३॥
प्रतीहारोपि निःसीमडामरग्रामसंमतः । तन्नेदचक्रिकां कुर्वन्नगाद्ग्राह्यः प्रतीक्ष्यताम् ॥१४८४॥
1485 स नासीद्बृहद्व्यूहे कोपि तत्प्रेरणेन यः । नाशिश्रियन्नृपं नो वा बभूवाभ्यर्णोन्मुखः ॥१४८५॥
निह्नुतेदित्यसद्दर्पस्फूर्तिर्धूर्तो महीपतिः । आहारमप्यनासाद्य तन्मतं न न्यषेवत ॥१४८६॥
इत्थं नगरमाक्रान्तलब्धपादप्रसारिकः । सोवर्तिष्ट समासन्नफलं कन्दलयन्नयम् ॥१४८७॥
संघट्याखिलान्भिक्षुर्डामरान्विजयेश्वरे । अथाध्यष्ठाद्विधिष्ठानं जिघृक्षुः शिशिरात्यये ॥१४८८॥
अदृष्टपूर्वं स्वचमूचक्रैक्यं वीक्ष्य डामराः । भिक्षोर्हस्तगतं राज्यं मत्वाशङ्किषताथ ते ॥१४८९॥
1490 एकैकस्यैव धीशौर्यमित्रामित्रादि दृष्टवान् । नोत्तिष्ठेत्प्राप्तराज्यः किमास्कन्देषु गृहान्तरात् ॥१४९०॥
इति संमन्त्र्य ते राज्यं सोमपालाय दित्सवः । दूतान्निगूढं प्राहिण्वन्सोपि दूतं व्यसर्जयत् ॥१४९१॥
आकाराचारवैकृत्यैः पशुतुल्यस्य तस्य तैः । राज्यभोगा अभङ्गा नो भविष्यन्तीत्यचिन्त्यत ॥१४९२॥
भोगलोभोज्झितौचित्यदस्युसंघचिकीर्षितम् । देशोत्र पापात्पापीयो दैवाच्च समपादि तत् ॥१४९३॥
दास्येप्ययोग्यो यो राज्ये स इत्यास्तां प्रपाल्यतः । शक्येत पातुं देशोयं किमीषदपि तादृशा ॥१४९४॥
शालीन्पलालपुरुषोवति यः कृशानुदग्धाननघटकपेटकभीतिदानैः ।
1495 त्रातुं स काननतरून्विहितो विदध्यात्किं तत्र भञ्जनकृतां वनकुञ्जराणाम् ॥१४९५॥
भिक्षोर्नैदिष्ठतां दिष्टवृद्धिव्याजात्ततो भजन् । तद्दूतो डामरान्गूढं भीविदानोद्यतान्व्यधात् ॥१४९६॥
वैशाखेथ कृतारम्भस्तदा संभावितत्वरः । निर्गत्य नगरात्सुज्जिर्गम्भीरातीरमाययौ ॥१४९७॥
तस्याभियोगः प्राप्योभूद्योद्धुं यत्समवायिनः । एकाकी तावतो वीरानूरीकृत्य स निर्ययौ ॥१४९८॥
अन्तःपाते साहसानां नाद्भुतं तद्विधेर्वशात् । जीयते लक्षमेकेन लक्षेणैकोथ वा युधि ॥१४९९॥
1500 पारं तरीतुं निःसेतोः सरितोपारयन्नसौ । पारे परस्मिन्नहितानपश्यच्छरवर्षिणः ॥१५००॥
द्वित्रा निशाः स ते चासंस्तस्याः सिन्धोस्तटद्वये । रुद्धाः संनाहिनोन्योन्यरन्ध्रावेक्षणदीक्षिताः ॥१५०१॥
अथावन्तिपुरान्नौभिरानीताभिरबन्धयत् । सेतुं सांध्योत्तरत्सुज्जिरारुह्य तरणीं स्वयम् ॥१५०२॥
तरन्तमेव तं दृष्ट्वा योधैः कतिपयैः समम् । द्विषच्चमूर्मरुल्लोला द्रुमालीवाभवच्चला ॥१५०३॥
दृष्टं मुहूर्तादेतावदारूढः स च यत्तटम् । बद्धश्च सेतुस्तीर्णाश्च योधा भग्नाश्च विद्विषः ॥१५०४॥
1505 न खड्गी न हयारोहो नापि शूली न चापभृत् । व्यावृत्य प्रेक्षितुं कश्चिदशकद्विद्रुताद्बलात् ॥१५०५॥
निबद्धवध्रशैथिल्याल्लोलपल्ययने हये । कोष्ठेश्वरस्याश्ववारा व्यलम्बन्तान्तरे क्षणम् ॥१५०६॥
निर्यन्त्र्य तेपि पर्याणं सुज्जौ पश्चात्प्रधाविते । वात्योद्धूतं रजश्चक्रमिव क्षिप्रं तिरोदधुः ॥१५०७॥
हतलुण्ठितविध्वस्तध्वजिनीका विरोधिनः । ध्यानोड्डारादिषु ग्रामेष्वमिलन्खण्डशो गताः ॥१५०८॥

---

१४८५. [1]) Emended with C; A नाशिश्रयन्नृपं. १४८८. [1]) Emended; A भिक्षून्वा°.—[2]) Emended; A अयाधिष्ठ°; C अयातिष्ठ°. १४९०. [1]) Conjectural reading; A एकैकस्योपधीशौर्य°. १४९३. [1]) Emended; पापीये. १५०१. [1]) Emended with C; A °वीक्षण°. १५०५. [1]) Emended with C; A प्रेक्षितुः. १५०७. [1]) Emended; A निर्बन्ध्य; C निर्यत्य.

विजयेशागमं तीर्त्वा वितस्तासेतुमग्रगः[1] । भासोऽपि दस्यून्विदधे पलायनपरायणान् ||१५०९||
उषित्वा विजयक्षेत्रे तदान्येद्युरुपागते । कम्पनेशे[1] युयुत्सुस्त्यक्त्वा व्यामोहं विरोधिनः ||१५१०|| 1510
तत्र स्थित्वा दिनैः कैश्चित्स देवसरसोन्मुखः । शिबिरे भेदनिर्यातैरेत्य टिक्कस्य गोत्रिभिः ||१५११||
जयराजयशोराजौ तन्मुख्यौ भोजकात्मजौ । प्रविश्य देवसरसं व्यधाहिक्कोपवेशने ||१५१२||
यदुर्धिकटसंघातास्तस्मिन्पथात्प्रधाविते । भिक्ष्वादयः सूरपुरं स्वोर्वीं कोष्ठेश्वरादयः ||१५१३||
गतो महाभये सोमपालदूतः पलायितः । दास्याः सुतेन प्रहितः कुत्रास्मीति प्रभोर्व्यधात् ||१५१४||
स हि तादृग्ग्रहारम्भक्षोभसाध्योऽप्यतीक्ष्णताम् । तस्य सिंहीस्पृहाक्रान्तगोमायुवदमन्यत ||१५१५|| 1515
प्रमादात्स्वामिनो राज्यं चिरं नष्टं मितैर्दिनैः । सुडिज्जः प्रसाध्य प्रददावेवं स स्वामिसूनवे ||१५१६||
शमालादीनपि व्यूढान्दानोपायेन डामरान् । पौरांश्च भिक्षाश्रयिणो राजाभ्येतुं प्रचक्रमे ||१५१७||
राज्ञः परीक्ष्य सामर्थ्यमथ कुर्मो यथोचितम् । इति सर्वाभिसारेण तं संमन्त्र्य रणं दधुः ||१५१८||
रजोजयमिकालक्ष्यभटीघनटताण्डवः । दामोदरेऽभूत्संग्रामः स वीरग्रामघस्मरः ||१५१९||
कोष्ठेश्वरवशं यातं रक्षता पितरं क्षतम् । लब्धाः सहजपालेन श्लाघाः प्रकृतिभिः समम् ||१५२०|| 1520
भ्रमत्तत्राविशेषोऽभूद्राज्ञो भिक्षाचरस्य च । भिक्षुस्त्वहन्यसंवेद्यं विवेदात्मपराजयम् ||१५२१||
ततः प्रभृति यः प्रातः स न सायमदृश्यत । योद्धा वा न परेद्युः स सैनिको भैक्षवे बले ||१५२२||
एवं त्यक्त्वा परान्पौरडामरेषु नृपान्तिकम् । प्रयातेषु लाभसत्कारानुचितान्प्राप्नुवत्सु च ||१५२३||
काप्यहंपूर्विकोत्तस्थौ मनुजेश्वरकोष्ठयोः । प्रयातुं पार्थिवाभ्यर्णं लाभसौख्याभिलाषिणोः ||१५२४||
ज्ञात्वाथ तत्काकरुहाहृतस्वपरिच्छदः । देशान्तरोन्मुखो भिक्षुराषाढे मास्यथाचलत् ||१५२५|| 1525
अनुयाद्भिः स दाक्षिण्यशेषाद्विहितसान्त्वनैः । तदावैर्डामरैः क्रुध्यन्न निरोद्धुमपार्यत ||१५२६||
अकरोत्स्वैरिणीतनुतया शीलबहिष्कृतः । अतिरूपेषु दारेषु तस्य कोष्ठेश्वरः स्पृहाम् ||१५२७||
सटां हरेः फणारत्नमहेर्ज्वालां हविर्भुजः । बालां च तस्य संस्प्रष्टुं[1] कोऽमशान्तस्य शक्नुयात् ||१५२८||
समं सोऽस्सलिना बद्धसंधिराभयकाङ्क्षिणः । सोमपालः स्वविषये प्रादात्तस्य प्रतिश्रयम् ||१५२९||
उद्वेजितः प्राणहरैः प्रयत्नैस्तस्य सर्वतः । तद्देशाद्[1]दुर्गममहीसीमान्तां सुल्हरीं ययौ ||१५३०|| 1530
त्रिगर्तेषु रथा शीलं चम्पायां मद्रमण्डले । त्यागो दार्वाभिसारेषु मैत्री नामस्थधर्मिणाम् ||१५३१||
पीडयेत्यक्कमीर्भूभृद्रक्ष्ये त्वयि डामरान् । त्वामेवाभ्यर्थ्य राजानं ततः कुर्युः क्रमेण ते ||१५३२||
क्ष्मां तद्राजामोर्थयितुं सांप्रतं नरवर्मणः । मन्त्रिभिर्युक्तमित्युक्तमपि मन्त्रं न चाग्रहीत् ||१५३३||
त्रसाल्पपरिवारोऽस्मद्गृह इत्यथ गृह्णतः । अभ्युत्प्रार्थनां तस्य भृत्याः पार्श्वादथाचलन् ||१५३४||
प्रावर्तताथ नगरे विप्राग्निर्विभ्रमोज्ज्वलैः । सुलभसुलभे काले वरयात्रेव डामरैः ||१५३५|| 1535
वीक्ष्याभ्यक्षचतुरंगैरेकैकं पार्थिवाधिकम् । सुस्सलक्ष्मापतेर्धैर्ये भेजुषे तुष्टुवुर्जनाः ||१५३६||
औदार्याकारतारुण्यवेषसौन्दर्यमन्दिरम् । कोष्ठेश्वरोऽधिकं स्त्रीणां प्रययौ प्रेक्षणीयताम् ||१५३७||

---

१५०९. [1]) Thus corr. by A₁ from °ग्रमग:. १५१०. [1]) Emended; A कम्पनेशं. १५११. [1]) Emended with C; A °जयमिका लक्ष्य°. १५२८. [1]) Emended with C; A संस्पृष्टुं; cf. viii. 1198. १५३०. [1]) Emended with C; A तद्देश°.

प्रशान्तविप्लवे देशे यथापुरमबाधताम् । चिराद्भूरिलवन्यौघतूर्यघोषो[1] दिवानिशम् ॥१५३८॥
क्षीराद्या लक्ष्मकेणापि सर्वे मडवराज्यतः । आनीताः पार्थिवाभ्यर्णं सैन्यार्णवभयंकराः ॥१५३९॥
1540 अपि भूपालवाल्लभ्यादभूद्राजोपजीविनाम् । प्रतीहारगृहद्वारप्रवेशो बहुमानकृत् ॥१५४०॥
लवन्यलुण्ठितग्रामतया दुर्भिक्षदुःसहः । व्ययोत्तरङ्गः कालोभूत्स राज्ञो धनवभियः ॥१५४१॥
डामरेभ्यो नृपः पारासं[1]गृह्णन्कृतवेतनः । निनायाभ्यन्तरं वृद्धिं बाह्यं चापचयं जनम् ॥१५४२॥
तिळ्यवैश्यार्घदेवाद्या[1] ज्ञातयो जनकद्रुहाम् । राजद्रोहोर्भितां राज्ञा विपत्तिमनुभाविताः ॥१५४३॥
मासैश्चतुर्भिः स पितृप्रमयाहादनन्तरम् । अनन्यशासनं राष्ट्रं स्वमेव समपादयत् ॥१५४४॥
1545 निर्धाम[1] नगरं पौराः सर्वसामर्थ्यवर्जिताः । अनन्ते राष्ट्रमाकीर्णं डामरैः पार्थिवोपमैः ॥१५४५॥
बद्धमूलो नातिदूरे सर्वभारसहो रिपुः । सबाह्याभ्यन्तरा मन्त्रिसामन्ता वैरिसंश्रिताः ॥१५४६॥
मन्त्रोपदेशो[1] वृद्धस्य नैकस्यापि नृपास्पदे । अधर्मबहुलाः सर्वे भृत्या द्रोहैकवृत्तयः ॥१५४७॥
राज्यारम्भे बभूवेयं या सामग्र्यस्य भूपतेः । सा स्मर्तव्यान्तराज्ञातुं प्रत्युदन्तं विवेक्तृभिः ॥१५४८॥
प्रागप्रसङ्गात्तदिदं गुणग्रामोपवर्णनम् । वक्ष्यमाणं सुबहुशोऽप्यत्र लेशात्प्रदर्श्यते ॥१५४९॥
1550 पूर्वापरानुसंधानबन्ध्यैर्दृष्टान्त[1]वत्कथाः । नाद्भुतातिगभीराणां शक्या रचयितुं गुणाः ॥१५५०॥
प्रत्यक्षस्य गुणान्राज्ञो विचिन्वन्तो यथास्थितान् । अनीर्ष्यस्य भविष्यामो विवेकस्यानृणा वयम् ॥१५५१॥
स्थितस्य तत्त्वविज्ञाने नान्यस्य हि पटुर्जनः । अमानुषानुभावस्य राज्ञः किं पुनरीदृशः ॥१५५२॥
हितानां दाराणां सदृशसुखदुःखस्य सुहृदः कवेः सोल्लेखस्य प्रियसकललोकस्य नृपतेः ।
स्थितानां कोप्यत्र व्यवहितविवेकः स्वकुकृतैरसामान्यं ज्ञातुं सुभगमनुभावं न कुशलः ॥१५५३॥
भवेत्प्राप्तप्रसरणा परिणामेव वा मतिः । कथं सर्वस्याद्भुतायां निष्ठायां गुणदोषयोः ॥१५५४॥
1555 सन्त्येवास्यापि विषमाः स्वभावा दोषतां जनः । येषां विपाकभव्यत्वमजानन्गणयत्ययम् ॥१५५५॥
विकासः केषांचिन्नयनविषमैर्विद्युदुदयैः परेषामुन्नतिः श्रवणकटुभिर्दीर्घरसितैः ।
न चेष्टा काप्यन्योपकृतिपरिहीना जलमुचो जडो वर्षादन्यं गणयति गुणं नास्य तु जनः ॥१५५६॥
गुणांल्लोकोत्तराञ्शृण्वन्नस्यानुभवगोचरान् । भविता पूर्वभूपालकृत्ये सप्रत्ययो जनः ॥१५५७॥
अनुच्चलन्नपि स्थानाद्भ्रूभङ्गेन[1] चकार सः । विलोलांल्लोमकम्पेन दिङ्नाग इव भूधरान् ॥१५५८॥
विरुद्धग्राहिनीवृन्दा गूढं यद्भयसंभवम् । वहन्ति तापं भूपाला और्वाग्निमिव सिन्धवः ॥१५५९॥
1560 भूमिभृद्भ्रास्वतस्तस्य तेजसाप्यायितो गतः । पूर्वराजयशश्चन्द्रो भुवनेष्वप्रकाशताम् ॥१५६०॥
यो यस्तं पश्यति स्वात्मसंमुखं स स सर्वतः । जानात्ययत्नोल्लिखितं देवबिम्बमिवेश्वरम् ॥१५६१॥
स्थिरप्रसादो दत्ते यत्तदादत्ते न स क्वचित् । भयं पुनः प्रणमतां दत्तं हरति विद्विषाम् ॥१५६२॥
कृष्टासेः प्रतिबिम्बे स्वं हित्वा नान्योस्य संमुखः । नापरः प्रतिशब्दाद्वा गर्जतः प्रतिगर्जति ॥१५६३॥
तस्य नातिशितं कोपे प्रसादे निशितं पुनः । धत्ते तीक्ष्णैकधारस्य तरवारेस्तुलां वचः ॥१५६४॥

१५३८. ¹) Doubtful emendation; A °घोषा; G °विश्वो वैशो and °घोषाविता°. १५४२. ¹) Thus A; C पौरास्सं° १५४३. ¹) Cf. वृत्तो तिळकस्यार्घदेवतिळवैश्या° (A) viii. 1305. १५४५. ¹) Thus A₁; R C निर्यासन°, as apparently corr. by later hand in A. १५४७. ¹) Conjectural emendation; A मन्त्रोपदेशवृद्धस्य. १५५०. ¹) दृष्टान्त supplied by A₂ in space left by A₁. १५५८. ¹) Emended with C; A °भ्रूभङ्गेन.

तस्याकुजन्मनो नित्याम्लानलक्ष्मीविकासिनः । प्रभवन्त्याश्रिताः कल्पशाखिनः पल्लवा इव ॥१५६५॥ 1565

दाक्षि गाम्भीर्यदुर्लक्ष्यमाहात्म्यप्रभविष्णुताम् । विवेद मन्त्रिणां लोकः सिषेवे तांश्च सर्वतः ॥१५६६॥

मल्लकस्तु प्रतीहारो न विवेदेन्यमन्त्रिणाम् । पार्श्वद्रुमाणामेवाश्वत्थस्तम्भ इवोन्नतिम् ॥१५६७॥

तस्योत्पाटयतः सर्वांस्तृणानीवावहेलया । स्फूर्जज्जनकसिंहोभूदशक्योन्मूलनः परम् ॥१५६८॥

आ बाल्यात्संस्तुतो राज्ञः स कृत्स्नव्यवहारवित् । अभूत्त्यस्तरुणीभूततनयो व्याप्त सर्वतः ॥१५६९॥

अद्वैधं यौनसंबन्धादिच्छतस्तत्सुतो महात् । कुङ्कुभिधस्तस्य ततः कृतावज्ञोतनोत्त्रपाम् ॥१५७०॥ 1570

रन्ध्रान्वेषी स तद्दोषानुपजापैः क्षणे क्षणे । सतनौ जनके यथारूपं द्वेषमजिग्रहत् ॥१५७१॥

राज्ञस्तुल्यवयःस्यौ हि जननीगाढसंस्तवात् । राज्यकाले हि सोल्लेखावास्तां तदवकाशदौ ॥१५७२॥

तुरंगयोग्योपस्कारयानाहारादि राजवत् । अकालशावकुरुतां राजधान्यन्तरेव तौ ॥१५७३॥

सह स्ववृद्धैः समशीर्षिका प्रभोर्न युज्यते प्राप्तसमुन्नतेः क्वचित् ।
भिन्नोन्नतैर्दर्दुरवृन्दलङ्घनं सरोजषण्डस्य महाविडम्बना ॥१५७४॥

तद्विस्तिलाभसंरूढपैशुनालेख्यकल्पनाः । तद्धर्मेष्वखिले चक्रुस्तद्द्विषः कलुषं नृपम् ॥१५७५॥ 1575

अथ राजा विजयिनं सत्कर्तुं कम्पनापतिम् । कृतज्ञः श्रावणे मासि जगाम विजयेश्वरम् ॥१५७६॥

अत्रान्तरे पिञ्छदेवादागच्छन्गिरिगह्वरे । प्राप शूरपुरद्रङ्गाधीश्वरादुत्पलो वधम् ॥१५७७॥

पुञ्छाणनाडादुत्पिञ्छकृतये पुनरागतः । द्रङ्गाधिपेन गुटिकान्वेषिणा स व्यवाप्यत ॥१५७८॥

क्षितौ निपतितः पार्श्वप्राप्तमेकं द्विषद्भटम् । मुमूर्षुर्विशिखाविद्धजानुमर्मापि सोवधीत् ॥१५७९॥

प्रत्यावृत्तस्य सत्कृत्य कम्पनेशं महीपतेः । द्वार्येवन्तिपुरस्थस्य[1] द्रङ्गेशोरिशिरो व्यधात् ॥१५८०॥ 1580

स दृढग्राहिकामुष्टिरसुहृन्मुण्डमुद्गरः । चक्रे तस्य दृढामर्षशोकशङ्कुविपाटनम्[1] ॥१५८१॥

आयायामेव यात्रायां जातारातिक्षयो जनैः । स निःशेषयिताशेषकण्टकानामगण्यत ॥१५८२॥

तस्मिन्प्रविष्टे नगरं विद्रुताः केपि सागसः । प्रापुर्जनकसिंहाद्याः केपि कारागृहस्थितिम् ॥१५८३॥

कैश्चित्[1]पलायितैः शङ्कां माहिताः पृथिवीपतेः । ततः कोष्ठेश्वरमुखाः प्रातिलोम्यं प्रपेदिरे ॥१५८४॥

शमालां निर्गतः श्रीमान्कार्तिकेथ कृती नृपः । तत्र तत्रासुदङ्ग्रामं संग्रामोग्रमबाधत ॥१५८५॥ 1585

यत्र सुस्सलभूपाद्याः प्रापुर्भग्नप्रतापताम् । तं हाडिग्राममदहत्सुज्जिरूर्जितविक्रमः ॥१५८६॥

महीभुजा पीड्यमानैराहूतः कोष्ठकादिभिः । अथ भिक्षाचरो राज्यगृध्नुर्भूयोप्युपाययौ ॥१५८७॥

एकेनाह्ना योजनानि प्रोल्लङ्घ्य दश पञ्च च । शिलिकाकोट्टनामानं गिरिग्राममवाप सः ॥१५८८॥

क्षुत्पिपासाक्रमारातिभीतिमार्गश्रमोद्भवम् । क्लेशं नाजीगणन्मानी धावितः स जिगीषया ॥१५८९॥

कार्यमायाति वैमुख्यं जिगीषोर्विधुरे विधौ । प्रस्थितस्य पुरोवाते रथस्येव ध्वजांशुकम् ॥१५९०॥ 1590

आरम्भमात्रमपि कस्यचिदेव सिद्ध्यै कश्चित्प्रयत्नपरमोप्यफलप्रयासः ।
मन्थाद्रिणामृतमवाप्युदधेर्मुहूर्तात्सर्किं चिराद्विदधता न हिमाद्रिजेन ॥१५९१॥

---

१५७१. ¹) Emended; A सूपी. १५८०. ¹) Emended with C; A °पुरस्थस्य. १५८१. ¹) Emended; A विपाटनम्.
१५८४. ¹) Emended with C; A कैश्चित्त्व°.

भ्रष्टा सरित्स्ववसतेर्जलधिप्रवेशे वेलोर्मिवेल्लनवशेन विवर्तमाना ।
मिथ्यैव वच्छति पिर्थ पुनरङ्गनेति नोत्थानमस्ति तु विधिव्यपरोपितानाम् ॥१५९२॥
तस्य तावन्महायत्नकठोरस्योदयक्षणे । सिद्धेर्विबन्धो विधिना विधुरेण व्यधीयत ॥१५९३॥
आयातं तमबुद्ध्वा तु[1] तस्मिन्नेव क्षणेऽभवत् । पृथ्वीहरानुजः प्राप्तभङ्गः कृताञ्जलिर्नृपम् ॥१५९४॥
1595 कोष्ठेश्वरः स चावेत्य संग्रामं तमनिष्ठताम् । कृत्याक्षमौ ततः सर्पाविव मन्त्रनियन्त्रितौ ॥१५९५॥
ताभ्यां स्थानेन सोऽन्यस्मिंस्त्याजितोऽथ परिभ्रमम् । कार्कोटद्रङ्गमार्गेण निर्गतः सुल्हरीं ययौ ॥१५९६॥
आसीच्च तत्र प्रोचण्डदर्पकण्डूलदोर्द्रुमः । ऊष्मायमाणः कश्मीराक्रान्तिसंततचिन्तया ॥१५९७॥
उदीपसलिलस्येव तस्य रन्ध्रगवेषिणः । पुरं प्रविष्टो राजापि प्रतीकारमचिन्तयत् ॥१५९८॥
अद्वितीयस्त्वमात्येषु प्रतीहारो मदोन्मताम् । सुज्जेरसहमानोऽभूच्छलान्वेषणतत्परः ॥१५९९॥
1600 आययावथ विस्रम्भावष्टम्भं यत्नतः प्रभोः । धन्यानुजः पूतमूर्तिर्जाह्नवीजलमज्जनात् ॥१६००॥
तदाद्याः संस्तुता राज्ञश्चिरसंभाविताास्ततः । अनाप्नुवन्तोऽधीकारान्पर्यतप्यन्त चिन्तया ॥१६०१॥
कुर्वाणे कार्यतस्तस्मिन्भरं पित्र्येषु मन्त्रिषु । कालप्रतीक्षाक्षमतामूहुस्ते गहनाशयाः ॥१६०२॥
प्रतीहारस्तु दुर्लक्ष्यसुज्जिनिर्लोठनोद्यतः । अप्रियानपि तान्प्रीत्या जग्राहोपयोगिनः ॥१६०३॥
व्यतीतेष्वथ मासेषु केषुचिद्दैवयोगतः । अकस्मादभवद्भूभृत्स्फीतलूतामयातुरः ॥१६०४॥
1605 विस्फोटशोफातीसारवह्निमान्द्याद्युपद्रवैः । संदिग्धाभ्युदये तस्मिन्देशः पर्याकुलोऽभवत् ॥१६०५॥
इत्थं स्थितः कुलस्यैकभर्तुः स्वामी बली रिपुः । तत्पक्षा डामरा राष्ट्रं क्षुब्धमेव व्यचिन्तयन् ॥१६०६॥
आयत्यां च तदात्वे च हितकृत्यं विचारयन् । राज्ञः श्रीगुणलेखाया आत्मैकसुतं शिशुम् ॥१६०७॥
पञ्चाब्ददेश्यं पर्माण्डि सुज्जिर्भूमिपतिं तदा । चिकीर्षुर्मन्त्रयामास मातुलेनास्य गार्गिणा[1] ॥१६०८॥
इत्थं भूतस्य बुभुक्षुः ससूनुः सुज्जिरत्र ते । पञ्चचन्द्रादिभिः सार्धं युक्त्या मन्त्रयतेऽनिशम् ॥१६०९॥
1610 लब्धरन्ध्रः प्रतीहारो धन्याद्याश्च तदीरिताः । इत्यबोचंस्ततो भूपं स तथेत्यग्रहीच्च तत् ॥१६१०॥
पूर्वप्रजासृजं[1] इवाद्भुतवस्तुतत्त्वव्यावर्णनेन[2] कुतुकं जनयन्ति तज्ज्ञाः ।
बाला इवाल्पमतिहार्यधियश्च सन्ति प्रायो नृपा नियमशून्यमनोनुभावाः ॥१६११॥
शौचस्थाने कृतवसतिभिः स्त्रीव्यवायालये वा निःशस्त्रो यश्छलनकुशलैर्मानसं संप्रविश्य ।
नीतो भूतैरिव विवशतां निर्भरं नर्मचेटैर्भद्रं भूपालकथमिव ततः स्यादवष्टब्धचेष्टात् ॥१६१२॥
निर्हेतु प्रहसन्विटः प्रविशति क्षोणीपतेरन्तिकं प्रीत्युत्फुल्लदृगेष किं किमिति तं पृच्छत्यनच्छाशयम् ।
ब्रूते किंचिदसौ कथानथ कथन्सर्वंकषं मानिनां मानप्राणगुणेषु यत्सरभसं दम्भोलिपातायते ॥१६१३॥
सविभ्रमगतागतः किमपि भाषमाणः श्रुतौ प्रभोर्वलितलोचनं जगदवज्ञयालोकयन् ।
निजस्य मुखविक्रियाप्रणयताडनाद्यैर्विदन्ननुग्रहमिवाहितं नृपतिवल्लभो दुःसहः ॥१६१४॥
1615 अपि जातु स दृश्येत निःसंक्षोभमतिर्नृपः । यो यन्त्रपुत्रक इव व्यक्तं धूर्तैर्न नर्त्यते ॥१६१५॥

१५९४. [1]) Here one *akshara* is wanting in A; तु supplemented with C. १६०२. [1]) Emended; A °क्षमतां मुहुस्ते. १६०३. [1]) Thus corr. by A, from कुलेस्वै°. १६०८. [1]) Emended; A गर्गिणा. १६११. [1]) Emended; A °सृजः.— [2]) Emended with C; A °तत्त्वं व्या°.

यतो भृत्यान्तराशाभाग्जातः सर्वस्वसंक्षयः । तत्प्रमादुष्कृती राज्ञां हा धिक्कष्टापि शाम्यति ॥१६१६॥
सुज्जिरारिष्वमन्येद्युमार्गच्छन्पूर्ववत्प्रभोः । विस्वस्तरक्षिणः पश्यन्नविश्वासमशिक्षत ॥१६१७॥
दाक्षिण्यं वामतां यातमाशये प्रतिबिम्बितम् । दर्पणस्येव राज्ञः स विभाव्याभूत्पराङ्मुखः ॥१६१८॥
तस्मिन्राजगृहे खेदान्मन्दीकृतगतागते । नृपतेस्तद्गतां प्रीतिं निःशेषां जह्रिरे खलाः[1] ॥१६१९॥
भृत्यः सुज्जेश्चिरयोग्यास्थानहिजभूः शठः । प्रातिलोम्यावहैर्भर्तुर्मन्त्रैरासीच्छ्रियोऽन्तकृत् ॥१६२०॥ 1620
नीरोगे राज्ञि दृष्टः स दिदृक्षुर्नृपास्पदे । वस्त्रवर्षी विनिर्याय प्रार्थनार्थी गृहान्ययौ ॥१६२१॥
न तं प्रासादयद्राजा विशालबलवाहनः । आक्रम्योऽसौ[1] कथं मे[2] स्यादित्युपायं व्यचिन्तयत् ॥१६२२॥
त्यज्येत हृतकार्योऽसौ निराशैरनुजीविभिः । मत्वेति तदधीकारानन्येभ्यस्तूर्णमार्पयत् ॥१६२३॥
राजस्थानात्मजं धन्यमुदयं[1] कम्पनादपि । अजिमहत्तरपतिः खेरीकार्ये च रिल्हणम् ॥१६२४॥
हृताधिकारे प्रव्यक्तवैकृते नृपतौ ततः । अल्पावशेषानुचरः सुज्जिरासीद्विशङ्कितः[1] ॥१६२५॥ 1625
विमानितः पुराद्गन्तुं यात्रामुद्दिश्य मानवान् । सोथ सुस्सलभूभर्तुरस्थीन्यादाय निर्ययौ ॥१६२६॥
श्रीस्थुकयात्प्रार्थनाकाङ्क्षी राजधान्यन्तिके न सः । निर्गच्छन्राजपुरुषैर्न राज्ञा चान्वरुध्यत ॥१६२७॥
तन्निर्वासमगर्वस्य स्थापनायानुयायिके । प्रतीहारस्तस्य गुप्त्यै कोशाद्रेः स्वात्मजं व्यधात् ॥१६२८॥
निग्रहानुग्रहावस्मदायत्ताविति रक्षिणम् । पुत्रं प्रादाल्लक्ष्मको मे[1] इति ध्यायन्स विव्यथे ॥१६२९॥
निवृत्तो लक्ष्मको द्वारात्पर्णोत्सं शनकैर्गतः । अवारोपयद्द्रोही भागिकं लोहरान्बलात् ॥१६३०॥ 1630
प्रतीहारविशिष्टाय धात्रेयाय महीभुजः । प्रेमाभिधाय तत्कोट्टाधीकारं च समार्पयत्[1] ॥१६३१॥
उत्खाय लोहरत्यागाच्छङ्काशङ्कु महीपतेः । स भीष्मविषमं कालं राजपुर्यामलङ्घयत् ॥१६३२॥
अमात्यकन्दुकव्रातपातनोत्पातनक्षमः[1] । आयत्तडामरः प्राप प्रथां कामपि लक्ष्मकः ॥१६३३॥
द्वारेथाकारयत्सुज्जिपनिमन्त्रविधित्सया । कृष्यमाणो राजवंशपौरुषं राजमङ्गलम् ॥१६३४॥
अनन्यदेशजः सुज्जेः[1] शूरो मत्कोश[2]पोषितः । कीर्तिमेव हरेदध्या[3]वितीर्ष्याकलुषो हि सः ॥१६३५॥ 1635
खड्गमात्रसहायः स क्षुण्णः पर्यटितुं पथि । निःस्वखोपदास्यश्च तेन कार्यार्पणात्कृतः ॥१६३६॥
कर्तुं पदव्यां योग्यानामयोग्यान्प्रभवेत्स कः । तेषां गुणैस्तान्संयोक्तुं न शक्यं कारणैरपि ॥१६३७॥
पदे श्रीखण्डस्यानुचितमुचिते वर्त्मणि निजे वृषाङ्कः प्रक्षेप्तुं प्रभवति चिताभस्म रभसात् ।
न तस्स्वेच्छायत्तत्रिजगदुदयापायघटनोऽप्यसौ तद्गन्धेन स्फुटमिह पटुः[1] संघटयितुम् ॥१६३८॥
तस्मिन्सुज्जिप्रतिस्पर्धाप्रौढे वोढुमक्षमे । दूतानसृजदानेतुं सञ्जपालं दिगन्तरात् ॥१६३९॥
निर्वैरे मण्डले द्वेष्योऽप्यवापत्कार्यगौरवात् । कोष्ठेश्वरो नरपतेर्नितरामन्तरङ्गताम् ॥१६४०॥ 1640
प्रीतिदायैस्तोष्यमाणस्तैस्तैस्तुष्टेन भूभुजा । विस्रब्धो नगरे तस्थौ सोऽपि लूतामयातुरः ॥१६४१॥

---

१६१९. [1]) Emended; A जहिरेखिला:. १६२२. [1]) Emended; A आक्रम्यासौ.—[2]) Thus corr. in A from न. १६२४. [1]) Emended; A धान्य°. १६२५. [1]) Emended; A द्विशा°. १६२९. [1]) Conjectural reading; A °कोष; R C °कोथ. १६३१. [1]) Emended; A समर्पयत्. १६३३. [1]) Thus $A_1$; $A_2$ °पातनोत्थापनक्षमः. १६३५. [1]) Thus $A_1$; $A_2$ सुज्जि:.—[2]) Thus corr. by $A_2$ from $A_1$ मत्कोश°.—[3]) Thus corr. by $A_2$ from $A_1$ स्वर्धामेव वहे — — विती°. १६३८. [1]) पटु: supplied by $A_2$ in space left by $A_1$.

एवं डमरकदम्बैक्यं राज्ञि कुर्वति कार्यतः । बालकैः सोमपालाद्यैः सुज्जिर्निन्येथ वैकृतम् ॥१६४२॥
प्रतिज्ञाय लतामात्रसाध्यं कश्मीरनिर्जयम् । सोमपालाय तद्राज्यं सोऽङ्गीचक्रेऽवमानितः ॥१६४३॥
प्रतिश्रुत्य तस्मै च भागिनेयीं स कन्यकाम् । धीमानत्रान्तरे सामदाने प्रयुयुजे नृपः ॥१६४४॥
1645 द्वौ तावल्पाशयौ राजकन्ययोः स्वीक्रियां तदा । रभसाद्यावकुर्वाणावदत्तामन्तरं द्विषाम् ॥१६४५॥
उपायैर्जयसिंहस्य शकुनैश्च निरीक्षितैः । प्रेरितः सोमपालोऽथ सुज्जेर्मन्दादरोऽभवत् ॥१६४६॥
स्वयमेत्य प्रतीहारस्तत्र राजपुरीपतिम् । सीमान्तर्भुवमानिन्ये कन्यकोद्वाहसिद्धये ॥१६४७॥
जातां कल्हनिकाख्यायां महादेव्यां महीपतेः । उपयेमे नृपसुतां सोमोऽम्बापुत्रिकाभिधाम् ॥१६४८॥
याते तस्मिन्कृतोद्वाहे नागलेखाभिधां सुधीः । तत्स्वसेयीं[1] प्रतीहारो भूभुजे प्रत्यपादयत् ॥१६४९॥
1650 इत्थं राष्ट्रद्वये बद्धसंधौ निरवकाशताम् । प्राप्तः प्रतस्थे हेमन्ते सुज्जिस्त्रिपथगोन्मुखः ॥१६५०॥
जालंधरे संघटितो ज्येष्ठपालो निनाय तम् । गाढावमाननिर्नष्टसौष्ठवं भिक्षुपक्षताम् ॥१६५१॥
त्वयि भिक्षाचरे चैकसैन्यनायकतां गते । नोपेन्द्रो वा महेन्द्रो वा समर्थौ प्रत्यवस्थितौ ॥१६५२॥
राज्यप्रदस्य ते यश्च चक्रे राजा विमाननाम् । तस्थुषो यश्च विषये प्रतिकुर्मस्तयोर्द्वयोः ॥१६५३॥
इति संप्रेरितस्तेन देङ्गपालान्तिकस्थितेः । यियासुः सोऽन्तिकं भिक्षोर्भागिकेन न्यषिध्यत ॥१६५४॥
1655 अनिक्षिप्तवतोऽस्थीनि स्वामिनो जाह्नवीजले[1] । न युक्तमेतत्ते कृत्यमित्यावेगादशासि[2] च ॥१६५५॥
कृत्वा पुनर्यामेष्यामि पार्श्वं व इति निश्चयम् । स पीतकोशः कृत्वास्य ययौ प्रस्तुतसिद्धये ॥१६५६॥
प्रतीहारकरन्यस्तसर्वभारस्तु भूपतिः । मन्दाक्रान्तितया राज्यमसुस्थितममन्यत ॥१६५७॥
यो यो हि व्यमर्शीत्तं तं संधाय सविधस्थितः । तमन्वहं प्रतीहारः सानुग्रहमिवैक्षत ॥१६५८॥
प्रगल्भमाने शास्त्येवं[1] मुदयः कम्पनापतिः । अवधीच्छद्मना दृप्तं प्रकटं कालियात्मजम् ॥१६५९॥
1660 अविश्वासोल्बणान्सर्वेलात्रन्यानथ लक्ष्मकः । निर्मर्यादान्कम्पनेशामीषत्सान्त्वमजिग्रहत् ॥१६६०॥
ज्ञात्वाभ्येष्यति गङ्गायां यावत्सुज्जिर्विसूत्रताम् । यावत्कथं मया नेया कश्मीरा इति चिन्तयन् ॥१६६१॥
तावन्मात्रान्तरव्याप्त्या राज्ञो विज्ञाय डामरान् । भिन्नान्भिक्षाचरोऽविक्षद्विषलाटां हिमागमे ॥१६६२॥
मण्डलस्यान्तरे तस्य विविक्षो रड्डडामरः । प्रतीहारो हिमर्तुश्च निषेद्धा समपद्यत ॥१६६३॥
स टिक्केन पितृद्रोहादेकान्तद्वेषिणा रिपोः । आनीतः संमतैर्दत्ताप्यायः सर्वैश्च डामरैः ॥१६६४॥
1665 प्रतीक्षमाणो राज्याप्तिहेतुं सुज्जिसमागमम् । निर्भयष्टिक्कजामातुर्भागिकस्य खशप्रभोः ॥१६६५॥
बाणशालाभिधे दुर्गे वसन्नल्पोच्छ्रितावपि । दूतैर्विभेदमनयत्सर्वडामरमण्डलम् ॥१६६६॥
प्रमोदं सुहृदां त्रासं द्विषां च विसृजन्पुरः । व्यावर्ततात्र गङ्गायाः सुज्जिर्विहितमज्जनः ॥१६६७॥
पूर्वविप्रकृते भिक्षाचारेऽस्मिंश्चाभेदमागते । यथामुष्य महीभर्तुस्तथास्माकं भयं भवेत् ॥१६६८॥
ध्यात्वेति सिंहदेवेन प्रार्थितो व्याजमादधे । सुज्जिस्वीकरणोद्योगे सोमपालो भयाकुलः ॥१६६९॥
1670 सुज्जिर्जालंधरं प्राप्तः प्रातर्भिक्षाचरान्तिकम् । यावद्यास्यति तं सायं तद्भूतस्तावदासदत् ॥१६७०॥

---

१६४९ [1]) Emended with C; A स्वसेयी. १६५५. [1]) These two *pādas* have been twice written by A.— [2]) Emended with C; A °शाधि. १६५९. [1]) Thus A; perhaps read शास्त्येवमु°.

प्रेरितो ज्येष्ठपालेन निषिद्धो भागिकेन च । विरराम स तस्योक्त्या विपक्षाश्रयणग्रहात् ॥१६७१॥
क्षणं देशान्तरोपान्ते तव भूपोपनेष्यति । स्वं च शाल्यस्वीकारं मन्मुखमहितार्थनः ॥१६७२॥
इति दूतमुखेनोक्तः सोमपालेन चान्वहम् । विपक्षीलक्ष्मकमुत्सार्य तद्देशाभिमुखो ययौ ॥१६७३॥
उदयः कम्पनाधीशो वैशाखे तीर्णसंकटः । खशान्वितेन संग्रामे प्रत्यपद्यत भिक्षुणा ॥१६७४॥
शाकस्तुप्यल्पपृतने जाते पृथुबले ततः । तस्मिन्कोट्टान्तरं भिक्षुः प्राविशद्ग्रामवेष्टनः ॥१६७५॥ 1675
राजाथ विजयक्षेत्रं निर्यातः प्रत्यपूरयत् । कम्पनेशस्य कटकं तास्ताः संभेयवर्धमूः ॥१६७६॥
यन्त्रोपलशरासारविविधायुधवर्षिणी । दुर्गस्थितैर्नृपचमूः प्रत्ययोध्यश्मवर्षिभिः ॥१६७७॥
पतत्स्वश्मसु भिक्षोश्च नामलक्ष्मसु पत्त्रिषु । ग्रहीतुं दुर्गजाग्राजसेना दीर्घापि नाशकत् ॥१६७८॥
दिनैरभ्यधिके मासमात्रे यातेमहीन्ततः । विदार्य मूलं दुर्गस्य धन्यैः खातान्बु संभृतम् ॥१६७९॥
दुर्गभाजो बलासाध्या राज्युपायपरे धियम् । आततद्वैरिबाधेच्छा धनलुब्धामदर्शयन् ॥१६८०॥ 1680
विससर्ज प्रतीहारमथ तद्वस्तुसिद्धये । राजा डामरसामन्तमन्त्रिराजात्मजैः समम् ॥१६८१॥
कोष्ठेश्वरत्रिलक्काद्याः कृच्छ्रस्थस्य विमोक्षणम् । करिष्यामो वयं भिक्षोरिति बुद्ध्वा तमन्वयुः ॥१६८२॥
पश्यन्संकटशैलाग्रादधः कोट्टं निरीक्षति । जितं मेने प्रतीहारो वीक्ष्यानन्ताः स्ववाहिनीः ॥१६८३॥
पूर्वस्थितैः प्रतीहारानुगैश्चान्यत्र वासरे । अयोधि सर्वसैन्यस्य बलात्कोट्टं जिघृक्षुभिः ॥१६८४॥
ते तावन्तोऽप्यश्मवृष्ट्या तथा तैः प्रतिचक्रिरे । नास्तीदं विक्रमेणेति यथागृह्णन्विनिश्चयम् ॥१६८५॥ 1685
वीरदेहद्रुमाग्रेभ्यो न्यपतन्नश्मभिर्हताः । निर्यद्रक्तौघसरघाः शीर्षभ्रमरगोलकाः ॥१६८६॥
कोष्ठेश्वरस्य मूढत्वं निर्व्यूढं तत्र किंचन । स्वस्य भिक्षोर्लवन्यानामन्येषां च विनाशकृत् ॥१६८७॥
नास्त्यत्र मत्समो वीर इत्येतावत्प्रसिद्धये । स ययुद्धोद्धतं भिक्षोर्यत्प्राणभयकार्यभूत् ॥१६८८॥
बुभुक्षूणां खशानां स संकटे धैर्यमादधे । कोष्ठेश्वरेऽस्मिन्नाभिन्ने तद्वशा डामराः परे ॥१६८९॥
यदेतद्दृश्यते भूरि सैन्यमस्मद्धिताय तत् । पर्यवस्येदिति वदन्सममाप्यन्यथा च तत् ॥१६९०॥ 1690
विश्रम्भभूरमुष्यार्थेन कोष्ठेश्वरोऽप्यसौ । अन्येषु तत्र कैवास्थेत्यथ ते निश्चयं दधुः ॥१६९१॥
भूभृत्पितृद्रुहः कार्यवशेन स्वोपवेशने । अङ्गीकृताधिकारस्तु श्रीमांष्टिकस्य लक्ष्मकः ॥१६९२॥
खशाधीशं महाग्रामस्वर्णादित्यागसंभयात् । स्वीकृत्य भिक्षुबुभुक्षाबद्धकक्ष्यमकारयत् ॥१६९३॥
आनन्दाख्यः खशाधीशस्यालः कृतगतागतः । नीत्वा टिक्कं प्रतीहाराभ्यर्णं भूयोऽप्यरोपयत् ॥१६९४॥
प्रतीहारस्य टिक्केन सहैक्यं वीक्ष्य डामरैः । निःसंशयं हतोऽज्ञायि भिक्षुः कोष्ठेश्वरादिभिः ॥१६९५॥ 1695
संरब्धास्तद्विमोक्षाय प्राहिण्वंस्ते खशान्तिकम् । दूतानुरीकृतस्वर्णदाना भूरिधनैः समम् ॥१६९६॥
खशास्तु दध्युरुत्कोचं गृहीत्वास्माभिरुज्झितः । जानाति रक्षितान्प्राणान्भिक्षुः कोष्ठेश्वरादिभिः ॥१६९७॥
समन्युः प्रागराज्योऽथ देङ्गपालोऽथ दूरगः । हन्यान्मां जयसिंहस्तत्रस्थः पश्यः प्रयत्नतः ॥१६९८॥
मत्वेति तेन मत्पुत्रा भिक्षुं[1] शीघ्रस्थितं गृहात् । विषाद्यातः फलहकं निर्गच्छेत्यूचिरेऽपि ते ॥१६९९॥

---

१६७६. [1]) Emended; A संभेयवधमूः. १६७९. [1]) Emended; A धान्यः; C धान्यखा°; cf. viii. 1624. १६८१. [1]) Emended; A राज्ञां. १६८२. [1]) Thus corr. by A₂ from A₁ कृच्छ्रास्थस्य. १६९३. [1]) Emended; A °बुभुक्षु°. १६९७. [1]) Emended with R; A ध्याशु°. १६९९. [1]) Emended; A भिक्षुणो°

1700 स स्वमेध्योपलिप्ताङ्गः श्वेतावस्करकर्मणा । यात इत्ययशो लोके व्यापन्मानी न निर्ययौ ॥१७००॥
कोष्ठेश्वरोऽप्यकाकृत्यः सैन्यक्षोभेच्छयाक्षिपत् । कल्ये कालविदा प्राह्णे प्रतीहारेण सान्त्वितः ॥१७०१॥
नीतौ खशार्थैर्दत्तायामा प्रत्यूषादगृह्यत । व्यवसायः प्रतीहारमुख्यैर्भिक्षुप्रमापणे ॥१७०२॥
गच्छच्चिरागच्छन्निव राज्ञ दूतैः प्रतिक्षणम् । अभिष्यन्दिजयक्षेत्रे वार्तां पर्याकुलोभवत् ॥१७०३॥
नावद्दिराहवैस्तैस्तैः साहसे दश वत्सरान्¹ । कृतयत्नस्य साध्योभून्न यो नृपमहीभुजः ॥१७०४॥
1705 डिम्बो राजानुगा डिम्बास्तस्य भिक्षोः प्रमापणम् । साध्यमेते हि मन्यन्ते हन्त किं केन संगतम् ॥१७०५॥
विहस्य नीयते विघ्नं खड्गैरस्य क्षणादमी । भग्ना नूनं प्रयास्यन्ति मुषिताश्चाखिलाः परैः ॥१७०६॥
पृथग्भूतः कोष्ठकोयं त्रिलक्कोस्यैव बान्धवः । एते भिक्षाचरोच्छिष्टपुष्टा आभ्यन्तरा अपि ॥१७०७॥
को नूनमोत्र संग्रामो यो राज्ञः साधयेद्धितम् । सामग्री नूनमायाता सेयमस्यैव सिद्धये ॥१७०८॥
इत्यूचुः शिबिरे यावज्जनास्तावदवेष्ट्यत । कटकैर्मन्त्रिणां दुर्गं विकोशायुधवाहिभिः ॥१७०९॥
1710 एकाकी चिरसंक्लिष्टो हन्तव्यस्तत्कृतेखिलैः । हा धिक्परिकरो बद्धो निर्लज्जैः सर्वशस्त्रिभिः ॥१७१०॥
त एवेत्यूचुरासीच्च कवचच्छन्नोर्मिनिर्मलः । स्फुरद्योधाक्षिशफरो निःशब्दः सैन्यसागरः ॥१७११॥
व्योम्नोड्डीयेत वा सैन्यं लङ्घयेद्वा मृगप्लुतैः । दुष्टाभ्रवृष्टिरिव वा निखिलांस्ताडयेत्समम् ॥१७१२॥
साश्चर्यशौर्यैः पर्यन्ते स्वीकुर्वन्भिक्षुरायुधम् । संभ्रान्तश्चकितश्चासीदित्यन्तश्चिन्तयञ्जनः ॥१७१३॥
एतावन्मन्त्रिणां सिद्धमथ प्रत्यूहसंभवः । तच्छान्तिः कार्यसिद्धिश्च प्रतापैर्नृपतेरभूत् ॥१७१४॥
1715 सैन्ये भिक्षाचरापातं पश्यत्यूर्ध्वार्पितेक्षणे । कोष्ठाद्विष्कृष्टशस्त्रीकः पुमानेको विनिर्ययौ ॥१७१५॥
रुदतीभिः परीतस्य नारीभिस्तस्य चिक्षिपुः । पृष्ठे केपि वपुर्लोलकौसुम्भाधरवाससः ॥१७१६॥
बद्धः पलायमानोत्र सोयं भिक्षुरिति ब्रुवन् । उन्मुखः स जनोभीपीडितं तमथ निर्गतम् ॥१७१७॥
स हि¹ भिक्षोः कृतद्रोहस्तुमुले प्रस्तुतो² वधम् । तस्माद्राजानुगेभ्यो वा स्वस्याशङ्क्य विनिर्ययौ ॥१७१८॥
अद्रोहोस्मीति लोकस्य प्रत्ययाय चकर्ष च । कृपाणीमुदरं हन्तुं रक्ष्यमाणो निजानुगैः ॥१७१९॥
1720 सानुगस्त्यक्तमार्गो स विलङ्घ्य नृपवाहिनीम् । अद्रिप्रस्रवणोपान्ते नातिदूरेऽभ्युपाविशत् ॥१७२०॥
उच्छूसंधिरसंप्राप्तैरम्भोभिर्दुर्गनिर्गतः । मायां प्रयोक्तुं प्रारेभे प्रेरितः सोन्यडामरैः ॥१७२१॥
संजातं लम्बमानार्कमहस्तद्रक्ष्यतां क्षणम् । भिक्षुः क्षपायामास्कन्दमपनेष्यन्ति डामराः ॥१७२२॥
इति तद्वाचिकात्तीक्ष्णा नीतिभिर्मन्त्रिणां समम् । खशैस्त्यजद्भिर्दधतो न्यरुध्यन्ताहरक्षकाः¹ ॥१७२३॥
ततः किलकिलारावमुखरैः करतालिकाः । योधैर्ददद्भिः सचिवा व्यगृह्णन्ताकुलाशयाः ॥१७२४॥
1725 मुक्ताः स्वामिद्रुहः कृच्छ्रगता राज्यं प्रसाधितुम् । द्विषतो मन्त्रिभिः स्वार्थो¹ दस्वार्थोन्को नु साधितः ॥१७२५॥
राजकार्ये च मानी च लम्बमानेथ लक्ष्मकः । किमेतदिति तं नीतिं खशस्यालमभाषत ॥१७२६॥
सोभ्यधात्कुम्भदास्यापि रोद्धुं शक्यं चिकीर्षितम् । खशानां प्रत्ययस्याता कथं तत्रास्त्यसंनिधिः ॥१७२७॥
स हन्तुं वैपरीत्यं तं खशानां स्वं प्रजेत्यथ । उक्त्वा व्यसृजदानन्दं जहसे चान्यमन्त्रिभिः ॥१७२८॥

---

१७०४. ¹) Emended; A °बन्धस्य. १७१८. ¹) Emended; A सह.—²) Thus A; perhaps read कृतद्रोहस्तुमुले प्रस्तुते.
१७२३. ¹) Emended with C; A व्यरुध्यन्ता°. १७२५. ¹) Emended; A स्वार्थो.

अदूरदर्शीव राज्ञा विसलाटाभ्यपातितः । देङ्गपालगृहा — —ऽऽरम्भः समभाव्यत ॥१७२९॥
अतः प्रधानकोष्ठेशस्यालः सममगृह्यत । प्राणेभ्यार्थैरेतदर्थं ममता दीर्घबाहुताम् ॥१७३०॥ 1730
संक्षोभावसरे तस्मा ततो निःसंभ्रमोऽभवत् । शिक्षितं पक्षिणमिव स्वकं प्राप्य विवेद तम् ॥१७३१॥
स तानूचे न हास्यं मे नष्टे कार्येऽत्र साहसम् । सर्वनाशो हतेऽमुष्मिन्खशस्यालेऽपि किं भवेत् ॥१७३२॥
अकुण्ठया प्रागल्भ्यकथा राज्ञः स्यालः खशस्य सः । सर्वानिवर्त्य दुर्गात्तीक्ष्णादीनाजुहाव तान् ॥१७३३॥
दस्यूनामसवः कण्ठे संदेहं मन्त्रिणां धियः । स्वःस्त्रीणां प्रीतयः काष्ठां तीक्ष्णाद्यावदुर्गमरिम् ॥१७३४॥
स धर्मकौपीनपटीबन्धस्तत्स्वामिधाङ्कितैः । इषुभिः स्वामिनस्तस्य ख्यापनं सर्वतो व्यधि ॥१७३५॥ 1735
स ताम्बूलाधरः सक्तिः सा केशहस्तभुवोजने । याभूदनुमुमूर्षूणां भिक्षुराजोपजीविनाम् ॥१७३६॥
निधिताग्ने ततस्तस्मिन्स तेषां संन्यवर्तत । कोष्ठेश्वरादिशिबिरं तूर्णं शरणमीयुषाम् ॥१७३७॥ तिलकम्॥
एकैकशो लक्ष्मकेण युक्त्या स्वैः प्रेरितैर्भटैः । टिक्कः स्वं वीक्ष्य चलितं निषकर्ताङ्गुलिं भयात् ॥१७३८॥
खशीरस्मिन्नवसरे स पलायनशङ्किभिः । रक्ष्यमाणस्तेष्वहःसु मनस्तापादभुक्तधाम् ॥१७३९॥
वीरस्तान्यविलम्बेन तीक्ष्णानामागतोत्सुकः । तस्थौ भिक्षाचरः स्वान्तमक्षयस्या विनोदयन् ॥१७४०॥ 1740
हर्म्यभङ्गक्रममायाते तीक्ष्णलोके युयुत्सया । उत्तिष्ठता तेन दायः स्तोकशेषः समाप्यत ॥१७४१॥
दीव्यतः कान्तया सार्कं कामिनः सुहृदागमे । प्रत्युत्थानोरिव क्षोभो नान्तस्तस्य व्यजृम्भत ॥१७४२॥
किमद्यापि वधेन स्याद्वहूनामिति चिन्तयन् । स विहाय शरावापं सासिधेनुर्भटैर्ययौ ॥१७४३॥
सुदीर्घचिन्तागलितायामश्यामलिभिः कचैः । कल्पविघ्नपताकाङ्कमिव वीरपटाञ्चलैः ॥१७४४॥
गण्डताण्डविनाच्छिद्रशङ्कुताडङ्करोचिषा । वक्त्रोल्लेखकान्त्या च द्योतिताहार्यवास्मितम् ॥१७४५॥ 1745
विकीर्णं चित्रचार्यन्ते विपर्यस्ताङ्गिताङ्गनम् । धौतवस्त्रमिवालातैः शस्त्रीनेत्राधरांशुकैः ॥१७४६॥
कौसुम्भाधरवासोभवद्धौताधराञ्चलैः । लोलैर्वीरहरिं मत्तसटाटोपमिवांसयोः ॥१७४७॥
दृढनःपाणिपादैक्यवाहप्रभुरचारिभिः । चरन्तं मण्डलैश्चित्रैर्लघुचित्रस्थिरक्रमैः ॥१७४८॥
औचित्यस्योन्नितां चर्यामलंकारमहंकृतेः । अभिमानविभूतीनां विस्तोरस्सेकमनल्पयम् ॥१७४९॥
अलक्षितक्षिप्रपातं स सर्वोऽप्युन्मुखो जनः । विचरन्तं तमैक्षिष्ट भिक्षुमये विरोधिनाम् ॥१७५०॥ 1750
राजवीजी मधोर्नेमा तं प्रवीरः कुमारियः । भ्रातापि ज्येष्ठपालस्य निर्यातो रक्तिकोऽन्वगात् ॥१७५१॥
हर्म्येभिन्नोन्नतैस्तैस्तैर्विशतः परिपन्थिनः । हरोधिकः शरासारैर्गार्भिको भिक्षुसंभितः ॥१७५२॥
ते धावन्तो व्यभ्राम्यन्त शरैस्तद्वापनिर्गतैः । वर्षोपलैः पुरोवातप्रेरितैरिव दन्तिनः ॥१७५३॥
स रोद्धा प्रतियोधानां पापैः क्षिप्राश्मभिः खशैः । क्षताङ्गो भग्नचापश्च चिरेण विमुखीकृतः ॥१७५४॥
तस्मिन्प्रचलिते मार्गैः प्रविश्योद्यात्रैर्भटाः । ते च भिक्षाचरादीनां सर्वे गोचरमाययुः ॥१७५५॥ 1755
भिक्षोरेकं क्षणालक्ष्यधैर्यं पार्श्वभृतायुधम् । अथावत्तूर्णमादाय शूलमेको वृकद्रढः ॥१७५६॥

---

१७२९. ¹) A₁ omits here *two aksharas* without indicating the *lacuna*; C देङ्गपालगृहारम्भः; perhaps read °गृहा-वर्तारम्भः. १७३०. ¹) Thus A; C स समगृह्यत. १७३६. ¹) Emended with C; A राज्ञोपजी°. १७३७. ¹) Emended; A तेषां सन्नव°.—²) A₁ writes here ३ instead of तिलकम्. १७४५. ¹) Emended with C; A वीक्ष्यन्तः. १७४९. ¹) चर्यां supplied by A₂ in space left by A₁. १७५३. ¹) Emended; A व्यभ्रा°.

तस्य प्रहरतः शूलं भिक्षुराभिलवत्सलः । शिल्पापहस्तेनावेगात्केशाकृष्याह पाविनः ॥१७५७॥
प्रजहार कृपाण्या च निर्बलाणे पतिष्यति । तस्मिन्माहरतो भूयस्तौ कुमारियरक्षिकौ ॥१७५८॥
निर्विभागैर्हते तस्मिन्निविधायुधवाहिभिः । विरोधियोधैः संनद्धैस्त्रयो युयुधिरेथ ते ॥१७५९॥
1760 अजायन्त विविक्ताश्च शस्त्रसंपातिताहिताः । कोटराजगरापास्तसरधौघा इव द्रुमाः ॥१७६०॥
अशक्नुवन्तस्तान्हन्तुं खड्गशूलादिभिर्द्विषः । अपसृत्य शरासारैस्ततो दूरादवाकिरन् ॥१७६१॥
भिक्षाचरमृगेन्द्रस्य भञ्जतः शरपञ्जरान् । ततो हर्म्याग्रखङ्गैर्मुक्ताः पुष्टाः पाषाणवृष्टयः ॥१७६२॥
धावतस्तस्य घोराश्मवृष्टिकुट्टितवर्ष्मणः । निममज्ज वक्षस्पिण्डं भञ्जन्पार्श्वे शिलीमुखः ॥१७६३॥
क्रान्त्वा त्रीणि पदान्याशु स पपात दिशान्क्षितेः । ततश्चिरप्ररूढं द्रु कम्पं विद्विषतां हरन् ॥१७६४॥
1765 कुमारियोपि बाणेन विद्धवक्षुणवर्मना । अणितोप्यपतद्भर्तुः पादोपान्तेपजीवितः ॥१७६५॥
रक्षिकस्तु शरेणैव विद्धो मर्मणि विह्वलः । सजीवितोपि निर्जीव इव भूमावुपाविशत् ॥१७६६॥
महाकुलीनैः सहितो हतो भिक्षुरशोभत । यथाद्रुमः शिखरैः पुष्पितैरिव पादपैः ॥१७६७॥
इयतो राजचक्रस्य मध्ये हर्षनृपात्मनः । नावमानस्य मानस्य स्वभूद्भिक्षोः परं पदम् ॥१७६८॥
विधाता नित्यविधुरस्तेनान्तेप्यभिमानितः । अकुण्ठेन ध्रुवं चक्रे गृहीतात्मपराजयः ॥१७६९॥
1770 को वराको महर्द्धीनां लोभे पूर्वमहीभृताम् । उदात्तेनान्तकृत्येन ते स्वस्थाने न किंचन ॥१७७०॥
अहोपुरुषिकामस्तैरारोहद्भिर्दिवं भटैः । तदवस्थस्तदातोपि श्लाघ्यायुत कुमारियः ॥१७७१॥
स्फुरन्यो यस्यमित्येव स महारावधास्तथा । विज्ञाततत्त्वैररिभिश्चितस्य बहुशो हतः ॥१७७२॥
विपन्नेस्मिन्नलं मूढाः प्रहारैरिति निश्चिताः । खड्गैः प्रजह्रुर्बहुशो हते भिक्षौ द्विषद्भटाः ॥१७७३॥
अविधेयायुधस्त्रीभ्रमणवेदनयाधमैः । कैश्चिन्निर्जीवितप्रायो रक्षिकः शस्त्रिभिर्हतः ॥१७७४॥
1775 वयसस्त्रिंशतिं वर्षांश्च मासांश्च भुक्तवान् । स षडब्दानि तत्त्रीणि दशाम्या नृपतिर्हतः ॥१७७५॥
निदानं विप्लवे दीर्घे सर्वनाशेपि कारणम् । येषा बभूव तेत्रैवं तुतुषुः सत्त्वविस्मिताः ॥१७७६॥
नेत्रस्पन्दं भ्रुवोः कम्पं स्मेरास्यत्वं च नात्यजत् । सजीवमिव तन्मुण्डं कियतीरपि नालिकाः ॥१७७७॥
एकं व्योम्न्यविद्याश्रितभानुं भूमौ पुनः परम् । तदेहमप्सरःसङ्गं धराम्बु च विदन्नलम् ॥१७७८॥
सचिवा विजयक्षेत्रस्थितस्यासे महीपतेः । तेषां त्रयाणां मुण्डानि ततोन्येद्युरुपाहरन् ॥१७७९॥
1780 श्रीहर्षात्मजदन्त्याश्यवायाशङ्कादिभिकाशने । दृष्टचित्रस्वभावोऽभिर्यथार्थं पार्थिवस्तथा ॥१७८०॥
तत्र तथाद्भुतं भावं दर्शयन्भुवनाद्भुतम् । परिच्छेद्यानुभावत्वं न केषामपि गच्छति ॥१७८१॥युग्मम्॥
नास्त्याशिदत्तोसाध्यः पितुर्मे योप्यभूदिति । न जहर्ष विनष्टोयं राजकण्टक इत्यपि ॥१७८२॥
नाकुप्यन्नोत्पितुर्मुण्डमेष भ्रमितवानिति । वीक्ष्य भिक्षोः शिरोव्याजभावौदार्यस्त्वचिन्तयत् ॥१७८३॥ युग्मम्॥
आकारस्यास्य संभाव्यं सत्त्वं न हेपयीकृतम् । वैशद्यं स्फटिकस्येव नार्कालोकोपतप्तता ॥१७८४॥

१७५८. [1]) Emended; A प्रह°. १७६५. [1]) Emended; A पादोपान्ते. १७६६. [1]) Emended with C; A भक्षिकस्तु. १७६८. [1]) Thus A; C °स्वज.—[2]) Perhaps read °द्विषुः. १७७०. [1]) Thus A; B C °नान्तकृत्येन. १७७५. [1]) Emended with C; A वयस°. १७७६ [1]) Emended; A सत्त्वविस्मित. १७७८. [1]) Emended; A धारा°. १७८१. [1]) A₁ २. १७८३. [1]) Emended; A₁ had first written नाकुप्यत्स पितु° and subsequently corrected this to नाकुप्यत्स्मत्पितु°.—[2]) Emended; A₁ °भावौ – – स्त्वचि°, writing in margin भावाशय; B G C °भावाशयस्त्व°. Cf. अभ्रावौदार्यवंशस्य iii. 308.—[3]) A₁ २. १७८४. [1]) Emended; A °तस्तत्त.

उत्कर्षात्प्रभृति व्यक्तममुं यावन्महीभुजम् । हा धिक्कष्टमृत्युना दृष्टं नेह देहविसर्जनम् ॥१७८५॥ 1785

प्रसादवित्ता येऽभ्यासन्पूर्वमस्योर्वराभुजः । तटस्था इव वीक्षन्ते तेऽस्य मुण्डावशेषताम् ॥१७८६॥

इति क्षितीशोऽसामान्यसौजन्योन्मादिकारयन् । आविवेश रिपोः शीघ्रं तादृशस्यान्तसत्क्रियाम् ॥१७८७॥

विग्रहच्छेदे च निशि स्वं[1] ध्यायंस्तस्योदयास्तयौ[2] । भवस्वभाववैचित्र्यं मुहुर्मुहुरचिन्तयत् ॥१७८८॥

अपि सर्वसहत्वेन देवो दायाददुःस्थितिः । नूनं न भविता भूय इति लोकोऽप्यमन्यत ॥१७८९॥

दग्ध्वा तृणं ननु वनं दहनोऽपि शष्पं वृष्टिः सृजत्युपचितोऽभ्र दिनं[1] प्रवर्ष्य ।

वैचित्र्यसंस्पृशि विधेर्नियमेन कृत्ये न प्रत्ययः क्वचन चञ्चलनिश्चयस्य ॥१७९०॥ 1790

कृत्यं निर्वर्त्य विश्रान्त्यै धीरस्याथ गतो मनः । विधिर्विधत्ते दीर्घान्यकार्यभारसमर्पणम् ॥१७९१॥

आरोढुं प्रथमस्य दीर्घदमनं[1] प्रक्रमस्याङ्घ्रिणा नो संत्यज्यत एव पादकटको यावद्द्वितीयोऽखिलः ।

वाहस्यासनरक्षिणः कलयतो भारात्पतारात्सुखान्यारोहेण परेण तावदसहाधिष्ठीयते पृष्ठभूः ॥१७९२॥

एवमेव क्षपामात्रं राज्ये निःशत्रुतां गते । शोकमूको नृपस्यायं प्राविशल्लेखहारकः ॥१७९३॥

पृष्टः सभ्यैः स संभ्रान्तैर्यस्मिन्नेवाह्नि भूपतेः । यातो भिक्षाचरः शान्तिमरातिर्दत्तदुःस्थितिः ॥१७९४॥

भ्रातरौ लोहरगिरौ बद्धौ द्वैमातुरौ पुरा । न्यस्तौ सुस्सलभूपेन[1] यौ तौ सल्हणलोठनौ ॥१७९५॥ 1795

ज्येष्ठे मृते कोट्टभृत्यैः कनिष्ठं लोठनं हठात् । तमिहाद्य श्रियामायामभिषिक्तमभाषत ॥१७९६॥

सुतभ्रातृसुतैर्वृतं राज्यार्हैः सह पञ्चभिः । निर्यातं बन्धनाद्ब्रूते कोशेषु स तमीश्वरम् ॥१७९७॥

दूतेन सुखेनाक्रन्देत्प्रसारितभुजः पतेत् । स्वप्याहितत्रो निःस्पन्दस्तु गच्छेदथ ध्रुवम् ॥१७९८॥

दीर्घदौःस्थ्यघनाक्लिष्टमृदूकृतमना नृपः । असौ तत्कालनिपतद्वार्तावज्रविचूर्णितः ॥१७९९॥

इति संभाव्य दिक्पालैरपि साकूतमीक्षितः । नाकाराचारचेष्टाभिः प्रागवस्थां जहौ नृपः ॥१८००॥ 1800

न ह्यनन्याभिभूतेन सर्वतोऽसद्वर्तिना । तादृशा वैशसेनान्यः स्पृष्टपूर्वो हि भूपतिः ॥१८०१॥

पित्रास्य यद्बलाकृष्टं राज्यं भूयः प्रसाधितम् । अनेनापि हृतारातिः विहितं पैतृकं पदम् ॥१८०२॥

हारितौ दुर्गकोष्ठौ[1] तौ नष्टनामापि दारकः । दायादशेषो यश्चैको निर्धनो वीतबान्धवः ॥१८०३॥

धनमानान्तकृद्भूरिवर्षाण्यसनमादधे । उपप्लवमिये देवो तथैकस्मिन्हतेऽहिते ॥१८०४॥

भिन्नदुर्गार्थसंपन्नाः पोत्रुताः शङ्कुरोधिनः । भिन्नप्रकृतिकं कोशशून्यमेतच्च[1] मण्डलम् ॥१८०५॥ 1805

तादृक्कृच्छ्रनिस्तीर्णमाहात्म्यस्य महीपतेः । धैर्येण स्पर्धितुं जाने राघवोऽपि सलाघवः ॥१८०६॥

प्राक्पोषितं हि साम्राज्यदाने निर्वासने च तम् । तुल्यानुभावमस्मार्षीत्पितैवं गणयन्गुणान् ॥१८०७॥

आहूतस्याभिषेकाय विसृष्टस्य वनाय वा । न मया लक्षितस्तस्य स्वल्पोऽप्याकारविभ्रमः ॥१८०८॥

कान्तेषु कामनान्तेषु सकान्तं सानुजं च तम् । भूयः श्रियं प्रतिभुज्य स्थातुं सावधि सोऽभ्यधात् ॥१८०९॥

एकक्षणानुभूतेऽस्मिन्संघट्टे सुखदुःखयोः । ईदृक्तादृशभेदाद्वनयोरन्तरं महत् ॥१८१०॥ 1810

नियतं निरुपादानां शक्तिं दर्शयितुं जने । नानोपकरणग्रामं संनद्धोऽस्याच्छिनद्विधिः ॥१८११॥

---

१७८८. [1]) च omitted in A; supplemented with C.—[2]) Emended with C; A °व्यायवौ. १७९०. [1]) Thus corr. by A₁ from °शिरज पित. १७९२. [1]) Emended; A दीर्घमनं°. १७९५. [1]) Emended; A सुस्सल°. १८०३. [1]) A °कोष्ठौ. १८०५. [1]) Emended; A °नैतं च.

अत्यद्भुतानि कृत्यानि वक्ष्यमाणानि भूपतेः । कोऽमुष्य बहु मन्येत सामर्थ्ये सति संपदाम् ॥१८१२॥
धैर्याब्धिना कार्यशेषं ज्ञातुं राज्ञा सविस्तरम् । पृष्टोऽथ कोट्टवृत्तान्तमाचख्यौ लेखहारकः ॥१८१३॥
उत्सृज्य भार्गिकं कोट्टं प्रयाते मण्डलेश्वरे । तुष्टोऽयोगोऽभवद्भूमौ प्रेमा संपन्नमन्त्रधीः ॥१८१४॥
1815 मण्डनाभ्यवहारश्रीभोगैकामो मदोद्धता । स वृत्त्या भृत्यवैमुख्याच्चाभव्यं व्यवाहरत् ॥१८१५॥
कुल्यानुकम्पिना दृष्टयुल्पाटनादेः स वारितः । देवेनं नादाद्धन्तानो काचिच्छास्तमो क्रियाम् ॥१८१६॥
मायाभ्युदयनो नाम कायस्थः स्थूलवाञ्छितः । माञ्जिकश्च प्रतीहारो बद्धमूलस्य मन्त्रिणः ॥१८१७॥
पुत्रो भीमाकरस्येन्दाकरश्चान्तरे समम् । बुभुक्षवस्तत्र तत्र वधं प्रेम्णो व्यचिन्तयन् ॥१८१८॥
अलब्धो हन्तुमप्राप्तावसरैस्तैः कदाचन । कोट्टादट्टालिकां कार्यवशादवरुरोह सः ॥१८१९॥
1820 कश्मीरेभ्यो नृपेणाल्पावशेषमाणवृत्तिना । प्रैषि शासनमेतादृगिति प्रत्ययसिद्धये ॥१८२०॥
कोट्टैकस्वामशेषाणां गूढलेखान्विधाय ते । निबद्धसंविदः पूर्वमभिषेच्यस्य भार्यया ॥१८२१॥
दृष्ट्वा दुर्गाद्बहिर्निगडं कृत्वा च निशि लोठनम् । सिंहराजस्वामिविष्णुप्रासादाग्रेऽभ्यवेचयन् ॥१८२२॥ तिलकम् ॥
शारदाख्या बभूवैका कापि सुस्सलभूपतेः । तत्र स्थिताभवत्क्षुद्रा तेषामनुमतप्रदा ॥१८२३॥
तदर्पितैरथोऽयन्त्रभङ्गभेरर्गलानि ते । कोशाग्निचार्यं पर्याप्तं कोशरक्षादि जह्रिरे ॥१८२४॥
1825 सभृत्यैः समभिस्तस्तत्साहसं सुमहत्कृतम् । दानेन त्याजिता या सा चण्डालैः प्रतिकूलता ॥१८२५॥
भेरीतूर्यादिनिर्घोषैर्विभिन्नाः कोट्टवासिनः । कृता राजोचिताकल्पमपश्यन्नथ लोठनम् ॥१८२६॥
अदृष्टपूर्वतादृक्षोदात्तवेषः स विस्मयम् । निन्ये जनान्नृपामात्ययोगो दीपैः प्रकाशितः ॥१८२७॥
प्रेम्णः पार्श्वस्थितस्ताभ्यामानयेऽरकोन्तिकम् । ससैन्यो स्वभुवश्चर्मपासिकाख्यौ च ठक्कुरौ ॥१८२८॥
तदास्पदाहितास्कन्दभङ्गस्तेषामशोषतः । रात्रिशेषश्च चन्द्रांशुस्पर्शपाण्डुरशीर्यत ॥१८२९॥
1830 प्रातः प्रेमाथ दुर्वार्ताश्रवणेनोष्णदारुणः । संताप्यमानश्चोष्णांशुकरै रोद्धुमुपाययौ ॥१८३०॥
तं प्रतोलीतलप्राप्तं निर्यातैर्वैरिसैनिकैः । पराङ्मुखीकृतं वीक्ष्य चलितोऽस्म्यान्तिकं प्रभोः ॥१८३१॥
श्रुत्वेति भूभृत्त्वरया लुब्धं लोहरमन्त्रिणम् । विससर्जोदयद्वारपतिमानन्दवर्धनम् ॥१८३२॥
भूमिज्ञौ तौ हि कोट्टस्य त्रिवेदानन्यदेशजौ । सोल्पावस्त्वादिरन्ध्राणां लक्ष्यगात्रग्रहणक्षमौ ॥१८३३॥
प्रविश्य पुरं दृष्ट्वा प्रीतिदायार्थिभिः शिरः । भ्राम्यमाणं भटैर्भिक्षोराशिष्यैतानदाहयत् ॥१८३४॥
1835 राजादेशादसंरुद्धैः स्त्रीभूयिष्ठैरसौ जनैः । नग्नः पैतामहे देशे दह्यमानोऽन्वशोच्यत ॥१८३५॥
काले ग्रीष्मोदयोद्रिक्तभानौ सुविषमे नृपः । सिद्धिमभ्रद्धानोऽपि प्रहिणोति स्म रिल्हणम् ॥१८३६॥
स शौर्यस्वामिभक्त्यर्थनैस्पृह्यादिगुणोज्ज्वलः । तेन ग्रामोपप्रारम्भः समभावि जिगीषुणा ॥१८३७॥
भवितव्यतया हन्तव्यामोहः प्रेरितोऽथ वा । शत्रामात्यैरभूद्भूरस्य व्यक्तायुक्तमन्त्रितः ॥१८३८॥
हीनोऽर्थदुर्गामात्यैर्येऽसिद्धैरक्रूरस्य वैरिणः । अनुमेने कृतारब्धीन्भृत्यान्ग्रीष्मोल्बणे क्षणे ॥१८३९॥
1840 उदयः कम्पनाधीशो राज्ञोऽभे पर्यशिष्यत । सर्वामात्याः प्रतीहारमन्वगच्छन्पुनः परे ॥१८४०॥

१८१३. [1]) A कोट°. १८१५. [1]) Emended with C; A दृष्टयुल्पाटन°.—[2]) Emended with C; A देवेनादान° with haplography. १८१८. [1]) Emended; A °चिन्तयत्. १८२२. [1]) Emended; A °वेचयत्.—[2]) A₁ है. १८२५. [1]) Emendation doubtful; A °ताशामा. १८३०. [1]) Emended with C; A चौर्य°.

राजाप्तमहवारोहडामरामात्यभिन्नया । देव्या तत्सेनयाथापि सर्वसामग्र्युदग्रया ॥१८४१॥
यविष्टवह्लिकानिविष्टकटको दिशः । संग्रहीतुं प्रववृते सर्वोपायैर्विरोधिनः ॥१८४२॥
लुण्ठाद्यः फुल्लपुरे कोट्टोपान्ताश्रये स्थिताः । भयभेदाद्यवश्यपाथ्यकम्पमनयन्निपून् ॥१८४३॥
वत्सलक्ष्मापतिर्बद्धे लोठने तत्सुतामदात् । यस्मै प्राक्पद्मलेखाख्यां बहुस्थलधराभुजे ॥१८४४॥
साहायकाय ग्रामस्य तस्य सैन्यैर्द्विवसूः । भूराभिधस्य युद्धेषु प्रत्यमाहि प्रतिक्षणम् ॥१८४५॥ 1845
तेषूपद्वरराष्ट्रेषु भयदोलायमानधीः । अङ्गीचक्रे नरपतेर्भक्तिं दण्डं च लोठनः ॥१८४६॥
एताश्रस्तिद्धमफलारब्धीनामथ दुःसहे । काले व्यावृत्तिरस्माकमुचितास्मिन्नलाघवा[1] ॥१८४७॥
छारद्वारम्भसुभगे क्रमात्काले बलोर्जिताः । अथारम्भं विधास्यामः सर्वारम्भेण शोभनाम् ॥१८४८॥
इत्यन्वहं लक्ष्मकेण प्रहितं नादधे नृपः । अन्ये च मन्त्रिणो मन्त्रं शाखाद्यभ्यर्णवर्तिनः ॥१८४९॥ तिलकम् ॥
सर्वाधिकार्युदयनः प्रतिभुत्त्व धनं बहु । साहायकार्थमानिन्ये सोमपालमपि प्रभोः ॥१८५०॥ 1850
अपाङ्क्त्यः स संबन्धबद्धोऽपि धनलुब्धधीः । द्रुह्यति स्म महाश्वापश्चिममाय महीभुजे ॥१८५१॥
बद्धर्थदो लोठनश्चेत्किं मे संबन्ध्यपेक्षया । अन्यथा भवतामस्मीत्यन्यान्वक्ष्यामि कैतवात् ॥१८५२॥
इत्थमित्यभिसंधाय सोमपालोऽभ्युपाययौ । समर्थने हेतुरासीत्सुज्जेऽर्याजे कियानपि ॥१८५३॥ युग्मम् ॥
स हि भिक्षाचरोऽन्मुख्याद्विचार्यानायितो यदा । सोमपालमुखेनोर्वीभुजा राजविसर्जितः ॥१८५४॥
दूतः प्रार्थयमानस्य तस्यार्थान्प्राक्प्रतिश्रुतान् । कणिकस्योत्तमर्णेभ्यः प्रदातुमनुबध्नतः ॥१८५५॥ 1855
तदा भिक्षाचरं जानन्हतकल्पमनेन नः । व्यसनप्रशमे कोऽर्थ इत्यवज्ञां प्रकाशयन् ॥१८५६॥
मदेन न ददौ किंचित्सोऽथ भिक्षाचरं हतम् । श्रुत्वा निरुपयोगं स्वं राज्ञो ज्ञात्वा सशोकताम् ॥१८५७॥
यावदेकाहमभञ्जोह्रत्व्यसने भयम् । तावद्विशम्य संप्राप्तोऽत्सेको भूयोऽपि मन्युभाक् ॥१८५८॥
लोठनं बद्धसंधिं वः करिष्यामीति भूभुजः । उक्त्वा दूतं लोठनेन दापयिष्यामि काञ्चनम् ॥१८५९॥
युष्मभ्यं कथंचित्त्वेति सोमपालं चिकीर्षितुम् । बलितामबलत्वं च सर्वेषां स्वार्थसिद्धये ॥१८६०॥ 1860
समं सोमेन तत्सैन्यमध्यप्रस्थित्यलक्षितैः । मित्रैरनुगतो भृत्यैर्घोरमूलकमासदत् ॥१८६१॥ कुलकम् ॥
यहानौचित्यदुष्पांसुवर्षधूसितकीर्तिना । भोगलुब्धतया तेन हता चिततसत्त्वता ॥१८६२॥
तुषारशर्करामुक्तजलपानादजर्जरम् । त्यक्तुं भोज्यं मृदु स्निग्धं काश्मीरं न शशाक सः ॥१८६३॥
सतुषं शुष्कसक्त्वादि बहिर्भोक्तुमपारयन् । यैस्तैरुपायैः कश्मीरान्प्रविविक्षुरतोऽभवत् ॥१८६४॥
काश्मीरिकाः कार्यशेषमदृष्ट्वा ग्रीष्मशोषिताः । आकर्ण्य च तदापातमाकुलत्वमशिश्रियन् ॥१८६५॥ 1865
भुञ्जानैर्भृष्टमांसानि पिबद्भिः पुष्पगन्धि च । प्रनीहाराघतो हारि मार्द्वीकं लघु शीतलम् ॥१८६६॥
आमेष्यामो अश्वात्सुब्जिमाकृष्य दमभु संयुगे । इत्थं विकत्थनैस्तैस्तैराद्दोपुरुषिकाः कृताः ॥१८६७॥
काश्मीरकैर्भिन्नैर्युक्तं खशैः सैन्धवकैरपि । अभिषेणयितुं शेकुर्न तेऽयुध्यमिनोऽपि तम् ॥१८६८॥
भ्रातृव्याय च मुख्याय भूभुजा च करार्पणम् । विदध्यो जयसिंहाय वरमित्यभिमानिनाम् ॥१८६९॥

---

१८४१. [1]) Emended with C; A सर्वै. १८४२. [1]) Emended; A सर्वोपायार्थै°. १८४४. [1]) Emended; A °वैङ्गा. १८४७. [1]) Emended; A °लाघव; C °लाघवः. १८४९. [1]) Emended; A प्रत्य°.—[2]) $A_1$ ३. १८५२. [1]) Emended with C; A °त्मीत्यान्व°, with haplography. १८५३. [1]) $A_1$ २. १८५५. [1]) Emended; A °मानस्यार्थान्प्रा°, omitting two *aksharas*; C °मानस्य तान्यर्थान्प्र°. १८६१. [1]) Emended; A °मध्यम°. १८६४. [1]) Emended; A °विश्रवत्. १८६६. [1]) A पिबद्भि. १८६८. [1]) Emended; A तेऽयुद्ध°.

1870 बह्वर्थमर्थ्यमानेन लोठनेन तिरस्कृतः । सोमपालः प्रियं किंचिद्राजपक्षे न्यदर्शयत् ॥१८७०॥
मयि प्रभुरसैन्यानां भ्रमाणां वैरिविग्रहे । सज्जो हिताय त्वं रन्ध्रमन्विष्यसि किमाश्रितः ॥१८७१॥
इति निर्भर्त्सितस्तेन सुज्जिः स्वाहंक्रियोचितः । सर्वानुत्सृज्य संनद्धो राजसैन्यमहेभवत् ॥१८७२॥
जरडांबाडसंग्रामशीतज्वरमहाभयः । वरूथिनीमथोत्थाप्य निवृत्तो निशि लक्ष्मकः ॥१८७३॥
विसृष्टदूताः कटकं नष्टं वक्तुं प्रभोर्द्रुतम् । केचिदन्वसरन्सुज्जिं सैनिकास्ते जिघांसवः ॥१८७४॥
1875 पारेणैकेन भूपालसैन्यमन्येन वैरिणः । वर्त्मनः श्वभ्रदुर्गस्य तुल्यमेव प्रतस्थिरे ॥१८७५॥
शारम्बरपथं वैरिवर्गं त्यक्त्वा यियासवः । स्थोर्वी कालेनकाल्येन संकटेन तदन्तिके ॥१८७६॥
तस्मिन्नहन्यस्खलिता वनिकावासनामनि । ग्रामे सैन्या न्यविक्षन्त लोकैरुत्थापवैः समम् ॥१८७७॥ युग्मम् ॥
अनुप्रस्थायिनोऽभ्यर्णग्रामकेष्वपि सुषुपुः । भुक्त्वा पीत्वाथ ते निन्युर्निशार्धमकुतोभयाः ॥१८७८॥
अथापातं विद्विषद्भिः स्वस्य भावयितुं द्रुतम् । क्षोभभृत्सुज्जिरभ्येत्य तूर्यघोषमकारयत् ॥१८७९॥
1880 क्षणदाशेष एवाशु पलायां चक्रिरे ततः । तैस्तैः शैलपथैः सेना निरवष्टम्भनायकाः ॥१८८०॥
चित्राम्बराणि मुष्णद्भिः प्रावेल्यज्यन्त मन्त्रिणः । भूप्रकम्पैर्गण्डशैला नानाधातुद्रवैरिव ॥१८८१॥
लुण्ठ्यमानाश्च भूस्थानु नादधे कश्चिदायुधम् । तदा तु येन वा तेन स्वात्मा नान्यस्तु रक्षितः ॥१८८२॥
उत्प्लुत्य लङ्घयन्तोऽद्रीन्केऽपि शोणाधरांशुकाः । रक्तस्फिजो गतौ प्रापुर्मर्कटा इव पाटवम् ॥१८८३॥
केऽप्यम्बरपरित्यागनिकृत्तशरीरविग्रहाः । हरितालशिलाखण्डा इव वातेरिता ययुः ॥१८८४॥
1885 भूलवेणुवनाकीर्णैः शैलैरकृशविग्रहाः । केऽपि श्वासोत्थपूत्काराः करिपोता इवाव्रजन् ॥१८८५॥
किं नामोवीरणैर्मन्त्री स नासीत्तत्र कथन । तिरश्चेत्रं विपर्यस्तधैर्यैर्येन पलायितम् ॥१८८६॥
भृत्यस्कन्धाधिरूढोऽथ गच्छन्मूढः प्रधावितुम् । प्रतीहारो द्विपद्योधैर्दूरात्कैश्चिद्व्यलोक्यत ॥१८८७॥
निरंशुकः स स्रस्तांशुककेयूरकुण्डलः । प्रतिज्ञायानुसक्तैस्तैः सर्वप्राणप्रधावितैः ॥१८८८॥
अश्माहतेन भृत्येन त्यक्तः स्कन्धात्पृषत्क्षतः । स निस्पन्दवपुस्तिष्ठंस्तैरग्राहि महाजवैः ॥१८८९॥
1890 नवबन्धनशोकार्तशारिकाकृशविग्रहः । स ˉलंगलिरिव व्यञ्जद्भियः संकुचितेक्षणः ॥१८९०॥
वधस्य मे मानधनमहर्तुर्वैशसान्तरम् । इतोऽधिकं ध्रुवं सुज्जिर्विदध्यादिति चिन्तयन् ॥१८९१॥
स्कन्धेऽधिरोप्य निःशेषीकृतप्रावारभूषणः । नदद्भिः सोपहासं तैः सुज्जेरग्रं व्यनीयत ॥१८९२॥ तिलकम् ॥
प्रच्छाद्य सत्त्ववान्द्वकं सोऽंशुकेनैव नोर्जितः । बृहद्राज इवेत्युक्त्वा तस्मै स्वान्यंशुकान्यदात् ॥१८९३॥
प्रावारिताम्बरं कृत्वा हयारूढं च तं पुनः । धैर्येणायोजयत्स्निग्धैर्वचोभिः परिसान्त्वयन् ॥१८९४॥
1895 निर्लुण्ठिततुरंगासिकोशैः परिवृतः खशैः । ततो गृहीत्वा तं श्रीमान्सोमपालान्तिकं ययौ ॥१८९५॥
इमा व्योमाङ्गनाक्रीडत्तडित्तरलविभ्रमाः । भाग्यमेवानुयायिन्यः स्थायिन्यः कस्य संपदः ॥१८९६॥
आराधनधिया स्वैरं यस्याग्रेऽभोजि भृत्यवत् । गात्राणि कुङ्कुमालेपैरुपावर्धन्त च स्वयम् ॥१८९७॥

---

१८७३. 1) Emended; A जरडा°. १८७६. 1) नका written by A₂ in space left by A₁. १८७७. 1) Emended; A न्यविक्षन्त.—2) A₁ २. १८८१. 1) Emended with C; A नानाधातु°. १८८२. 1) Conjectural reading; A स्वात्मनान्यस्तु. १८८६. 1) Emended, A तिरश्चैत्रं. १८८७. 1) A °स्कन्धा°.—2) Thus corr. by A₁ from प्रधावितुम्. १८९०. 1) A °कृशवि°.—2) Thus A without indicating the *lacuna*; perhaps read नक्तंलिरिव.—3) Thus A₁, apparently corr. from व्यञ्जद्भियः; doubtful. १८९२. 1) A₁ ३. १८९७. 1) Emended with C; A °रुपवर्धन्त.

सोमपालादिभिः मड्डैः स मासैरेव पञ्चषैः । तेषामग्रे तथाभूतस्तिलकाद्यैरभाव्यत ॥१८९८॥
लुस्ठोऽपि पलितश्वेतोपान्तश्यामाननः परैः । बलाका इव काकोऽभूच्छोकमूको वनान्तरे ॥१८९९॥
अर्पितं सुज्जिना सोमपालः स्वीकृत्य लक्ष्मकम् । आनन्गृहीतान्कश्मीरान्निजराष्ट्रं न्यवर्तत ॥१९००॥ 1900
लोठनस्यान्तिकादेत्य स भूरिर्माञ्जिकादिभिः । प्रतिभुत्य प्रभूतार्थैः प्रतीहारमवाप्यत ॥१९०१॥
कश्मीरा हि प्रतीहारशिक्षापक्षानुयायिभिः । तदा न कैरमन्यन्त संप्राप्या डामराग्रजैः ॥१९०२॥
लुब्धेनापि प्रतीहारावर्तं राष्ट्रं जिघृक्षुणा । भूरि चाविदुषा वित्तं राज्ञोकारि न तेन तत् ॥१९०३॥
अप्रमानेष्वमात्येषु प्राप्तेषु नगरं नृपः । हारिते च प्रतीहारे न धैर्यात्पर्यहीयत ॥१९०४॥
यैः सैन्यसारैरराज्यं पुरा भिक्षाचरोऽकरोत् । यैश्चाप्युत्कुपिते राष्ट्रे वृत्त्यावर्तिष्ट सुस्सलः ॥१९०५॥ 1905
भूभुजा संगृहीतानां शीतज्वररुजा ततः । तेषां दश सहस्राणि योधानां निधनं ययुः ॥१९०६॥
विरराम तदा देशे न मुहूर्तमपि क्वचित् । बान्धवाक्रन्दतुमुलं प्रेतवाद्यमहर्निशम् ॥१९०७॥
घोरधर्मघृणिभ्रान्ताशेषभ्यवहृतिस्थितिः । सोऽनुत्साहहतः कालो नष्टराज्य इवाभवत् ॥१९०८॥
नानादिगन्तरायातैः प्रत्नैः काश्मीरकैरपि । लोहरेव प्रवृद्धर्द्धि राजद्वारमजायत ॥१९०९॥
काकतालीयसंप्राप्तलोकोत्तरनृपश्रियः । अकुण्ठा लोठनस्यासीत्स्फूर्तिर्वित्तपतेरिव ॥१९१०॥ 1910
तस्याकारपरिक्लेशवैशसाभिन्नवृत्तयः । भोगेष्वबाधा भ्रातृव्यभृत्यपुत्रादयोऽभवन् ॥१९११॥
नास्थानवर्षी स्थाने वा बद्धमुष्टिर्विभूतिमान् । स वयःपाकनिष्कर्मव्यवहारो व्यभाव्यत ॥१९१२॥
छाया निरङ्कुशमतिः स्वयमातपस्तु छायान्वितः शतश एव निजप्रसङ्गम् ।
दुःखं सुखेन पृथगेवमनन्तदुःखपीडानुवेधविधुरा तु सुखस्य वृत्तिः ॥१९१३॥
तावदभ्युदयावाप्तेर्मासे न्यूनेऽधिके गते । एकसूनोः सुतो दिल्हो लोठनस्य व्यपद्यत ॥१९१४॥
तमेकपुत्रा शोचन्ती शोकशङ्कुहताशया । ततः प्रपेदे प्रलयं मल्ला लोठनवल्लभा ॥१९१५॥ 1915
पत्न्यामभिजनाभावायां गुणज्येष्ठे तथात्मजे । विपन्ने स तथा लक्ष्म्या न कृत्यं किंचिदैक्षत ॥१९१६॥
निःस्नेहत्वस्य भूपालवल्लभस्य विजृम्भितम् । मोहनी या श्रियः शक्तिर्यदशासीत्पुनः सुखम् ॥१९१७॥
अकारयन्निर्धनोऽपि तथा वृद्धस्य कालवित् । लक्षैः षट्त्रिंशता मोक्षं लक्ष्मकस्य क्षमापतिः ॥१९१८॥
दिष्टवृद्धिपरिक्षिप्तपुष्पवृष्टी जनैः पथि । तस्मिन्याते न कोऽप्यासीद्राज्ञा प्रत्याहृतां श्रियम् ॥१९१९॥
स लक्ष्मीमहिमक्षिप्तविस्मृताभिभवव्यथः । प्रभवन्पुनरेवासीन्निग्रहानुग्रहक्षमः ॥१९२०॥ 1920
धनप्रलोभनिर्नष्टसर्वावष्टम्भपाटवः । सुज्जिः साचिव्यमव्याजं भेजे लोठनभूपतेः ॥१९२१॥
दत्त्वात्मभागिकसुतामविश्वासमपाहरत् । स तस्याप्रियापायदुःस्थितिव्यथया समम् ॥१९२२॥
अभ्यर्थ्य पार्थिवं पद्मरथं प्रानीतवान्कृती । तस्य सोमलदेव्याख्यामुद्वाहाय तदात्मजाम् ॥१९२३॥
एवं प्रधानसंबन्धैर्बद्धमूलं विधाय तम् । सोऽभ्याहतस्य साचिव्यमहस्यानृण्यमाययौ ॥१९२४॥
आचिन्तयच्च कश्मीरप्रवेशं डामरादिभिः । बहुशः प्रार्थ्यमानेन प्रेरितो नवभूभुजा ॥१९२५॥ 1925
इत्थंभूतं कृतैक्यं च समं सीमान्तभूमिपैः । अथ दलयितुं शत्रुं नीतिं प्रायुङ्क्त सोऽस्सलिः ॥१९२६॥

१९०३. ¹) Emended, A लब्धेन. १९२१. ¹) च omitted in A; supplied with C.

तत्रोदयद्वारपतिस्तस्यारम्भे गभीरधीः । अलुप्तसत्त्वः सुस्सलस्य सारेतरविहाग्मगात् ॥१९२७॥
तवस्थः स हि निर्गद्धसर्वस्वोऽप्यर्थितोर्थिभिः । रामनामादिभिः स्वामिकृत्ये निस्थोविलोभ्यत् ॥१९२८॥
वनमस्थाभिधे स्थाने लोहरादूरगे स्थितः । भाविचोऽक्तिबलसंपामैर्भेद निन्ये द्विषद्बलम् ॥१९२९॥
1930 कटास्थिताभिमार्येस्मिन्मिथ्या तथ्येन वा वधुः । भयं लोठनभूपालान्माभिकेन्दारकोदयः ॥१९३०॥
हन्तव्यांधात्रिकानस्मान्सुज्जी न्यस्ताशयो नृपः । वेत्ति तत्मेरणेनासौ तदाशङ्कितवेति ते ॥१९३१॥
संजाते सहजाख्यायां राज्यां सुस्सलभूपतेः । कुर्मो मल्लार्जुनं भूपं लोहरेस्मिन्हिताय वः ॥१९३२॥
तत्प्रेमाणमिवाकस्मादभिसंधत्त लोठनम् । संदिदेशाथ तान्भीमाञ्जयसिंहो महीपतिः ॥१९३३॥
व्याजेन राज्ञा संदिष्टं तत्कोष्ठं स्वीचिकीर्षुणा । प्रतिभुत्वमिवि‍भ्रत्तैस्तस्मिस्तैश्च तथैव तत् ॥१९३४॥
1935 मल्लार्जुनं लोठनोऽथ ज्ञात्वा प्रारब्धधात्रिकम् । तदाद्यान्भ्रातृसूनूंस्ताधात्रिकानप्यबन्धयत् ॥१९३५॥
अवरुद्धाननूनेन शत्रून् सौस्सलिना भजन् । परं विग्रहराजेन प्रातिहार्यमजिग्रहत् ॥१९३६॥
राजा व्याजात्पितृव्येण बद्धसंधिरुपायवित् । तत्वरे हारितं राज्यं तैस्तैः स्वीकर्तुमुद्यमैः ॥१९३७॥
विसृज्य शूरं निष्कम्पराज्यः सुज्जेः परिभ्रमात् । मासान्कांश्चिदसंक्षोभो वृत्त्यावर्तिष्ट लोठनः ॥१९३८॥
सुज्जिः पद्मरथापत्यं प्राक्कन्यामानिनाय याम् । अनूढाया विवाहाय तस्या मातरमागताम् ॥१९३९॥
1940 आकर्ण्य तेजलादीनां[1] प्रसक्तेस्मिन्सगौरवाम् । सामात्यो[2] दर्पितपुरं कृतप्रत्युद्गता ययौ ॥१९४०॥
माञ्जिकाद्यैरथ प्राग्रन्ध्रैर्निर्गत्य बन्धनात् । मल्लार्जुनः कोट्टराज्ये संहतैरभ्यषिच्यत ॥१९४१॥
ठक्कुरैः प्राग्वदानीतैः प्रतोलीतलमागतान् । भृत्यांस्ते सिंहभूभर्तुः प्रविविक्षून्न्यवारयन्[1] ॥१९४२॥
पञ्चेऽब्दे लोठनः शुक्लपक्षयोदश्यां स फाल्गुने[1] । यथायुज्यत राज्येन तथैवाशु व्ययुज्यत ॥१९४३॥
अनूढां कन्यकां मूढः संपदं चाप्यवीकृताम् । प्राप्तां परस्य भोग्यत्वं भाग्यहीनः शुशोच सः ॥१९४४॥
1945 भटिस्थाद्दालिकादिभ्यो[1] देशेभ्यो नष्टशक्तिना । तेन सुज्जिबलात्कोशशेषः कश्चिदवाप्यत ॥१९४५॥
पूर्वाहूतान्सिंहभूभृद्भृत्यान्व्यकृत्य माञ्जिकः । निनायाप्रतिमल्लत्वं मल्लार्जुनमहीभुजम् ॥१९४६॥
तेनातिव्ययिना नव्यवयसा भूभुजा कृतम् । मौक्तिकैः पूगविच्छेदे ताम्बूलार्पणमेकदा ॥१९४७॥
वर्धनो विषयौत्सुक्याद्वाटके कुहनादिषु । त्यागित्वं तस्य तत्त्वज्ञैः सदोषमुदघोष्यत ॥१९४८॥
प्रजोपतापोपचितः कोशः सुस्सलभूपतेः । तेनातिव्ययिना स्वैरमनुरूपव्ययः कृतः ॥१९४९॥
1950 गणिकाचारणद्रोग्धृविटचेटाविपेटकम् । साधून्विधूय सोऽपुष्णाद्दौर्गत्यात्[1] कुमतिर्धनैः[2] ॥१९५०॥
सपत्नसादहितसाध्वपि वा वह्निसाद्भवेत् । द्रविणं क्षोणिपालानां जनतोपद्रवार्जितम् ॥१९५१॥
प्रजापीडनजं वित्तं जयापीडमहीभुजः । दास्याः पुत्रैरुत्पलाद्यैर्विलुप्तं नमुरन्तकैः[1] ॥१९५२॥
लोकसंक्लेशनोद्भूतः कोशः शंकरवर्मणः । प्रभाकरादिभिः स्वैरं जायाजारैरभुज्यत ॥१९५३॥

---

१९२८. [1]) Thus A; perhaps read निस्वोधृतो°. १९३०. [1]) Thus corr. by $A_1$ from °केन्दाकारव:. Perhaps read °केन्दाकरा°; cf. viii. 1818. १९३३. [1]) Emended with C; A °सन्धत्त. १९३६. [1]) Emended; A अवरुद्धसन्°. १९३९. [1]) Emended with C; A तस्य. १९४०. [1]) Thus A; doubtful.—[2]) Doubtful emendation; A सामान्त्यो. १९४१. [1]) Emended; A कोट्टराज्ये. १९४२. [1]) Emended A °वारयत्. १९४३. [1]) A काल्गुने. १९४५. [1]) Thus $A_1$; $A_2$ °स्वाटि-शिका°; cf. viii. 581. १९५०. [1]) Thus $A_1$ in margin; in text °ण्णाद्दौर्गत्य:.—[2]) Thus corr. by $A_1$ from कुपति°. १९५२. [1]) Emended with C; $A_1$ नमुरन्तके:; the reading नमुन्तकै:, given by $A_2$ in margin, has been struck out.

अनच्छचपलाः पङ्क्तीरच्छन्ना भूमिनागिनम् । ददुः सुगन्धादित्याय धनं संभोगभागिने ॥१९५४॥
राज्ञे यज्ञस्कारस्यार्याऽन्वयीचकेतिसंचितम् । अकृतामकृतैवरवाजालिङ्गितमर्मणा ॥१९५५॥ 1955
पूर्वरजार्जितं पार्थगुप्तिः प्राप्य धनं मृतः । शाला नावीवपस्येव तुङ्गादीमत्रजायत ॥१९५६॥
संग्रामराजः श्रीलेखामुखाण्मगुप्तिर्धनी । मुषितो व्यङ्गसुहार्यैर्मिषिडोपार्जनस्पृहः ॥१९५७॥
अमत्यचेताश्रपितमजस्य जगदूर्जिता । अन्तेवन्तमहीभर्तुर्विभूतिर्भस्मसादभूत् ॥१९५८॥
पुत्रेणापावसाजार्था जारसावरणा हृतः । कुवलाकीचालोद्भूतः कोषः¹ कलशभूपतेः ॥१९५९॥
सह गेहैः समं स्त्रीभिः सभा पुत्रैरभूद्धनम् । अभान्तार्जमतर्षस्य हर्षदेवस्य वह्निसात् ॥१९६०॥ 1960
चन्द्रापीडोचलावन्तिवर्माद्यैर्धर्मनिष्ठुरैः । निशा न्याय्यस्य कोशस्य नाशाप्यनुचिता क्वचित् ॥१९६१॥
वीरपालिककसीमान्तभूभृद्दयाचिटाइय: । लुण्ठिं प्रारेभिरे पुष्टां गते मल्लार्जुनोदये ॥१९६२॥
चन्द्रविस्ताप्यरीन्भूभृत्साम्यन्निवटितेप्सितः । अथ चित्ररथं दुर्गमास्कन्दाय व्यसर्जयत् ॥१९६३॥
द्वारपाद्यावीस्तुल्याधीकारेण प्रवर्धितः । सोनन्तसामन्तयुतः पदं फुल्लपुरे व्यधात् ॥१९६४॥
उत्सेहिरे न वितता अपि दुर्गसमाश्रयात् । मल्लार्जुनचमूर्जन्ये जेतुं तदनुजीविनः ॥१९६५॥ 1965
भेदाय कोष्ठमाकस्तलकूल्यो राजसंमतः । मल्लार्जुनानुगै राज्ञी हतः संवर्धनाभिधः ॥१९६६॥
युद्धाशाऽप्रेपि तिष्ठन्तः कोष्ठे भयविधेयताम् । कोष्ठेश्वरेऽभ्यगायाते तत्रामित्राः प्रपेदिरे ॥१९६७॥
प्रतिभूतकरो बद्धसंधिः स व्यसृजत्ततः । सभाजनाय जननीं तेषां मल्लार्जुनोऽन्तिकम् ॥१९६८॥
सा वैधव्यविविक्तेन¹ वेषेणैश्वर्यशोभिना² । कोष्ठेश्वरादीन्सोत्कण्ठांश्चक्रे चपलचेतसः ॥१९६९॥
तस्यां गृहीतविश्रम्भं व्यावृत्तायां तदन्तिकात् । द्वारेशाय ददावूरीकृतं मल्लार्जुनः करम् ॥१९७०॥ 1970
आकृष्टो राजजननीचक्षुरागेण कोष्ठकः । दिदृक्षाकपटात्कोष्ठमादरोह मितानुगः ॥१९७१॥
अर्धकूटेन¹ सहितस्तेन चित्ररथस्ततः । संभूतप्राभृतो भूमिभर्तुः सविधमाश्रयी ॥१९७२॥
राजा तु संमन्त्र्य ततः पायुक्काद्यतिशालिना । उदयद्वारपतिना नीतिं जेतुमरीन्पुनः ॥१९७३॥
वीतास्कन्दो लोठनेपि गते पद्मरथान्तिकम् । लेभेभिनवभूपालः किंचित्पादप्रसारिकाम् ॥१९७४॥
उदूढवान्सोमलाख्यां तां पद्मरथकन्यकाम् । उपयेमे भूलायामो नागपालात्मजामपि ॥१९७५॥ 1975
तस्माद्दंष्ट्रक्रियामूढाल्लेभिरे गूढकैतवाः । भूभुजः सोमपालाद्या भृत्यभावेन वेतनम् ॥१९७६॥
कविगायनजल्पाकयोधचारणचेष्टितैः । बहवो मुमुचुर्भूतास्तेपि तं राजबीजिनः ॥१९७७॥
स बाल्यान्निष्परीपाकप्रज्ञो दृष्टो रटन्वृथा । जज्ञे वाक्यौद्धिमाचेण वालिशैः¹ कुशलाशयः ॥१९७८॥
चेतोऽरिवामप्रहेतोः प्रदीप्तं वदनं विना । अनिष्ठुराकृतेर्दृष्टं तस्यान्यत्र न सौम्यम् ॥१९७९॥
अत्रान्तरे नृपः सुज्जिं संजघ्नात्प्राविक्रमम् । माभून्मल्लार्जुनेनापि भितोसाविति चिन्तयन् ॥१९८०॥ 1980
निर्वासने मत्रेशो च प्रभुः सुज्जिस्ततोधिकम् । तात्कालिकीं प्रतीहारः शक्तिं कांचिददर्शयत् ॥१९८१॥
स कम्पनाधीकारकजं राजविसर्जिताम् । वितरन्सुज्जये राजस्थानकार्यकजं विना ॥१९८२॥
निस्तोषाय नृपायासोमपालानुरोधतः । प्रतीहन्यामदस्तेन निजकूटकजं भरात् ॥१९८३॥

१९५९ ¹) A कोष:. १९६९. ¹) Emended; A वैधव्यं वि°—²) Emended; A वैवैर्न्य°. १९७२. ¹) Emended; A अर्धकूटेन. १९७८ ¹) A वालिशैः.

आकृष्य प्रददौ तस्य तत्प्राणिपरितोषिणः । आप्यायसान्द्रया दृष्ट्या वत्सपक्षीकथो व्यधात् ॥१९८४॥ चक्कलकम् ॥

1985 भर्त्रे हिताय सौहार्दे विधूतोदयधन्ययोः । अभजद्विल्हणः सुज्जेः प्रवेशे प्रतिलोमताम् ॥१९८५॥

प्रत्युद्गमेन संमान्य सुज्जिं प्रावेशयन्नृपः । देशाद्विरास्यद्धन्यादीन्मानसाच्च तु तद्गिरा ॥१९८६॥

कृतागाः क्ष्मापतौ लब्धक्षणे तीक्ष्णैर्जिघांसति । कोष्ठेश्वरः पलायिष्ट ज्ञातोदन्तस्तदन्तिकात् ॥१९८७॥

आस्कन्दायागते राज्ञि गृहीतमनुजेश्वरे । स्वपक्षभेदोपहतः सोथ देशान्तरं ययौ ॥१९८८॥

लोठनस्तु निजग्राह कांश्चिदालम्ब्य ठक्कुरान् । बप्पनीलाभिधे स्थाने वसन्मल्लार्जुनं बलात् ॥१९८९॥

1990 तत्र दृष्टमसंभाव्यमेवास्य खलु पौरुषम् । परिभ्रष्टोपि यद्रूपदं तमजयत्तदा ॥१९९०॥

जहार तुरगांल्लुण्ठि चक्राद्धिल्लिकापणे । मार्गद्रङ्गादिभङ्गं च ——[1] सर्वत्र सोकरोत् ॥१९९१॥

राजराजाभिधानेन डामरेणार्थितस्ततः । कश्मीरराज्यसंप्राप्त्यै क्रमराज्यमगाहत ॥१९९२॥

तद्वेस्य समीपस्थे हते चित्ररथेन सः । तस्मिन्नयन्त्ये प्रययौ बप्पनीलभुवं पुनः ॥१९९३॥

तस्मिन्नास्कन्दमसकृद्दत्त्वाद्धिल्लिकामपि । अपरोक्षमशङ्कोभूत्कोट्टे मल्लार्जुनो वसन्[1] ॥१९९४॥

1995 भ्रातृव्येण पितृव्यस्य दापयित्वा धनं बहु । ततः कोष्ठेश्वरो यात्रासज्जः संधिं न्यबन्धयत् ॥१९९५॥

लोहरे विहितस्थैर्यो[1] गृहीत्वा लोठनं ततः । कश्मीरोर्व्यां पपातासौ विजिघृक्षुः[2] क्ष्माभुजा ॥१९९६॥

गिरीनुल्लङ्घ्य कार्कोटद्रङ्गे विहितवान्पदम् । निपत्य मार्गेनुद्घाते यावदन्वैश्च डामरैः ॥१९९७॥

नावाप योगं निर्गत्य क्षिप्रकारी क्ष्मापतिः । सर्वोद्योगेन ते तावदुत्थानोपहतं व्यधात् ॥१९९८॥

अत्रान्तरे प्रतीहारः प्रापास्तमपवीडवां[1] । न संपत्स्वल्पपुण्यानामनपायित्वमायुषः ॥१९९९॥

उत्सारणप्रियतया परिहृतसर्वाहारं गृहे निरनुरोधतया वसन्तः ।

2000 संपद्गुरुकृतधियोप्रतिपत्रवृत्तेर्धिग्जानते न रभसान्नियतेर्निपातम् ॥२०००॥

कुर्वाणोत्सारणं तस्य गृहजा सततं नृणाम् । नाज्ञासीत्सुखसुप्तस्य पृष्ठे पतितमन्तकम् ॥२००१॥

ज्वरितः स हि निष्ठ्यूतज्वरः स्वपिति विज्वरः । विहित्वेति न विज्ञातः स्वपन्नेव मृतस्तदा ॥२००२॥

सल्लोठने कोष्ठकेथ प्रयाते नृपतिः पुनः । न स मल्लार्जुनो नापि कोष्ठको न स लोठनः ॥२००३॥

व्यनोदयनं पार्श्वस्थितं मल्लार्जुनोवधीत् । तस्मै चुकोप माध्यस्थ्ये स्थापितस्तेन कोष्ठकः ॥२००४॥

2005 अनुनिन्ये न तं खिन्नं स संभृतबलस्ततः । अभिषेणयितुं क्रोधादधावत्सहलोठनम् ॥२००५॥

कोष्ठको मल्लकोष्ठाद्यैर्मितैर्युक्तोपि सादिभिः । तीर्त्वा परोष्णीं तत्सेनां निर्ममाथाप्रमाथिनीम् ॥२००६॥

हतेषु तेषु संग्रामे खशसैन्यप्रकाविषु । वधं प्राप्तः सिंहभूभृत्पाल स नृपो हतः ॥२००७॥

आरूढः कोष्ठमूर्धानं[1] मानमूर्ध्नः परिच्युतः । भग्नप्रतापो भूयोपि समधत्त स कोष्ठकम् ॥२००८॥

विसृज्य लोठनं तिष्ठन्निर्वैरमगमत्पुनः । अनिर्वाहितदेयेन तेन द्वैधं स डामरः ॥२००९॥

2010 बद्धाधिकारिणः शुल्कं गुडलाकारि राजवत् । तेन स्वनाम्ना भाण्डेषु ग्रहे सिन्दूरमुद्रणम्[1] ॥२०१०॥

जतुसंहतयोः काचकलशीदलयोरिव । क्षणे क्षणे संधिभङ्गस्तयोः समुदपद्यत ॥२०११॥

---

१९८४. [1]) A₁ ४. १९९१. [1]) A₁ indicates here a *lacuna* of two *aksharas*; C तदा. १९९४. [1]) Emended; A °वसत्. १९९६. [1]) Emended; A °स्थैर्ये.— [2]) Emended with C; A °विजिगृक्षु:. १९९९. [1]) Emended with C; A °हारमापास्तमपपीडया. २००८. [1]) Emended with C; A कोष्ठमू°. २०१०. [1]) Emended; A °मुद्रणात्.

निर्व्यूढिभूम्नैर्वाणीस्थैर्विरागं लोहरेश्वरः । निन्ये लवन्यं सोप्येनं स्पर्शोद्बन्धिरमकूपीः ॥२०१२॥
डामरेण ततो दत्त्वास्कन्दं तत्कटकान्तरम् । पराध्यायुधधुर्याश्वहरणाद्ध--¹रं कृतम् ॥२०१३॥
दत्त्वा ह--¹रायत्त्यां विषमैर्हठपौरुषैः । एवं तं कोष्ठको मूढः सुखोच्छेदं व्यधाद्विषाम् ॥२०१४॥
तनयावामसंबन्धाच्छ्वशुरं मुख्यमन्त्रिणाम् । अत्रान्तरे नृपो हन्तुं माञ्जिकं स व्यचिन्तयत् ॥२०१५॥ 2015
आसीत्कठोरतारुण्यतरङ्गितमनोभवः । सुव्यक्तं स हि तन्मातुरौपपत्येन संमतः ॥२०१६॥
आहारावसरे तीक्ष्णाः कृतसंज्ञाः क्षमाभुजा । दत्तप्रहरणाः प्राणैर्भुञ्जानं तं व्ययोजयन् ॥२०१७॥
धुन्वन्नसिपटं बद्धवीरपट्टो रटन्बहु । निर्लुण्ठयन्स तस्तेनां तां तामारभटीं व्यधात् ॥२०१८॥
अथाश्लिष्यत न द्रोहमभ्याविन्दाकरोन्महो । राज्ञा विषमितस्तेन रसदानेन स स्वयम् ॥२०१९॥
दैवलोस्तारितारातिस्ततः सिंहमहीपतिः । संदधे कोष्ठकं सुज्जि प्राहिणोद्विजयाय च ॥२०२०॥ 2020
मार्गस्य याममात्रेण गम्यस्यान्तिकमाप सः । यावत्तुरंगहरणात्कोष्ठकेनाकुलीकृतः ॥२०२१॥
अन्तर्भेदाकुलस्तावत्स्थवस्थातुमक्षमः । गृहीतकोशः संत्यज्य कोट्टं¹ मल्लार्जुनो ययौ ॥२०२२॥
राज्यभ्रष्टः स निर्लुण्ठ्यमानो मार्गेषु तस्करैः । अवनाहोन्मुखो रक्षन्कोशशेषं कथंचन ॥२०२३॥
अष्टमष्टादशशरेण्यथाष्टमवत्सरे¹ । राज्यान्तेन द्वितीयस्यां वैशाखस्यासितेहनि² ॥२०२४॥
दाला शिखामृतकचैरमृतं विलब्ध--¹ण्यकृत्समिति लूनशिराः कृतश्च ।
ईशेन यत्र तदकार्युपकर्तुरस्तु तत्रापरः क इव संनिहितद्विजिह्वः ॥२०२५॥ 2025
मुक्ता इमा इति जले नलिनेषु लीनं ज्ञातृत्वमेतदिति जाग्रमिनेषु लग्नम् ।
यज्ज्ञायते किमपि हन्त विमोहनी सा शक्तिः श्रियः स्फुरति कापि नराभयायाः ॥२०२६॥
अन्त्यकृतप्रहरणा विपिनेषु केपि प्राणेन केचन दृशाथ रसज्ञयान्ये ।
ते केपि सन्ति तु नरेन्द्रगृहेषु हिंस्रा वाचैव ये विरचयन्ति किलोपघातम् ॥२०२७॥
ज्योतीरसाश्मन इवाभिनमीश्वरस्य निर्दग्धुमिन्धनमिवाग्रगतं न शक्ताः ।
पश्चाद्भवेयादि च तत्प्रसृतावकाशाः कुर्युः खला रविकरा इव भस्मशेषम् ॥२०२८॥
कापिलं हर्षटं कोट्टं नीतवान्मण्डलेशिताम् । उच्चैः कोटभृत्यानां संमदं कम्पनाधिपः ॥२०२९॥
कुर्वञ्शय्यां पुनर्मैत्रुं मण्डलं तद्यलम्बत । दिनानि कतिचित्तत्र यावत्प्रकृतिदुर्जनैः ॥२०३०॥ 2030
विटैरसूयाविषमैः प्रसादावसरो नृपः । तावत्कलुषतां तस्मिन्नुपजापैरनीयत ॥२०३१॥ तिलकम्¹ ॥
राजा भवन्परः कोस्तु स्वविचारदृढक्रियः । एषोपि शिशुवद्भूपश्च धूर्तैः प्रनर्त्यते ॥२०३२॥
शैशवे बालिशप्रायैः¹ संस्तुतैर्जाड्यमर्पितम् । प्रौढावधि न वा यायाज्ञाः कार्ष्ण्यं² मणेरिव ॥२०३३॥
भृत्यान्तरापरिज्ञानमात्रेण जगतीभुजाम् । निरागसो वधपातः कष्टं राष्ट्रस्य जायते ॥२०३४॥

---

२०१३. ¹) $A_1$ indicates here a *lacuna* of one *akshara*; C ह्वस्थिरं. २०१४. ¹) Thus or स्व-- $A_1$; C स्वाभावं तेरावस्थां. २०१९. ¹) Cf. viii. 1818. 1980. २०२२. ¹) Emended; A कोष्टं. २०२४. ¹) Thus A; text evidently corrupt; perhaps read °हेवत्स्याष्टम°.—²) Thus corr. by later hand from $A_1$ °स्वासितेहनि. २०२५. ¹) Thus $A_1$; C विलुब्धकार्ण्यकृ°; perhaps read विलुब्धकारण्यकृ°. २०३१. ¹) $A_1$ writes here ४ instead of तिलकम् (?). २०३३. ¹) A बालि°.—²) Thus corr. by $A_2$ from $A_1$ कार्श्यं.

2035 कृत्ये व्यवसितेसाध्ये हास्यः स्यादुद्यमकारिवत् । सुज्जिः प्रायोजि राजाग्रैर्निर्जेतुमिति लोहरम् ॥२०३५॥
निर्व्यूढाद्भुतकार्येथ तस्मिन्ब्रह्मास्त्रतुल्यया । अमोघया प्रजहुस्ते पापाः पैशुनविद्यया ॥२०३६॥
गाम्भीर्यालक्ष्यविकृतैः प्रीत्यालापैर्महीपतेः । प्रत्याघातः कलुषतां नाज्ञासीत्कम्पनापतिः ॥२०३७॥
प्रकृत्या तस्य निर्द्रोहतया शङ्कास्य तादृशाम् । प्रियं कृतवतश्च स्यादविश्वासोथ वा कथम् ॥२०३८॥
प्रीतिरासीच्च नृपतेस्तत्कृत्यैकचितैरपि । अप्रियप्रणयालापैर्विरक्तस्येव कामिनः ॥२०३९॥
2040 जित्वा राष्ट्रद्वयं मार्दां हारितं नृपतेरिति । बहुमानेन दर्पाच्च स्वच्छन्दं स व्यवाहरत् ॥२०४०॥
पौरानगारहरणाद्यपकारैर्निरङ्कुशाः । तद्बन्धवो बाध्यमाना विरागमनयञ्जनम् ॥ २०४१॥
निजागःस्मरणात्कोष्ठेश्वरी न व्यश्वसीन्नृपे । न पितृव्येपि भूपालकोपाविष्कृतविक्रिये ॥२०४२॥
क्रोशं प्रजोपतापेन संचिन्वन्सुज्जिना समम् । संबन्धकृच्चित्ररथो नाभूदभिमतः प्रभोः ॥२०४३॥
[1]धन्योदयौ नृपः सुज्जिदाक्षिण्यालक्ष्यसौहृदः । अपुष्णाद्विभवैर्गूढं राज[1]पुर्यां कृतस्थिती ॥२०४४॥
2045 तौ चाचालगतौ[1] शीतज्वरनष्टपरिच्छदौ । मल्लार्जुनस्य साम्राज्यभ्रंशेपि विपुलश्रियः ॥२०४५॥
सुज्जिद्वेषात्पुरा दूतैराहूतो लक्ष्मकेण यः । आगच्छत्सञ्जपालः स प्राप राजपुरीं तदा ॥२०४६॥
सुज्जिचित्ररथाभ्यां तं रुद्धचेष्टेन भूभुजा । अविसृष्टप्रवेशाशं दूतैर्मल्लार्जुनोभजत् ॥२०४७॥
तासिभिर्न स केनापि सामन्तेन सहाध्वनि । संजातकलहे शस्त्रक्षतो लक्ष्म्या व्ययुज्यत ॥२०४८॥
तथाभूतमपि स्वर्णं भूर्युरीकृत्य नाशकत् । यत्तन्मल्लार्जुनो नेतुं कार्यैस्तदपूज्यत ॥२०४९॥
2050 सोस्वतन्त्रेण राज्ञा च सौजन्याद्रिल्हणेन च । दूतैः प्रच्छन्नमाहूतो रभसादाययौ ततः ॥२०५०॥
न न्यग्रहीच्च[1] चेद्धन्तुर्मामनुज्झेति चिन्तयन् । अभिन्नविषमे मार्गे पुरं साहसिकोविशत् ॥२०५१॥
स कन्यकुब्जगौडादिमण्डलेषु महीभुजाम् । स्पर्धया लब्धसत्कारो भूपतेर्मन्त्रियन्त्रिताम् ॥२०५२॥
अनवाप्य निजे देशे सत्क्रियां दुःखितोभवत् । राजधान्यन्तिकैः पौरैः प्रह्वताञ्च व्यलोक्यत ॥२०५३॥
भूपालोगणयित्वाथ मन्त्रिणो दत्तदर्शनः । भेजे स्वहस्तताम्बूलदानप्रक्रिययैव तम् ॥२०५४॥
2055 निष्किञ्चनोपि सत्ख्यातिमात्रेणानुगतो जनैः । यातायातं नृपगृहे कुर्वञ्छत्रूनकम्पयत् ॥२०५५॥
व्याहारव्यवहारादि व्यालोक्यालौकिकाकृतेः । पुरुषान्तरवित्सुज्जिस्तस्य स्वैरमवेपत ॥२०५६॥
दध्यौ सोथ ध्रुवं राष्ट्रैर्नवसर्वैकचक्रियम् । नैवमेवाद्भुतं भूतमेतादृक्शान्तिमेष्यति ॥२०५७॥
तांस्तान्देशान्तरे वीरानुत्सिक्तान्दृष्टवांश्च च । तं पर्यालोच्य विभान्ति सोत्सेकानाममन्यत ॥२०५८॥
भवितव्यतया दर्पेणाथ नीतः स्वतन्त्रताम् । परिवादावहं सुज्जिस्ततो यत्तद्व्यवाहरत् ॥२०५९॥
2060 स्वानुगैर्लुण्ठितं कक्षमाचक्षाणं रुषा द्विजम् । प्रासैर्मडवराज्यस्थः स सृगालमिवावधीत् ॥२०६०॥
बाह्ये कुकर्मणा तेन विद्राव्य जनमागतम् । तं प्रत्युपक्रियं लोको विरागं नगरेप्यगात् ॥२०६१॥
अत्रान्तरे बन्धुमेकं स्वभ्रुः कमल्लियादयः । अगण्यमायमुत्सेकादुत्तमप्रक्रियास्पदम् ॥२०६२॥
मयि सत्यपरोपि स्यात्किमनुग्राहकः स्मयात् । अकारि चारणप्रायस्तादृक्कोपीति सुज्जिना ॥२०६३॥

---

२०४४. [1]) Emended; A धन्मोदयौ. २०४४. [1]) Emended; A राज्यपुर्यां. २०४५. [1]) Doubtful emendation; A चाचालमतौ; G चाचालगतौ. २०५१. [1]) च supplied with C; A न्यग्र ~ च.

संजातबीजसंबन्धबन्धः क्रमलियादिभिः । अथास्याक्षिप्तोस्थैर्ये सामर्थ्याद्रिल्हणोप्यभूत् ॥२०६४॥
अल्पेन हेतुनोद्भूतं द्वैतं तेषां च तस्य च । खलपैशुनसेकैस्तत्प्रापाशु शतशाखताम् ॥२०६५॥ 2065
प्रकृत्योत्सिक्तमुत्सेकावहैः समुददीदिपत्[1] । दुर्मन्त्रैर्विमर्शकाद्ये साहदेविस्तमुल्हणः ॥२०६६॥
अत्मानां[1] सहास्माभिः क्षमते समशीर्षिकाम् । कृतघ्नोयमिति स्वैरं मन्युं राज्यपि सोग्रहीत् ॥२०६७॥
बिभ्यत्तु भूपतिस्तस्माद्रिल्हणं बाह्यभृत्यवत् । मन्त्रस्वैरकथाद्येषु विश्रम्भेषु व्यवर्जयत् ॥२०६८॥
स तु धूर्तस्त्वदुर्लक्ष्यतादृक्स्वामिविकृतः । स्वेषां धैर्यं परेषां तु संत्रासं माययातनोत् ॥२०६९॥
समप्रशक्तिराकाङ्क्ष्यसंस्तवः पक्षयोर्द्वयोः । तस्य तु प्रययौ सज्जपालो वातेन मित्रताम् ॥२०७०॥ 2070
संनद्धयोः प्रविशतोरन्योन्यस्पर्धया तयोः । क्षणे क्षणे राजधानी ययौ संभ्रमलोलताम् ॥२०७१॥
सुज्जिः सभूपालाक्षेपं प्रतिपक्षान्युयुत्सया । महीमानोत्सवास्थाने संक्षोभमुदपादयत् ॥२०७२॥
कृकाटिकान्यस्तहस्तो द्वाःस्थेनावेदितो द्विः सः । तं निर्भर्त्स्य शिलाक्षेपं क्रोधकक्षाक्षरोकरोत् ॥२०७३॥
लिखितैरिव तान्सर्वैः सोढुं रक्षणमीशितुः । मिथ्या तथ्यमिवोदीर्य संयमद्भिः समर्थताम् ॥२०७४॥
उपावेशयदभ्यर्णे भूपतिः परिसान्त्व्य तम् । सत्यस्मिन्नास्ति नः किंचिदित्यन्तस्तु व्यचिन्तयत् ॥२०७५॥ 2075
चक्रे मड्वराज्यस्थैरथ प्रायो द्विजातिभिः । न सुज्जेः कम्पनेशत्वमिच्छाम इति वादिभिः ॥२०७६॥
अन्विष्य विद्विषः शङ्कां मन्त्रविनिशि रिल्हणः । संनद्धसैन्यमानिन्ये पञ्चचन्द्रं तदप्रियम् ॥२०७७॥
शशङ्के सज्जपालाच्च तस्माच्च बहुसैनिकात् । सुज्जिरभ्यागमगणयत्समुद्दाल्य च तद्रिपुः ॥२०७८॥
आस्कन्दभीत्या निर्गत्य हयारोहैः समं गृहात् । व्यूढानीको निरुद्धालो जजागाराथ सोध्वनि ॥२०७९॥
भूपतिप्रातिलोम्येन वर्तमानस्तदाभवत् । कोष्ठेश्वरोपि संनद्धः सुज्जिना बद्धसौहृदः ॥२०८०॥ 2080
स्थितमप्रातिलोम्येन सोवधीन्मनुजेश्वरम् । इति द्वेष्योपि नितरां द्वेष्यतां नृपतेरगात् ॥२०८१॥
तथा स्थिते निशीथिन्यामाययुस्[1]तस्य विद्विषः । बुभुक्षाहेतुतां राज्ञः स्वगुप्त्यै तेन या कृता ॥२०८२॥
अतथ्यं तथ्यवद्यस्तु तथ्यं वातथ्यवन्नृपः । यः पश्येन्मूढवत्सोर्थैस्त्यक्तोनर्थैः कदर्थ्यते ॥२०८३॥
रत्नज्योतिर्हुतवहधिया त्यज्यते दृष्टिपातः स्फाटाकाशाणामितरविषयः स्वस्य संभाव्यते च ।
वस्त्वेकैकं यदिह न मृषा तन्मृषा यन्मृषा तत्तथ्येनेत्थं किमिव न जनैर्दृश्यते तत्त्वशून्यैः ॥२०८४॥
राजाथ तद्धाहम्यदजानन्नीत्यर्थभेदजम् । न्ययुङ्क्त तस्य तीक्ष्णत्वे सज्जपालं महौजसः ॥२०८५॥ 2085
स कापुरुषवद्वीरः प्रहर्तुं व्यसनाक्षमः । काकुमाक्षिप्य तं हन्तुं तत्र नैक्षत क्षणम् ॥२०८६॥
मायाप्रयोगानन्योन्यमुद्दिश्य स्पृशतोर्द्वयोः । क्षणे क्षणेभजद्राष्ट्रं त्रासोल्लासविलोलताम् ॥२०८७॥
प्रत्याशङ्क्योदयं रात्रौ सुज्जौ जाग्रति पूर्ववत् । अव्यग्रयामिकग्रामं राजधाम्यप्यजायत ॥२०८८॥
राज्ञा निर्वासने रिल्हणस्य सुज्जेरभीप्सिते । पार्थिवोप्यनुमन्ताभूत्कमीशः प्रत्यवास्थितौ ॥२०८९॥
स निर्धियासुरामन्त्र्य[1] तत्सेवाक्षुभिताः प्रजाः । संदर्शं द्वारपतिना राज्ञो युक्त्या समर्पितः ॥२०९०॥ 2090
संमन्त्र्य नृपतिं मैत्रीप्रार्थिना सुज्जिना समम् । पीत्वा कोशं सज्जपालः प्राप्तो रात्रौ व्यजिज्ञपत् ॥२०९१॥

---

२०६६. [1]) Thus corr. by A₂ from A समुदवीदिपत्. २०६७. [1]) Emended; A आतम°. २०८२. [1]) Emended with C; A °वायुः. २०९०. [1]) Emended with C; A निर्वायासु°.

भेरणाद्युल्हणादीनां स्वोत्सेकात्रैव वर्तते । राजन्सुज्जेरभिप्रायः[1] स्पर्धिनोन्यानपिच्छतः ॥२०९२॥
निर्द्रोहस्योपकर्तुश्च मते स्याद्यदि मे नृपः । निर्वास्य रिल्हणं चित्ररथं बद्ध्वा महाधनम् ॥२०९३॥
लोहरादिभिर्नष्टानश्वान्कोशं च भूपतेः । नयेयं संभृतो हन्यां दुर्वृत्तमपि कोष्ठकम् ॥२०९४॥
2095 कार्योपरोधानिर्बन्धः संबन्धेष्वेव नास्ति मे । दाक्षिण्यं स्वामिनः कृत्ये यस्य प्राणास्तृणोपमाः ॥२०९५॥
मय्येव प्रतिराजादिनिर्जयस्वीकृतोद्यमे । युवाविभ्रान्तचित्तोयं नृपश्रीभोगभाग्भवेत् ॥२०९६॥
साहायकाय द्वारेशमुल्हणं रिल्हणाभये । कार्यजाते च मामीशमाकारयितुमिच्छति ॥२०९७॥
ब्रूते च मामुल्हणश्च त्वं चाहं चाविभेदिनः । मिलिता यत्र तत्रास्ति गण्यः को नु नृपास्पदे ॥२०९८॥
इहस्था नयदायादमेकमानीय कंचन । निघ्नोस्य पदे राज्ञो नानुतिष्ठेदिदं यदि ॥२०९९॥
2100 गुणान्प्रसरणप्रासादृन्धायेव गिरा सृजन् । द्विजांशुभङ्ग्या राजाय विनिश्वस्याब्रवीद्वचः[1] ॥२१००॥
यथाह स तथैवैतच्च द्रोहो भासमर्थता । नौदासीन्यमयैतस्मिन्संभाव्यमभिमानिनि ॥२१०१॥
निष्प्रतिद्वन्द्वभावोस्य दुरुच्छेदो भवेदिति । इयमप्यन्यतस्तावदस्त्वपायधियः कथा ॥२१०२॥
किं तु दूये यदाकोप[1]प्रायमस्यात्तथ्यतोपि वा । निर्द्रोहस्य वधो ध्यातो योस्यासौ कार्य एव तत् ॥२१०३॥
अर्थोयमल्पसत्त्वानामप्यस्माभिर्हि भक्षितः । नूनं तेनोपलभ्येत तानावर्जयता धनैः ॥२१०४॥
2105 पुण्यैरपरिहार्यैः स्वैर्जाड्यैर्वा मादृशाममी । जानतामपि जायन्ते निर्गुणा भोगभागिनः ॥२१०५॥
बालिशान्[1]मूकतां प्रायश्चित्तमेतन्महीभुजाम् । तन्मौर्ख्यस्य फलं मूढैरेतैर्यदनुभूयते ॥२१०६॥
दुर्गमो भूमिभृन्मार्गो विटैर्दृषदैरिव । ... ...[1] ॥२१०७॥
तन्त्राणव्रतवैमुख्यं रसनालौल्यशालिनः । परपिण्डोपहर्तारः खलाः कौलेयका अपि ॥२१०८॥
इत्थं खलोपतापेन प्रयुक्तं तद्भयात्पुनः । असंहार्यं कुकर्मेदं पश्चात्तापाय नो भवेत् ॥२१०९॥
2110 इत्युदीर्य नृपः सुज्जेः सज्जो व्यापादसिद्धये । तमजागारयच्छन्नजागरं चाग्रहीत्स्वयम् ॥२११०॥
विश्रम्भमन्त्रश्रुतेः शङ्कां जिघांसुः सुज्जिरित्यपि । तथ्यं भृत्यवचो जानंस्तस्थौ दौःस्थ्येन पार्थिवः ॥२१११॥
गत्वा स्वयं गृहान्यौनसंबन्धं कुरुतं[1] युवाम् । इत्युक्त्वा रिल्हणेनाथ स सुज्जिं समयोजयत् ॥२११२॥
विश्वास्यापि तथा हन्तुं तं प्रसङ्गमनाप्नुवन् । उदताम्यद्दिवारात्रं तल्पोपर्यवशो लुठन् ॥२११३॥
सञ्जपाले गृहाद्बन्धुनाशदुःखिन्यनागते । आशङ्क्य साहसासिद्धिमधिकं पर्यतप्यत ॥२११४॥
2115 निपत्य वीरशयने सुस्सलक्ष्मापसत्क्रियाम् । भ्रातरो यस्य कल्याणराजाद्या व्यस्मरन्युधि ॥२११५॥
सेनानीः कुलराजः स[1] ख्यातो व्यायामविद्यया । प्राणैरानृण्यमिच्छंस्तमपृच्छच्छोककारणम् ॥२११६॥ युग्मम्॥
स संस्थापयितुं हन्तुं चाप्यशक्यं न्यवेदयत् । तस्याप्रतिसमाधेयं कम्पनाधीश्वराद्भयम् ॥२११७॥
क्रियदेतन्निजप्राणमात्रलभ्यं महीभुजाम् । इत्याभाष्य स जग्राह साहसाध्यवसायिताम् ॥२११८॥
दिनद्वयमनायातो गृहेभ्यः कम्पनापतिः । न प्रातिभाव्यमभजत्तस्य मृत्योः श्रियोथ वा ॥२११९॥
2120 विश्रम्भभृत्यः शृङ्गारनामा चाप्यब्रवीत्प्रभोः । तं दृष्टवांस्तृतीयेह्नि शयनैकगणं स्थितम् ॥२१२०॥

२०९२. [1]) Emended; A °प्रायस्पर्धिनो°. २१००. [1]) Emended with C; A [illegible]. २१०३. [1]) Emended; A च आकोप°; G *sec. manu* यतः को°. २१०६. [1]) A शालि°. २१०७. [1]) Here two *pâdas* are missing; C supplements क स नीतिरविवेक, क च ते खलकुञ्जराः. २११२. [1]) Emended; A कुरुतां. २११६. [1]) A, २.

शोभोपयोगिनो भर्तुर्नित्यं सततसेवकाः । कर्तुं साहससान्निध्यं विदूरेण तु पार्यते ॥२१२१॥
करे पिनाकी मकराङ्कशत्रोः शोभाविशेषाय सदानुषक्तः ।
पुराहवे कार्मुककर्म तस्य तत्कालमात्रेण तु मन्दरेण ॥२१२२॥
ताम्बूलहारकव्याजात्ततो राजा व्यसर्जयत् । कुलराजं तमव्याजधैर्यासंलक्ष्यविक्रियम् ॥२१२३॥
ध्रुवं मृत्युः पुनर्नाहमागन्ता तत्ततोऽस्य कः । आरब्धेति स निन्ये न ताम्बूलं स्वर्णभाजने ॥२१२४॥
व्यसनप्रशमे राज्ञः स्वदेहत्यागतोऽनुगाः । एवं कर्तुं यतन्तेऽन्ये निर्व्यूढौ स्खलिताः पुनः ॥२१२५॥ 2125
सगणोऽगणो वास्तु निहतो नियतं मया । जागर्त्यतः परं देव इत्युदीर्य विनिर्ययौ ॥२१२६॥
गतस्य साहसासिद्धौ शक्यं शङ्क्यं पलायनम् । ........................ ॥२१२७॥
व्रजन्स्वामिहितं कृत्वा पुनः पथाभिनाय सः । शस्त्रिणौ द्वौ मिषाच्छन्नौ बन्धस्थाने परामृशन् ॥२१२८॥
स्वयं गृहीत्वा ताम्बूलं राज्ञा प्रहित इत्यथ । द्वाःस्थेनावेदितः सुज्जेः पार्श्वं रुद्धानुगोऽविशत् ॥२१२९॥
ददर्शोच्चावचैस्तं च मितैः परिजनैर्युतम् । यूथनाथमिवात्यल्पैर्द्विपैररहितान्तिकम् ॥२१३०॥ 2130
गृहीतवन्दितस्वामिताम्बूलः सस्मितं स तम् । पृष्ट्वा कृत्यादि नृपतेः सत्कृत्य व्यसृजत्क्षणात् ॥२१३१॥
जनप्रवेशाशङ्की स त्वरमाणस्तमब्रवीत् । कृतागाः कोपि कैवर्तः शस्त्रभृन्मत्समाश्रितः ॥२१३२॥
तस्याक्षेपपरान्भृत्यान्स्वामिन्वार्याधुना तव । संमान्या वयमित्यपेलक्षयन्प्रकृतिक्षणम् ॥२१३३॥
सोत्सेकामिव तां वाचं स दर्पादवधीरयन् । तस्य रूक्षाक्षरं नाहं कुर्यामित्यब्रवीद्वचः ॥२१३४॥
स रोषादिव निर्गच्छन्मान्योसाविति वादिभिः । तं सान्त्वयित्वा तद्भृत्यै रुद्धो व्यावर्तितः पुनः ॥२१३५॥ 2135
तेनाथादि ततः कर्तुं विश्रम्भं वस्तुमोमुनः । सज्जयोरादिश द्वारप्रवेशं भृत्ययोर्मम ॥२१३६॥
अवशेनेव तेनाथ वीक्ष्य तौ संप्रवेशितौ । सहायलाभाद्बुभुत्सुः प्रजिहीर्षुरवर्तत ॥२१३७॥
यानाय कुर्यां प्रातर्वो विधेयमिति तान्वदन् । दत्तपृष्ठो निदिद्रासुस्तल्पे सुज्जिर्जहौ वपुः ॥२१३८॥
गत्वाथ किंचिद्व्यावृत्तो निष्कृष्टक्षुरिको जवात् । प्राहरत्कुलराजोस्य वामे पार्श्वे कृतत्वरः ॥२१३९॥
तस्य भिक्षुर्यतो द्रोहमधावत्क्षुरिकां प्रति । यावत्पाणिः प्रहरणं तावत्सर्वेपि ते व्यधुः ॥२१४०॥ 2140
त्रिमर्शः पश्यतां यावदाशङ्क्ये तत्र नोद्यतौ । स तावदेव छुरिरापेतश्वास इवाभवत् ॥२१४१॥
भयत्यक्ताभिमानेषु विद्रुतेष्वनुजीविषु । चकर्ष शस्त्रं तत्रैकः पिञ्जदेवः परं तदा ॥२१४२॥
प्रहर्तस्तैस्त्रिभिस्तुल्यप्रतिप्रहतिभिः क्षतः । भ्राम्यन्स्रुतासृक्तस्मात्स मण्डपाचिरवास्यत ॥२१४३॥
स्थितान्दत्तार्गले धाम्नि रुद्धद्वारतमोरयः । जिघांसवः सुज्जिभृत्यास्ततस्तान्पर्यवारयन् ॥२१४४॥
तमोरिप्रतिकुर्वाणा भज्यमानैररिभिर्व्यधुः । ते द्वारे तूलशय्यां तां मोक्षार्थं शवमुद्धृतम् ॥२१४५॥ 2145
खड्गेषुशूलपरशुक्षुरिकाश्माभिवर्षिणः । तान्समभ्रमयन्मार्गैरनेकैस्ते विविक्षवः ॥२१४६॥
नैराश्यहेतोर्विशतां तेषां संकटवर्तिभिः । पृष्ठाच्छित्त्वा शिरः सुज्जेरङ्गनेक्षिप्यताथ तैः ॥२१४७॥
अश्वनिःसरणाभीक्ष्णभुग्नेक्षणपुटभ्रुवि । उत्तरोष्ठकचच्छन्नसप्राणपुटद्वयम् ॥२१४८॥

२१२४. ¹) Thus emended in C; A आरेभेति. २१२५. ¹) Emended; A °तोम्बगाः. २१२७. ¹) Here two *pádas* are missing; C supplements इति चिन्तयतस्तस्य मम आसीद्विशृङ्खलं. २१२८. ¹) Emended; A °शन्. २१२९. ¹) Emended; A द्वास्थेन. २१३१. ¹) Emended; A दृष्ट्वा. २१३९. ¹) Emended with C; A कुजरा°. २१४१. ¹) A विमर्शः. २१४६. ¹) Emended; A तान्स तत्क्षम°.

अक्ष्णोर्बध्यमानस्य लोकस्य प्रतिबिम्बकैः । संभाव्यमानसंस्पन्दस्तोकप्रव्यक्ततारकम् ॥२१४९॥

2150 रथपृष्ठस्याक्रमच्छेदाद्गलमांसस्य संधिषु । हरिद्रार्द्रैरिवाबद्धमेदोग्रन्थिभिरुल्बणम् ॥२१५०॥

धूलिध्वस्तकचश्मश्रु तदेतदिति निश्चयम् । परं भालतलस्थेन ददत्कुङ्कुमबिन्दुना ॥२१५१॥

गृहीत्य तिर्यक्पतनव्यक्तसंध्यन्तराहिजम् । चपलसुमुलाक्रान्त्या भृत्याः क्वापि विदुद्रुवुः ॥२१५२॥कुलकम्॥

तीक्ष्णान्प्रयुज्य क्ष्मापस्तु तिष्ठन्व्याकुलधीस्तदा । बहिर्वीक्ष्य जनक्षोभं साहसं निश्चिकाय तम् ॥२१५३॥

सुज्जौ हते क्षते वापि कार्यमेतदिति द्रुतम् । संनह्य सैन्यस्यादिक्षत्स तन्मन्दिरवेष्टनम् ॥२१५४॥

2155 मिथ्यैव सुज्जिर्निस्तीर्ण इति श्रुतवता जनात् । स्वयमप्याहि भूपेन ततः समरसंभ्रमः ॥२१५५॥

निःसंशयं हतं ज्ञात्वा सुज्जिं राजोपजीविनः । तत्र स्थितं शिबिरयं सर्वेऽप्यमबन्धयन् ॥२१५६॥

हिल्लात्मजन्मनः सुज्जिभ्रातृस्यालस्य कौशलम् । कलशस्याङ्ग निर्वर्ण्य वाणीयं पुण्यभागिनी ॥२१५७॥

आक्षिप्यमाणैर्भिक्ष्वाद्यैरन्ते धीरोचितं कृतम् । तेन स्वसंशयस्थेन सदाचाराच्च विच्युतम् ॥२१५८॥

राजौकस्येव तां वार्तां श्रुत्वा स ह्यपलायितः । हतस्य स्वामिनोऽभ्यर्णे जिहासुर्जीवितं ययौ ॥२१५९॥

2160 द्वारे पद्मरतिभिर्भञ्जन्तं राजसैनिकाः । अपसार्य कथंचित्तं तीक्ष्णाः कृच्छ्रादरक्षिषुः ॥२१६०॥

प्रविष्टेऽस्मिन्ननिर्व्यूढपीडिते मण्डपान्तरम् । लब्धमार्गा नृपाभ्यर्णं कुल्लराजादयो ययुः ॥२१६१॥

हत्प्रविष्टो हतवान्स तत्रैकं महाभटम् । शरैरेव हतो दूरात्कथंचित्परिपन्थिभिः ॥२१६२॥

आयातं क्षुभिते देशे सञ्जपालं महीपतिः । रिल्हणं चोल्हणं हन्तुं प्राहिणोद्विहितत्वरः ॥२१६३॥

यातो मार्गात्पलाय्यायं परिशङ्क्येति रिल्हणः । क्षिप्तिकातटपर्यन्तमटित्वा यावदाययौ ॥२१६४॥

2165 पूर्वायातः सञ्जपालो गृहद्वाराद्विनिर्यतः । उल्हणस्य पथो रुन्धन्बहून्प्रहरन्रणे ॥२१६५॥

तावदेकस्य खड्गेन निकृत्ते दोष्णि दक्षिणे । त्वङ्मात्रशेषे छिन्नास्थिस्नायुग्रन्थिरजायत ॥२१६६॥तिलकम्॥

अगण्यमायतां प्राप्ते वंशे यत्कौशलादसौ । दिगन्तरेषु स्वस्मिंश्च देशे प्राप प्रथां पुनः ॥२१६७॥

फलकाले समासन्ने शौर्यप्रतिभुवाभजत् । स तेन दोष्णा वैकल्यं धिगिच्छां विधुरां विधेः ॥२१६८॥

स प्राग्वदुदयावाप्तौ भवेदविकलो यदि । फलेन तस्य जानीयादिच्छां लोकोऽयमद्भुताम् ॥२१६९॥

पीतामृतस्य क्षतविग्रहत्वं न प्राभविष्यद्यदि नाम राहोः ।

2170 अज्ञास्यदिच्छां तदमुष्य लोकः सामर्थ्यभाजः सुचिरप्ररूढाम् ॥२१७०॥

दृष्टः शील्लाभिधो वृद्धः पितृव्यः साहदेविना । सस्पृहं निहतः साधु ‒‒[1] जातव्रणार्तिना ॥२१७१॥

तस्यार्थ्यो विशतो वेश्म जज्जल्लाख्योऽग्रगो हतः । मान्योऽनुगो भटौ द्वौ च यामिकश्च जनंगमः ॥२१७२॥

बालं तनयमालोक्य निषण्णस्याङ्गनस्थितेः । तस्यानिर्गच्छतो गेहे रिल्हणोऽग्निमदापयत् ॥२१७३॥

आनीयमानो धूमान्धो बद्ध्वा मुख्यैः स सैनिकैः । गृहद्वारे हतः कैश्चित्प्राकृतैर्भग्नविक्रमः ॥२१७४॥

2175 तस्य प्रधानप्रकृतिक्षयहेतोर्महीपतिः । मुण्डमप्यवलोक्यासीदशान्तक्रोधविक्रियः ॥२१७५॥

व्यापाद्यमानाः साकोपं भूपतेर्प्रेरितैर्भटैः । उच्चावचाः सुज्जिभृत्याः कृत्यं सत्त्वोचितं व्यधुः ॥२१७६॥

---

२१५७. [1]) Emended with C; A कल.‒स्याद्य. २१६४. [1]) A₁ ३. २१७१. [1]) Before or after साधु two *aksharas* are missing; the *lacuna* not indicated in A; C supplements सम्यगा°.

अनुजो लक्ष्मकः सुज्जेर्बद्धा नीतः स विक्रियाम् । नृपं वीक्ष्यार्थैः कैश्चिद्राजधान्यङ्गने हतः ॥२१७७॥
भ्राता पितृव्यजस्तस्य संगटाख्यो नृपाङ्गने । भटवद इव प्राणानौचित्येनामुचत्कृती ॥२१७८॥
प्रविष्टः शरणं ब्राणवंश्यैः पापैः प्रमापितः । उन्मत्तो मुम्मुनिस्तस्य भ्राता कैश्चित्स्वमन्दिरे ॥२१७९॥
सुज्जिजस्यालस्तु भृङ्गारवृष्ट्या भङ्गुरया हतः । महाकुलीनो विचरन्नौचित्येन च चित्रियः ॥२१८०॥ 2180
साङ्गिकाख्यः प्रतीहारो भणितः शनकैर्हतः । अन्येपि संश्रिताः सुज्जेस्तत्र तत्र प्रमिम्यिरे ॥२१८१॥
जात्यवाजिजवप्राप्तप्राणाः कोष्ठेश्वरान्तिकम् । आसाद्य वीरपालाद्या द्विषां मृत्युभयं जहुः ॥२१८२॥
व्रजञ्शारदियो[1] दुष्टोत्थानदक्षतुरंगमः । प्रपेदे संगटभ्राता बन्धनं सुभटामठे ॥२१८३॥
सूनुश्च सज्जलः सुज्जेः श्वेतिकश्चापजात्मजः । उल्हणस्य तनुजश्च कारागारं प्रपेदिरे ॥२१८४॥
इत्थं राजन्यमात्ये[1] च प्राप्ते पिशुनवश्यताम् । नवमेब्दे भुवेः शुक्लपञ्चम्यां विप्लवोभवत् ॥२१८५॥ 2185
कार्ये क्वापि विपर्यस्तसत्त्वं संस्मृत्य मन्त्रिणम् । तमद्यापि नृपस्तादृग्भृत्योपेतोनुतप्यते ॥२१८६॥
वेतालोत्थापनाच्छद्मलङ्घनाद्विषचर्वणात् । व्यालाश्लेषाच्च विषमं सत्यं राजोपसेवनम् ॥२१८७॥
अनात्माग्रस्तनिस्तीर्णगुणानां चक्रवर्तिनाम् । शकटानामिवावस्थो विश्वस्तः को न भज्यते ॥२१८८॥
अयुक्तं नृपतिः सुज्जिवधं मेने प्रजाः पुनः । युक्तं ज्ञात्वा समुद्रिक्तशङ्कितां विविदुः प्रभोः[1] ॥२१८९॥
भेजे राजा सज्जपालं कम्पनाधिपतिं ददत् । कुलराजे च नगराधीकारित्वं समार्पयत्[1] ॥२१९०॥ 2190
त्यक्त्वा मल्लार्जुनं[1] धन्योदयौ नगरमागतौ । प्राग्वत्पुनर्जजृम्भाते प्रियौ विश्वम्भराभुजः ॥२१९१॥
इतराभयविच्छेदा वीतपारिप्लवस्थितिः । श्रीः सर्वाकारमकरोत्स्थिरं चित्ररथे पदम् ॥२१९२॥
अद्भुतैश्वर्यधुर्योपि राष्ट्रं दण्डेन पीडयन् । शर्म नेतुमशक्योभूत्स भूपस्याप्यनङ्कुशः ॥२१९३॥
गन्धर्वानाभिधे ग्रामे टिक्कं हत्वा व्यसर्जयत् । पारेविशोकं कोट्टेशस्तच्छिरः पार्थिवान्तिकम् ॥२१९४॥
निसर्गद्वेषिणा प्राप्तप्रतापे नितरां नृपे । तदानीं लप्यमानेन दूतेनाप्यायितोसकृत् ॥२१९५॥ 2195
कोष्ठेश्वरेण रभसादल्पैः परिजनैर्युतः । निशि लोठनदेवः स हाडिग्रामं ततोविशत् ॥२१९६॥
महाकथिनकन्थान्यैः संरुद्धे राज्ञि सर्वतः । बद्धसंधिर्लवन्यस्तं विससर्ज यथागतम् ॥२१९७॥
उच्चलादिवदादातुं राज्यं स रभसं भजन् । निर्बुद्धिर्भुग्नदार्ढ्ययोगान्मूढो लोकस्य हास्यताम् ॥२१९८॥
तीक्ष्णप्रयुक्तिभिः सैन्यभेदैरन्यैश्च कोष्ठकम् । उपायैर्नृपतिस्तैस्तैस्ततो हन्तुं व्यचिन्तयत ॥२१९९॥
प्रतिहन्तीव तीक्ष्णानां पाटिताक्षः क्षमाभुजम्[1] । न संप्रासादयत्क्रुद्धः प्रतियोद्धुं त्वचिन्तयत् ॥२२००॥ 2200
स्वैः स्वैः प्रदेशैरादिश्य प्रवेष्टुं पृतनापतीन् । स्वयमुद्याय तैः सैन्यैरवचस्कन्द तं पुनः ॥२२०१॥
स भूपं रभसायातं ज्ञात्वाल्पपृतनं बली । ग्राममुत्कलयितुं तस्थौ प्रतापैः परिहारितः ॥२२०२॥
लग्ने रणे चित्ररथः पृथुसैन्योपि दैवतः । तस्य सैन्यैकदेशेन भिन्ये जयविपर्ययम् ॥२२०३॥
भङ्गनामङ्गलोकारकल्पेन किल तेन सः । ततः प्रभृत्यभूद्भयवशष्टम्भो दिने दिने ॥२२०४॥
रिल्हणादीन्प्रबोधयित्वा व्यूहध्वस्ताखिलानुगः । लब्धन्यो न्यपतत्सार्धं कम्पनाधिपतेर्बले[1] ॥२२०५॥ 2205

२१८३. ¹) C सरसि यो. २१८८. ¹) Emended with C; A °भान्धे. २१८९. ¹) Conjectural emendation of G. (*sec. manu*); A प्रजा.. २१९०. ¹) Emended with C; समर्पयत. २१९१. ¹) Emended; A मल्लार्जुनो. २२००. ¹) Emended; A °भुजाम्—²) Emended; A संप्रसाद°. २२०४. ¹) Doubtful emendation; A भङ्गनामङ्गलों°; C भङ्गनामङ्गलोकार°. २२०५. ¹) Emended; A °बलेः.

ऊनैः शतादपि भटैर्युतो विश्रुतसैनिकः । सेहे[1] तत्सैन्यरोधं स गजक्षोभमिवाचलः ॥२२०६॥
किं वाच्यः स नरव्याघ्रः प्रवृद्धिं याति संगरे । निजवर्मेतनुत्रादि यस्य माति न वर्मणि ॥२२०७॥
मन्दीकृतारिसंरम्भमवष्टम्भेन तादृशा । तं त्रिल्लकादयः प्रापुर्लवन्याः सैन्यशालिनः ॥२२०८॥
तैः सजातीयदाक्षिण्यात्तटस्थैरपि संकटे । तस्येवदुपयोगोभूत्स्ववीर्यापास्तविद्विषः ॥२२०९॥
2210 काले संनहनं रात्रिजागरः सामतो बलैः । समये ग्रहणत्यागतद्युक्तिविकल्पनम् ॥२२१०॥
लब्धभूम्यपरित्यागो जिगीषोरीदृशैर्गुणैः । ज्वलेयुररयोप्यस्य का वैर्याक्रमणे स्तुतिः ॥२२११॥
अविश्रसम्भिन्नभृत्यस्तात्कसंरम्भपीडितः । पलायनोन्मुखः शैलात्कोष्ठकोथ व्यगाहत ॥२२१२॥
मार्गेष्वकालप्रालेयपातरुद्धेषु वाजिनाम् । गन्तुं तस्योद्यमं जघ्नुः पृष्ठलग्ना विरोधिनः ॥२२१३॥
अवमानोपतप्तोथ परिमेयपरिच्छदः । स ययौ जाह्नवीं स्नातुं राज्ञा राष्ट्रादपाकृतः ॥२२१४॥
2215 सोमपालोथ भूपालनाम्ना पुत्रेण खेदितः । दीर्घवैराज्यदुःखार्तः शरणं नृपतिं ययौ ॥२२१५॥
पुत्री दत्तवतो नीविं नागपालस्य तस्य च । अभयं प्रतिभूर्भाव भूभृदाश्रितवत्सलः ॥२२१६॥
बृहद्राजस्य जिह्मोयं दौःस्थ्यहेतुरभूदिति । स तदापदि नास्मार्षीदव्याजौदार्यधुर्यधीः ॥२२१७॥
साहायकाय स्वं सैन्यं दत्तवांस्तं महीपतिः । भूयः प्रतिष्ठामनयद्दर्पप्रशमनाद्द्विषाम् ॥२२१८॥
स्नात्वा धुनद्यां[1] व्यावृत्तः कोष्ठकोत्रान्तरे पुनः । मल्लार्जुनं गृहीत्वाभूद्वैराज्योत्थापनोद्यतः ॥२२१९॥
2220 अर्कोपरागे प्राप्तः स कुरुक्षेत्रमवाप तम् । लवन्यं कार्यतस्त्यक्तपूर्ववैरो नृपात्मजः ॥२२२०॥
आहूतो लोठनः पूर्वमायातस्तेन डामरम् । निशम्य तं संघटितं खिन्नः प्रायाद्यथागतम् ॥२२२१॥
विजयेशाप्तः पीतकोशोपि नृपतिद्विषः । प्रविविक्षूनुपैक्षिष्ट सोमपालो दुराशयः ॥२२२२॥
आराधनाय भूभर्तुस्तत्पुत्रः कोष्ठकं पुनः । प्राप्तं स्वविषयैस्तैस्तैश्छुरैर्निरलुण्ठयन् ॥२२२३॥
अत्रान्तरे चित्ररथं संवृद्धायास[1]दुर्महम् । अनिच्छन्तोवन्तिपुरे प्रायं चक्रुर्द्विजातयः ॥२२२४॥
2225 उपेक्ष्यमाणास्ते दर्पात्तेनागणितभूभुजा । ज्वलिते ज्वलने देहान्बहवो जुहुवुः शुचा ॥२२२५॥
चरके धर्मधेनूनामुत्सन्धेपि तदाश्रितैः । वह्निं गोपालकोप्येकः कारुण्यप्रवणोविशत् ॥२२२६॥
भट्टस्योद्भटवंशस्य पृथ्वीराजस्य नन्दनः । युवा विजयराजाख्यः सानुजो गावदुर्गतः ॥२२२७॥
देशान्तरं जिगमिषुर्विषमं वीक्ष्य तत्र तत् । व्याजहारानुजन्मानं कारुण्याश्रुकणान्किरन् ॥२२२८॥
उपेक्ष्यमाणा दाक्षिण्यस्तम्भितेन महीभुजा । विशः सचिवपाशेन विवशाः पश्य नाशिताः ॥२२२९॥
2230 छन्दानुवृत्त्यामात्यानां[1] यत्र क्ष्माभृदुपेक्षते । कस्तत्रान्यस्तु दीनानामापच्छमयिता विशाम् ॥२२३०॥
यद्वा न्यायोयमन्योन्यस्पर्धया यदुपप्लुतम् । शमिता दण्डयच्छाम्यं शमितारं परोथ वा ॥२२३१॥
विशृङ्खलं नयेच्छय्यां दार्ढ्यसारं विघट्टनैः । कदाचिल्लोहमश्मानमश्मा लोहं कदाचन ॥२२३२॥
दोषेणैकेन न द्वेष्यो राजा सर्वगुणोज्ज्वलः । वधाच्चित्ररथस्यान्यद्विधेयं नावभाति मे ॥२२३३॥
धर्मः सर्वोपकार्येकक्षुद्रक्षपणमुच्यते । जघानाजगरं सोपि जन्तूनामन्तकं जिनः ॥२२३४॥

---

२२०६. [1]) Emended; A सह. २२१९. [1]) Emended; A सहुदितुं. २२२४. [1]) Emended with C; A सवृद्धाबास°.
२२३०. [1]) Emended with C; A apparently °मान्यानां.

दुर्वृत्तदमनेस्माभिः कृते तेजस्विनो जनात् । भूयोप्यधिकृतो बिभ्यच्च कश्चित्पीडयेत्प्रजाः ॥२२३५॥ 2235

कायस्थास्य परित्यागादनन्या जन्तवो यदि । सुखिनः स्युरसौ धीर्लब्धाभिज्ञा ज्यायसी न किम् ॥२२३६॥

संभुभुवांसं स तथेत्यथ तं कोशपीथिनम् । विधायानुससारेव हन्तुं चित्ररथं तदा ॥२२३७॥

कालेस्मिन्धर्मदौर्बल्यकलुषेपि कलेः किल । प्रभावो भूमिदेवानां द्योततेद्याप्यभङ्गुरः ॥२२३८॥

ब्राह्मणैरपरिक्षीणपूर्णपुण्यो न कश्चन । धैर्यमारभते भ्रष्टकुलोत्पाटनपाटवैः ॥२२३९॥

द्विजानुद्वेजयन्मुक्तिर्द्विजावेशासदद्भयम् । चिरेणैव हतश्चित्ररथो विप्रावमानकृत् ॥२२४०॥ 2240

द्विजोरथाभियाक्रान्तचित्तोसौ कृत्यया ध्रुवम् । वध्यो तस्य वधं प्राणान्विना कारणमुत्सृजन् ॥२२४१॥

कृशानुसारकृवत विप्रा देहान्यदैव ते । तद्वेषस्तुल्यसंघर्षे तदैवासीद्गतानुगः ॥२२४२॥

अथासादयतश्चित्ररथं पृथुबलान्वितम् । गणरात्रमभूद्भर्तुर्दिवारात्रं प्रजागरः ॥२२४३॥

स अपर्यन्तसामन्तसीमन्तितपथो व्रजन् । अभूद्दृश्यो दृश्यश्च जनसंबाधमध्यगः ॥२२४४॥

तेन साधर्म्यनैधन्यनिधुरेणैकदा जवात् । सोनुलके व्यतिक्रान्तनिःश्रेणिर्नृपवेश्मनि ॥२२४५॥ 2245

विलम्बितस्य सम्भ्रान्ते[1] कृपाण्या मूर्ध्नि चास्य सः । सामन्तमध्यगस्यैव प्राहरत्तीव्रसाहसः ॥२२४६॥

मुमूर्षोरिव तस्यास्य वैक्लव्यगलितस्मृतेः । उद्भ्रान्तचक्षुषो वर्त्मध्वमनं समपद्यत ॥२२४७॥

प्रमापितोयं राज्ञेति ज्ञात्वा सत्त्वबहिष्कृताः । विप्रस्तास्तं तथाभूतमत्यजन्ननुजीविनः ॥२२४८॥

तं वीतजीवितं ज्ञात्वा न तीक्ष्णः प्राहरत्पुनः । प्राप्तं द्वितीयनिःश्रेण्या भ्रातरं निषिषेध च ॥२२४९॥

न पलायिष्ट निर्विघ्नसर्वमार्गोपि घातितः । राज्ञा चित्ररथः शश्वदिष्टुधैः मोषकार सः ॥२२५०॥ 2250

प्रनष्टं[1] भृष्टमांसादिराज्यभोगपुरःसरैः । सर्वैः कापुरुषैस्त्यक्तस्तस्य चित्ररथानुगैः ॥२२५१॥

ज्यायांश्छोठरथस्तस्य भ्राता भीत्या पलायितः । शरणं नर्तकीमेकां ययौ वक्त्रार्पितस्तनः ॥२२५२॥

तात्कमपेशितश्चित्ररथोभ्यर्णे महीभुजा । मा भैषीः[1] प्राहरत्कस्त्वामित्युक्त्वाश्वासितः स्वयम् ॥२२५३॥

नृपाज्ञया को निहन्ता द्रारेशास्येति वादिभिः । तीक्ष्णोभ्यिष्टो भटैः सोहमित्युक्त्वा स्वं न्यदर्शयत् ॥२२५४॥

धीरो योधान्स्वधैर्यात्तलकृन्तनाभ्यधिक्रमः । निःशङ्कांस्त्वं हत्वाथ प्रहृत्य चरणे हतः ॥२२५५॥ 2255

परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय संभवामि युगे युगे[1] ॥२२५६॥

लब्ध्वा लिखितनत्कृत्यकारणा पत्रिका करात् । तस्यान्तसमयाशंसा श्लोकेनानेन पावनी ॥२२५७॥

अहच्युन्माददीनत्वयुतश्चित्ररथस्ततः । कटव्रणोपि लालाटसंधिवेधादजायत ॥२२५८॥

स मासान्पञ्चषान्याप्य निरोप्याथकृशाकृतिः । विचेष्टमानोवर्तिष्ट शयनीयतलेन्वहम् ॥२२५९॥

मल्लार्जुनं पुरस्कृत्य कोष्ठको विग्रहोन्मुखः । तन्मध्ये तदसंबाधं गिरिदुर्गमगाहत ॥२२६०॥ 2260

सो मामभयं भ्राम्यन्स्वयूथ्यमसंतोषमात्[1] । अविस्मृतापदं लोकं पुनर्द्विराज्यशङ्किनम् ॥२२६१॥

अकाण्डाम्बुदजालेन पीडिताङ्ग इवाभजत् । परचक्रोदयेनाशु लोकः शिथिलशङ्किताम् ॥२२६२॥

तद्दुर्गे तदकृशाक्रोशोध्याप्य च सर्वतः । व्याप्तोपान्तवनग्रामैः सचिवैः स न्यरोधयत् ॥२२६३॥

---

२२३५. [1]) Misread in C दुर्वृत्तदमने°. २२४६. [1]) Emended; A सम्भ्रान्ते. २२५१. [1]) Emended with C; A प्रनष्टं. २२५३. [1]) Emended with C; A भैषीस्मा°. २२५६. [1]) Compare for this verse *Bhagavadgītā* iv. 8. २२६१. [1]) The text of the first *pāda* is corrupt; perhaps read स समयमङ्क्रा°. २२६३. [1]) A °क्रोश°.

सञ्जपाले यवनकैः स्कन्धावारं निरुन्धति । अनुबन्धुर्दीनोत्पन्नहाविभावशिलामितांस्तकम् ॥२२६४॥

2265 अन्योपि शिलिकाकोट्टपर्यन्तकटकोभवत् । गन्धद्वेषी गजारिपुः सिन्धुरस्येव वैरिणः ॥२२६५॥

आवासितबलो राजा गोवासे रिल्हणोकरोत् । अटवीं पर्यटन्भूकानिवाकौ क्षुभितानरीन् ॥२२६६॥

तीव्रदुःस्थैर्नृपस्यैवमारम्भैः स्तम्भितोभजत् । कोष्ठेश्वरस्त्रिचतुरान्मासान्संचारशून्यताम् ॥२२६७॥

क्लिष्टो देशान्तरे राष्ट्रानन्तरैर्न्यकृतो नृपैः । भिन्नस्ववर्गो भूभर्तृभृत्यव्यर्थीकृतोद्यमः ॥२२६८॥

वालिशत्वादकुशलो ज्ञातुं वृत्तिं महीभुजाम् । स विस्मृतागाः संधातुमैच्छच्छिन्नपदो नृपम् ॥२२६९॥

2270 उज्जिहीर्षोः प्रभोर्मन्युं वाच्यं तद्व्यजनादिदम् । अनपेक्षः सञ्जपालस्तस्येच्छां तामपूरयत् ॥२२७०॥

तथार्तोपि रिपुं राज्ञः संधित्सुर्न्यमहीव सः । पृथ्वीहरप्रसूतानां निर्द्रोहत्वं न कौतुकम् ॥२२७१॥

तेन प्रहिण्वता राजवैरिणं स्वकराङ्कुलिम् । छिन्दतापि महीभर्तुर्मन्युश्छेत्तुं न पारितः ॥२२७२॥

कण्ठबद्धशिरःशाटः शीर्षेणोपानहं वहन् । भुक्तवेलोपि भूपालं कर्तुं नाशकदक्रुधम् ॥२२७३॥

अस्वीकृतहितभूभृत्प्राञ्जनः स हि राजवत् । तत्सप्तलुक्कभूपाङ्गः सर्वं गर्वाद्व्यवाहरत् ॥२२७४॥

2275 शुश्राव बद्धं तन्मध्ये यातं मल्लार्जुनं नृपः । अनुबध्नाति भव्यानामुदयेभ्युदयान्तरम् ॥२२७५॥

नीयमानः स हि स्कन्धमधिरोप्यानुजीविभिः । अनाह्निकतया मार्गोल्लङ्घनायासनिःसहः ॥२२७६॥

ततस्ततो भयस्थानाद्विस्तीर्णो लोहराभितम् । सार्वणिकाभिधं ग्रामं प्राप्तो विन्यस्तरक्षिणा ॥२२७७॥

निरुद्धो जग्गिकाख्येन ठक्कुरेण महीपतिः । प्रियंकरं तं च भृत्यं शुश्रावान्तिकमागतम् ॥२२७८॥

बद्धप्रायोरिणा दुर्गान्निर्गतः स कथंचन । बद्धस्तेन पुनः शक्तिः कस्य भाव्यर्थलङ्घने ॥२२७९॥

गङ्गा क्षुमार्गकुण्ठिता जठरात्कर्षयिदेकस्य संहतवती निसृता महर्षेः ।

2280 भस्तापरेण कृतसागरगर्तपूर्तिः शक्तो न कोपि भवितव्यविलङ्घनायाम् ॥२२८०॥

जग्गिके बद्धसंप्राप्तिपर्यन्तोपान्तरक्षिणि । राज्ञोदयश्रीपतिः प्रायोजि प्राज्यबुद्धिना ॥२२८१॥

तं विना धैर्यगाम्भीर्यशौर्यधुर्यं महाधियम् । संकटे न खलहम्भो राज्ञाज्ञान्यस्य मन्त्रिणाम् ॥२२८२॥

स व्यतिक्रम्य सावाधान्मार्गानुभयवेतनैः । तमोरिस्थितमद्राक्षीत्तं क्षमापतिविद्विषम् ॥२२८३॥

निद्राभून्येन धैर्येण शौर्यसंभावनावहः । स्तुवन्स तं बहिः प्राप्तं तत्पुत्रावबवीत्पुनः ॥२२८४॥

2285 सर्वतो ज्यायसीं भर्तृभक्तिं यो बहु मन्यते । भवान्धुर्यो मतिमतामाहतो लोभनातुरैः ॥२२८५॥

कृता रक्षामणिसमं सहायं त्वादृशं विना । हानिर्मे दुर्नरेन्द्रस्य बाल्ये राज्ये बहुच्छलैः ॥२२८६॥

दुष्प्रेक्ष्याणां भवत्येव नियमाद्राजभास्वताम् । मान्यान्तहेमन्तदिने जननेत्रविलङ्घ्यता ॥२२८७॥

शोभते रुचिरातात्रमण्डलाग्रो यथोदये । तथा वोस्तमये भास्वानिव वन्द्यः स भूपतिः ॥२२८८॥

धन्योवतारो यस्यासील्लुब्धलक्ष्मीरागभाजनः । उदयेस्तमयेप्युच्चे रागव्यपाश्रयोक्षणः ॥२२८९॥

2290 पदे प्रयोगं लब्धार्थं किंचित्कृत्वा कुलीनवत् । अहं कविरिव प्रौढः प्राप्तो निर्व्यूढिमुद्धताम् ॥२२९०॥

सत्यंकारोधुना भूत्वा विधत्तां स्वाम्यस्थितिम् । साध्वस्यामतिपूर्वेन वरेणैकेन मे भवान् ॥२२९१॥

२२६४. 1) A. स्कन्धा°. २२६५. 1) A सिन्धुरस्येव. २२६९. 1) A वालि°. २२७३. 1) Emended; A स्वकण्ठ°.—2) Emended; °ङ्कुनाथ स नि°. २२७९. 1) Emended; A शक्ति.—2) Emended; A भावार्थ°. २२८९. 1) Doubtful; A [illegible]; cf. viii. 2278.

इत्युक्त्वा प्रत्ययोत्पत्त्यै संस्प्रष्टुं स्फाटिकं ततः । सपीठं पुरतो द्वारपतेर्लिङ्गमुपानयत् ॥२२९२॥
अच्छलाहवसंमर्दमासभूतिषुवर्षिणः । योधान्वोढुं वरं मार्गं मानवानूनमिच्छति ॥२२९३॥
इति संभाव्य संस्पृष्टशिवलिङ्गः स याञ्चितम् । वरं तस्योदरीचक्रे स च भूयो जगाद तम् ॥२२९४॥
आकृष्टदृष्टिरहतः क्ष्माभुजोऽन्तिकमक्षतः । यथेदृशेव प्राप्नोषि तथा त्वामर्थयेऽधुना ॥२२९५॥ 2295
कार्पण्योपहतं तस्य वचः श्रुत्वा त्रपाजडाः । सर्वेऽप्युर्वीभुजास्तस्थुर्वृष्ट्यार्द्राः[1] पल्लवा इव ॥२२९६॥
अन्तःक्षणस्ततो भिक्षोः स्मर्यमाणः सचेतसाम् । विकासहेतुतां प्राप स्वस्थस्य मनसः पुनः ॥२२९७॥
मनुष्यवाग्यमाक्रान्तः पर्व निन्ये स निस्त्रपः । तेन स्वपालितांल्लोकानपि पश्यन्नविक्रियम् ॥२२९८॥
अहीनाहारनिद्रादिर्विस्मयः पशुवत्पथि । कृष्यमाणः स केनापि न विकल्पेन पस्पृशे ॥२२९९॥
पश्यन्नानीयमानं तं गोप्तृभिस्तादृशं जनः[1] । दयार्द्रहृदयश्चासीन्नाभ्यनन्दच्च भूभुजम् ॥२३००॥ 2300
उवाच चानुकम्प्येऽस्मिञ्जन्मज्येष्ठस्य भूपतेः । नैतावज्ज्ञाति नैर्घृण्यमनुजे पितृवर्जिते ॥२३०१॥
असेचनककर्मेतस्य मेचकाब्जदृशो वपुः । क्लेशगर्भमनिस्त्रिंशचेताः कः कर्तुमर्हति ॥२३०२॥
पूर्वापरानुसंधानबन्ध्यस्ते दृष्टवांस्तदा । विस्मृतागा नृपं सन्तदित्युपालभताध्वनि ॥२३०३॥
गणना काच या बालबालिशादौ[1] विधीयते । न चित्तवृत्तेरैकाम्यं महतामपि सर्वदा ॥२३०४॥
श्रोतॄणां युगपद्वाल्मीकिशकृष्ट्यादि शृण्वताम् । पाण्डवेभ्योऽधिकः क्रोधो धार्तराष्ट्रेषु जायते ॥२३०५॥ 2305
कुरूणां क्षतजापाने भग्नोरोर्मूर्धताडने । श्रुते पाण्डवविद्वेषस्तेषामेव च दृश्यते ॥२३०६॥
परावरज्ञः कार्याणां न कश्चिन्मध्यमं विना । तटस्थेऽनुभवाभेदस्तत्र तत्र कथं भवेत् ॥२३०७॥
स पौराक्रोशपङ्कं क्लिश्यल्लम्बकमुद्वहन् । युग्याधिरूढो भृत्यार्कैः सार्धं नगरमासदत् ॥२३०८॥
न्यधत्ताथ युजा शुक्लपक्षद्वादश्यां महीपतिः । एकादशेऽब्दे तं रक्षियुतं नवमठान्तरे ॥२३०९॥
त्यक्ताहारस्य च निशाः पञ्चषास्तस्य ताम्यतः । पार्श्वं जगाम कारुण्याच्चरणस्पर्शनार्थिनः ॥२३१०॥ 2310
अवादीदर्थितं तस्मै मतिभुर्भुवुवेभवम् । द्रोहावेकान्ततो बद्धौ स चित्ररथकोष्ठकौ ॥२३११॥
राजा निर्जग्मुषः स्वोर्वीं कोष्ठकस्याथ बन्धनम् । विधित्सुः पञ्चषानामाञ्जिल्हणादीनचूचुरत् ॥२३१२॥
सर्वेषु गलितौजःसु स्वयं राज्ञ्युद्यमस्पृशि । अथ तं रिल्हणो दोर्भ्यां क्षणं माह हठाग्रहीत् ॥२३१३॥
हतप्रज्ञः स बलिनस्तस्य दोष्पञ्जरान्तरे । नस्यावचेष्टो निद्रान्धो भूतेनेवासनीकृतः ॥२३१४॥
भ्रातृव्यो भिःक्षराजाख्यः[1] कुल्लराजस्य कोपनः । भूभृद्वधा कृपाण्यास्य निर्बिभेद कृकाटिकाम् ॥२३१५॥ 2315
परश्वधेन मूर्ध्न्येनं पृथ्वीपालश्च ताडयन् । राजबीजी स च क्रोधाद्व्यपिध्यत महीभुजा ॥२३१६॥
कृकाटिकास्थिसंजातमर्मवेधोपवेष्टितः । विवेष्टमानोऽवर्तिष्ट क्षितौ स रुधिरोक्षितः ॥२३१७॥
महाबलैः कमलियप्रमुखैस्तस्य सोदरः । चतुष्कः पातितोऽप्युर्व्यां गण्डशैल इव द्विपैः ॥२३१८॥
विलोक्य वैकल्यवती बद्धौ तौ स्वामिनौ[1] तथा । कृष्टासिधेनुरुत्तस्थौ द्विजन्मा मल्लकाभिधः ॥२३१९॥
उच्चावचेषु प्रहरत्स भूपालोपजीविषु । अन्तर्मर्यमाणस्तुमुलं राजवालस्वतापतत् ॥२३२०॥ 2320

---

२२९६. [1]) A °ार्द्र. २३००. [1]) Emended; A जना: २३०४. [1]) A °चालि°. २३१५. [1]) A भि×ज्ञ°. २३१९. [1]) Emended with C; A स्वामिनौ.

नृपान्तिकादापततस्तांस्तान्घ्नन्तं महाभटान् । अधावत्सासिधेनुस्तं कुल्हराजो महौजसम् ॥२३२१॥
प्रतिप्रहर्तुं क्षिप्रापतत्पाणिमपारयन् । निहन्तुं संरुरोधेव भित्तौ व्यायामवित्स तम् ॥२३२२॥
अपयातुमवस्थातुं प्रहर्तुं वाप्यशक्नुवन् । तस्थौ च बहुसंधानः संस्तभ्यैनमविक्षतम् ॥२३२३॥
चरणास्फालनोत्फालदोःशब्दमुखरोन्तिकम् । धाविते पद्मराजेथ मल्लकोक्षिपदीक्षणम् ॥२३२४॥
2325 प्राहरत्कुल्हराजोस्य लब्धरन्ध्रोथ वक्षसि । प्रहृत्य गच्छतः पाणेः स तस्याङ्गुष्ठमक्षिणोत् ॥२३२५॥
तौ बिज्जराजे दर्पोष्णनिबिडे प्रहरत्युभौ । तस्मिन्प्रतिप्रहरति क्षिप्रं प्राहरतां ततः ॥२३२६॥
स वीनप्यभियोक्तॄंस्तांस्त्यक्त्वा दृक्पथमागतम् । चतुष्किकाहारगतं राजानं समुपाद्रवत् ॥२३२७॥
लक्ष्मीभूते नृपे शीघ्रमनुधावन्ससंभ्रमम् । चकार कुल्हराजस्तं स्फिगस्थिक्षतिनिर्जवम् ॥२३२८॥
ततः सर्वैर्वृतो योधैः क्षीबाक्षीबास्त्र सत्वरम् । हत्वाभजद्वीरशय्यां रक्तस्यन्दोत्तरच्छदाम् ॥२३२९॥
2330 जीवद्यापहृतस्वामिवीक्षितः श्लाघ्यविक्रमः । स एवास्पृहणीयान्तक्षणो वीरैरगण्यत ॥२३३०॥
बहिः कोष्ठकभृत्येषु विद्रुतेष्वदरिद्रताम् । परं जनकचन्द्राख्यो धैर्येणोवाह डामरः ॥२३३१॥
निरायुधो राजभृत्याद्धृत्वैकस्मात्परश्वधम् । स ययुद्धापदूतत्वं नयन्भूरीन्यमान्तिके ॥२३३२॥
पिपासोस्तस्य चण्डांशुमण्डलं परशुः करे । सुषुम्णासंविभागार्थी शशिखण्ड इवाविशत् ॥२३३३॥
नाक्राक्ष्म नाभौक्ष्म चापि बद्धे भर्तरि यत्तदा । कोष्ठकस्य वधूरन्वतिष्ठन्मानवती सती ॥२३३४॥
2335 जीवन्भूयोपि लभ्येत त्वया स पतिरित्यसौ । बन्धूनामवधीर्योक्तिं प्राविशद्धुताशनम् ॥२३३५॥
समार्थयोषिदाश्लेषतर्षकिल्बिषदूषितः । तस्याः सतीलोकगाथाः पादाभ्यां पावितोमलः ॥२३३६॥
वसन्तस्य सुता धन्योदयभानुः पुपोष सा । शुचिवंशाभिमानेन न डामरवधूव्रतम् ॥२३३७॥
लवन्यललनाः कुर्युर्वैधव्येपि धनेच्छया । ग्रामकार्थिकुट्टुम्ब्यादीनितम्बाभोगभागिनः ॥२३३८॥
मतिव्यामोहनिर्व्यूढवैकृत्यस्वाभिमानिनः । तयानुगाभ्यां च कृतं कोष्ठकस्योच्चकैः शिरः ॥२३३९॥
2340 कृतव्रणोपि क्रिमिसाद्भूतः कैरपि किल्बिषैः । निष्प्राणो गणरात्रेण कारायां कोष्ठकोभवत् ॥२३४०॥
अथ चित्ररथः शोषकृशः कलुषितं नृपम् । भुक्त्वा मल्लार्जुनेनाभूद्भयादत्यन्तदुःस्थितः ॥२३४१॥
पत्नी तस्यैकभार्यस्य प्रिया सूर्यमती सती । परलोकातिथिः पूर्वं विभवप्रतिभूरभूत् ॥२३४२॥
देहे याप्यहताप्याये गेहे गतपरिग्रहे । पत्यौ वैमत्यकलुषे नेषदप्येष पिप्रिये ॥२३४३॥
तीर्थस्थितस्य न स्यान्मे सागसोप्यप्रियं नृपात् । इति संचिन्त्य स प्रायान्मिषान्मर्तुं सुरेश्वरीम् ॥२३४४॥
2345 अथ नानार्थभूयिष्ठां धनाधीशाधिकश्रियः । स्थानात्ततस्ततस्तस्य पार्थिवोपाहरच्छ्रियम् ॥२३४५॥
कनकांशुकसंनाहवाजिरत्नायुधादिभिः । स्वा स्वा प्रकाशिता लक्ष्मीः स्पर्धयेवाधिकाधिका ॥२३४६॥
लोहरद्रोहघर्मोष्मशोषितो राजपादपः । तल्लक्ष्मीशैलतटिनीसेकेनाप्यायितोभवत् ॥२३४७॥
विप्लवे चिरनष्टेपि श्रीकल्याणपुरं न यः । वनत्रासोचितत्रासः शाल्वः सौभमिवात्यजत् ॥२३४८॥
धृतच्छत्रांशुपृक्तेव चिन्तापाण्डुरवर्तत । बन्दीकृता नरेन्द्रश्रीर्निर्निद्रा यस्य मन्दिरे ॥२३४९॥

---

२३२३. [1]) Emended with C; संस्तम्भैनं. २३२६. [1]) Emended; A बिज्जराजो. २३४८. [1]) Emended; A साल्वः सौभमिवा°; C साल्वरोऽभ्रमिवा°.

राज्ञा प्रयुक्तं विज्ञाय विजयः स भयोद्भवः । तीक्ष्णमानन्दनामानमवधीत्तेन चावधि ॥२३५०॥तिलकम्॥ 2350
इत्थं स प्रथये तादृक्क्रमप्रापालनशालिनः । सर्वोत्साहमयोमेदा जयसिंहमहीभुजः ॥२३५१॥
तीर्थस्थिते चित्ररथे प्रासादमहर्णीषिणी । भृङ्गारजनकावास्तां तद्भृत्यौ व्यक्तचक्रिकौ ॥२३५२॥
प्रभुरोत्कोचदानेन स्वीकृत्य नृपतिं ययौ । भृङ्गारो भग्नजनकः स्वामिश्रीभोगभागिताम् ॥२३५३॥
चिरप्रचलितं हारमुदये निदधे पुनः । मेघकालः सरित्पूरं मतीर इव पार्थिवः ॥२३५४॥
अवश्यभोग्यदुष्कर्मदत्तमर्मव्यथाधिरम् । कथाशेषोभवच्चित्ररथो मासैरथाष्टभिः ॥२३५५॥ 2355
हास्यावहोप्यविकृतो विकृतोमपास्यो दुर्गन्धिरप्यतिजडोपि गृहीतवाक्यः ।
पूर्वानुभावजयिनो भवति प्रभावाद्यस्य स्तुमस्तमतिसंस्तवमप्रतर्क्यम् ॥२३५६॥
निन्धैराधूतमार्धैर्वेष्टितैः प्रागभीष्टताम् । बाल्ये दुर्ललितस्यागाद्भर्तुश्चित्रचेतसः ॥२३५७॥
विसृज्यमानः संप्राप्तसाम्राज्येन दिवानिशम् । क्रमात्स्वीकृत्य ताम्बूलं तेन चित्ररथान्तिकम् ॥२३५८॥
दूत्यैः कृत्यान्तरप्रस्थं प्राप्रवानाप्ततां गतः । तदन्ते घटयन्नाशस्तकृत्यान्कोशदर्शकाम् ॥२३५९॥
तदा सर्वोन्नताशेषमन्त्रिशून्ये नृपास्पदे । सज्जकस्यात्मजः प्राप भृङ्गारो मुख्यमन्त्रिताम् ॥२३६०॥चक्कलकम्॥ 2360
तस्य वैधेयताभ्यस्तकुदृष्टेरपि दुष्कृतम्[1] । मागुः[2] पात्रार्पणात्तुच्छस्यागिस्त्वेनापि संपदः ॥२३६१॥
योधितकशिपुभोग्येन धन्यंमन्योपि सोभवत् । धान्यदानवदान्यत्वं[1] गुरूणामाजगाम यत् ॥२३६२॥
पीठं कृतवतो रूप्यं[1] संयोज्य रजतैर्निजैः । विद्यमानं सुरेभ्ययौ सायुज्यं तस्य युज्यते ॥२३६३॥
उर्वीशैरपि नार्वाग्भिर्योनुगन्तुमशक्यत । आषाढधामार्थसंभारो निर्विष्टद्रविणव्ययः ॥२३६४॥
नन्दिक्षेत्रे स तत्राद्यैः प्रणीतक्षुण्णपक्वादिभिः । तेन कालानुसारेण पोषितः पञ्चषाः समाः ॥२३६५॥ 2365
नर्माङ्कतायां निःसारो ज्ञातो यः सोधिकारभाक् । अचिन्त्यकृत्यकार्यासीत्स्वामिस्नेहप्रभावतः ॥२३६६॥
केलीसज्जैर्युवतिकरजैः कण्ठभूषावशायां यस्याज्ञायि त्रुटनमसकृत्क्ष्माधरेश्वासकृष्टी ।
सोप्यादिष्टस्त्रिपुररिपुणा प्राप भङ्गं न भोगी शक्याधायी क्वचन न परो भर्तुराज्ञाप्रभावात् ॥२३६७॥
तं च रिल्हणधन्यौ च समाभिव्येतरेतरम् । कार्ये जनकभृङ्गारावुत्कोचेनापजह्रतुः ॥२३६८॥
कदाचिज्जनकं बद्ध्वा सार्धं भूषणमौक्तिकैः । सपुत्रदारं भृङ्गारो[1] बाष्पबिन्दूनमोचयत् ॥२३६९॥
स तं च जातु निर्विद्य मानहीनमकारयत् । रूक्षरूक्षार्पितोत्कोचधनाभ्यर्थितमैथुनः ॥२३७०॥ 2370
अङ्कुशनखनिर्घर्षनर्तितानाभिकोर्मिकः । वदन्नामोत्तरीयामोदवल्गनैः कुञ्चितेक्षणः ॥२३७१॥
भ्रूभङ्गोद्वेल्लितवलीनिम्नोन्नतललाटभूः । पुनरेकस्तयोर्लब्धकार्यो लोकमहासयत् ॥२३७२॥तिलकम्॥
अव्यक्ताक्षरवाग्मौग्ध्यमीलिताक्षो रटन्बहु । हसन्सकरतालं च संपद्यन्यो व्यभाव्यत ॥२३७३॥
सोल्लेखमतिमोघीतत्कथानां[1] हास्यवस्तुनि । कथाशरीरं पर्याप्तं नेदृशां[2] किमचेतसाम् ॥२३७४॥
सर्वस्मिन्वस्तुतोवाचि काले विगतयोग्यते । जाने तृणनृणां तुल्ये भृङ्गारोर्हत्यगर्वताम् ॥२३७५॥ 2375
यः सर्वंकषनिष्कम्पशेमुषीकः क्षमापतिः । धुर्यतां धर्मचर्याभिर्गतः सुकृतशालिनाम् ॥२३७६॥

---

२३५०. 1) A, ३. २३६०. 1) A, ४. २३६१. 1) Emended; A दुष्कृतम्.—2) Thus A; R G C मागः. २३६२. 1) A °वदन्य. २३६३. 1) Emended with C; A रुप्यं. २३६९. 1) Emended; A भृङ्गारं. २३७०. 1) Thus A; C emends रूक्षरूक्षा°. २३७१. 1) Emended; A कु°क्षेक्षण:; C कुञ्चित क्षण:. २३७२. 1) Thus A; perhaps read with C °द्वेल्लित°.—2) A, ३. २३७४. 1) Emended; A °कथां.—2) Emended; A न दृशां.

लब्धबोधिरिवारेर्यश्चक्रे व्यापद्युपक्रियाम् । दावप्लुष्टस्य दग्धाङ्गोल्लाघवत्वमिव चन्दनः ॥२३७७॥
गुरुसूरिद्विजान्मथप्रभृत्युचितयापि यः । प्रतिपत्त्या संविभेजे संविभाग्यकुटुम्बकम् ॥२३७८॥
प्रासादान्विजयेशादिदेवव्रातस्य शुद्धधीः । सुधादानेन निन्ये च धन्यः कैलासतुल्यताम् ॥२३७९॥
2380 मठदेवगृहारामहट्टकुल्यादियोजने । जीर्णोद्धृतिव्यसनिनस्तस्य चिन्ता निरन्तरा ॥२३८०॥
सकृद्दर्शनविद्वेषकार्यैः सब्रह्मचारिणाम्[1] । स कौर्यधाम पर्याप्तमीदृगप्युच्यते जडैः ॥२३८१॥
विश्वाप्यायनसप्तसिन्धुभरणब्रह्मादिसंप्रीणनप्रायं कृत्यमुदात्तमेकसमयोपात्तेन दुष्कर्मणा ।
स्वःसिन्धोर्लघुतां गतं सगरज[1]श्रेणीचितास्पर्शना—[2]ता येन जनाः श्मशानमिव सा योग्या किलास्थ्नां स्थितौ ॥२३८२॥
तदन्तरे शिवरथो द्विजः प्रचुरचक्रिकः । कायस्थपाशः पाशेन गलं बद्ध्वा व्यपद्यत ॥२३८३॥
इत्थं पृथ्वीपतिः कृत्वा तत्तत्कण्टकपाटनम् । अपेतविघ्नं सौजन्यनिघ्नो व्यधित मण्डलम् ॥ २३८४॥
2385 विपक्षावरणापायप्रायेण पृथिवीभुजः । तैक्ष्ण्यमायान्ति जीमूतमुक्ता रविकरा इव ॥२३८५॥
परिणाममनोज्ञत्वं राजत्वे स्वयं नृपः । माधुर्याधिक्यमुत्पाकी द्राक्षाद्रुम इवाययौ ॥२३८६॥
प्रावर्तयत सातत्यात्क्रतून्विततदक्षिणान् । विवाहतीर्थयात्रादीन्महितांश्च महोत्सवान् ॥२३८७॥
संविभेजे स्वसंभारैः स क्रिया धर्मचारिणाम् । तेजोभिः कुलशैलानामोषधीरिव चन्द्रमाः ॥२३८८॥
प्रतिज्ञातं सुतोद्वाहप्रतिष्ठादौ पुरौकसाम् । तेनैपथिकसामग्रीदानमव्यग्रचेतसा ॥२३८९॥
2390 दारूणामाकराः कोश[1]वृद्धये ये धराभुजाम् । नवीचक्रे पुरं सर्वं स्वाधीनांस्स विधाय तान् ॥२३९०॥
मज्जतो राजकार्येषु तत्त्वविद्भिर्दुरार्णवे । विस्मितैर्वीक्ष्यते तस्य निष्ठा काष्ठा मुनेरिव ॥२३९१॥
प्रातरारभ्य सायाह्न[1]पर्यन्तं चास्य दृश्यते । न तत्कृत्यं गता यत्र नाध्यक्षत्वं विचक्षणाः ॥२३९२॥
अविचारान्धतमसे विद्या व्यद्योतताम्बरा । जयापीडादिमेघश्रीसौदामन्या विलोलया ॥२३९३॥
तेन श्रियं सु विभाज्य स्थास्नुं रत्नप्रभामिव । गुणवैचित्र्यचित्रस्य प्रकाशोनश्वरः कृतः ॥२३९४॥
2395 सूरयो येन ---[1] विक्षतक्षेत्रसंपदाम् । ग्रामाणामग्रहार्केन्दु[2] सान्वयाः स्वामिनः कृताः ॥२३९५॥
विदुषां वितनोत्स्वैरसौभास्वद्विहिता गृहाः । व्याप्ताः सप्तर्षिभिर्द्रष्टुमुत्कर्षमिव मूर्धसु ॥२३९६॥
प्रतिभाप्रभवे प्रश्नोपशे च पथि पान्थता । सार्थवाहं तमालम्ब्य निर्दोषा विदुषां स्थिता ॥२३९७॥
आसीद्यथार्थराजस्य शयानस्याप्यतिप्रियः[1] । कामं लिङ्गाभिषेकाम्भःसंक्षोभप्रभवो ध्वनिः ॥२३९८॥
निद्राणस्य तथा वेणुवीणादिपरिहारिणः । दयितं तस्य निर्दैषविद्वज्जल्पविकल्पनम् ॥२३९९॥
2400 काले श्रीललितादित्यावन्तिवर्मादिभूभुजाम् । सिद्धं न यत्प्रतिष्ठादि निश्वं तदधुना गतम् ॥२४००॥
मठदेवगृहेष्वेवं[1] स्वकालप्रभवेषु यत् । सर्वेष्वेव कृता तेन निर्व्यपाया व्यवस्थितिः ॥२४०१॥
रत्नादेव्या वृद्धाब्दभर्तृवल्लभताभुवः । सर्वप्रतिष्ठाप्रष्ठत्वं विहारः प्रथमं गतः ॥२४०२॥
रिल्हणोथ गुणग्रामबान्धवो धर्मपद्धतौ । बभूव पूर्वपथिकः समस्तामात्यसंततेः ॥२४०३॥

२३८१. 1) A °कार्यसब्रह्मचारिणा, evidently corrupt; emendation doubtful. २३८२. 1) Conjectural reading; A सरगज°; C सुरगज°.—2) Thus A; perhaps read °स्पर्शनात्पूता; C °नात् आता. २३८३. 1) Emended; A °ग्लते. २३९०. 1) A कोष°. २३९२. 1) A सायाह्न°. २३९५. 1) A, indicates a *lacuna* of three *aksharas*; C supplements संचारे.—2) Emended with G (*sec. manu*); A °ग्रहा×कन्दु. २३९८. 1) Emended; A °प्यतिप्रिय:; cf. the passage ii. 126, to which evidently reference is made here. २४०१. 1) Perhaps read °ष्वेवं.

तपोधनांश्चतुर्वर्णान्धर्मवृद्धांश्च शुद्धधीः । विजन्मभवनस्थोऽपि शक्तस्त्यक्तुं न यः क्वचित् ||२४०४||

कृष्णाजिनोभयमुखीदानमुख्यैः स्वकर्मभिः । धर्मकन्याविवाहैश्च यस्याभून्यत्वमायुषः ||२४०५|| 2405

सर्वेषामाहिताग्नीनां निष्प्रत्यूहा महात्मना । सर्वथागोपकरणैर्येन विभाजिताः क्रियाः ||२४०६||

भोगान्बुभुजिरे भव्यान्सत्रे सृजितविस्मये । यस्य वर्णाश्चतुःषष्टिः कुटुम्बस्पृष्टचेतसः ||२४०७||

अग्रहारगणोदग्रैर्वसतैर्मठसेतुभिः । पुरे परिष्कृते येन द्वयोः प्रवरसेनयोः ||२४०८||

आद्ये प्रवरभूभर्तुः पत्तने प्राप्तविस्मयः । ग्रामः प्रतिष्ठाप्रष्ठत्वं यत्कृतो रिल्हणेश्वरः ||२४०९||

लोकान्तरगतां कान्तां कृतिनोद्दिश्य सुस्सलाम् । भल्लेरकप्रपास्थाने विहारस्तेन कारितः ||२४१०|| 2410

मार्जार्यासिर्येगुचितदेहविस्मृत्यपोहतः । मृतामनुमृतायास्तन्नाम्ना यः ख्यातिमागतः ||२४११||

तद्भर्तुरीर्ष्याकालुष्ये तस्या दूरापगा पुरः । प्रदेशे मानुषीवासीत्प्रिया क्रीडाबिडालिका ||२४१२||

तीर्थप्रस्थानदिवसादारभ्यास्या विरागिणी । उत्सृजन्त्याहृतं भोज्यं सा भुक्त्वा जीवितं जहौ ||२४१३||

आरोहति परां काष्ठां प्रतिष्ठाविविधाध्वना । दिष्ट्या नृपतिपत्नीषु मन्त्रिपत्नीषु तु सुस्सला ||२४१४||

श्रीचङ्कुणविहारं या यातं नामावशेषताम् । अश्मप्राकारवेश्मादिकर्मणा निर्ममेऽधुना ||२४१५|| 2415

अरघट्टप्रबन्धान्धुच्छात्रशालादिकर्मभिः । तस्याः संपूर्णतां पुण्यप्राकारा निखिला गताः ||२४१६||

पूर्वराजकुलाखण्डस्थण्डिलव्यापिनाखिलम् । तद्विहारेण नगरं नीतं नेत्राभिरामताम् ||२४१७||

प्रापि प्रतिष्ठयेवाशु यत्नमक्षपितया तया । विपत्तिः श्रीसुरेश्वर्यां प्राज्यसायुज्यदूतिका ||२४१८||

मठाग्रहारा धन्येन वल्लभाभिधया कृताः । नाभीष्टं लेभिरे नाम ख्यातिः पुण्यैर्विना कुतः ||२४१९||

अग्रहारमठांस्तद्वदुदयः कम्पनापतिः । कृत्वापि स्वाभिधामेव तत्संबद्धां सदाशृणोत् ||२४२०|| 2420

उदयद्वारपतिना सह ब्रह्मपुरीगणैः । कृते प्रष्ठे मठे शोभां लेभे पद्मसरस्तटः ||२४२१||

भृङ्गारतन्त्रपतिना श्रीद्वारेप्यन्यजन्मना । प्रत्यष्ठापि मठोद्यानदीर्घिकायतनधाम्मना ||२४२२||

स्नानकोष्ठमठब्रह्मपुरीसेत्वादिकर्मणा । सोऽलंचकारालंकारो बृहद्गञ्जाधिपो धराम् ||२४२३||

बुधः सदौषधीशान्तिहेमोर्जातः कलावतः । यः कविर्दानवत्त्वं च ख्यातस्त्यागेन योजयत् ||२४२४||

नृसिंहसेवी निर्हिंसहिरण्यकशिपुप्रदः । वराहसमये दत्तगौश्च योऽपूर्ववैष्णवः ||२४२५|| 2425

भट्टारकमठाभ्यर्णे पूर्णचार्योचित्र प्रहिः । मठः भृङ्गारभट्टस्य ख्यात्यानीत्यत्ययोज्झितः ||२४२६||

सांधिविग्रहिको दार्वाभिसारोर्वीभुजोऽकरोत् । अष्टमूर्तेर्जहमाना प्रतिष्ठां पुण्यकर्मठः ||२४२७||

पुष्पाकरप्रणयभूः सुभगा विभूतिरेकस्य हन्त करवीरतरोर्द्रुमेषु ।
पुष्पाणि यस्य सफलीकुरुते स्वयं तत्प्रादुर्भवत्किमपि लिङ्गमनङ्गशत्रोः ||२४२८||

विभूत्या संविभक्तेषु भूभुजाखिलमन्त्रिषु । उत्कर्षकोटिं भुट्टाख्यः परं जल्हानुजोऽर्हति ||२४२९||

स्वयंभूः प्रकटीभूय पूजां स्वीकुरुते स्वयम् । ज्येष्ठरुद्रो वासिष्ठस्य यस्य वा वाल्केश्वरः ||२४३०|| 2430

सविहारमठोद्यवेश्मभिः कलुषोज्झितम् । तेन तत्र कृतं भुट्टपुराख्यं पुटभेदनम् ||२४३१||

---

२४०४. ¹) Emended with C; A तपोधनाश्च°. २४१०. ¹) Thus A; cf. vii. 1239, where भल्लेरकप्रपा°. २४१३. ¹) Emended with C; A उत्सृज्य°. २४१५. ¹) Emended; A °पुना. २४२५. ¹) Doubtful emendation; A °कशिपुः, without indicating the *lacuna*; C °कशिपुच्छिदः. २४२९. ¹) Emended; A उत्कर्षकोटिं. २४३१. ¹) Emended; A °षोज्झितः.

नगरेपि हरः प्रत्यष्ठापि भुट्टेश्वराभिधः । सरश्च मडवाराज्ये धर्मविभ्रमदर्पणः ॥२४३२॥
नीत्वा प्रतिष्ठां वैकुण्ठमठादि स्वविहारभूः । रत्नादेव्या रढं चक्रे स्वार्थमथनद्युस्थिरा ॥२४३३॥
रत्नापुरे बहुद्वारमहार्घे निरघो मठः । धत्ते द्युकृतहंसस्य स्फीतधौतसविभ्रमम् ॥२४३४॥
2435 मृत्युंजयो राजतेस्याः क्षुधाधौतान्नभञ्जन्गृहान् । जनस्यानित्यतोच्छित्त्यै श्वेतद्वीपं सृजन्निव ॥२४३५॥
गोकुलानां विधातारो गोकुले विहिते तया । गणिताः भूरवर्माद्याः सतृणाभ्यवहारिणः ॥२४३६॥
गवामव्याहतस्वैरसंचारचरकाङ्क्षिते । तत्र वैतस्ततोयाढ्ये यदपोढामयं वपुः ॥२४३७॥
मुकुन्दस्तत्र साधर्म्यसौन्दर्यौदार्यमन्दिरम् । अथवा गोवर्धनधरः सिद्धो वा विश्वकर्मणः ॥२४३८॥
मठ - - - कृत्वा सा नन्दिक्षेत्रेकरोत्स्थितिम् । - - जयवनाद्येषु स्थानेषु च मनोरमान् ॥२४३९॥
2440 दार्वाभिसारेप्युर्वीशसुन्दरीदार्यमन्दिरम् । स्वनामाङ्कं पुरं चक्रे तथा शक्रपुरोपमम् ॥२४४०॥
उद्दिश्योपरतान्मान्यमहत्तरमुखानपि । प्रतिष्ठा विविधाश्चक्रे सा राज्याश्रितवत्सला ॥२४४१॥
एवं सर्वाङ्गमामुक्तालंकृतेरथ स क्षितेः । विशेषकाभं भूभर्तृभूपा स्वमकरोन्मठम् ॥२४४२॥
अनुरक्तेन यो दत्तभूरिग्रामो महीभुजा । तत्क्षीरारोपितः ख्यातिं मुख्यः सिंहपुराख्यया ॥२४४३॥
व्यधात्कारपथेशस्य दौहित्रः सिन्धुजान्द्विजान् । निबिडान्द्रविडांश्चात्र प्राक्सिद्धच्छत्तमध्यगान् ॥२४४४॥
2445 किं वा मठादिनिर्माणस्तुत्या तस्य व्यधत्त यः । भूयः समामनगरं कृत्वा कश्मीरमण्डलम् ॥ २४४५॥
जीर्णारण्यसधर्मायं कालदौरात्म्यतो भवन् । देशो धनजनावासैस्तेन भूयोपि योजितः ॥२४४६॥
आरम्भात्प्रभृति क्ष्मापे दीक्षितेभीष्टदत्तिषु । शिल्पिप्रायैरपि प्रायो मठदेवगृहाः कृताः ॥२४४७॥
सत्कोशांशुकरत्नादौ निरवद्येन भूभुजा । साधारणीकृते पौरास्तांस्तांश्चक्रुर्महोत्सवान् ॥२४४८॥
अकाण्डतुहिनापातोद्दीपाद्यैरप्युपद्रवैः । नष्टेषु शालिषु क्षीणं सुभिक्षं तत्र न क्षणे ॥२४४९॥
2450 अप्नुतं नाभवद्धाम्नः श्रुता वसिशि रक्षसाम् । केल्याद्युत्पातजातं च दृष्टं नष्टाश्च न प्रजाः ॥२४५०॥
कोष्ठेश्वरानुजस्तुङ्गनामा विहितविग्रहः । आहवैर्गूढदण्डैश्च राज्ञा निन्येन्तकान्तिकम् ॥२४५१॥
चक्रे त्रिक्रमराजादीन्भूपानुन्मथ्य पार्थिवः । प्ररोहं गुल्हणादीनां राज्ञां वल्लापुरादिषु ॥२४५२॥
प्रजेशान्कान्यकुब्जादावजय्येण नृपार्यमा । स व्यधाद्रम्यभूभोगवैभवानभिमानिनः ॥२४५३॥
विद्योतमाने निश्शेषैर्मन्त्रिसत्त्वैश्चमेकदा । भेजे जीवितदारिद्र्यं दरद्राजो यशोधरः ॥२४५४॥
2455 स भूभृदनन्तरोप्यन्तरज्ञो राज्ञोतिसेवया । विपक्षी प्रकृतिक्रान्तसंतानश्चिन्त्यतामगात् ॥२४५५॥
निकृत्यास्य निजामात्यो विडसीहाभिधो यतः । संभुज्य दयितां राज्यमप्रौढतनयेग्रहीत् ॥२४५६॥
वशीकृत्य शनैर्देशं नाममात्रनृपं शिशुम् । उच्छेत्तुमैच्छद्यावत्तं स जिघृक्षुः स्वयं क्षितिम् ॥२४५७॥
अन्योमात्यः पुरस्कृत्य यशोधरसुतं परम् । तावत्तेन समं भेजे पर्युक्ताख्यो विपर्ययम् ॥२४५८॥युग्मम् ॥

---

२४३८.—२४३९. [1]) The last two *pâdas* of verse 2438 and the following verse are found in the above, mutilated form in A at the foot of fol. 290, having been added subsequently by $A_1$. C reads: मठप्रतिष्ठां कृत्वा सा नन्दिक्षेत्रेऽकरोत् स्थितिं । विहारान् जयवनाद्येषु स्थानेषु च मनोरमान्. २४४०. [1]) The first two *pâdas* of this verse have been subsequently added by $A_1$ at the top of fol. 291.—[2]) Emended; A दार्वासारे°; C दार्वाभिसारेप्यर्व्यु°. २४४५. [1]) Emended, A समग्राम°. २४४९. [1]) Thus $A_1$ originally; corr. by $A_1$ to शालिष्वक्षीणं. २४५१. [1]) Emended with C. A निन्येन्तिका°. २४५३. [1]) Emended; A प्रजेशा×का°. २४५८. [1]) $A_1$ २. २४५७. [1]) Emended; A °मात्रशिशुं नृपम्.;

ते तथा विपुलारम्भमपि ज्ञात्वा रसंभ्रमम् । प्रविविक्षुर्न्यषेधिष्ट कौलीयानुद्यमो नृपः ॥२४८६॥
पोषिते प्रेषितश्रीकैहस्तिस्कन्धे विग्रहैर्विभिः । अथोदयद्वारपतिः प्रैषि विध्वंसरामुक्त ॥२४८७॥
संगृहीता चमूस्तेन पुरे शांकरवर्मणः । ग्रामोल्कारचक्रस्य पार्श्वमभाजि लोठनः ॥२४८८॥
अपि विग्रहराजाख्यः सुनुः सुस्सलभूपतेः । भोजः सल्हणजन्मा च भुती तेन सहागतौ ॥२४८९॥
2490 अथोपह¯ ¯ स्थान एव तेषां स सस्वरः । मार्गे बहुदिनोल्लङ्घ्यमेकेनाह्ना व्यलङ्घयत् ॥२४९०॥
सपृथ्वकन्यासमयमासिद्धैर्यातो विधेयताम् । महास्कन्दहतस्पन्दः स पलायिष्ट डामरः ॥२४९१॥
सिन्धोर्मधुमतीमुक्ताभिया अन्तःस्थितं ततः । शिरःशिलाभिधं कोट्टमथ तैरधिशिश्रिये ॥२४९२॥
गहने क्षुभितः कोट्टे स्थितः किं वा स हस्यते । न निश्चिकाय द्वारेशो भाम्यन्दीर्घासु भूमिषु ॥२४९३॥
अथोपालब्धदुर्गारोहणेऽस्मिन्सज्ज्यत । दैवेनापि न भूभर्तुः प्रभावो निष्फलोऽभवः ॥२४९४॥
2495 उत्थानोन्मुखतो सर्वैष्वपिस्कन्धे तत्र दस्यवः । पाल्यतामिमथो यथेष्टपृथक्कृत इवाभजन् ॥२४९५॥
नैस्त्रिंशकादिभिर्गूढैवकृतैरथ लोठनः । पार्थ्वीहरिः पुनश्चक्रे मायाचतुरचाक्रिकः ॥२४९६॥
पुरग्रामादिदग्धारमसाध्यमथ धावताम् । पदे पदे कृष्णगतं स्वपक्ष्यास्तमरक्षिषुः ॥२४९७॥
दिक्चक्रे निवर्तनेर्भाम्यन्दृश्यादृश्यः स सर्वतः । कल्पान्तयोदयी ब्रह्मपुत्रः केतुरिवाभवत् ॥२४९८॥
भ्रान्तैरमात्यैर्निर्बन्धे संधौ कालानुरोधतः । मेने मड्डराज्योर्वी हारितेवाखिला जनैः ॥२४९९॥
2500 असंवृत्तप्रतीकारस्तयारोहस्तु वैरिषु । तदन्तरेव संमन्त्र्य धन्यं प्रास्थापयन्नृपः ॥२५००॥
तत्स्कन्धारोपिते कार्ये श्रीडां गच्छेत्तटस्थताम् । विपर्यासमथ द्वाराधीशा इत्यभ्यधाज्जनः ॥२५०१॥
भिक्षुर्मल्लार्जुनस्त्वासीदेक एव भयस्तमी । संवता हन्त दुःसाधा दस्युभिर्व्याकुलाः प्रजाः ॥२५०२॥
द्वाराधिपस्त्वदैवाकव्यवहारो महीपतेः । सिद्धिं स्वस्यामसिद्धयापि वाञ्छन्नद्योगमोऽभवत् ॥२५०३॥
एकाकी यः किल न भजते मृढतां भर्तृकार्ये नौदासीन्यं भवति च तथा यत्रधीने च तस्मिन् ।
निर्दैवाकव्यवहतितया साध्यसिद्धिं किलेच्छन्सारङ्गन्त्री प्रभवति परं नाल्पपुण्यस्य राज्ञः ॥२५०४॥
2505 पद्मचन्द्रे मृते तस्यानुजं राजोपवेशने । न्यधाद्यं धन्यचन्द्राख्यं सोऽप्यारब्धे विनिर्भयो ॥२५०५॥
द्विबाहुकादयो मुख्य¯ ¯ ¯: सह गायकैः । धन्यमेवान्वयुर्बाधाभावे राजोपजीविनः ॥२५०६॥
धन्यादिषु तिलग्रामं कोटसिन्धुतटाश्रयम् । अव¯ ¯ ¯[1]द्वारेशो दुर्गस्थः पृष्ठपद्धतीः ॥२५०७॥
हठप्रवेशायोग्याजिमुख्यदैवाकवर्जितः । शोषयन्निःश्वतो धैर्यगम्भीरं स व्यवाहरत् ॥२५०८॥
कुद्दालिकादिभिः काष्ठवृन्दैर्मन्दिरपद्धतीः । धन्यो मधुमतीतीरे नगरस्पर्धिनीर्व्यधात् ॥२५०९॥
2510 निर्धाम्नि द्रुमसंबाधं सनिकेता वनस्थलीः । कटकं सर्वभोगाढ्यं शाक्तः परिवृढोऽकरोत् ॥२५१०॥
देशे भूरितुषारोपहिमर्तौ भाग्यसंपदा । भूभर्तुरभियोग्यैव भूरभुङ्क्तानुभूविता ॥२५११॥
भुवनाद्भुतसंभारप्रेषणं विजयैषिणः । द्वैराज्यमीलिताक्षेऽपि काले राज्ञो न खण्डितम् ॥२५१२॥

---

२४८८. [1]) Emended; A च मूर्तेन. २४८९. [1]) Emended; A कुल्हण°.—[2]) Emended with C; A °गता. २४९०. [1]) Thus A; perhaps read अथोपह्वरवा तस्थान; cf. viii. 2513; C अथोपविस तस्थान. २४९२. [1]) Conjectural reading; A °मित्राश्रन्त-स्थितं; G (sec. manu) °भिया अन्ते स्थितं. २४९४. [1]) Doubtful emendation; A °नयन. २४९६. [1]) Comp. for this name viii. 2799. 2912. 3318.—[2]) Emended; A पा-हरिः; cf. viii. 2748. 2759. 2793. 2837.—[3]) Emended; A °त्रिकैः. २५०१. [1]) A तत्स्कन्धा°. २५०६. [1]) A does not indicate the *lacuna*; C मुख्याचारणैः. २५०७. [1]) Thus A; perhaps read with C अवस्कन्दयन्नद्वारा°.

तस्यान एवोपहतिं भवे प्राप्यत्यगात्त्वरम् । मार्तोशिपीडितमाम्याक्रन्दः शान्तिवर्कपमाम् ॥२५१३॥
दीर्घप्रवासनिर्वेदाचलितान्दर्शयत्तुषम् । स्यात्मूंष तोषयन्दायैः स्थैर्ये निन्ये नृपश्चमूः ॥२५१४॥
इत्थं चिकतुरान्मासांस्तिष्ठद्भिरपि निष्ठुरैः । नैवावातुमशक्यन्त कटकैः कोट्टसंभवाः ॥२५१५॥ 2515
नैषां हि वीवधासारनिरोधादीनि कृष्यताम् । अपियाणि न जानाति दैन्यदायीनि कानि चित् ॥२५१६॥
भिक्षीर्णवस्तुपाराम्ने स्वविभूतिप्रकाशनम् । तस्थुरङ्कुरितोल्लासाः पर्वता इव डामराः ॥२५१७॥
कृषिं कृषीवलैर्वेदपातमुत्सृज्य च द्विजैः । उपिञ्जसज्जैर्ग्रामेषु सर्वतः शस्त्रमादधे ॥२५१८॥
प्रतीक्षमाणाः प्रालेयप्रलयं मार्गभूभृताम् । दारदास्तुरगानीकैः सज्जैस्तस्थुर्जिगीषवः ॥२५१९॥
सिद्धिकासंहतेः कालतूलतल्पाकृतेर्दधत् । पातभीतिं जनो राजसेना शश्वदवेपत ॥२५२०॥ 2520
इत्थं प्रत्यर्थिसामर्थ्यपरमार्थापरीक्षणात् । क्ष्माभृन्मिथ्यैवमारेभे संदेहं च जयेऽभजत् ॥२५२१॥
वैदग्ध्यविन्ध्यमनसामयमेक एव कोऽप्यस्ति बन्धनविधेरुचितः प्रकारः ।
येनात्मना किल विशङ्कितशक्तयस्ते मुग्धेऽपि वैरिणि विचारहतोद्यमाः स्युः ॥२५२२॥
प्रयादमात्रसाराधस्त्रसेत्परिकराहरैः । स्वयैव तस्य विध्येत सिद्धिश्चिन्तान्धया धिया ॥२५२३॥
विध्येदाशु शिलीमुखैः प्रवितरेत्पश्चैरवस्कन्दनं बध्नीयात्तदिदं गुणैः परिकरैर्मिथ्या प्रसिद्धैरिति ।
स्याचेदम्बुरुहं द्विपस्य भयकृच्चिन्तासहैः साहसं प्रत्यूहेत ततो निजैरपघनैरध्येनतुन्मूलने ॥२५२४॥
लोठनाद्यैर्हि कर्णाहांशिस्तीर्णैस्तैः कथंचन । प्राप्तेलंकारचक्रेऽपि राज्यमज्ञायि निर्जितम् ॥२५२५॥ 2525
मिथ्यैव प्रथिता कन्था स्वयूथ्यैः कथमन्यथा । तस्मिन्नमन्दमास्कन्दं धावन्द्वाराधिपो ददौ ॥२५२६॥
प्रत्यग्रस्थित्यसामर्थ्यात्ततः कोट्टं व्यसर्जयत् । स राजवीजिनस्तांश्च परेद्युः स्वयमन्वगात् ॥२५२७॥
कोट्टाद्रिः सलिलस्यान्तः कृशोर्धः पृष्ठदैर्घ्यभाक् । स तैर्वैसारिणेमासङ्गमो नक्र इवैक्ष्यत ॥२५२८॥
निःसामर्थ्यं तद्विलोक्य गजागारमिवागजम् । तत्यजुर्विजयाशांसां भयं चोदवहन्हृदि ॥२५२९॥
ततः शरैर्वृंहद्वैर्बाध्याश्चेतो विरोधिनः । अर्णसो रक्षणमितो रक्ष्या यन्त्रोपला हतः ॥२५३०॥ 2530
इत्थं स तैरभिदधद्वैर्यादाराच डामरः । मेने स्वगुप्तिमात्रार्थी न युद्धे बद्धनिश्चयः ॥२५३१॥कुलकम् ॥
ततः कन्दलितास्कन्दे तिलग्रामे द्विषद्बले । प्रतीकाराक्षमे दस्यौ ते चिन्ताक्षामतां दधुः ॥२५३२॥
विलयाद्विपुलप्रज्ञासौष्ठवो लोठनः पुनः । डामरं कृत्स्नसंपूर्णमगूढं तमगर्हत ॥२५३३॥
भोजस्तूर्ष्णिजितं वक्तो द्रोहो रोदेदिति ब्रुवन् । दृष्ट्वा पितृव्यं तं व्याजस्तुत्या नित्यमुपाचरत् ॥२५३४॥
विमुखे लोठनेकुण्ठशाठ्यस्तस्य तु सान्त्वनैः । मेने मन्त्रग्रतां किंचित्सोर्वार्तिष्टं च संविदि ॥२५३५॥ 2535
हन्यान्मां भूभृदित्येव भ्रातेष्वेतेषु संत्यजेत् । नास्मानुक्त्वेत्यरीरत्तीत्स पितृव्यं गमनार्थनात् ॥२५३६॥
स्वप्यस्माद्ध च सर्वेषु वेष्टितेषूत्कटा द्विषः । पृष्ठकोपमसंभाव्य कुतश्चिच्चिथलोद्यमाः ॥२५३७॥

---

२५१३. [1]) Doubtful emendation; A एवोपह भवे; C एवोपहतभवे.—[2]) Emended; A °क्रन्दं शान्ति° (the letter क is of unusual shape and resembles च); C शान्तिचक्रू°. २५१४. [1]) Emended; A चलितां; another possible emendation would be चलिता दर्शयत्तुषम् । स्यात्मूंष. २५१५. [1]) Emended; A संभवाः. २५२०. [1]) Emended with G (sec. manu); A शिशिका°. २५२५. [1]) Thus A; cf. कर्णाहका° viii. 2485. २५२८. [1]) Emended; A कृशोर्ध:.—[2]) Emended with C; A तैर्वैसारण°. २५३०. [1]) Emended; A शरैर्दृष°. २५३१. [1]) Emended; A तैरभिदधैर्या°; C तैरभिदधैर्याधवा°.—[2]) A, २. २५३४. [1]) Emended; A भोजं; R भोजो. २५३५. [1]) Emended; A सान्त्वनेः; C सान्त्वने.—[2]) Doubtful emendation; A °स्तवर्तिष्ट च; C °स्तमवर्तिष्ट स°.

यथाहिद्व्युः सिन्धेस्ततरेकं त्यज मानितः । अन्योन्यबन्ध्यामानीय दरदो वा जयेन्न वः ॥२५३८॥

बन्धनं त्यपनेष्यामि युक्तमित्युक्तवांश्च तम् । डामरं विदधे किंचिदिव सामत्यमाभितम् ॥२५३९॥

2540 विमोक्ष्यामि क्षपायां त्वामद्य श्वो वेति तं ब्रुवन् । स त्वसंक्षीणदाक्षिण्यो विमलेभे प्रतिक्षणम् ॥२५४०॥

अध्वरोधे ब्रुदुरस्थैर्यथावत्कृतैरिभिः । बाह्यधामादतैरथैस्ते त्वहान्यत्यवाहयन् ॥२५४१॥

दुरुदर्कभयाशङ्क्य समयं ते व्यजिज्ञपन् । धन्यादयोऽहितैः संधिर्विधेय इति भूपतिम् ॥२५४२॥

तैस्तैर्निमित्तैः संधानमविधेयं विदन्नृपः । तानादिदेश कर्तव्यं कोट्टालकवेष्टनम् ॥ २५४३ ॥

संदिदेश च दायादा बन्धेरन्दयातिमागताः । निजास्पदे नाद्भुतति दर्शोत्कोपेथ डामरे ॥ २५४४ ॥

2545 भूत्वा कठोरेर्ष्यारम्भानिष्ठा निःसीह्या ध्रुवम् । क्रियातिपत्युपालम्भैर्वास्यामोनुशयं विशाम् ॥२५४५॥ ॥

नात्यसद्वृत्तदेवधेसमाहात्म्युधमं ततः । दुग्धमथाहं प्राप्स्यस्त्वं भुक्त्वेत्यन्योपि लभ्यते ॥२५४६॥

प्राप्तव्यं प्राप्तवान्सर्वो निजैः कृत्यैः शुभाशुभैः । क्रियातिपत्तिर्लोकेऽवं वैलोक्यं तु मुखेर्प्यते ॥२५४७॥

पादेषु पक्षेषु च सत्सु नोर्व्यां न व्योम्नि वा पक्षपिपीलकस्य ।

पङ्गुप्रचङ्क्रमणं तु गतं किं संपदा स्यान्नियमे मतीनाम् ॥२५४८॥

सहजपादस्य गतेर्निमित्तमनूरुभावेप्यरुणः प्रजातः ।

तस्याभविष्यद्यदि पादयुग्मं ततोधिकं तत्किमिवाकरिष्यत् ॥२५४९॥

2550 उपेक्ष्य साक्षितां तस्मात्कृत्स्नां कोहं विवेष्टनाम् । प्रयातु तथैवास्माकं तेषां च पुरुषायुषम् ॥२५५०॥

अविश्रान्तो वातो दहन इव सोयं जनयति प्रसक्तिं सातत्याद्दलयति कुलाद्रीनपि जलम् ।

प्रसूते कृत्येषु व्यवसितिरनिर्व्यूढस्पृहा फलावाप्तिं लोके प्रतिकलमसंभाव्यविभवाम् ॥२५५१॥

क्रूरां नरपतेराज्ञां श्रुत्वा धन्यादयस्ततः । कोट्टमतोलीं कूलं तं त्यक्त्वाप्याहरद्दुर्जयात् ॥२५५२॥

कथं युद्धं विधास्यन्ति कथं स्थास्यन्ति वेति तान् । शराग्निकरम्तः कोट्टस्था यावत्प्रैक्षन्त कौतुकात् ॥२५५३॥

अधः सोप्यूर्ध्वगान्युद्दैर्निष्पीड्य निविडैर्व्यधात् । धन्यः प्रदेशं तावन्तं निकेतैः पत्तनोपमम् ॥२५५४॥युग्मम् ॥

2555 अविश्रान्तैस्ततः संख्यैरसंख्येयवधप्रक्षयः । प्रतिक्षणं प्रववृते सैन्ययोरुभयोरपि ॥२५५५॥

परेद्युः शारदां दृष्ट्वा संप्राप्तो गर्गनन्दनः । संक्रन्दनपुरीपौरवृद्धिं योपिर्दैतैर्व्यधात् ॥२५५६॥

अलंकाराभिधो बाह्यराजस्थानाधिकारभाक् । अधृष्योमानुषैर्युद्धैर्विरुद्धान्बहुधावधीत् ॥२५५७॥

क्व भूधरचरैः स्पर्धा वसुधातलचारिणाम् । तथापि पृतनायन्तामन्त्यं चिन्त्यमचिन्त्यकृत् ॥२५५८॥

अल्पीयांसः कोट्टनिष्ठा भूयिष्ठाः कटकाश्रयाः । अतः पूर्वे बहून्प्रन्तोऽप्यासन्कृत्याल्पया क्षताः ॥२५५९॥

2560 शिष्टद्वारान्तरिपटं हिमैः पीडितमाहवैः । मीलिताक्षमिव प्रासादस्ततो दुर्गमजायत ॥२५६०॥

गोपृभेदान्तरद्वैधमुखच्छिद्रानुसारिणः । धन्यादीन्वीक्ष्य विश्वासं कोट्टस्था नोपलेभिरे ॥२५६१॥

निद्राच्छेदार्थमन्योन्यं क्रोशन्तो नास्वपन्निशि । स्वपन्तोऽह्नि तु निःशब्दभूम्यं कोट्टमदीदृशन् ॥२५६२॥

---

२५३८. ¹) Emended with G (*sec. manu*); A वा॰येन; C वयेन. २५४०. ¹) Emended with C; A क्षो.—²) Emended with C; सत्वसह्री॰. २५४५. ¹) A कठो॰र्ष्या॰; C कठोरेऽस्त्या॰.—²) Could be read in A also ॰निष्ठावि॰.—³) A ॰स्वामो॰शयं C ॰स्वामीऽसंशयं. २५४६. ¹) Emended; A प्राप्स्यन्स. २५४७. ¹) Emended; A ॰लोक वैलो॰.; C ॰लोकेऽपि. २५४८. ¹) Emended with G (*sec. manu*); A यर्मे. २५५३. ¹) Emended; A ॰सैक्षन्त. २५५४. ¹) Thus A; perhaps read अधःस्थो.—²) A₁ २. २५५६. ¹) Emended with G (*sec. manu*); A ॰पौरयोवैवृद्धि हवै॰

निशासु तत्रत्यजना यामगुर्यद्वैरपि । चटकाः कोटरगता मेचकाभ्रैरिवावसन् ॥२५६३॥
अदृश्यैर्भ्रमन्तीभिर्नौभिः संरुद्धपाथसः । तान्समभ्रंशयन्सर्वप्रकारं राजसैनिकाः ॥२५६४॥
ते रुद्धपाथसस्तर्षशोषं कंचिद्विषेहिरे । निःसंचारास्तु संक्षीणे भोक्तव्ये क्लिश्यमाययुः ॥२५६५॥
बुभुक्षवः क्ष्मापयोग्यान्भोगान्भाग्योर्जितांस्ततः । कदन्नैर्नृपदायादा अशनाशंसनं व्यधुः ॥२५६६॥
दूरे स्पर्धास्तु विस्तीर्णाः क्षुधितास्तेऽधिकं व्यधुः । भूभर्तुर्भोगमागिभ्यो भृत्येभ्योऽप्यन्नदं स्पृहाम् ॥२५६७॥
व्यूहेऽन्नस्याद्य पर्याप्तमकार्यमिति भाविनम् । भोजं व्यधान्मध्यभृङ्गे दुर्गस्याथ स तं पृथक् ॥२५६८॥
एकस्य वार्धकाद्वैश्यापुत्रत्वादपरस्य च । आनयनयोग्यतां मेने द्वैराज्यार्हे तमेव सः ॥२५६९॥
विनामुं चानयोः सम्यक्संरम्भेऽरब्ध वैरिणः । इति मिथ्या प्रथां निन्ये तद्विनिःसरणं बहिः ॥२५७०॥
कान्तालंकारचक्रस्य काकुन्ती क्षयमित्वरी । चक्षुरागात्पद्मचन्द्रे सान्द्रक्लेदार्द्रतां गता ॥२५७१॥
बहिराभ्यन्तरं भेदं नयन्ती मन्त्रमायया । साल्हणेः कर्णसरणिं सर्वमन्विष्यतोऽन्वहम् ॥२५७२॥ युग्मम्॥
रागभ्रान्ताम्बितधियः प्रतिभेदभयेन सः । तस्य प्रकाशयतेनां गन्तुं तु प्रार्थनां व्यधात् ॥२५७३॥
क्षमावाक्छिशक्तिलोपेक्षो मैत्रीस्थैर्ये मुदं भजन् । नागः सागस्यपि दधे बोधिसत्त्व इव क्रुधम् ॥२५७४॥
प्रियामन्युः सरागेण मृत्युहेतुर्महानपि । हवि विस्मर्यते पृष्ठे वारभेणेव वारणः ॥२५७५॥
अथ प्रस्थापितो भोजः कुमारिशिबिरान्तरात् । वातप्रायोऽप्यलंकारतनयेनानुयायिना ॥२५७६॥
द्रोहेच्छया भयाद्वापि व्यस्तसत्त्वेन सत्वरम् । व्यावृत्यारोपितो भूयः कोट्टस्यस्यान्तिकं पितुः ॥२५७७॥ युग्मम्॥
निर्भर्त्स्य पुत्रं गन्तासि श्वो निशीत्यभिधाय तम् । क्रममस्यापथस्तोऽद्धि यात इत्यखिलान्वदन् ॥२५७८॥
प्रोत्सल्यानिश्चयादेकः प्रायाद्री श्वः प्रयास्यतः । बोधितैरथ धन्याद्यैरजागार्यखिलैर्निशि ॥२५७९॥
प्रस्थास्नुः स निशीथेऽथ कोलाहलाद्व्यलोकयत् । जाग्रतः कटके सर्वान्परितो दीपितानले ॥२५८०॥
प्राकारस्य बहिर्मा दुर्गं प्रतोलीनिर्गतो यथा । पिपीलकोऽप्यलक्ष्यस्त्वं नोन्मुखानां द्विषां व्रजेत् ॥२५८१॥
ज्वालाप्रकाशचाञ्चल्याद्विलोला इव रक्षिताः । न्यषेधन्मूर्धकम्पेन साल्हणिं साहसादृताः ॥२५८२॥
तद्गन्तुमक्षमं क्षिप्रं क्षपाप्रान्ते स डामरः । अधोवातीतरच्छुभ्रमालिङ्गितघटाकरम् ॥२५८३॥
क्षेमराजाभिधानेन डामरेशेन सोऽन्वितः । शिलां वितर्दिकातुल्यामध्यास्त श्वभ्रमध्यगाम् ॥२५८४॥
आरुह्यासनमात्रे तां पर्याप्तां पानभीतितः । निर्निद्रौ पञ्चरात्रीस्तावत्यवाहयतामुभौ ॥२५८५॥
निर्वर्तितप्राणयात्रौ करस्थैः सक्तुपिण्डकैः । तत एव व्यजहतां विष्ठां नीडादिवाण्डजौ ॥२५८६॥
अव्यक्तव्याकुलौ चित्रास्वितावित्र तौ स्थितौ । वीक्ष्यारिकटके लक्ष्मीं पृष्ठाद्विस्मयमीयतुः ॥२५८७॥
तयोराभीयत स्फीतशीतविस्मृतिकारिणा । जयसिंहप्रतापाग्निसंतापेनोपकारिता ॥२५८८॥
यथेहि तत्र निःशेषीभूतभोक्तव्ययोरथ । क्षतक्षार इवारम्भि तुषारं वर्षितुं घनैः ॥२५८९॥
अनुद्यतोचिते दन्तवीणावाद्योद्यमे तया । शीतासादितसादेन पाणिपादेन क्षमता ॥२५९०॥

---

२५६४. ¹) Emended with C; A ताम्समभ्रम°. २५६५. ¹) The letter ष is indistinctly written; C °श्रोषं; R °रोषं. २५६६. ¹) Emended; A °सर्वैर्व्यधुः. २५७२. ¹) A, २. २५७३. ¹) Emended with C; A प्रास्ता°. २५७४. ¹) A °त्रिविध°. २५७७. ¹) A, २. २५७८. ¹) Emended with C; A निभर्त्स्य. २५८१. ¹) Emended; A °प्रकाश वास्य°. २५८३. ¹) Emended; A °श्रम:. २५९०. ¹) Emended with C; A पाणिपादेन.

तावच्चिन्तयतामद्य क्षुत्क्षीणाभिहतौ ध्रुवम् । पतिष्यावोरिकटके पाशबद्धाविवाण्डजौ ॥२५९१॥
क पूत्कुर्वः कस्य वार्तां विदितौ यो निर्हरेत् । ततः पङ्गुन्नरावस्थौ क्षुधः कलमाविव ॥२५९२॥
विषमस्थावयोरेवं तौ नक्तमभ्यर्थ्य डामरः । आरोप्य रज्ज्वावलये शृङ्गे स्थापयति स्म सः ॥२५९३॥
कृतशीतप्रतीकारौ पलालानलसेवनैः । दुःखं व्यस्मरतां तत्र निद्रया चिरलब्धया ॥२५९४॥
2595 ततोऽप्यभ्यधिकां व्यापद्भेजे लोठनविग्रहौ । अचक्षुष्यौ जनास्निग्धां गिरमप्यापतुर्न तौ ॥२५९५॥
यवकोद्रवयूषादि तयोः सतुषमश्नतोः । गात्रैर्वस्त्रैश्च वैवर्ण्यं शुचिवन्ध्यतया दधे ॥२५९६॥
धन्योऽलंकारचक्रस्य क्षीणभोज्यस्य सर्वतः । स्वीचकारान्नदानेन तुल्यौ होलन्यशास्करौ ॥२५९७॥
ततः स दूतैर्विक्रेतुमङ्गीचक्रे नृपद्विषः । बुभुक्षाक्षुभितो भृत्यभेदभीतश्च डामरः ॥२५९८॥
दुस्तरव्यापदुद्रेकद्रुतसत्त्वतयास्य तत् । पापोपलिप्तचित्तमधर्माकीर्तिसाध्वसम् ॥२५९९॥
2600 भूपतेर्विद्विषच्छेदस्थापनास्त्वस्य रक्षणम् । ख्यातिभुञ्जौ चिकीर्षुश्च कुशकाशावलम्बनम् ॥२६००॥
भृत्यस्योदयनाख्यस्य धिया प्रच्छादितं तथा । ररक्ष साल्हणिं भोजं द्वौ तु दातुं स तत्वरे ॥२६०१॥
तं विना च तयोर्भूपाण्डं जानन्नसांप्रतम् । अबाधं स्वस्य चाशेषकृत्यं युक्तममन्यत ॥२६०२॥
भोज्याभावकृतां तस्य व्यापदं तत्र मन्त्रितम् । तदा नाज्ञासिषुर्धन्यादयः संधिं विधित्सवः ॥२६०३॥
मिथश्चिन्त्यलिपा तेषां कस्माच्चिदभवत्ततः । किं पुनस्तेन शायावद्ये दातुं प्रतिश्रुते ॥२६०४॥
2605 देयविश्राणनानीकोत्थानादिपणसिद्धये । भ्रातृव्यमनयज्जन्यः कल्याणमवकल्पताम् ॥२६०५॥
प्रबन्धं निर्भयारिमुपचरच्छादितस्वं महार्दि संगृह्णनयकुटिलचेष्टं व्यवहरन् ।
स भूमिः सिद्धीनां इचतुचितकर्तव्यपरतां भवेद्योनिर्व्यूढावपि द्रढसंरम्भरभसः ॥२६०६॥
दुःखैर्दीर्घप्रवासोत्थैरपसारितसौष्ठवाः । तदा संरम्भशैथिल्यं भूभृद्भृत्याः प्रपेदिरे ॥२६०७॥
स सत्यं सचिवोऽमात्यः संग्रहीतुं प्रगल्भते । कथाशरीरमिव यो निर्व्यूढो कार्यमाकुलम् ॥२६०८॥
संधिं निबद्धं विज्ञाय सैनिकाः स्वगृहोन्मुखाः । उपेक्ष्य स्वामिदाक्षिण्यं क्षणादेव प्रतस्थिरे ॥२६०९॥
2610 तद्विक्रीतमवाप्यार्थं लवन्यः कार्यमन्थरः । धन्याद्याः स्वल्पसैन्यत्वादासन्कृच्छ्रगतास्तथा ॥२६१०॥
प्रतोलीकीलितदृशः प्रार्थितापमनाशया । तदहः सोऽभियोक्तॄंस्तानदहत्तावतापयत् ॥२६११॥
रथाक्रान्तिमिति रात्रिस्तेषां कृच्छ्रेण साऽगमत् । विना जीवितसंन्यासमन्यत्कार्यमपश्यताम् ॥२६१२॥
प्रयत्नसंभृते कृत्ये नष्टे मन्दतया धियः । अस्मत्संभावनादूरीकृतवाक्यादरं प्रभुम् ॥२६१३॥
नष्टानुशोचनव्याजात्सत्युक्तमुपहासिनः । सदयं वो ध्रुवं दुःखीकरिष्यन्त्यन्यमन्त्रिणः ॥२६१४॥
2615 सद्यो याचातारतम्यात्साम्यन्तो भस्त्रपार्पणम् । कार्यनिष्ठामपश्यन्तः कुर्युर्वैस्वपरेतुवन् ॥२६१५॥
मायामेतां विदितवांस्तैः संमन्त्र्य नृपाहितैः । सिद्धसाध्योऽधुना दस्युर्द्वैस्त्वस्माद्ध्रुवं स्थितः ॥२६१६॥
अल्पेतरांस्तु संकल्पानेवं तेषां वितन्वताम् । दत्तानन्ततनुज्वालिः प्रभाता सा विभावरी ॥२६१७॥ कुलकम् ॥
प्राक्षेप राजस्थानीयोऽलंकारः साहसोत्सुकः । डामरं कोष्ठ्यागत्य जिन्ये नयभयैर्वशम् ॥२६१८॥
पक्षाई गमने सोऽविलम्ब्यस्तत्र वासरे । लोठनं[1] क्षीणदाक्षिण्यः स गच्छेत्यब्रवीत्स्फुटम् ॥२६१९॥

---

२५९५. 1) Emended; A जनास्निग्धां. २६०१. 1) Emended; A °भोजकम. २६०३. 1) Emended; A भोज्यभाव°. २६११. 1) Emended with G (*sec. manu*); A °कैलित°. २६१५. 1) Emended with C; A °पद्यन्त. २६१९. 1) Emended; A लोठनं.

यथोचितं दानमानसंभाषणविलोकनैः । संतोष्य व्यसृजत्सैन्यं धन्यादीन्प्रेक्षतागतान् ॥२६४३॥
तेषां पुनश्च दोर्दण्डमूले क्षिप्तकरं भटैः । न्यस्तेनानासिकं वासःप्रान्तेनाच्छादिताननम् ॥२६४४॥
2645 निर्भूषणश्रोत्रपालिप्रविष्टैः श्मश्रुलोमभिः । अलक्ष्यत्वैः प्रव्यक्तकार्श्यक्लेशं कपोलयोः ॥२६४५॥
उच्चावचोक्तिमुखरे पौरलोकेऽन्तरान्तरा । व्यापारयन्तं नेत्रान्तौ दीनस्तिमिततारकौ ॥२६४६॥
कातर्यदैन्यभीक्षान्तिक्षुद्रलक्ष्मीकटाक्षितम् । वेपमानविनिद्राङ्गं मां शीतेनार्दितामिव ॥२६४७॥
भ्रान्तामिव क्ष्मां पर्यस्तानिवाद्रीन्पतितामिव । विदन्तं च दिवं शोच - - - -[2]रदच्छदम् ॥२६४८॥
दैविको वान्तरायोस्तु ध्यायन्तं चोभं प्रवर्तताम् । राजीकोभ्यर्णतां यातं वाता वा जरयन्त्विदम् ॥२६४९॥
2650 सर्वापकारकृद्राज्ञः स्यास्त्वामि पुरतः कथम् । पदानि संनिरुन्धानं निर्ध्यायेति पदे पदे ॥२६५०॥अन्तर्युगलम्॥
बहुलोकावृततया स्तोकसंलक्ष्यमैक्षत । प्रतीहारैरथावेद्यमानं लोठनमङ्गने ॥२६५१॥कुलकम्॥
भूसंज्ञया वितीर्णाज्ञो राज्ञा तामारुरोह सः । सभां पारिप्लवाम्भोजामिव प्रेक्षकलोचनैः ॥२६५२॥
दृष्ट्या निर्दिष्टपार्श्वोर्वीस्थितिः पृथ्वीभुजस्ततः । अस्प्राक्षीत्क्षितिनिक्षिप्तजानुर्मूर्धाङ्घ्रिपङ्कजे ॥२६५३॥
हस्ताम्बुजाभ्यामालम्ब्य ललाटतटमानतम् । सवाद्संभ्रमनम्रस्य तस्योन्नमयच्छिरः ॥२६५४॥
2655 दत्तौषधीजुषोः स्पर्शः पाण्योस्तापं स चेतसः । दौर्भाग्यमहरद्देहाच्चास्य श्रीखण्डशीतलः ॥२६५५॥
पुण्यानुभावात्कारुण्यभाजो भूभर्तुरञ्जसा । विस्रम्भसंभावनया स क्षणात्स्पृष्टो हृदि ॥२६५६॥
मा भैषीरिति दृष्टोक्तिः सुखं संप्राप्स्यसीति वाक् । अगाम्भीर्येण भ्रमेत्र मन्युर्न त्वयि साधुना ॥२६५७॥
इत्युक्ते पूर्ववैराणां भवेदुद्घाटनं कृतम् । बान्धवो नस्त्वमित्यस्मिन्परीहास इव क्षणे ॥२६५८॥
क्लिष्टोऽसीति न्यक्प्रतापप्रभावाभाषणं भवेत् । ध्यात्वेति भूभृद्दृष्ट्यास्य नाप्यायं तु गिराकरोत् ॥२६५९॥तिलकम्॥
2660 अभयार्थनया पादौ स्प्रष्टुं नमयतः शिरः । संस्पर्शं मौलिषु पुनर्विग्रहस्याङ्घ्रिणाकरोत् ॥२६६०॥
का योग्यता सत्क्रियायां ममेति वदता बलात् । अजिग्रहत्पितृव्येण ताम्बूलं स्वकरार्पितम् ॥२६६१॥
नवं हारेशभूपेऽभूच्छ्रमो व इति सस्मितम् । धन्यं पृष्ठं च पस्पर्श प्रष्ठं सव्येन बाहुना ॥२६६२॥
दाक्ष्यदाक्षिण्यगाम्भीर्यविनयाद्यैर्विभाव्य तम् । भूभृद्गुणैः परीतं स्वं लोठनोऽमन्यतावरम् ॥२६६३॥
आदिश्य सान्त्वनं धन्यमुखेनाथ नयानतम् । पितृव्यं प्राहिणोद्धेम भ्राजिष्णु विनयाञ्जलिः ॥२६६४॥
2665 अभियोगे च एवास्य भीतौ विन्यस्यतो दृशम् । मुखरागः स एवाभूत्फलाभावाविधुनः ॥२६६५॥
नाधत्ते वाडवशिखिक्षयणेन तापं शैत्यं हिमाद्रिपयसा विदधाति न चाब्धिः ।
कश्चिद्गभीरमनसां सततं विषादकाले प्रमोदसमये च समोऽनुभावः ॥२६६६॥
प्रीतिस्थैर्यज्ञातियोग्यैश्चोपचारैरकृत्रिमैः । क्रमाद्राजाहरल्लज्जां पौरुषभ्रंशजीवयोः ॥२६६७॥
दायादोऽष्टहयादेव राष्ट्रे कृष्टेऽपि मन्त्रवित् । भोजेनोत्पिच्छसर्पस्य दन्तं सोऽन्तरचिन्तयत् ॥२६६८॥
प्रवासायासभीत्या स्वैरस्वस्थसंरम्भसंभ्रमैः । जिगीषुर्विद्विषच्छेदैश्चक्रे यत्नप्रजागरः ॥२६६९॥
2670 साल्हणिः स तु निस्तीर्णः श्वभ्राच्छून्यगृहे वसन् । पितृव्यविग्रहोदन्तमुपलेभे न कंचन ॥२६७०॥

२६४५. ¹) A बलक्ष°. २६४८. ¹) Emended with C; A °पतितामिव.—²) Thus A; C supplements शोचद्बहुदुःखकरद°. २६४९. ¹) Emended with C; A दैविको न्तरा°. २६५५. ¹) Emended; A °हेत्वास्य; C °हेत्वास्य. २६५७. ¹) Emended with G (sec. manu); A मन्युना त्वयि साधुना. २६६४. ¹) Emended; A धन्यं मु°. २६६७. ¹) Emended; A °कृत्रिमः. २६६८. ¹) Conjectural reading; A भोजनोत्पिच्छ°. २६७०. ¹) Emended; A सल्हणः.—²) Emended; A निस्तीर्णः.

राजगृहं स्वलंकारं डामराश्विकमावृतम् । पृष्ठाद्रीक्ष्याभवद्द्रोहद्रोहसंभावनस्तदा ॥२६७१॥
ददर्श च क्रमादूरतया दुर्लक्ष्यविस्तृति । स्कन्धावारं बहुभालं मार्गे नगरगामिनि ॥२६७२॥
अज्ञातेन विदूरस्थायिनृपेणाभितं ततः । युग्यं वासी धन्यपञ्चयुग्ययोरन्तरेऽक्षत ॥२६७३॥
अचिन्तयच्च को हेतुः कटकप्रस्थितेरितः । युग्यारूढश्च कोऽत्र स्यात्तृतीयो धन्यपञ्चयोः ॥२६७४॥
पृष्टस्तेनाथ दस्तकश्चित्यामरोऽथ प्रमोदभाक् । संधिर्निबद्धो नगरं गतौ लोठनविग्रहौ ॥२६७५॥ 2675
संदेहीजडतद्रोहो भयमुन्मुखतां भजेत् । शान्तिखेदेन तस्यासीन्मुहूर्तमपहस्तितम् ॥२६७६॥
सैन्ये गते शून्यतया मिलितैर्विहगैः सरित् । वनद्विपस्तेन तौ नीतौ क्रन्दन्तीव व्यकल्प्यत ॥२६७७॥
लब्धस्य एव मे दध्यावाद्यालेहस्यमवेत्य ते । पुनर्नयेयुर्धन्याद्याः क्रमाद्ध्यायदिति सः ॥२६७८॥
स्वं नेतुं पार्थिवचमूं मत्वाऽऽवृत्तां निनादिनीम् । भुतेन्तरान्तरा वोचे निद्रां नागमशङ्कृत ॥२६७९॥
अथाजायत जीमूतवितीर्णतिमिरं जगत् । बन्ध्यं मध्यंदिनेनेव निशीथव्यक्तिनश्रिया ॥२६८०॥ 2680
राधमासावधि दधुस्ततः प्रभृति वारिदाः । दीक्षां क्षोण्यां तुषाराम्बुसत्त्वासुत्रणकर्मणि ॥२६८१॥
विकम्पमास्यभक्तोऽहं निर्भक्ष्यो ह्रियोज्झितः । निम्बन्स्त्वमिति भोजाय ततो दस्युरुपाविशत् ॥२६८२॥
समयापेक्षयाक्षोभो मन्युं संस्तम्भं सात्त्वणिः । सान्त्वयन्निव वास्यागततावेति जगाद तम् ॥२६८३॥
कथे च संश्रितापत्यशाल्यापापहृतं त्वया । वानुमेतत्कुलं तव मही नार्हसि कस्यचित् ॥२६८४॥
तव द्रोहस्पृहा स्याद्वेन्नानृशंस्यं भजेन्मयि । परयत्नाभवत्समादियं कालानुरोधतः ॥२६८५॥ 2685
राजश्च हर्षभूभर्तृवंश्या इव न वा वयम् । उच्छेद्याः किं तु संयम्या राजधर्मानुरोधिनः ॥२६८६॥
स्वस्याख्यातिस्तयोर्बाधा राजधामार्गगामिता । शेषं मां रक्षता हन्त निषिद्धा धीमता त्वया ॥२६८७॥
इत्युक्तवन्तं तं त्यक्तलज्जाभार इवावदत् । साक्षी स्वमेवं सर्वत्र ममेति सततं स्तुवन् ॥२६८८॥
क्षणेन च प्रहितु नामधुनेत्यभिभाषिणम् । तमेव हिमवृक्षान्ते कर्तास्मीत्युक्तवान्यवी ॥२६८९॥
त्वयि दस्युर्विपर्यस्येन्मन्युं जामजभोजनम् । भोजस्त्ववेति केनापि कथितो व्यथिताननम् ॥२६९०॥ 2690
स्पृष्ट्वाथ चिरात्याममिदं विक्रीय नाविति । स्वायकशास्त्रोर्वेदमीसं तयोर्भुक्तममन्यत ॥२६९१॥
दस्युस्तु हिमवृक्षान्ते त्वां प्रदेक्ष्यामि निश्चयात् । भो बाच वेति कथयन्नाप्तो न मुमोच तम् ॥२६९२॥
मां शास्त्वेह स्थितं राज्ञः कृतारम्भोऽहिमात्यये । विक्रीणात्येव मत्वेति भोजोऽधान्मने त्वराम् ॥२६९३॥
भिन्नं थं थं निवेशाय यमनायोदपादयत् । दस्युस्तं तं समुच्छेद्य सापराधं व्यधत्त तम् ॥२६९४॥
तेजोनाम्नो बलहरास्तंजातो भ्रातमातुरः । अभ्यधाद्दाल्यमाशास्य लम्बकम्बलकावृतः ॥२६९५॥ 2695
तेजोविस्फूर्तितां तत्त्वद्रोहोत्कर्षकषोपले । द्वैराज्ये सौस्थ्यते सैन्ये पक्षपातनतो गतः ॥२६९६॥
पितुरागतया राज्ञा वर्धितस्तदनन्तरम् । एवेनकादिविषयाधीकारित्वं क्रमाद्गतम् ॥२६९७॥

२६७१. 1) Emended; A राजा गृहं स्वलंकारडामर°; cf. viii. 2925, 2618. २६७२. 1) Emonded; A °विस्तृति.—2) A स्कन्धा°. २६७५. 1) Emended; A पृष्टसेना°. २६७६. 1) Thus A; the text of this *pāda* appears to be corrupt; perhaps read संदेहे जडतो द्रोहमयमु°.—2) भजेत् corr. by $A_1$ from प्रजेत्. २६७७. 1) Emended; A व्यकल्पत. २६८३. 1) Emended with C; A संस्तम्भ. २६८७. 1) Emended; A शेर्षं मां; C स्वां सतां. २६८८. 1) Emended with C; A सखैव. २६९०. 1) Emended; A दस्युश्चिप°. २६९१. 1) Conjectural reading; A चिरकालमिति; cf. for the context viii. 2598 flg. २६९२. 1) Emended with C; A वेति. २६९३. 1) Emended; A राजा. २६९५. 1) Emended; A भौशौ; cf. viii. 2862 and the *vv. ll.* भिशो, भौशो viii. 1084.—2) Emended; A °भ्रात.—3) The text of this *pāda* is corrupt. २६९६. 1) Emended with G; A °विनाशस्य°.

विमुखे राज्ञि नागेन क्षुधाश्रमभुवा कृते । तं राजवदनो नाम विजिघृक्षु ररक्ष तम् ॥२६९८॥ चक्कलकम् ॥
आनृशंस्यं भृत्यभावावलम्बन्यस्तयास्य च । प्रत्यवस्थित्यसामर्थ्यं राज्ञि सर्वे शशङ्किरे ॥२६९९॥
2700 अनोलंकारचक्रेण कुर्वतोर्थ्यमर्थनाम्[1] । हैराज्येच्छो राजबीजी तदा न स समर्प्यत ॥२७००॥ युगलकम् ॥
नीतः प्रत्यक्षतां दूरस्थितैप्युदयने स तम् । विमृष्टवति बुभुक्षुस्त्यक्तुमेनं न चोशकत् ॥२७०१॥
राज्ञा कर्तुं विनियमं भोजस्य प्रहितो धनैः । प्राप[1] त्रङ्गामलंकारो विषयाधिकृतस्ततः ॥२७०२॥
तत्पार्श्वमुपगन्तुं मां समुत्सृज्य[1] यासि चेत् । त्यक्ष्यामि तदहं नैवमूचे भोजस्तु डामरम् ॥२७०३॥
श्वस्त्वां प्रभाते द्रक्ष्यामीत्येतावत्तत्र जल्पति । कोट्टादनुक्त्वैव निशस्तुर्ययामे विनिर्ययौ ॥२७०४॥
2705 घनवर्षेप्यमर्षेण मार्गान्वेषी गवेषणम् । यावच्चक्रे क्षपान्ते तं तावच्छुश्राव निर्गतम् ॥२७०५॥
असाध्यप्रतिषेधोथ तमह्न्यनुजगाम सः । प्रस्थितं शारदादेवीस्थानं यावन्मितानुगः ॥२७०६॥
एकसार्थगतौ ज्ञाती विना तौ ज्ञातियोचिताम् । दाक्षिण्यादक्षमः स्थातुमग्रे सागा भवन्निव ॥२७०७॥
प्रवयाः पञ्चषान्वारान्व्यधादारब्धिमेव तु । युवाप्यकल्यः कौलीनमिति स्वस्य च चिन्तयन् ॥२७०८॥
दुराण्डगमने खण्डितेच्छः संभिस्य दारदान् । संयुयुत्सुर्मधुमतीरोधसा मार्गमग्रहीत् ॥२७०९॥ तिलकम् ॥
2710 क्वापि श्यामाश्मसूच्यभिमृत्युदंष्ट्राङ्कुरोत्कटान् । क्वचिद्द्रुमप्रकाशाभ्रकालपाशान्धकारितान् ॥२७१०॥
प्रभ्रश्यद्धिमसंघातगजव्यूहोल्बणान्क्वचित् । क्वापि निर्झरफूत्कारनाराचक्षतविग्रहान् ॥२७११॥
क्वचिद्दुःस्पर्शपवनस्पष्टस्फुटदसृग्धरान् । क्वाप्यातपक्षतहिमज्योतिर्निहतदृक्पथान्[1] ॥२७१२॥
दुरावरोहं[1] प्रसृते स्फुटमप्रसृते विदन् । ऊर्ध्वावरोहमसकृन्मन्यमानोप्यधोगतैः ॥२७१३॥
तुषारकालविषमाब्दसमान्पथि वासरान् । उल्लङ्घ्य स दरद्राड्सीमान्तमासदत् ॥२७१४॥ कुलकम् ॥
2715 गृहार्पितात्मसामग्रीहृतार्किंचम्पकावकम् । तं दुग्धघाट्टकोट्टेशः[1] प्रणम्यानयदर्च्यताम् ॥२७१५॥
दूरस्थितो विड्डसीहस्तदूतोक्तनदागमः[1] । प्रक्रियां प्राहिणोच्छक्कवाहिकायां[2] नृपोचिताम् ॥२७१६॥
आदिष्टदिष्टवृद्धिश्च राष्ट्रे कोट्टाधिपेन सः । अधारयत्स्वकोशस्य स्वामित्वं राजबीजिनः ॥२७१७॥
राजायमानो भोजोथ राजवासगतोर्थितुम्[1] । आनिन्ये राजवदनापत्येनाभ्येत्य पश्यताम् ॥२७१८॥
2720 स पिङ्कान्ततो राज्ञो भिषेन प्रहितोन्तिकम् । तेनाज्ञाप्यरिनीत्युपपाशाप्रस्थापनोपमः ॥२७१९॥
कार्यगौरवविश्वासाभावव्यतिकरोचितम् । संदिदेश प्राहिणोत्स स न स्वीकुर्वन्न चोत्सृजन् ॥२७२०॥
किमाप्तोहं किमेकान्तभिन्नो राज्ञः शनैरिति । मां शास्यसीति तं दूतैः स राजवदनोब्रवत् ॥२७२१
तस्य शाठ्यं दर्शयितुं गोविन्दैरिमिषान्नृपे । ब्रुवाणेथ विदोषत्वं नागाद्यैरग्रहीद्रणम्[1] ॥२७२२॥
सामग्र्यूनः[1] शनैः स्थैर्ये ततः साम्यमथ क्रमात् । आधिक्यं चादधे तेषां विमर्दैर्धैर्यनिष्ठुरः ॥२७२३॥
तथा प्रतिष्ठां स प्राप तस्यापूर्वस्य भूमिजाः । दास्यमेत्य यथा क्रीडां नागुर्नागस्य बान्धवाः ॥२७२४॥
2725 स हि त्यागक्षमास्तम्भालोभादिगुणभूषितः । अभिगम्योभवन्नित्याभ्यस्तभूतिरिवोन्मिषन् ॥२७२५॥

---

२७००. 1) Emended; A कुर्वतारथ°. २७०२. 1) Emended; A प्राप्य. २७०३. 1) Conjectural reading; A गन्तुं मामुत्सृज्य; C मामुत्सृज्य. २७१२ 1) Emended; A °निहित°. २७१३. 1) Emended; A °रोहे. २७१५. 1) Thus A; cf. दुग्धघातम् viii 2468. २७१६. 1) Emended with C; A °गमम्.—2) Emended; A °वाहिकायाक्षपो°. २७१८. 1) Emended; A °गतोन्धितुम C °गतोर्थितं; G °गतोर्थिताम्. २७२२. 1) Emended; A °ग्रणे. २७२३. 1) Conjectural reading; A सामग्री नः.

स्थैर्यं पृथ्वीहरादीनां साभयानां न कौतुकम् । आडम्बरो निरालम्बस्यास्य स्तुत्यस्तु विस्मृतः ॥२७२६॥
अथ सन्पृथुलान्व्यूहान्धीराटविकयोधिकैः । क्रान्तधामोथ तस्थौ स भोजादीन्प्रतिपालयन् ॥२७२७॥
जहुरन्योन्यसंघर्षसेर्ष्यामात्यमतेन यां । ततो लुण्ठिप्रियत्वाद्या नीतिमन्येपि डामराः ॥२७२८॥
उद्घातश्वसितां विप्रवेश्मलोठनबन्धने । बाधास्तेषां तदानीं सा जगाम शतशाखताम् ॥२७२९॥
त्रिल्लको जयराजश्च राज्ञा संवर्धितावपि । अकाण्डे नैव तपसा विपश्री चक्रमीलनात् ॥२७३०॥ 2730
यो धूकानामिव श्वभ्रमायानामिव क्षयः । दैत्यानामिव पातालं यादसामिव सागरः ॥२७३१॥
आश्रयः सर्वदस्यूनां त्रिल्लको मायथोल्बणः । स देवसरसाधीशं संबन्धिविग्रहं व्यधात् ॥२७३२॥युग्मम्॥
काकुन्तोथ तदाशेषं क्षोणीप्राणार्थिनो द्विजाः । प्रायं नृपतिमुद्दिश्य चक्रिरे विजयेश्वरे ॥२७३३॥
अकालदस्युनिर्माथ जानतोभ्यर्थनां न ते । राज्ञोगृह्णंस्ततः सोभूद्दाक्षिण्यात्सत्समानुगः ॥२७३४॥
प्रस्थातुं पार्थिवे सज्जे ज्यायान्यो विद्रुतेप्यभूत् । स जातोत्पातपिटको जयराजो व्यपद्यत ॥२७३५॥ 2735
भाग्यश्रान्तेकतोजातदस्युवैविक्त्यमीशिता । ततो मडवराज्यं स विप्रप्रीत्यै विनिर्ययौ ॥२७३६॥
अमात्यदत्तविस्रब्धैः स्वप्नाद्यमठरैरथ । द्विजैर्निषिद्धोलंकारो मन्त्री राज्ञोञ्झितोन्तिकात् ॥२७३७॥
स व्यवस्थापने दुःस्थदस्यूनां सोद्यमः सदा । सेर्ष्याणां प्रत्यमात्येषां तद्दोषपरिपोषकः ॥२७३८॥
त्रिल्लकोन्मूलनं कुर्यां कृत्वा द्वैराज्यभञ्जनम् । प्रतिज्ञायेति नृपतिर्विप्रान्प्रायाद्व्यवीवरत् ॥२७३९॥
प्रस्तोथ त्रिल्लकस्तैस्तैरभिचैरवेशयत् । अनुद्भिन्नमुखो गूढामयो रोगान्तरैरिव ॥२७४०॥ 2740
जयराजानुजं राज्ञा यशोराजं निवेशितम् । तन्मतेनावस्कन्द भ्रातृव्यं राजकाधिपः ॥२७४१॥
यातुं तं देवसरसं रमारास्याभिमं गतः । सङ्गपालोल्पसैन्यत्वात्संदिग्धविजयोभवत् ॥२७४२॥
ज्ञातोदन्तस्ततोभ्येत्य रिल्हणो रणमुल्बणम् । जयलक्ष्मीकटाक्षाणां प्रथमातिथितामगात् ॥२७४३॥
मन्दरेणाथ तेनारिवारिराशौ विलोडिते । कल्योभूत्सङ्गपालाख्यस्तुच्छारातिजलाहतौ ॥२७४४॥
जितेपि राजके स्वोर्व्यां विनानुत्पादकं क्षमः । न बभूव यशोराजः शून्ये बाल इवासितुम् ॥२७४५॥ 2745
प्रतीक्षमाणो द्वैराज्यपर्याप्तिं क्ष्माभुजेकरोत् । त्रिल्लकः कालहरणं तैस्तैर्मायानतिक्रमैः ॥२७४६॥
यथाकालं ततो गूढोपांशून्मण्डलकण्टकान् । स्वपक्षसूचीविशिखान्दिक्षु श्वाविदिवाक्षिपत् ॥२७४७॥
अथ पार्थ्वीहरिर्योभूच्चतुष्को लोठकानुगः । राज्ञा भ्राता समं बद्धः कारागारात्पलायितः ॥२७४८॥
स तेन निजजामात्रा रक्षितः स्वोपवेशने । असंख्यडामरयुतः शमालां संप्रवेशितः ॥२७४९॥ युग्मम् ॥
आकर्ण्य कुररस्येव निनादं तस्य भेजिरे । व्यग्रतां दस्यवो गूढा ह्रदस्थाः शफरा इव ॥२७५०॥ 2750
रुन्धन्तं राजवदनं षष्ठचन्द्रोथ गर्गजः । रुरोध प्रलयोद्धूतं वेलाद्रिरिव वारिधिम् ॥२७५१॥
वर्धमानक्षीयमाणसंपदौ तौ व्यजायताम् । घर्मे सजम्बालहिमौ तुषाराद्रितटाविव ॥२७५२॥
षष्ठस्य जयचन्द्रश्च श्रीचन्द्रश्चानुजौ ततः । दूरविप्रकृतौ राजमन्दिरासमवेतनौ ॥२७५३॥
ज्ञातनिवृत्त्यपर्याप्ती धुर्यकार्यवशात्प्रियात् । प्रतीक्ष्यादप्रजाद्राज्ञः शङ्कितावशुभागमम् ॥२७५४॥

---

२७२८ ¹) Emended; A य:. २७३४. ¹) Emended; A जानते°. २७३७. ¹) Doubtful emendation; A स्वपाद्यं मठ°. २७४४. ¹) Emended: A °पालाब्धिस्तुच्छा°. २७४६. ¹) Emended; A प्रतीक्ष्यमाणो. २७४८. ¹) Emended; A °चक्र: कोष्ठका°; comp. for the name of Pṛthvīhara's elder son, viii. 2912, 2799, 2496, 3313. २७५०. ¹) A₂ gloss कुररस्येति कुररः न्ह डूर इति भाषया काश्मीरेषु प्रसिद्धः. २७५१. ¹) Thus corr. by A₂ from गर्वजः.

2755 कटकाद्विद्रुतौ राजवदनाभिक्रमायतौ । बभूवतुरपि भूभर्तुरागतौ प्रतिबोधितौ[1] ॥२७५५॥

शैलमस्यावपथिकैरसंख्यैरथ खाशकैः । स पूर्वराजकोशार्थी भूतेश्वरमलुण्ठयत् ॥२७५६॥

तस्कराक्रान्त्यशरणं बलवद्विद्रवाकुलम् । अराजकमिवाशेषं राष्ट्रं कष्टां दशामगात् ॥२७५७॥

उदयं कम्पनाधीशं[1] रिल्हणं च ततो नृपः । चतुष्कयुगमादिश्य नगरं विवशोऽविशत् ॥२७५८॥

पार्श्वीहरिस्तु दुःसाधो महाव्याधिरिवौषधैः । स्तम्भितोऽभूत्ततो सैन्यैः संहन्तुं न त्वशक्यत ॥२७५९॥

2760 कालापेक्षां स्वपक्ष्याणां दुर्बुद्धिं चानुरुन्धतः । आसीन्मन्दप्रतापत्वं रिल्हणस्यापि तत्क्षणम् ॥२७६०॥

विड्डसीहस्तु विज्ञातभोजोदन्तो व्यसर्जयत् । दूतान्सनेतुमुर्वीशान्बहूनुत्तरापथे ॥२७६१॥

अपि विसेशवनितारत्नैश्वर्यस्यवेदिभिः । अपि किंमानुषपुरीगीतोद्यानदरीगृहैः ॥२७६२॥

अन्वीष्याद्वालुकाम्भोधेः शीतार्त्तैर्विभिरेकतः । अपि भृङ्गानिलैः पीतान्कुर्वाणैर्दरदान्कुरून् ॥२७६३॥

हिमाद्रिकण्ठैर्म्लेच्छेशाः यथावन्तोधिशिशिभिः । दिशस्तुरगैर्दृप्यन्तः स्कन्धावारं दरत्पतेः ॥२७६४॥ तिलकम् ॥

2765 राज्ञां संघटनं यावद्यथावेदं दरन्नृपः । दिग्भ्यो भोजान्तिकं तावत्तस्यामन्त्राः प्रपेदिरे ॥२७६५॥

स पिप्रिये तानह्यालापान्वीक्ष्य गिरिव्रजात् । प्रीतिप्रह्वप्रणयानवक्त्रान्कपीनिव ॥२७६६॥

जयचन्द्रादयो राजवदनप्रहिता अपि । कीराः काश्मीरका[1]ः पार्श्वमभजन्भोजभीजितः ॥२७६७॥

अभ्यर्णस्थान्बलहरप्रमुखांश्च विदूरगान् । अपुष्णात्सान्ह्रणिः स्वर्णैः परां कोशेशतां भजन् ॥२७६८॥

ततः क्षुजविलोपिप्सुतया निश्चोद्यचक्रिकः । भोजेन राजवदनः समगंस्तापसाश्रयम् ॥२७६९॥

2770 तयोरकृतकर्तव्यविशेषेणेतरेतरम् । जातसौहृदयोः क्षिप्रमविश्वासो व्यशीर्यत ॥२७७०॥

अभ्यमित्रीणतां तस्यानिच्छतो दरदं विना । महात्साहसकार्येच्छन्मितामेव स तान्ययान् ॥२७७१॥

स्थुधेरसोढाभिमाटोपाः कटकस्यारव् नो हिपः । तस्साम्यमुन्मिषेयाद्य भङ्गे भूयोऽपि योगभित् ॥२७७२॥

तस्मात्सर्वाभिसारेण रणमेक प्रमेच्छतः । विजयावजयावाभिरेकाह्नान्तरिता मता ॥२७७३॥

व्याजहारेति यद्भोजस्तथैवोथ हसन्स्मयात् । निन्ये तद्दारदं सैन्यमुपेक्ष्यागामिनीं[1] चमूः ॥२७७४॥ तिलकम् ॥

2775 संकटान्ते वितीर्णानुयावत्स्तेषां प्रसर्पताम् । स राजवीजी शुश्राव दरद्राजमथागतम् ॥२७७५॥

तत्संगमाय व्यावृत्ते तस्मिन्कोट्टान्तिकं पुनः । प्रावेशयद्रल्हरो मातृग्रामं च तद्बलम् ॥२७७६॥

दिशस्ततो वीक्ष्य वहिर्भ्रान्तवातमृगा इव । निसर्गधीरधीर्गार्गिर्न पैर्यात्पर्यहीयत ॥२७७७॥

तस्य सर्वेऽपि नीलाश्वडामराः स्वे च सैनिकाः । विपक्षैः सह वर्द्धकयाः सैन्यान्दुधुक्षवो ययुः ॥२७७८॥

स तथा विषमस्थोऽपि प्रस्थित्यै प्रार्थितो निजैः । म्लानाननः प्रभुं द्रष्टुं न क्षमोऽस्मीत्यभाषत ॥२७७९॥

2780 स सूर्यवर्मचन्द्रस्य न जातः कश्चिदन्वये । उपयोगाय यो नागान्मल्लाभिजनजन्मनाम्[1] ॥२७८०॥

भोजं सभाजयित्वाथ विड्डसीहः सपार्थिवः । शारैः समं स्वसामन्तैर्विजयाय व्यसर्जयत् ॥२७८१॥

ततो म्लेच्छगणाकीर्णा प्रजन्संबाहयंश्चमूः । प्रयाणमात्रान्तरितः पृष्ठे तस्य बभूव च ॥२७८२॥

प्रादुष्कृतजयक्षोभे बले तत्रानुयायिनि । उत्साहात्सान्ह्रणिर्मेने कृत्स्नां हस्तगतां महीम् ॥२७८३॥

---

२७५५. [1]) Emended; A प्रातबोध्यतान्. २७५८. [1]) Emended; A कम्पनाधीशारि°. २७६४. [1]) A स्कन्धा°. २७६७. [1]) Emended; A काश्मीरिका॰. २७७४. [1]) Emended; A° वामिनी°. २७८०. [1]) Emended; A कैर्चि°.

वाजिभिस्तार्जितैर्म्लेच्छराजैश्च बलमूर्जितम् । स्थाने समुद्रधाराख्ये निबबन्धाथ तत्पदम् ॥२७८४॥

स राजवदनस्थानदुर्जयाम्यबलोज्ज्वलः । मृत्युदन्तान्तरे स्थितं षट्टचन्द्रममन्यत ॥२७८५॥ 2785

ततः प्रावृट्पयोवाहकृतोदीपपरिप्लुता । संजायते स्म वसुधा समीभूतजलस्थला ॥२७८६॥

धरित्रीपानपात्रेभ्यः सीधुपूर्णे दधुर्द्रुमाः । मघा लब्धशिखामाला बलक्षीलोत्पलोपमाम् ॥२७८७॥

षट्टस्य संकटं जानन्भूभृच्छेदैर्बलैः समम् । अथोदयद्वारपतिं तं च धन्यं व्यसर्जयत् ॥२७८८॥

वाहिनीरुद्धमार्गौ तौ पदवीमनुजग्मतुः । मार्गे धनंजयस्येव शैनेयपवनात्मजौ ॥२७८९॥

लम्बाम्बुदेऽम्बरे दूरं वारिपूर्णे च भूतले । स्थूलेव विद्युद्दृद्धो भिन्नद्योतनमिःस्वना ॥२७९०॥ 2790

शोभामार्गोदितागर्हपरिबर्हबहिष्कृतः । सक्ताविभक्तकटकः पार्थिवः समजायत ॥२७९१॥

अवास्थो राजवदने सत्त्वावष्टम्भयोः पुरा । अत्रापरो न विक्षेप्यो राजबीजीति दारदान् ॥२७९२॥

त्रिल्लकः संदिशन्दूतैर्वृद्धिं पार्श्वीहरिं नयन् । तयोरेकस्य सामर्थ्यादैक्षत हस्तपातिनम् ॥२७९३॥ युग्मम् ॥

अभित्तिलिखितालेख्यकल्पं बलहरस्य तत् । तादृग्विलोक्य सामर्थ्यमथ राज्ञश्च सर्वतः ॥२७९४॥

विभक्ताशेषसैन्यस्य तत्र तथारिसंकटे । ज्ञात्वाप्रतिसमाधेयविक्रमुन्मुद्रदुर्नयः ॥२७९५॥ 2795

अकृशाधाविदाधारचिरं स्वाङ्गैः स गोपितम् । बहिर्दुर्धर्षमत्याक्षीद्द्वितीयमपि कण्टकम् ॥२७९६॥ तिलकम् ॥

ध्वान्तैर्म्बुधरजालान्धमहावाते रजोभरः । स्वपक्षभेदयोर्जातकर्णेजपमहोद्यमः ॥२७९७॥

कुलच्छेदकृतो राज्ञस्तत्र तथातिसंकटे । अशान्तजागरोऽस्थर्थमनर्थपरिपोषकः ॥२७९८॥

सोऽथ शूरपुरेकस्माद्बहुभिः सह डामरैः । तेन संपूरितः पृथ्वीहरणो लोठकोऽपतत् ॥२७९९॥ तिलकम् ॥

तस्य संघटतः कन्थां प्रयातं वैकृतं चिरात् । पालीभङ्गे तटस्येव प्रावृट्पूर्णस्य लक्ष्यताम् ॥२८००॥ 2800

निद्राणोपेन्द्रजठरप्रसादनिसृतं जगत् । समेतमिव तत्सैन्यं प्रत्यभाज्जलदागमे ॥२८०१॥

यावद्भिः पार्यते नेदृक्संख्यातुमपि तद्बलम् । भर्तव्यकल्पैः सुस्वल्पयोधमध्यगतैरपि ॥२८०२॥

तावद्भिरनुगैः पिञ्छदेवत्रक्काधिपो युधि । तथोधान्याम्यहरितः सरितधातिथीन्व्यभात् ॥२८०३॥ युग्मम् ॥

तटोज्ज्वलैश्चितावह्निर्बिम्बितैस्तटिनीजले । मृतानामपि संस्कारः क्रियमाण इवाभवत् ॥२८०४॥

इति विस्मृतमृत्युः स कुर्वन्नेकाहमाहवम् । कथंचिद्वीरैरन्यैर्धुर्भमसारोपसारितः ॥२८०५॥ 2805

पुरे स शून्ये सैन्यानि संगृह्णंस्तत्र सर्वतः । द्वित्रैरहोभिर्नगरं सुलभाग्रममन्यत ॥२८०६॥

इच्छां पद्मपुरस्कन्दे मन्दत्वं त्रिल्लकोऽनयत् । पृष्ठस्थयोर्यशोराजकम्पनाधीशयोर्भयात् ॥२८०७॥

न भृत्यैस्तादृशैः सिद्धश्चास्यैकस्मिन्नसंमते । विधेयान्यलवन्यस्य डामरे होलडोकसि ॥२८०८॥

द्वैराज्ये सुस्सलस्यापि नैवारुधत तादृशः । अनर्थौ यादृगुत्तस्थौ तत्सुतस्य समन्ततः ॥२८०९॥

चतुष्कमवधीर्याथ राज्ञा पादपदोपमम् । रिल्हणः प्रैषि तं पीथागण्डतुल्यं व्यपोहितुम् ॥२८१०॥ 2810

प्रस्थितस्तत्क्षमाथाय ग्रामालैः सोऽन्वबध्यत । भगन्भाग्ज्योतिषं हन्तुं पार्थः संशप्तकैरिव ॥२८११॥

अधावताभ्यमित्रीणस्तान्व्यावृत्य निपातयन् । पद्माकरोन्मुखः पृष्ठलग्नान्भृङ्गानिव द्विपः ॥२८१२॥

---

२७८४. ¹) Doubtful emendation; A °स्तर्जितो. २७८६. ¹) Emended with C; A प्रावृट्पयो°. २७८७. ¹) A °सीधु°. २७९९. ¹) Thus A; comp. for this name viii. 2496. 2748. 2912. 3313. २८०३. ¹) Emended with C; A °हरित. २८०८. ¹) A होलडौकसि. २८१०. ¹) Emended with G; A रिल्हणश्चेपितं.

रणभ्रान्तेन गमिता त्रियामा तेन रामशे[1] । गर्जत्कुल्यार्पितारातिपूतमांसावसेकिये ॥२८१३॥
तं[1] कल्याणपुरं प्राह्ले विश्रान्तं सोथमागतः । करोधाभ्येत्य भूयोपि बलैर्भरितदिङ्मुखः ॥२८१४॥
2815 आपतन्नेव चारासिपदातीन्संमुखागतान् । दृष्टनष्टान्व्यधाच्छागानिवामेजगलो गिलन् ॥२८१५॥
उग्रमारुतस्येव तस्यापाते पदातिभिः । तत्यजे रिल्हणः पर्णैर्हेमन्त इव पादपः ॥२८१६॥
पश्यतस्तस्य ते विद्रवन्तो जिह्मा न जिह्रियुः । देहस्पृहापारमित्यै कस्यैचित्स्यमनस्ययम् ॥२८१७॥
अभिरथापसृत्य स्वैरर्थितो रिल्हणोब्रवीत् । नयन्प्रजासजा साम्यं[1] स्वामिभक्तिस्मृतेः स्मितम् ॥२८१८॥
ह्री[1]---चाविशेषेपि जन्तोर्जन्तोर्यदीशिता । भृत्यभावेपि यो लुमकृत्यो धिक्तस्य जीवितम् ॥२८१९॥
2820 जातं वक्त्रसरः श्मश्रुराजिनीलाब्जभांजनम्[1] । जराकैरवगौरं च राज्ञः पादान्प्रपद्य यान् ॥२८२०॥
म्लायत्सु तेषु भ्रूभङ्गभृङ्गभ्राजिष्णुभिर्भवेत् । कथं लक्ष्मीविलासैस्तदखण्डैरविडम्बितम् ॥२८२१॥युग्मम्॥
एषा कापुरुषासेव्या धीराणां नैव पद्धतिः । यदायासलवत्रासात्सौख्यवैमुख्यभागिता ॥२८२२॥
यस्त्रापासन एव प्रीतजनितस्त्रासोथ तीर्थाम्बुभिः स्नाने ह्लादसुखोपलब्धिरसमब्रह्मानुभावोपमा ।
वैह्लव्यं[1] समरे वपुर्विजहतामेवं किलोपक्रमे कैवल्याख्यसुखोपलम्भपरमा[2] पश्चात्पुनर्निर्वृतिः ॥२८२३॥
एवमुक्त्वा परानीकमेकाकी स व्यगाहत । गृहकच्छारान्हरिभीमश्वाससंदिग्धभूकृतान् ॥२८२४॥
2825 स्वर्णस्तबकमर्माजाल[1]हरितालोज्ज्वलोभजत् । खड्गपट्टनटस्तस्य रणरङ्गोत्तरङ्गताम् ॥२८२५॥
तत्खड्गस्य घनः खड्गाङ्घ्रीवैर्जालकच्छलाङ्कुवम् । उत्थाय लमं शत्रूणां तृणैस्तृणमणेरिव ॥२८२६॥
आजौ तमनुजग्मुस्ते यैरगण्यन्त वैरिणः । तिर्यग्लोलक्ष्यतां यातास्तेषां प्राणास्तृणान्यपि ॥२८२७॥
संप्रविष्टो मुखान्मृत्योः कैश्चिन्मार्गैः स निर्गतः । तिमेः संमीलितास्यस्य भोगरन्ध्रैरिवोदकम् ॥२८२८॥
शश्वत्कुर्वन्परावृत्तीः श्रमशान्त्यै विनिर्गतः । प्रक्षीणभूयिष्ठबलो लब्धोत्सेको रिपावभूत् ॥२८२९॥
2830 पृष्ठतोथ पपाताथ चतुष्कः पुष्कलैर्बलैः । साहायकागतं प्राक्स यं स्वं कंचिदमन्यत ॥२८३०॥
तस्योभयमुखस्यारिसैन्यस्याहेरिवेक्षणात् । न संरम्भः[1] शिखण्डीव परं ताण्डवितोभवत् ॥२८३१॥
तौ व्यूहावथ पर्यायैर्मुखपृष्ठं प्रदर्शयन् । सोक्षिणोद्युधि मन्थाद्रिर्मथनेब्धितटाविव ॥२८३२॥
कीलनिश्चलयोर्भ्राम्यन्नसकृद्दान्तरे द्वयोः । कुविन्द इव[1] ---- तुरंगमत्वरान्वितः[2] ॥२८३३॥
भासः प्रत्यग्रहीत्तस्य तमेकपूतनारथम्[1] । एकतोम्भोभरं द्वीपस्येव कूलविलोद्गमः ॥२८३४॥
2835 तेन वैरिचमूचक्रे लुलितायुधकुण्डला । क्रीडता चण्डवेगेन पुरुषायितुमक्षमा ॥२८३५॥
त्रासपाण्डुन्द्विषां वक्त्रकुम्भान्स्वेदाम्भसाचितान् । स कुर्वन्भूभुजं[1] जाने भूयो राज्येभ्यषेचयत् ॥२८३६॥
स च पार्थ्वीहरिश्चास्तामन्योन्यस्य क्षपाक्षणे । सज्जौ मान्त्रिकवेतालाविव रन्ध्रगवेषिणौ ॥२८३७॥
साहायकागतान्साक्षीकृत्य[1] क्ष्मापतिसैनिकान् । अन्येद्युः सोकरोच्छत्रु वनमार्गावगाहिनम् ॥२८३८॥
पर्यस्तशौचान्संचिन्त्य त्रिल्लकादीनथाययौ । सज्जपालस्तृतीयस्मिन्दिवसे रिल्हणान्तिकम् ॥२८३९॥

---

२८१३. [1]) Should probably be रामुषे, cf. ii. 55.—[2]) Emended; A गर्जन्कुल्या°. २८१४. [1]) Emended; A तत्कल्या°. २८१८. [1]) Thus A; perhaps read with G (*sec. manu*) प्रजासजश्वास्यं. २८१९. [1]) Thus A; C ह्रीयभावाविशेषे. २८२०. [1]) Emended; A °भौजनम्. २८२३. [1]) Thus corr. by a later hand from A, वैह्वल्यं.—[2]) Conjectural reading; A वेकल्या°. २८२५. [1]) Emended with C; A °मत्राजाल°. २८३१. [1]) Emended; A संरम्भे. २८३३. [1]) Thus A; C supplements पूर्णोत्सुरंग°.—[2]) Emended; A °गमतुरान्वितः. २८३४. [1]) Emended with C; A पृतनाचयम्. २८३६. [1]) Emended with C; A °भुजाय. २८३८. [1]) Emended; A साक्षीकृतक्ष्मा°.

नृपप्रतापग्लपितः स ताभ्यां पर्यशोष्यत । घनान्तः शुचिशुक्राभ्यां घुणक्षीण इव द्रुमः ॥२८४०॥ 2840

चितानल इवासारैर्युद्धैः शममनाश्रितः । उदयेन शनैर्निन्ये चलुङ्कोपि मितोष्मताम् ॥२८४१॥

दारदं[1] बलं[2] दृप्यत्क्षेमसंबाहवाहिभिः । हयैरवरुरोहाद्रिकुहरादाहवोन्मुखम् ॥२८४२॥

तुरुष्कलोकेनाक्रान्तान्देशांस्तद्ग्रामीयुषः । शङ्कमानैर्जनैर्ज्ञाता कृत्स्ना म्लेच्छावृतेव भूः ॥२८४३॥

प्रयाणमात्रान्तरिते धन्ये द्वारपतावपि । साहसं निःसहायस्य तस्याश्चर्यमतोऽभवत् ॥२८४४॥

ज्वलत्कनककंनाहं तत्सैन्यं स द्विषोरुधत् । कणज्ज्वालावलिं दावं सनिर्झर इवाचलः ॥२८४५॥ 2845

विधूय जयचन्द्रादीनग्रस्थानरोधिनः । बलबाहुल्यदृप्तास्ते व्यगाहन्ताहवावनिम् ॥२८४६॥

तेषां हयसहस्राणि त्रिंशद्विंशत्तुरंगमैः । रंहसा प्रतिजग्राह निजघान च गर्गजः ॥२८४७॥

तस्याशुहस्तैर्ददृशे पौरुषं तदमानुषम् । एकैकस्याग्रतो यस्य वैश्वरूप्यमिवादधे ॥२८४८॥

अश्वङ्क्रामविन्यस्तपक्षास्ते विद्रुताः क्षणात् । जगाहिरे कापुरुषा गिरीन्किंपुरुषा इव ॥२८४९॥

अभूमिज्ञतया शाद्येव जातः पराभवः । श्वस्तदस्मान्पुरस्कृत्य जयं प्रत्याहरिष्यथ ॥२८५०॥ 2850

इत्युक्त्वा राजवदनजयचन्द्रादिभिर्निशि । तथेति मिथ्याकथयन्दारदा विग्रहोन्मुखाः ॥२८५१॥ युग्मम् ॥

प्रवेश्य धन्यद्वारेशौ दूरं बल्हरो बली । ऐच्छत्सत्त्वमभिसंधातुं रुद्ध्वा पाश्चात्यपद्धतीः ॥२८५२॥

स्कन्धावारेण[1] सार्धं च दरदां राजबीजिनम्[2] । विधातुं विदधे बुद्धिं तं तत्स्तारमूलके ॥२८५३॥

चिकीर्षति तत्तस्मिन्नमत्येष्वन्येषु दस्युषु । उत्सेहे साल्हणिः कृत्स्नं राज्यं निश्चित्य[1] निर्जितम् ॥२८५४॥

जयाभावेप्यनन्तेवृकसामन्तसहितस्ततः[1] । भव्योस्मि भवितेत्येवं विचिन्त्येश्चिपिवे च सः ॥२८५५॥ 2855

पयोन्माथाद्विरदरदनैरश्मिथैः पद्मबन्धोरिन्दौ स्पर्धिन्युदयति वपुः खण्डशः स्वं भिदेत ।
तापस्त्यज्येत च रुचिरतां[1] भागिभिः सूर्यकान्तैर्भद्राभद्रं व्यसनसमये संभवेदप्रतर्क्यम् ॥२८५६॥

यो डामरतया भिक्षोः शश्वत्कुक्षेप्युपेक्षणम् । टिक्कादीनां च कौटुम्ब्याद्भर्तुर्द्रोग्धृमूर्धनि ॥२८५७॥

अलब्धन्यतयानन्यसामान्याश्चर्यवर्धनात् । ततः कृच्छ्रोपयोगाय विश्वासस्येव मूर्धनि ॥२८५८॥

तौ नागराजवदनौ व्यसनावसरे तदा । चित्रं स्वकार्यतात्पर्याद्[1]भुतावरतां गतौ ॥२८५९॥ तिलकम् ॥

स्वयं विधेयं नागोन्यकृतं तं वीक्ष्य विभ्रमम् । अदूरमर्थमन्येन कृतं कचिदिवाशुचत् ॥२८६०॥ 2860

क्ष्माभृद्विपक्षं स्वं पक्षीकर्तुं कृपाननं ततः । संत्यज्य राजवदनं मां भजस्वेत्यभाषत ॥२८६१॥

संप्राप्तं वः प्रतीक्षध्वं[1] तेजोबल्हरात्मजम्[2] । युध्याधिरूढं किं नार्तिसेवलं[3] यामिको यथा ॥२८६२॥

इति ते संदिशन्ते च व्यसहन्स विहाय तम् । कामधेनुसमं नागं छागाश्वेषाद्विधि यत्[1] ॥२८६३॥

सर्वः स्वकार्यतात्पर्यात्प्रवर्तेत प्रियाप्रिये । लोहवैरेन्यदीये तु न किंचिदधिगच्छति ॥२८६४॥

ज्योतिस्तर्जितकान्ति दन्तयुगलं वाञ्छं सुधादीधितेर्दौनास्वादधिया प्रिया मधुलिहां कुम्भस्थली कुम्भिनः ।
वासस्यैवं[1] विरोधभाक्सरसिजस्येत्यत्र नेन्दो रतिस्तस्याप्यायकृतौ द्वितीयमिति नाप्यस्य द्विरेफा द्विषः ॥२८६५॥ 2865

२८४२. [1]) Thus A; C तद्बलं.—[2]) Emended with C; A दृप्यत्क्षेम°. २८४४. [1]) Doubtful emendation of C; A तस्याश्च-र्यम°. २८५३. [1]) A स्कन्धा°.—[2]) Emended: A राजबीजिनाम्. २८५४. [1]) Emended with G (sec. manu); A निश्चित्य°. २८५५. [1]) Emended; A °सहितास्तत:. २८५६. [1]) Emended; A रुचिरभामा°. २८५९. [1]) Emended with C; A तात्पर्य. २८६२. [1]) Emended with C; A प्रतीक्ष्यध्वं.—[2]) Cf. भोजोनाम्नो बल्हरात्मजातो viii. 2695 and note.—[3]) Thus A; perhaps read नार्तिसि°. २८६३. [1]) The text of this verse is evidently corrupt; A as above. C reads व्यहसन् संविहाय तं । कामधेनुसमं नागं छागाश्वेषो विधिर्न यत्. २८६५. [1]) Doubtful; A वा स्यैव; C सुरस्यैव.

प्रतिष्ठालोठनं कर्तुं ततो बल्हरस्य सः । आजन्म वैरं संरेभे तेन भूभृद्विलेच्छया ॥२८६६॥
सं तथा दारदान्भ्रमानभिज्ञो मुमुचेव कः । सभोजाञ्जाजवदनो हन्यादित्यभ्यधाज्जिषैः ॥२८६७॥
दरद्राजानकानीतनेतारौ कम्पनापती । मल्लाल्लक्ष्मवदनमणा– –ऽभिधावुभौ ॥२८६८॥
बस्वसोजसनामा च कोट्टेशो मन्त्रिणं रदः । ब्रुवाणास्तव्यहस्यन्त भोजेनान्तरवेदिना ॥२८६९॥
2870 स्फाटिकेनेव सैन्येन तेनान्ये हृदमप्यथ । दिधक्षुं राजार्कमहो विद्रुसीहेन्धनेपतत् ॥२८७०॥
पार्थिवानर्थदुश्चिन्तामययक्ष्मपरिक्षतः । स यक्ष्मणक्षपाक्षीणसोमसाम्ये समाययौ ॥२८७१॥
रोगग्रस्ते रणग्रस्ते पृष्ठगोऽपरि भर्तरि । तथाभियोज्ये स्थाने च भयजर्जरतां गते ॥२८७२॥
आहारस्थं बल्हरं विहाय निखिलास्ततः । पलायितं तेऽन्येद्युर्विगाह्य हरिभिर्गिरीन् ॥२८७३॥ युग्मम् ॥
दृष्ट्वा बहुमतं प्रातरागन्तारः पुनर्भयम् । कथयित्वेति संप्रार्थ्य शाल्हर्णि सह तेनयन् ॥२८७४॥
2875 प्राक्पीनकोशो वैवश्यात्स तेषामनुगोऽभवत् । भ्रष्टकार्यस्तु वैक्लव्यं भ्रभे मज्जन्निवार्णवे ॥२८७५॥
मुहुः सर्वशिरोऽग्रिस्फारस्कपूर्णमिव ज्वलत् । अवरोहदनच्छाम्बुसोपानाश्मनिभं मुहुः ॥२८७६॥
ज्ञातेन पतितेनेव मुहुर्व्योम्ना महीसमम् । व्रजतस्तस्य वैलक्ष्यादलक्ष्याक्षमभून्मुखम् ॥२८७७॥
दध्यौ च धिङ्गो ये शाश्वतभावं वयमीदृशाम् । राज्ञो दृष्ट्वाप्यनात्मज्ञा जानीमो मर्त्यधर्मताम् ॥२८७८॥
प्रतिभाप्रौढनिर्भीततत्त्वानां नान्यथा शिरः । महाकवीनामेतादृक्प्रतापानलवर्णने ॥२८७९॥
2880 राज्ञः प्रतापशिखिनः कणाः क्षोणी न सन्ति चेत् । तत्कस्माद्वयमायाताः पदन्यासेष्वधीरताम् ॥२८८०॥
अनेकशोऽङ्कैर्वीराणां पीतधाराम्बुडम्बरे । शोषः प्रादुष्कृतो न स्यात्तज्ज्वालासंज्वरं विना ॥२८८१॥
किमन्तरेण तद्धूममालान्ध्यं प्रोन्मिषदृशः । मार्गामार्गविभागस्य परिज्ञाने विमूढता ॥२८८२॥
मधुमत्यास्तटेऽन्यस्मिन्विवर्ज्य दरदः स्थितान् । वीचीजवनिकाच्छन्नः सोवाप्याथ तटेवसत् ॥२८८३॥
क्रमादुत्खातखेदस्तैर्नीत्वा स्वशिबिरान्तरम् । तत्रैष्यतेति संधातुं रोहड्रोहस्पृहातुरैः ॥२८८४॥
2885 नृपं तेषां ह्यगण्यार्थवर्षिणं नयनैपुणात् । उपजीवितुमिच्छाभूत्तत्क्षणप्रणिज्यया ॥२८८५॥
मानेहा विग्रहस्यायं प्रत्यासन्नो हिमागमः । मधुमासि विधास्यामः पुनरारब्धिमुत्तमाम् ॥२८८६॥
कालक्षेपेऽक्षमस्त्वं चेद्धुहराष्ट्राध्वनाधुना । स्वान्तर्निबध्नो बलिनस्त्रिल्लकस्योपवेशने ॥२८८७॥
राजानं राजवदनः प्रितसैरित्यसावतः । उत्कण्ठ्यत स्वराष्ट्रान्तर्युक्त्या बन्धुं नराधमैः ॥२८८८॥ तिलकम् ॥
अपि राजपुरीयाणां कौटिल्यं तैर्हि जीयते । दैर्घ्यं निदाघघस्राणां वियोगदिवसैरिव ॥२८८९॥
2890 तथा यातमुपालेभे दूतैर्बल्हरोऽथ तम् । प्रह्वो निहितव्रास्त्वस्मीति प्रोटितव्रटाकरः ॥२८९०॥
उत्साहादाहवस्थोऽपि स तथा गार्गिमभ्यमम् । आयान्तं च नृपानीकमुत्साहार्ध्रं व्यचिन्तयत् ॥२८९१॥
अकस्माद्विपुलदरद्राजभोजादिवार्तया । न व्यवीर्यत यद्वैर्यपर्यासिस्तत्किलाद्भुतम् ॥२८९२॥
आडम्बरालम्बनस्य भेदेऽप्यविकृतविग्रहः । यद्युद्धोद्धतं सिध्येत्तत्कस्यामानुषं विना ॥२८९३॥

२८६८. [1]) Thus A; the *akshara* before the *lacuna* could be read also शु; C °वदनमधुमथाभिधा°. २८७०. [1]) Emended with C; A विवसु.—[2]) Emended; A विद्रुसुहेन्धमे°. २८७३. [1]) Emended; A पलायितसंन्ये°. २८७५. [1]) A °कोशो. २८७६. [1]) Doubtful emendation; A सर्वशिरोवृक्त°.—[2]) Emended; A °ज्वलन्. २८८४. [1]) A स्वशिबिरा°.—[2]) Emended; A रोहड्रोह: स्पृहा°. २८८९. [1]) Emended; A °घस्राणां. २८९१. [1]) Emended with C; A गर्गिम°.—[2]) Doubtful emendation, A °कमु – हाज; C °नीकं दृष्ट्वापि नम्र°.

कालानुरोधात्संधिस्तु धन्यहाराधिपावथ । सोयोजयद्विलम्बेन भोजस्यागमनाशया ॥२८९४॥
ततोलंकारचक्रः स नेतुं साल्हणिमाययौ । शालेयाहारदानेन प्रार्थिता परिपन्थिनीः ॥२८९५॥ 2895
बुद्ध्वा तदनुबन्धेपि द्रोहनिर्बन्धिनीः सभाः । अपहीन्मार्गेसत्वये निधनाध्यवसायिताम् ॥२८९६॥
भृत्यैः सह युक्तपायैर्वीक्ष्य तं मर्तुमुद्यतम् । दरत्पुरं दरद्राजसैन्यं तद्धन्यमाययौ ॥२८९७॥
व्यपोहन्ती मल्लहरी बाहुभिः कलहं सरित् । कल्लोलास्फालनोल्लापैर्निनिन्देव दरद्बलम् ॥२८९८॥
द्वेपितः स्वापरोधेथ सेर्ष्यैश्च म्लेच्छपार्थिवैः । सैन्यैः कदनभीतैश्च विड्डुसीहोथ तं जहौ ॥२८९९॥
पुरःसरैर्भ्रमसेतुपालैः पारं परं ततः । विप्राव्य तानि स प्राप भिन्दंस्तूर्यरवैर्दिशः ॥२९००॥ 2900
असामर्थ्ये वरूथिन्याः स्वस्य न्यायितसंधिना । आनीतो विड्डुसीहेन दूतः प्रोक्तोथ भूपतेः ॥२९०१॥
अमानुषानुभावेन तावत्त्वत्स्वामिना भवेत् । प्रातिसीमिकसामन्तबुद्ध्या स्पर्धोद्य धीवरः ॥२९०२॥
अभद्रेयानुसंधान एव यान्ती यमान्तिकम् । जयराजोस्मि चामुष्य प्रभावावेदकौ दिवि ॥२९०३॥
तेन दिव्यानुभावेन निर्जयोपि जयो मम । पान्यस्य कुलविभ्रंशाशीर्षे पतनमुन्नतिः ॥२९०४॥
अथायातः पुरे स्थित्वा कंचित्कालं निजेविशत् । यमराष्ट्रमसत्कीर्तिलसद्वन्दनमालिकम् ॥२९०५॥ 2905
अबुद्ध्वा भोजमायान्तं संधिं तत्रैव वासरे । सार्धं द्वारेशधन्याभ्यां स राजवदनोभ्यगात् ॥२९०६॥
अथागतं तं व्यावृत्य षष्ठं षष्ठं मनस्विनाम् । आदाय तावधांभ्यर्णं प्राविक्षातां क्षमापतेः ॥२९०७॥
अहंकाराद्विमोहाद्वाविमर्शेन बहिष्कृतौ । उपेक्षामक्षते भोजेभजतां राजबीजिनि ॥२९०८॥
आहूतस्तु हठोत्कण्ठाभाजापि प्रभुणासकृत् । अनिःशेषीकृतारातिर्न व्यावर्तत रिल्हणः ॥२९०९॥
प्रभोः पुरस्तात्कार्यान्ते तेन स्थातुमशक्यत । प्रसादाकाङ्क्षिणा सूदेनेव भोक्तुं न हि क्वचित् ॥२९१०॥ 2910
द्विधा कृता येन युद्धे पृथ्वीहरसुतद्वयी । मगधेन्द्राकृतिर्भीमेनेव कार्याक्षमाभवत् ॥२९११॥
मातृकुक्षिमिव स्त्रोर्वी तेनाजौ लोष्टकः कृतः । खाण्डवे खण्डितः सर्प इव गाण्डीविनाविशत् ॥२९१२॥
भजंश्चतुष्कः संकोचं दुर्भेदं विल्लकालयम् । स्वकायकर्परं दर्पोज्झितः कूर्म इवाविशत् ॥२९१३॥
निःशेषीकृतकार्यः स शौर्येणैव महीपतेः । पार्श्वं पादनखज्योतिःपद्मबन्धाप्तये ययौ ॥२९१४॥
प्रतापैर्नृपतेरित्थं विप्लवः शोषितोप्यभूत् । अमात्यमतिदोषेण भूयः प्रादुष्कृताङ्कुरः ॥२९१५॥ 2915
दण्डार्हो राजवदनो दानेनाप्यायितो यतः । निर्भयं भोजमायान्तं प्रतिजग्राह तं पुनः ॥२९१६॥
उत्कोचपरिणामार्तं सोथ स्थापयति स्म तम् । दिन्नाग्रामाभिधे स्थाने खाशकानां निवेशने ॥२९१७॥
इत्येनमब्रवीच्छ्वेदायास्यो नानुगामिनः । मितानुयायी द्वारेशः प्रायात्यद्योचरान्मम ॥२९१८॥
सोत्कम्पः साहसस्रोतःपातेनीयत नौरिव । विल्लकेनापि स स्थैर्यं नीतिरज्जुप्रसारणात् ॥२९१९॥
व्यसनोल्लासवैचर्यं दिशां पत्युर्व्यचिन्तयत् । येनाध्यवस्याप्रायर्थं स जाल्मः पुनरग्रहीत् ॥२९२०॥ 2920
अलंकारादिभिः स्वास्थ्ये स्थाप्यमानोपि मन्त्रिभिः । अत्यजन्नैव कौटिल्यमजितात्मैव दुर्ग्रहम् ॥२९२१॥

२८९९. [1]) Emended; A °हारसेल्प; the text is corrupt. २९००. [1]) Emended; A विप्राविमानि. २९०१. [1]) Emended; A वरूथिन्या. २९०२. [1]) Emended; A ताव स्वामिना. २९०३. [1]) Emended with C; A यान्तो. २९०५. [1]) Emended; A °मालिकाम्. २९०७. [1]) The letter corresponding to ध cannot be read with certainty in A; C तावसाभ्यर्णे. २९०८. [1]) A °विमर्शेन.—[2]) Emended; A भजते. २९१२. [1]) Comp. note to लोष्टकः viii. 2496. २९१३. [1]) Emended with C; A भजंश्च°. २९१९. [1]) Emended with C; A °स्रोतपाते°. २९२१. [1]) Emended; A अत्यजन्नेव and °जितात्मैव.

गदं वैद्य इवापाकं तमवज्ञाय पार्थिवः । पक्वगण्डानिवारेभे रिपून्पाटयितुं परान् ॥२९२२॥
आगन्तव्यं त्वया पश्चादास्वस्मात्तु प्रकम्पताम् । भोजमुक्त्वेत्यलंकारचक्रोगाद्रिविबोधतः ॥२९२३॥
तं जयानन्दवाडाख्यो दस्युरानन्दवाडजः । अन्वयुर्विक्रमोदग्राः परेपि क्रमराज्यगाः ॥२९२४॥
2925 अप्रस्थितो राजगृह्योलंकारः स्वल्पसैनिकः । वालुकासेतुकल्पस्तैर्जघ्ने सिन्धुरयैरिव ॥२९२५॥
स तु रामचराधाजिस्त्रोभसंभावनां विशाम् । उदपादयदेकाकी कुर्वन्बहुभिराहवम् ॥२९२६॥
आपातरभसक्षुभ्यद्वक्षःसंभ्रमदक्षिणम् । रणं जगाम गञ्जाल्यमञ्जसाजपरिप्लुतः ॥२९२७॥
स तूलकूटमिव तत्कटकं विकटं द्विषाम् । किमन्यदयैरयत्क्वापि प्रभञ्जन इवाञ्जसा ॥२९२८॥
पासाय गृध्रकङ्कादिपक्षिव्रातस्य तत्यजे । आनन्दवाडसूनुः स हत्वा तेनेषुणा रणे ॥२९२९॥
2930 भोजस्योत्थातुकामस्य जिघृक्षोः क्ष्माभुजश्च तत् । पङ्कप्रधावत्क्रकरव्याधन्यायो व्यवर्धत ॥२९३०॥
अनुड्डयनसामर्थ्यः भ्राम्यति क्रकरो यथा । धावन्पङ्के पतन्व्याधोप्यनुधावत्ययान्वहम् ॥२९३१॥
प्रसङ्गे साहसस्यैवं भोजः क्लैब्यमगात्सदा । तं प्राप्तुमिच्छुर्भूपोपि मतिमोहं मुहुर्मुहुः ॥२९३२॥ युग्मम् ॥
दिन्नाग्रामस्थिते भोजे स राजवदनोप्यगात् । पुनः किं चौरचण्डालाः श्वपचीत्युक्तिमीशितुः ॥२९३३॥
डामरा भद्रसंघाता भूयः पूर्वाधिकास्ततः । कन्थां ते मन्थयामासुर्मुहुर्यी शौर्यशालिनः ॥२९३४॥
2935 ते द्वारपतिमायातं सोढुं शेकुर्न केवलम् । अशक्यैरादवैर्यावत्पर्यायादुदवेजयन् ॥२९३५॥
तेषां त्राणार्थमन्येषामुत्थानार्थमथाययौ । कृष्टोलंकारचक्रेण नीविं दत्त्वा स साल्हणिः ॥२९३६॥
तेषां परेद्युः पार्श्वं स यियासुरसकृत्त्वरा । छायाश्रमं भ्रान्तसैन्यो द्वारेशोबुद्ध तं तदा ॥२९३७॥
अजानन्निव तेषां स व्याजसंधिं निबद्धवान् । मिषात्कुतोप्यगात्सिर्थेक्स्थितं सत्तारमूलकम् ॥२९३८॥
तद्दिमस्तत्र स्थिते दूरात्कुतस्त्यामपि पूत्कृतिम् । श्रुत्वा भोजोवदत्साथ किमपि व्याकुलीभवन् ॥२९३९॥
2940 निर्भीर्विहस्यमानोपि त्रासात्तस्मादहेतुकात् । व्यरंसीत्संभ्रमात्रासी चक्रे सज्जांस्तु वाजिनः ॥२९४०॥
त्रस्तोलंकारचक्रोथ दशग्राम्यमतो द्रुतम् । क राजपुत्र इत्येवं कथयित्वा पलायितः ॥२९४१॥
उदतिष्ठत्ततो ग्राममध्यात्तूर्यध्वनिर्महान् । आस्कन्दावेदकः सेनानिनादश्च क्षपामुखे ॥२९४२॥
अलक्षितो ध्वान्तमध्ये भेजे भोजः पलायनम् । श्वः कर्तव्येष्वलंकारचक्रो युद्धाय संदधे ॥२९४३॥
दग्धो द्वाराधिपनाभिर्गिरिवर्त्म प्रकाशयन् । ध्वान्तध्वस्तात्मनां[1] तेषां तदाभूदुपकारकः ॥२९४४॥
2945 द्वाराधिपस्य क्षाम्यन्तः संधिं भोजप्रतीक्षया । श्रुत्वा तमथ वृत्तान्तं भङ्क्त्वा ते डामरा ययुः ॥२९४५॥
असंस्थजनपत्यादिबन्धं धीरोजल्लाभयात् । आजि स भोजोलंकारचक्रेणामङ्गलावहम् ॥२९४६॥
..........................[1] । भोजस्तत्राप्यभूत्सर्वाशाद्वारादिशुखान्वितः ॥२९४७॥

बाणाग्निजस्त्रिपुरनिर्दहने प्रतापः पाथोनिधेः प्रमथने वडवाग्निजन्मा ।
आसाद्य मन्दरनगेन समागमं हि न क्वापि पन्नगपतेः सुखसख्यमासीत् ॥२९४८॥

२९२३. [1]) Emended with C; A °चक्रेणाद्रि°. २९२४. [1]) A °वाडाख्यो and °वाडजः. २९२५. [1]) Emended with G (*sec. manu*); A °कल्पस्तं जघ्ने. २९२६. [1]) Conjectural reading; A राम°राधा°; C साधुभिराधा°. २९२९. [1]) Emended A °पक्षिव्रातस्य; C °पक्षिव्रा°.—[2]) A आनन्दवाड°. २९३३. [1]) Emended; A तस्मात्तु°. २९३८. [1]) Emended; A सन्ना°. २९४४. [1]) Emended; A °स्मना. २९४५. [1]) Emended with C; A °क्षम्यन्तः. २९४७. [1]) Two or more *pâdas* seem to be lost here; A does not indicate the *lacuna*; C supplements संरम्भात्कर्तुमारेभे साम्राज्यं च चकमे.

क्षुत्पिपासाभ्रमं हन्तुं प्राप्तः स्वविषयावनौ । अलंकारात्मजैर्भूयो बन्द्धुं[1] भोजोऽभ्यलभ्यत ॥२९४९॥
पितुर्मतेन बुद्ध्या वा स्वया तत्सहितस्ततः । सोऽभिसन्धाय निर्यातः प्रापाय विषयान्तरम् ॥२९५०॥ 2950
ततो बल्लहरेणैव कृत्यं निश्चित्य कार्यवित् । अनास्थोऽन्यलवन्येषु दिन्नाग्रामं पुनर्ययौ ॥२९५१॥
द्वाराधिपोऽहितोद्धारधीरोऽप्यन्तरेऽक्षमः । चक्षूरोगेण भ्रमाभियोगोऽकस्माद्व्यधीयत ॥२९५२॥
भोजाय दातुमैच्छद्यो डामरस्ते हृते ददौ । पर्माण्डये गुल्हणाय राजजाय च निर्जितः ॥२९५३॥
रोगोद्दण्डतया दण्डप्रयोगावसरे कृते । तत्र क्षाम प्रयुज्यैव द्वारेशो विषशोषिद्यात् ॥२९५४॥
अभियोगक्षणे तस्मिन्प्रययौ भारसहः क्षयम् । दुर्नामकामयक्षामः षष्ठचन्द्रोऽपि गर्गजः ॥२९५५॥ 2955
तत्रामयाविन्येवासोद्रेकौ तदनुजौ निजौ[1] । चक्राते वसुधां दुःस्थामास्कन्दाद्युपद्रवैः ॥२९५६॥
त्रिल्लकः प्रबलैरन्यैः सहाभेदं प्रवर्धयन् । नाग्रहीद्विग्रहैकाग्र्यः सान्त्वनामपि भूपतेः ॥२९५७॥
षष्ठे निष्ठां गते रोगमग्ने द्वारपतावपि । नियुक्तः क्ष्माभुजा धन्यो[1] निरगात्तारमूलकम् ॥२९५८॥
भोजश्च्युतोऽमुतोऽन्येषां बलिनां गोचरे पतेत् । प्रायप्रतिष्ठो निस्तीर्णो देशाद्वासाध्यतां व्रजेत् ॥२९५९॥
इति संचिन्त्य सामाद्यैरुपायैस्तं जिघृक्षुणा । क्ष्माभुजामन्दसंरम्भो विदधे सोऽभियोगभाक् ॥२९६०॥ युग्मम् ॥ 2960
अज्ञातोदर्कवैषम्या दुर्नीतिः सा महीभुजम्[1] । व्यावृत्त्याबाधताच्छिन्नपुच्छाकृष्टेव पन्नगी ॥२९६१॥
बलिनं राजवदनं नृपं चावेत्य निर्बलम् । आभ्यन्तराश्च बाह्याश्च विक्रियां यत्क्रमाययुः ॥२९६२॥
छिद्रान्तराणि सुलभानि सदैव हन्त पातालरन्ध्रसरणेरिव दण्डनीतेः ।
बहीभवन्ध्रसरमन्तरसंप्रविष्टो यात्यप्रतर्क्यनियमात्पतनं भजेद्वा ॥२९६३॥
भोजस्त्यागोऽर्थितो राज्ञा क्षीणार्थोऽसौ व्रजेदिति । वक्रवेल्यमुं बल्लहरस्तस्य वृत्तिमकारयत् ॥२९६४॥
तां लब्धप्रसरां मायां राजपक्षे विलोक्य सः । युक्त्यन्तराणि संलेभे प्रयोक्तुं नीतिकौशलात् ॥२९६५॥ 2965
संधिं पदे पदे बद्धा सार्धं बल्लहरादिभिः । कुर्वन्गतागतं धन्यो जनस्यावाप हास्यताम् ॥२९६६॥
शश्वद्व्यावर्तमानस्य[1] राजकार्यस्य नावधिम् । अरघट्टघटीयन्त्रगुणस्येवाससाद सः ॥२९६७॥
तस्य चक्र इवोद्भ्रान्ते कर्तव्ये तैक्ष्ण्यभागपि । भेत्तुं मरोढुं वाप्यासीन्नयो बाण इवाक्षमः ॥२९६८॥
नीतराजद्वयो व्यग्रः शेषस्यैकस्य विप्लवे । चतुरङ्ग इव क्रीडन्विवशोऽभूद्दिशां पतिः ॥२९६९॥
बद्धलक्ष्यः प्रदानार्थं ततश्च छद्मना परान् । भञ्जतो वाजिपत्त्यादि नाप्यासीन्नाप्यजीगणत् ॥२९७०॥ 2970
दस्युषु स्यूतसङ्केषु[1] शीतापायप्रतीक्षिषु । नागाद्बल्लहरः स्वेषामुन्मूलनमशङ्कत ॥२९७१॥
सामर्थ्याशिथिलामित्रभावे सूचितविप्रिये । तस्मिन्धावति धन्ये च शश्वत्सोऽवेपताकुलः ॥२९७२॥
संमन्त्र्य सार्धं भोजेन धन्यं समविशत्ततः । बद्ध्वार्पयत नागं मे भोजं दास्यामि वस्ततः ॥२९७३॥
भूरिकार्यकृतं स्वस्य बन्धनार्थाग्रहां[1] रिपोः । धन्यो व्यसनवैवश्याद्धियं नाबुद्ध तस्य ताम् ॥२९७४॥
पार्थिवाः स्वार्थसंसिद्धित्वरानिरतसत्त्वया । धियाविभुद्धं यत्किंचित्कुर्वन्तीति न नूतनम् ॥२९७५॥ 2975
काकुत्स्थोऽपि[1] मित्रप्रार्थी व्यग्रः सुग्रीवसंपदे । वीरोऽविधेयं स्वार्थान्ध्याद्वधं व्यधित वालिनः ॥२९७६॥

---

२९४९. [1]) A बन्धुं. २९५६. [1]) Emended; A तदनुजं निजम्; cf. षष्ठस्य जयचन्द्रस्य श्रीचन्द्रभानुजौ viii. 2753. २९५८. [1]) Emended; A धन्यै. २९६१. [1]) Emended; A °भुजाम्. २९६७. [1]) Emended; A °व्यवर्त°. २९७१. [1]) A has written first सूतसङ्केषु and subsequently indicated the reading स्यूत°. २९७४. [1]) Emended; A °वद्धं. २९७६. [1]) Emended with C; A काकुस्थोऽपि.

सेहस्य सत्यनिस्थत्वं राज्यगर्भोविभुद्धधीः । आचार्ये पाण्डवो राजा धर्मनिघ्नोप्यघातयत् ॥२९७७॥
आ भिक्षुविग्रहाग्निस्यद्रोग्धुर्नागस्य विग्रहः । स्वार्थापेक्षी तटस्थस्य तत्काले न विगर्हितः ॥२९७८॥
अगृहीत्वा तु भूभर्त्रा कंचिद्भोजार्पणे पणम् । सोवाष्टम्भीत्यभूत्तस्मिन्मन्युर्मतिमतां मनाक् ॥२९७९॥
2980 यथा तत्कृत्यमायत्यां हितं जातं तथैव चेत् । विचार्याकारि राज्ञा तच्छेमुषीयममानुषी ॥२९८०॥
विभिन्न इव भोजस्तु नागं समदिशद्यथा । दित्सुर्बल्लहरो[1] राज्ञे स्वदर्पणपणेन माम् ॥२९८१॥
बन्धमभ्यधानोस्य राज्ञस्त्रासादसौ भयेत् । स विदधथ माध्यस्थ्यमिति तं हि तथावदत् ॥२९८२॥
षष्ठचन्द्रे गते निद्रां जयचन्द्रेण पार्थिवः । संगृहीतेन तं नागं पार्श्वं प्रावेशयत्ततः ॥२९८३॥
पक्षीकृतः क्ष्माभुजायं हन्यादस्माम्भयादिति । चलन्तमपि तं भोजस्तन्मन्त्रिणमबोधयत् ॥२९८४॥
2985 तथेति जानन्नपि तं कृष्टोस्म्येतैरमीशताम्[1] । यातः किमपि हन्तेति दूतैर्नागोप्यभाषत ॥२९८५॥
नियतं नियतिस्रोतोगर्भे अन्तोर्मिमज्जतः । कथ्यमानं तटस्थेन श्रोतुं न श्रवणौ क्षमौ ॥२९८६॥
नागे बद्धे तत्कुटुम्बैर्भीतैरेत्य समाश्रितः । मायाशाली बल्लहरो दुर्दर्शः समपद्यत ॥२९८७॥
भोजनिष्क्रयविक्रेयं[1] तमादाय ययौ ततः । रिल्हणेन समं धन्यो धावन्बल्लहरान्तिकम्[2] ॥२९८८॥
सान्तर्हासोमोहयत्तौ[1] प्राङ्नागं दत्त मे ततः । भोजं दास्यामि व इति ब्रुवन्भ्रामयति स्म सः ॥२९८९॥
2990 बद्धमूलतया दूरं दुर्धर्षौ योद्धुमागतम् । सर्वं तत्र तयोः सैन्यं निन्ये कृत्यविधेयताम् ॥२९९०॥
वर्षयुद्धापकर्षादि[1]खिन्नौ तौ ततोभ्यधात्[2] । इतोपसृतयोः कुर्यां युवयोर्मतमित्यसौ ॥२९९१॥
एकप्रयाणान्तरिते स्थितयोः पथि चाकरोत् । कार्यान्तःपातश्रेवद्वये तयोर्मतिविमोहनम् ॥२९९२॥
काचिद्बल्लहरस्यासीत्पर्याप्तिर्धैर्यसत्त्वयोः । निभोद्याधतने काले वीराणां विरलैव या ॥२९९३॥
तथा हारितमार्गाय सावसात्पार्श्वमीयुषे । द्रुह्यति स्म न धन्याय लोभाद्भोजाय नापि यः ॥२९९४॥
2995 मतिमोहेन[1] नागं चेद्वधुर्मे सचिवास्ततः । कुर्यां तं स्वपदेभ्यर्थ्य चकारेति च चेतसि ॥२९९५॥
नागासांनिध्यलब्धार्द्धदार्ढ्यार्थं गूढवैकृतः । भ्रातृव्योपातयन्नागं धन्यायैर्लोष्ठकाभिधः ॥२९९६॥
सचिवैर्निहते नागे निर्हेत्वहितमोहितैः । दुर्मन्त्रितं नरपतेः स्वैः परैश्च व्यगर्ह्यत ॥२९९७॥
स्वजातीयवधक्रोधाद्विरुद्धैः सर्वडामरैः । नागानुगैश्चाभितोभूत्ततो बल्लहरो बली ॥२९९८॥
देहिनो व्यसनापातवैवश्याद्भ्रमतोपथि । अकार्यं कुर्वतः कार्यं सिद्धः संसाधयेद्विधिः ॥२९९९॥
व्यापुःसहविसतानवतया बद्धावधाने मनस्युन्मार्गभ्रमणेवशस्य रभसाच्छ्वभ्रे परिभ्राम्यतः ।
3000 अन्योपाहितकोशपृष्ठलुठनात्संदर्शिताङ्कक्षतेर्जन्तोर्हन्त तनोति दुर्गतिशमं रम्यानुलोम्यो विधिः ॥३०००॥
तथा निरनुसंधानं नागं धीसचिवैर्हतम् । नाबुद्ध भोजः संजातत्रासस्त्वेवं व्यकल्पयत् ॥३००१॥
लब्धवर्णस्य मावर्णावहं कर्मैवमीशितुः । अलब्धपणबन्धस्य वाञ्छिताप्त्यै विशङ्क्यते ॥३००२॥
[1]यथ युद्धमिति व्यर्थं[2] हर्षादायामवापि यः । भोजमन्यकरस्थोयमशक्यो ह्यन्यथा मम ॥३००३॥

२९७९. [1]) Emended; A सोवष्टम्भी°. २९८१. [1]) Emended; A °बेल्लहरे. २९८४. [1]) Thus A; perhaps read °न्मन्त्रिणमबो°.
२९८५ [1]) Emended, A °क्ष्मीस्वेतैर°. २९८८. [1]) Emended with C; A भौजोनि°.—[2]) Emended with C; A °ब्बलहरोन्तिकम्.
२९८९. [1]) Emended; A मोहवन्तौ. २९९१. [1]) Thus A; C °कर्षादिसङ्क्लिनौ.—[2]) Thus corr. by $A_1$ from °भ्यधाम्.
२९९५. [1]) $A_1$ has written मतिमोहे; न supplied apparently by $A_2$. ३००३. [1]) The text of this verse is evidently corrupt; emendation doubtful.—[2]) Perhaps read युद्धमतिव्यग्रं.

उत्सोति मोहबन्धान्धमुख्या - - दिमं संदिशेत्[1] । इति मां राजवदनः स्थितस्तनूनमन्यथा ॥३००४॥युग्मम्॥
आ भिक्षुविग्रहाद्रोहस्तभिक्षस्यानुबन्धिनः । किं राजवदनोप्येव लोभात्संभाव्यते न भूः ॥३००५॥ 3005
अथाविश्वस्तिनस्तात्मस्थिरासायास्य खाशकाः । रक्तार्द्रकृमिवस्ताङ्गि कोशपानं प्रचक्रिरे ॥३००६॥
मातुष्कुणभियः क्षिप्तरक्षिणो मुष्य तिष्ठतः । विश्वासार्थं बलहरो विरलः पार्श्वमाययौ ॥३००७॥
अमात्यमतिजाड्येन मन्दे कृत्येव कृत्यवित् । स्वयमुत्तम्भने भीतः सरिभेसंभ्रमो नृपः ॥३००८॥
सेवः पादपमण्डलस्य तटिनीतोयस्य वर्षागमः सत्कारो गुणगौरवस्य वचनप्रेम्णोन्तिकासेवनम् ।
ऐश्वर्यस्य महोद्यमो जयविधेर्गाढाविषादग्रहः कर्तव्यस्य च सिद्धदेवनृपतिर्म्लानौ न तस्यावहः ॥३००९॥
प्रवाहेणेव कृत्यस्य हठेन हरतोन्तरे । प्रातिलोम्येन भिनवता पारं गन्तुं न पार्यते ॥३०१०॥ 3010
अतो धूर्तो नृपो मुग्ध इति ज्ञातोरिभिर्मुधा । मौग्ध्यं प्रदर्शयंस्तेषां यततेस्माभिसंधये ॥३०११॥
स हि वस्तुप्रदानेन भजन्भोजाग्निकस्थितीन् । तस्याविश्वासपात्रत्वं मन्त्रस्तस्याभितोनयत् ॥३०१२॥
गन्धेन वासितोल्लङ्घाः कुरङ्गार्भकजन्मना । प्रज्वलन्त्यो विभाव्यन्ते तटिन्योपि कवाटिभिः ॥३०१३॥
भीडत्वान्तः सरन्ध्रस्य सर्वतो हि भयं स्पृशन् । माले हारावबद्धे च निर्गमे पतनं विदन् ॥३०१४॥
ताम्येद्यथा खगो भोजस्तथान्तःस्थेष्वविश्वसन् । बहिर्भूपेन रुद्धाध्वा प्रस्थानेप्यभजद्भयम् ॥३०१५॥ युग्मम्॥ 3015
तदा स दौःस्थ्यातिथितां प्राप्तः प्रैक्षत न क्षणम् । मनोविनोदनं किंचित्कृत्यं लोकद्वयोचितम् ॥३०१६॥
क्षपाभिषङ्गमनुषक्ति परस्य दुःखं हन्ताश्रयं व्यथयति प्रसभार्द्रभावम् ।
बद्धः सरोजकुहरे विरहार्तनादैश्चक्राभिधस्य मधुपोधिकमेति दैन्यम् ॥३०१७॥
रणे पूर्णव्रणाद्यानशोणितो लूनकुन्तलः । फेणोद्गारोर्याननः क्रन्दंस्तेनैकः प्रैक्ष्यत द्विजः ॥३०१८॥
स पृष्टो विधुतिर्नीतं सर्वस्वं विक्षतं तथा । स्वं डामरैर्निवेद्यैनं निनिन्द ग्रामुमक्षमम्[1] ॥३०१९॥
स्वदौःस्थ्यार्तमनास्तस्य दुःखेन व्यथितोन्वहम् । घट्टितार्द्रव्रण इव प्राह स्मेति स सान्त्वयन् ॥३०२०॥ 3020
सर्वार्होस्मि न ते ब्रह्मन्योनुयाच्योहमीदृशः । विषमे वर्तमानश्चेत्यथ सोपि तमब्रवीत् ॥३०२१॥
दुर्मेधेणामुना ब्रूहि कोर्थः पार्थिवपुत्र ते । सारासारविदो[1] यूनः कुले जातस्य मानिनः ॥३०२२॥
प्राणान्संदेहमारोप्य प्रणम्य प्राकृताशयान् । पीडयित्वा विशः क्लेशैः कार्यं किमिव पश्यसि ॥३०२३॥
वध ते प्रतिभात्येव जेतव्यो विदितो न किम् । अभिद्रोचः स सारङ्गः परच्छीर्याभिमज्जने ॥३०२४॥
यत्र शस्त्रशलाकापि विकला तद्विधीयते । इन्दीवरदलश्रेण्या घटनं स्फाटिकाश्मनः ॥३०२५॥ 3025
पृथ्वीहरायतारादिप्रत्यनीकिजितः परे । के नामास्य न संघर्षं क्षुद्रमाया हरिद्राति[1] ॥३०२६॥
किं दृप्ता एव युद्धापि कृत्यं दैराज्यजीविनाम् । भृत्याशयाः फणिग्राहिगृहीता इव भोगिनः ॥३०२७॥
जातैः क्ष्मावलयोद्वहे फणिकुले[1] पिप्भोगिडिम्बैर्मुदा[2] व्यालग्राहिविकासितास्यकुहरैर्मासस्य[3] हा गृह्यते ।
एताभिक्षयितुं न तु प्रथयितुं ते जीविकायै जनत्रासार्थं मनु कारयन्ति हि दृतैर्निमज्जनोन्मज्जनम् ॥३०२८॥
इत्युक्तवन्तं तं सान्त्वयित्वा भोजो व्यसर्जयत् । तदैव[1] चाशु व्याकोशविवेकः समपद्यत ॥३०२९॥

---

३००४. [1]) Thus A; C °मुख्यान्मुख्योऽस्मि सन्दिशेत्.—[2]) Perhaps read संदिशन्. ३०१९. [1]) Emended with C; A °मक्षः ३०२२. [1]) सारस्य no longer legible in A; found in R G C. ३०२६. [1]) Emended; A दृप्त. ३०२८. [1]) Emended with G (sec. manu); A °कुलेर्विभोगि°.—[2]) Emended; A मुधा.—[3]) Emended with G (sec. manu); A °कासितस्य कुहरैर्मासस्य ३०२९. [1]) Emended; A सदैव.

अध्यात्मत्वं प्रशममहिमोल्लासने हन्त हेतुर्भावानां तु ध्रुवमपरथा मार्दवं क्रूरता वा ।
3030 स्पृष्टं[1] पादैरमृतमहसः स्यात्कठोरं हिमांशोर्यातीति ग्रावाप्यवह रभसादार्द्रतां चन्द्रकान्तः ॥३०३०॥
राजन्याभिजने जातोप्यलज्जत्वमशिक्षितः । सोन्तरं स्वस्य राज्ञश्च मुहुर्महदचिन्तयत् ॥३०३१॥
गुणैः शौर्यनयत्यागसत्यसत्त्वादिभिः प्रभोः । पूर्वेप्युर्वीभुजः खर्वाः क्षुद्राः स्पर्धाय के वयम् ॥३०३२॥
तस्य प्रभावदीप्तेपि समये क्षान्तिशीतला । शक्तिः क्षयजडस्यापि मुग्धानां नो महोष्मता ॥३०३३॥
क्ष्वेडाग्नितापनिविडोरगसंगमेपि तुङ्गस्य चन्दनतरोरपि शीतलत्वम् ।
काले हिमर्तुपरिपिञ्जरसंज्वरेपि निम्नस्य कूपकुहरस्य महोष्मयोगः ॥३०३४॥
3035 कुतोपि पर्ययात्कार्यं क्षमं नृपममुं विना । प्राप्य कस्य पुनः प्राप्यमप्यभुक्त्या न बाधितम्[1] ॥३०३५॥
भ्रष्टं निर्झरवारि शुभ्रमचलैः स्वीयेन भूयः क्वचिल्लभ्यं लभ्यमधाश्रतः कलुषतादुष्टं प्रकृष्टं न तत् ।
निर्यन्निर्भरनिम्नगाम्बु नभसः प्राप्येत नित्यं द्रवत्प्रालेयत्वमुपेत्य शुद्धिमधिकां नार्द्रैर्हिमाद्रेर्नगैः ॥३०३६॥
तदर्थमेव प्रथितो योनर्थोपचितात्मनः । स तेन स्वस्यतां नेतुमर्थितो न स्पृशोद्बुधम् ॥३०३७॥
प्लोषाय योस्य दववह्निमवाप्नुवन्निम्नवस्थे स तेन शिखिना ग्लपितः समीपम् ।
अभ्येति चन्दनतरोर्दववह्निदाहशान्त्यै यदि प्रियकृदेव न तस्य किं स्यात् ॥३०३८॥
समर्मं[1] दुर्गताबर्हदपकर्तेव भूपतिम् । लोलनार्थं समुद्धर्तुं धीरं धन्यः पुनः पुनः ॥३०३९॥
3040 राजप्रसादनोपायान्वेषी बलहरान्तिकम् । राजकुलमथायान्तमेकवैकं[1] व्यलोकयत् ॥३०४०॥
ददर्श प्रजन्दृष्टवान्माकमज्ञातमन्तिकम्[1] । स प्रमन्तं तमानीय ततः स्मेर इवाब्रवीत् ॥३०४१॥
राज्ञः किमन्यसंधानैः संधिं बध्नात्वसौ[1] मया । प्राशैर्हि भिषजा भोज्यमातुराय समर्प्यते ॥३०४२॥
ततस्याभ्युपधानस्य नर्मस्मेरस्य जानतः । प्रत्ययोत्पादनं तैस्तैरालापैः किंचन व्यधात् ॥३०४३॥
निर्दम्भभाविनैरूढविस्रम्भः स कथान्तरे । अथाभिगम्य राजानं स्तुवन्भोजमभाषत ॥३०४४॥
3045 राजपुत्राभिजातस्य पादच्छायास्य लभ्यते । स्वर्णाद्रेरिव कल्याणप्रकृतेः पुण्यभागिभिः ॥३०४५॥
अनुवृत्त्यातिमृद्व्यापि तस्यापोह्यत[1] वैकृतम् । ज्योत्स्नयेव शरज्ञानुपरितापौष्ण्यमम्भसः ॥३०४६॥
अपि स्मरसि चारत्वे[1] नियुक्तोस्मि महीभुजा । विशतस्ते दरद्देशमभूवं पुरतः पुरा ॥३०४७॥
ततो निवृत्तो वृत्तान्तं मुख्यमाख्याय तावकम् । कालं क्षेमु कथां[1] दैन्यं नयन्मध्ये तमभ्यधाम्[2] ॥३०४८॥
क्षुत्तृड्[1]व्यध्वक्रमश्रान्तान्देव त्वामवलोक्य माम् । निन्दतः स्वानुगान्भोजो[2] निर्भरस्थैर्यं तदाब्रवीत् ॥३०४९॥
3050 स दैवतमिवास्माकं कुलालंकरणं प्रभोः । वयं स्वसुकृतो यस्य नामुमः पादसेवनम् ॥३०५०॥
गण्याः पर्यन्तनिःसारास्तत्संबन्धादिमे वयम् । चन्दनभ्रान्तिकृत्काष्ठं यत्स्यात्तद्गन्धवासितम् ॥३०५१॥
तच्छ्रुत्वैव दयार्द्रस्त्वं त्वयि यातः स लक्षितः । पृच्छन्पितेव किं गर्भरूपो वक्तीति मां पुनः ॥३०५२॥
तन्निशम्यैव भोजस्य द्रवीभूतमभून्मनः । सोन्तर्बाष्पोप्यपश्यच्च[1] सान्त्वयन्तमिवानतः ॥३०५३॥

---

३०३०. 1) Emended with C; A स्पष्टं. ३०३५. 1) Emended; A बाधितुम्. ३०३९. 1) Emended with G (*sec. manu*); A समर्मेतु°. ३०४०. 1) Emended with G (*sec. manu*); A °मेकमेकं. ३०४१. 1) Emended; A °न्दृष्टवान्माकमज्ञातम°; C °वाक्यमज्ञातम°. ३०४२. 1) Emended with C; A सन्धिबन्धात्वसौ. ३०४६. 1) Emended; A °पोह्यत. ३०४७. 1) Emended; A चारत्वे. ३०४८. 1) Emended; A कथावैर्थ.—2) Emended; A तमभ्यधात्. ३०४९. 1) Doubtful emendation of C; A क्षुत्तृड्व्यध्व°.—2) Emended; A भोजं. ३०५३. 1) च omitted in A; supplied with C.

सभ्यक्रमाद्यासंबोधमुग्धत्वेन विधीयते । तत्त्वविल्कारणाज्ञानादन्तःकरणवेदनम् ॥३०५४॥
अप्रदधानस्तामिच्छां भोजस्याकम्पवर्तिनः । मतिदूरीकृते तस्मिन्धन्यो न प्रत्ययं दधे ॥३०५५॥ 3055
दयिताभूद्यथा नागवृत्तान्ते न भवेत्तथा । महीभुजं मोहयितुं मायया दीव्यते मया ॥३०५६॥
मा भूद्विश्रोयमित्येवमुक्त्वा मल्लहरं रहः । व्याजार्जवेन भोजस्तु संधिबन्धाय तत्वरे ॥३०५७॥युग्मम्॥
तत्कालयोग्यसांनिध्यधिक्कारचतुरस्तथा । तेनाशु दैशिकापत्यमेको दूत्ये न्ययोज्यत ॥३०५८॥
स कान्दकनया नित्यस्वतन्त्रधिक्कारां स्वयम् । आचरेदिति मायाक्तं भोजे मल्लहरोभजत् ॥३०५९॥
पार्थिवः प्रार्थितः संधिदूतमार्गं प्रतीक्षते । प्रत्यागतेन तेनेति ततो भोजोभ्यधीयत ॥३०६०॥ 3060
तत्रासंनिहितान्याप्तः स्वीस्वादमतिभामपि । धात्रीं मोनाभिधानां स्वां राज्ञोभ्यर्णे व्यसर्जयत् ॥३०६१॥
मृतेन पित्रा मात्रा च हीनं[1] तमनुयातया । मातृकृत्यं ययात्रासीच्छैशवे माननीयया ॥३०६२॥
पत्युः प्रीत्यै विसंधानध्वंसाकल्पादिकल्पनात् । सखीकृत्यं सपत्नीनां यया शान्तेर्यया कृतम् ॥३०६३॥
ह्रासोल्लासे[1] हि कार्याणां योग्यकृत्यावनिश्चयात् । न यां सुक्षत्रियां क्ष्माभृत्संभ्रान्तां जातु वीक्षते ॥३०६४॥
अभ्युदेय प्रजाभिश्च कृतं राज्ञोभिषेचने । आशास्यं यां महादेवीपट्टबन्धं समादधे ॥३०६५॥ 3065
अपत्यप्रियताभोगलोभभर्तृप्रसादनैः । प्रेर्यमाणाप्यकार्येषु बुद्धिर्यस्या न धावति ॥३०६६॥
स्वनाम्यत्र च संधाने जाते भर्तुरभिप्रधीः । भाग्योदयेष्वनुत्सिक्ता या चाखण्डितसत्कृता ॥३०६७॥
आ बाल्याद्रावत्रिभर्तुः कुसृत्यमुसृतौ न सा । कार्यमध्यं विगाहेत मानाभिजनरक्षिणी ॥३०६८॥
इति कल्हणिकादेव्या माध्यस्थ्ये स धियं व्यधात् । प्रत्यानयद्यां सा सीमान्तमापणावधि ॥३०६९॥कुलकम्॥
गुप्त्यै लवकनिस्तारि पराध्यैं मध्यपातिनाम् । पाथेयार्थं पृथुस्वर्णभाजि कोशादि चात्मनः ॥३०७०॥ 3070
प्रापयामास किं चाष्टौ प्रकृष्टाभिजनोद्भवान् । पालनार्थं राजपुत्रान्देवी यत्सर्वसंविदम् ॥३०७१॥युगलकम्॥
याचके तद्दृशीला तामागमत्पार्थिवेन सः । धात्रीं स कारयन्धन्यो बद्धेच्छासिद्धिनिश्चयाम् ॥३०७२॥
विहितप्रत्ययस्तस्याः सद्यः स्यात्तु महीपतिः । राजधर्मस्य च वशस्यासीद्दोलाकुलाशयः ॥३०७३॥
स हि दध्यौ निर्विरोधो वैराग्येणाथ मायया । संकटान्मोचितव्योसौ[1] यायात्कालेन विक्रियाम् ॥३०७४॥
अनिःशेषितजीमूतजालमात्रिर्भवव्यथिः । अनूनक्लेशशोषं च विवेको न स्फुरेच्चिरम् ॥३०७५॥ 3075
मुग्धाभिरनुसंधाननागवाधादयेत्य नः । स्वार्थस्य सिद्धये माया तेनेयं निरमायि वा ॥३०७६॥
लब्धलक्षेपरिक्षीणे शास्त्रे[1] यूनि गणाश्रिते । क्षत्रधर्मस्थिते नेदृग्विवेकः क्वापि लक्ष्यते ॥३०७७॥
भवति कुङ्कुमं पुष्पमपुष्पं क्षीरिणः फलम् । अकालपर्ययापेक्षं वैराग्यं वा महात्मनाम् ॥३०७८॥
न त्याज्यो राजपुत्रोसावेवं मायानिधिर्यदि । पर्यवितर्कयत्यस्मिन्नदृष्टे किं दृशोः फलम् ॥३०७९॥
राज्ञी राजात्मजार्थिते प्रतिष्ठाभङ्गशङ्किनः । ऋजुप्रभावात्सुस्पष्टमन्यत्कार्यं न मन्यते ॥३०८०॥ 3080
अटन्ती[1] कुटिलं स्पष्टं सरित्सर्पेण लक्ष्यते । कान्ताकुन्तलनिष्यन्दी तोयबिन्दुरिव क्रमः ॥३०८१॥

---

३०५४. [1]) Emended with G (*sec. manu*); A °कारणज्ञा°. ३०६२. [1]) Emended; A हीने. ३०६४. [1]) Emended; A °ह्रासी. ३०६९. [1]) Emended; A धा. ३०६९. [1]) Emended; A सीमन्तापा°. ३०७०. [1]) Emended; A °पातिनम्. ३०७१. [1]) Emended with C; A प्रापयामास.—[2]) Emended with G (*sec. manu*); A °न्देवीयत्स°. ३०७४. [1]) Doubtful emendation; A °तव्यासौ. ३०७६. [1]) Emended, A मुग्धाभिर°. ३०७७. [1]) Emended; A शास्त्री. ३०८१. [1]) Emended with C; $A_1$ has first written अ--न्ती and then supplied टि over the *lacuna*.—[2]) Emended with C; A सरत्स°.

इति ध्यात्वा राजधर्मं सत्यसंधोचितं व्यधात् । धन्यरिल्हणयोः कार्यं भुतावज्ञाविसर्जयन् ॥३०८२॥
स्वस्यैवार्थस्य दार्ढ्याय सल्हणिस्त्वां[1] दिदृक्षते । समागमायेत्युक्त्वाथ धन्यो दूतैरनीयत ॥३०८३॥
मा भैषीरेष संधित्सुः[1] सैन्यादिति मितानुगः । अवर्तिष्ट तटिन्याः स द्वीपान्तस्तत्प्रतीक्षया ॥३०८४॥
3085 सरित्सा जानुदघ्नाम्भा भूत्वा घर्मद्रुते हिमे । गगनालिङ्गिभिर्भीमा तरङ्गैः समपद्यत ॥३०८५॥
अवाप्ता चेद्धैर्यालङ्घ्यभावं यान्त्यपि दन्तिनाम् । रुद्धः सिन्ध्वाभवत्सोथ द्विषां रन्ध्रैषिणां वशे ॥३०८६॥
सिन्धोरुद्भवतस्तोयैर्व्याप्ततीरभुवोन्तरे । ते डिण्डीरोपमां[1] प्रापुः पिण्डिताः पाण्डुवाससः ॥३०८७॥
खाशकानां[1] सहस्राणि भोजस्य पतितं[2] बले । स्थितवन्ति निहन्तुं तं तथास्थितमचिन्तयन्[3] ॥३०८८॥
दृग्भ्यां संभ्रमदीनाभ्यामघशान्त्यै स्पृशन्निव । कर्णे सल्हणसूनुस्तान्संतर्ज्याकृजिनोब्रवीत्[1] ॥३०८९॥
3090 निर्दम्भमस्य विस्रम्भाद्दावतो विहिते वधे[1] । निरत्ययो निपातः स्याज्जियते निरये पुनः ॥३०९०॥
हतेस्मिन्बहुभृत्यस्य न च शक्तिक्षयः प्रभोः । नैकपक्षक्षये तार्क्ष्यस्येह संहारमर्हति ॥३०९१॥
अपि वा वाच्यता राज्ञामेवं विस्रब्धबाधनात्[1] । तुल्यस्तुल्येन कर्तव्यं किमनुध्याय बध्यते ॥३०९२॥
यथायं वृत्त्येनन्यकर्मा भूपं[1] निषेवते । तथा ममापि यत्नोयं तत्सेवासादने यतः ॥३०९३॥
युक्तमित्यादि तेनोक्ता अपि निश्चलनिश्चयाः । ते न्यषिध्यन्त निर्बन्धात्प्रतिज्ञायात्मनो वधम् ॥३०९४॥
3095 राज्ञी तथैवादरिद्राभिद्रं तद्रक्षितुं ततः । कारिताः कोशपानं ते समयं सोपि बोधितः ॥३०९५॥
तेनावेदितनिर्व्याजतया धीरो महीपतिः । अनुध्यायाथ संदिग्धं संधिसिद्धिममुग्धधीः ॥३०९६॥
अज्ञातनिश्चयः सिद्धेर्विनान्तःकरणं परैः । अथ प्रास्थापयद्देवीं सामात्यां[1] तारमूलकम् ॥३०९७॥
राजधर्मविधेयत्वाद्धार्यक्रूरशङ्किनी । प्रस्थानप्रार्थनां भर्तुः सा स्वीकृत्य ततोब्रवीत् ॥३०९८॥
असामान्येष्वमात्येषु कुसृत्यालोकनात्सकृत् । आर्यपुत्र विचार्योस्ति[1] विस्रम्भः किं विरोधिनाम् ॥३०९९॥
3100 यद्वा निर्मानुषोन्मेषं[1] शेमुषीत्वं विगाहितुम् । प्रयते नु कथंकारं मूर्तस्त्वं मर्त्यधर्मिणाम् ॥३१००॥
देहोपकरणत्वं ते प्राणैर्मम विचिन्त्यते । सतीधर्मस्तु सहते राजधर्मस्य नोचितम् ॥३१०१॥
व्यञ्जितास्यसदाचारं कलिकृत्यं द्विषि त्वयि । प्रारब्धो देव भोजेन हिमाद्रौ हिमविक्रयः ॥३१०२॥
न गृह्णाति शर्म वेत्ति स्वस्यान्यस्य न चान्तरम् । निर्व्यूढमहदोषोथ प्रायेण प्राकृतो जनः ॥३१०३॥
पुत्रमन्त्र्यविरोधादिमुग्धभुग्धा प्रधावति । साध्वाचारोपि भूपालः क्रुध्यन्विश्रब्धबाधने[1] ॥३१०४॥
3105 समयालङ्घनामोघगिरा देवेन पीयते । लोकत्रयैकपात्रेस्मिन्यशो नूनं मया सह ॥३१०५॥
भ्रातव्यसंक्षयोपेक्ष्यमाणायास्त्वन्यथाशयः । ममैवास्वादयन्त्यादादात्मंभरिपुराग्यितिः[1] ॥३१०६॥
इत्युक्त्वा विरतां सत्यसंधः साध्वीं धरापतिः । शान्तशङ्कामकृत्वा तां समामन्त्र्य[1] न्ययोजयत् ॥३१०७॥
मङ्क्षु सर्वानयं भ्रातुं प्रयोक्तुं वेतनं नृपः । संरम्भे किमयं ध्यायत्यन्तः सर्वोप्यचिन्तयत् ॥३१०८॥

३०८३. [1]) Emended; A °णिस्तां. ३०८४. [1]) Emended; A भैषीरेष सन्धित्सुस्त. ३०८७. [1]) Emended with C; A °रोपमतां. ३०८८. [1]) Emended; A खश°.—[2]) Emended; A पतिते.—[3]) Emended; A° चिन्तयत्. ३०८९. [1]) Emended; A °लङ्घ्य कृजिनो°. ३०९०. [1]) Emended; A विधेः. ३०९२. [1]) Emended; A °बोधनात्. ३०९३. [1]) Emended; A रूपं. ३०९७. [1]) The *akshara* त्यां could also be read न्यां; thus C. ३०९९. [1]) Doubtful emendation; A विचार्यास्ति. ३१००. [1]) Conjectural reading; A °न्मायां. ३१०४. [1]) Emended with C; A क्रुध्य वि°. ३१०६. [1]) Thus A; the text of this verse requires emendation. ३१०७. [1]) Conjectural reading; A has written originally ----न्यको° and subsequently filled up the *lacuna* with माता मन्त्र्या; G (*sec. manu*) सोतामन्त्र्य.

उपायेषु प्रयुक्तेषु देवीसंप्रेषणावधि । नान्यदस्य प्रयोक्तव्यं यदवाशिष्यत किंचित् ॥३१०९॥

स्वपक्षभेदाद्भूभर्तुः सबलस्याबलस्य यो । परीक्षकस्याथ केचिन्माध्यस्थ्येनावसन्कचित् ॥३११०॥ 3110

तेऽल्पे वा महान्तो वा क्षीणदाक्षिण्यशृङ्खलाः । भोजगृह्यैः सहाबध्नन्कक्ष्यां सर्वेऽपि डामराः ॥३१११॥

ते प्रथिञ्जतटस्थस्याद्दिराज्येऽस्माभिरीदृशः । भोजः संजात इत्याशु माध्यस्थ्यं परिजह्रिरे ॥३११२॥

त्रिल्लको भोजसविधं तनूजं प्राहिणोत्कुलम् । प्रावेशयच्छमालां च चतुष्कं पुष्कलैर्बलैः ॥३११३॥

ये भिक्षुविप्रवेऽप्यासन्राजदाक्षिण्यरक्षिणः । विरोधिसविधं प्रापुस्तेऽपि नीलाश्वडामराः ॥३११४॥

ल्हरादिवसरसाड्डोलडास्तथ[1] डामराः । नयो नीलाश्वतथैका डामरी पर्यशिष्यत ॥३११५॥ 3115

न व्यरंसीद्विग्रं तमाक्रन्दे साल्हणैर्बले[1] । पतत्प्रावृट्प्रमन्तौघवेगोऽम्भोधाविवोद्धतः[2] ॥३११६॥

भोजस्तु देवीमायान्तीं[1] श्रुत्वा बल्हरं ततः[2] । ध्रुवं संधित्सया बद्ध इति सुव्यक्तमभ्यधात् ॥३११७॥

एतावन्ति दिनान्यासीत्पुंसो भ्रमयिता पुमान् । संबन्धिनीनां माध्यस्थ्ये स्वकुल्यात्कोऽन्यथा भवेत् ॥३११८॥

कुलचूडामणिः प्रेम्णा स यत्रैवं प्रवर्तते । किं स्यादगण्यमायाणां कार्कश्यं तत्र मादृशाम् ॥३११९॥

यद्य मायामिमां ब्रूथ तत्तथास्त्वस्मि वञ्चितः । विश्वास्यैव भविष्यामि नाकीर्तीनां निकेतनम् ॥३१२०॥ 3120

मा च भूद्विजयाशा वः समेता निखिला इति । अग्राक्ष्म वेदृशान्व्यूहानवादक्षाम[1] वोन्नतेः ॥३१२१॥

युक्तियुक्तमिदं चान्यद्योक्तवान्बहु निश्चयात् । नाशक्यतान्यथा कर्तुं भोजो बल्हरादिभिः ॥३१२२॥

विवाहान्तरितैर्मिश्रममायैपरथा कथम् । फलकालेऽसि संवृत्तमिति तं चावदन्नृपाः ॥३१२३॥

तारमूलस्थितौ[1] राज्यां ससैन्यौ धन्यरिल्हणौ[2] । राजपुत्रैः सह ततः पाञ्चिग्राममवापतुः ॥३१२४॥

प्राग्राचवेत्य तौ नद्यास्तीरे रात्रि कृतस्थिती । परस्मिन्कूलगहने भोजोऽप्येतावुपाविशत् ॥३१२५॥ 3125

अभ्रान्तं विशतो दिङ्मुखेभ्यस्तत्कटकं भटान् । पश्यन्तः केऽपि संधिं न श्रद्धुर्नृपतेर्बले ॥३१२६॥

हठप्रविष्टान्निर्यातुमक्षमानल्पसैनिकान् । धन्यादीन्राजवदनो हन्तुं शश्वदचिन्तयत् ॥३१२७॥

छित्वा सुय्यपुरान्सेतुं राज्ञः सैन्यं जिघांसवः । महापद्मसरोनौषु निभृतं केचनावसन् ॥३१२८॥

अन्ये तत्साहसोदन्तान्वेषिणः पतनोन्मुखाः । स्वैः स्वैर्मार्गैस्तत्र तत्र तस्थुर्भूभृदसंमताः ॥३१२९॥

आस्कन्दं भाङ्गिलेयायाः पुरे शंकरवर्मणः । शमालाक्षितिसिकावार्तिं[1] डामराः समचिन्तयन् ॥३१३०॥ 3130

प्राप्यं महासारिकूलं त्रिल्लकाद्यैरगण्यत । नीलाश्वडामरैर्यीशा[1] कार्या च नगरान्तरे ॥३१३१॥

किमन्यद्राजगृह्याणां समं सर्वे जिघांसवः । कारण्डवानां तोयान्तर्वेष्टितानामिवाभवन्[1] ॥३१३२॥

सांदिग्धशिक्षितं कार्यं सर्वतः समतां तदा । प्राप वृष्टेरवग्राहमहयोगान्तरस्थितेः ॥३१३३॥

पदे पदे राजचमूपथायोत्थानमिच्छतः । छिन्दन्बल्हरस्येच्छां भोजो व्यग्रत्वमग्रहीत् ॥३१३४॥

क्षणे क्षणे विसंधानध्यायिना तेन कश्चन । बध्यमानास्वन्तरायाः[1] संविधात्र्य व्यधीयत ॥३१३५॥ 3135

घटनामुपयौ यो यो विरोधः कटकद्वयात् । सख्यैकामः स्वयं भोजस्तं तं त्वरितमच्छिनत् ॥३१३६॥

---

३११५. [1]) A °ड्डोलडास्तथ. ३११६. [1]) Emended; A साल्हणे बले.—[2]) Emended with C; A °प्रमत्तौघ°. ३११७. [1]) Doubtful emendation; A दीर्घमायान्ती. —[2]) Emended A° हरस्ततः. ३१२१. [1]) Doubtful emendation; A चेदृशां व्यूहान-वदक्षाम; C चेदृशं व्यूहमवरोक्षामि. ३१२४. [1]) Doubtful emendation; A °स्थिते राज्यां; C °स्थिते रात्रि.—[2]) Emended with C; A धेन्य°. ३१३०. [1]) A₁ gloss ग्राम. ३१३१. [1]) Thus A; C °रैरीर्ष्या. ३१३२. [1]) Emended with C; A °भवत. ३१३५. [1]) Emended; A बध्यमानस्तान्त°.

दूत्ये च कल्यकल्पे वा येऽभवन्नाजरञ्जकाः । भयेन प्रययुस्ते यद्वैकल्यं कार्यसंकटे ॥३१३७॥

कर्णे तत्कथयन्ति दुन्दुभिरवै राष्ट्रे यदुद्घोषितं तद्व्याकुलतया[1] वदन्ति करुणं[2] यस्मादपायाद्भवेत् । श्राव्यन्ते तदुदीर्यते यदरिणाप्युग्रं न मर्मान्तकृद्ये केचिन्ननु शावमौग्ध्यनिभयस्ते भूभुजो रञ्जकाः ॥३१३८॥

भण्डस्ताण्डवमण्डपे कटुकथावीथीषु कन्थाकविर्गोष्ठश्वा स्वगृहाङ्गने शिखरिभूगर्ते[4] खटाकुः स्फुटम् । पिण्डीभूततया विटश्च पटुतां भूभृद्गृहे गाहते गच्छन्ति द्रवकृष्टकच्छपतुलां चित्रं ततोऽन्यत्र ते ॥३१३९॥

3140 भूरोद्रेकविपर्यासाच्छान्तोष्मक्ष्माभृतस्ततः । वासरः शारणीचक्रे तुङ्गस्योत्तुङ्गमञ्जसा ॥३१४०॥

भानुर्दत्तपदानूरोर्भ्रातुर्गौवलयान्तरे । क्ष्माभृच्छिरोर्पितकरो रक्तमण्डलतां दधे ॥३१४१॥

अहस्त्रियामामुखयो --[1] मध्यस्थया दधे । संध्यया वन्दनीयत्वं जनस्य[2] व्यञ्जिताञ्जलेः ॥३१४२॥

कवाटिदन्तैर्विस्फोटाश्चन्द्रकान्तैः सिरोद्गमः । श्वयथुः पयसां पत्या दधे राज्युदयोन्मुखे ॥३१४३॥

सदैन्येष्वरविन्देषु हीनद्वन्द्वोपजीवनैः । कवाटिनां घटेष्वेव षट्पदैर्घटितं पदम् ॥३१४४॥

3145 अदृष्टकार्यपर्यन्तास्ततस्ते विषमस्थिताः । सरित्तटे सकटकाः पर्यतप्यन्त मन्त्रिणः ॥३१४५॥

न किंचित्प्रत्यभात्सर्वं लघु भ्रान्तं च जानताम् । ओघेन ह्रियमाणानामिवैषामवलम्बनम् ॥३१४६॥

तीरे परस्मिन्सरितो वसन्बलहरः पुनः । रुद्धः कन्दलितास्कन्दबुद्धिः[1] साल्हणिना[2]सकृत् ॥३१४७॥

कार्यातिपातादायातं मन्त्रिणां तन्मितं बलम् । तस्य प्रवर्धमानस्य सुखोच्छेदं बभूव यत् ॥३१४८॥

वितस्तासिन्धुसंभेदयात्रायां नगरे यथा । तथा तथापतत्कांत्री लोकोऽभ्रान्तो व्यवर्तत ॥३१४९॥

3150 म्लेच्छडामरसंहारखण्डनाय विसर्जितैः । सान्त्वैर्मथिता वार्धिर्नामैव राजबीजिनः ॥३१५०॥

शाखाग्निवैरनुसरैस्तुमुलोत्पादनैरपि । धीरो धैर्याब्धिरग्राह्यः स्वैः स कर्तुं न पारितः ॥३१५१॥

सामन्तानामागतानामविकम्भादसंभ्रमम् । न्यकृतोऽयं निपत्याशु कुर्यादस्याहितं रुषा ॥३१५२॥

कृते च कदनोंकारेऽनेन --[1]समुन्मिषेत् । द्विजानामिव दस्यूनां समूहस्तेन सर्वतः ॥३१५३॥

इति निध्याय दुर्धुक्षुरिव भोज्जः क्षपात्यये । कुर्मः साहसमित्युक्त्वा निन्ये बलहरं समम् ॥३१५४॥तिलकम्॥

3155 एषां मदर्थायातानां सामन्तानां सभोजनः[2] । दाक्षिण्यादिति नाभोजि तेनाप्यभिजनस्पृशा ॥३१५५॥

तथा स्वमत्या[1]वैमत्यं तमशङ्क्या तु मन्त्रिणः । निष्प्रत्ययास्तेन जातममन्यन्त नयात्ययम् ॥३१५६॥

पक्षिपक्षस्फुटास्फालशफरस्फुरितेष्वधात् । तेषामासन्निधास्कन्द[1]ः प्रधावदहितभ्रमम् ॥३१५७॥

कूले परस्मिन्कूलिन्याः स्वाभिसंधाननिर्वृतैः । समभाव्यत तैर्भोग्यो रथाङ्गेभ्योऽभिषङ्गभाक् ॥३१५८॥

महत्काकुत्स्थ[1]दूतस्य कपेस्तीर्णाम्बुधेः पिता । ततान तेषां दूतानां सरित्पारगती --[2] ॥३१५९॥

---

३१३८. [1]) This verse and the following are found in *Vallabhadeva's Subhâshitâvali*, 462-463 (ed. Peterson and Durgâprasâda).—[2]) व्याकुलतया supplied by $A_3$ in space left by $A_1$.—[3]) Thus corr. by $A_1$ from करुणां.—[1]) Thus corr. by $A_3$ from $A_1$ क्षपाक्षम°.—[5]) Thus in *Subhâshitâvali*, A °च्युमेण.—[6]) Thus corr. by $A_3$ from $A_1$ कर्णे°.—[7]) ननु supplied by $A_3$ in space left by $A_1$. ३१३९. [1]) Emended; A कटुकथावीचीषु, *Subhâsh.* चाटुकथावीथिषु.—[2]) Thus $A_1$ in margin and *Subhâsh.*; $A_1$ in text भूगर्भे. ३१४०. [1]) तुङ्ग supplied by $A_3$ in space left by $A_1$. ३१४२. [1]) Thus $A_1$; C supplements गौरपि.—[2]) Emended with C; A जनवन्द्यञ्जि°. ३१४६. [1]) Emended; A °भास्त्वं. ३१४७. [1]) Emended with C; A °स्कन्दांकुरि.—[2]) Emended with C; A साल्हणमा°. ३१४९. [1]) Emended A °पतत्रात्री. ३१५३. [1]) मैव supplied by $A_3$; $A_1$ indicated originally a *lacuna* of four *aksharas*; C supplements सर्वे. ३१५४. [1]) A दुर्धु°. ३१५५. [1]) Doubtful emendation; A एतां मदर्थता.—[2]) Doubtful emendation; A सभोजनि:; C सामन्तानामभोजने. ३१५६. [1]) Doubtful emendation; A समत्यावै°. ३१५७. [1]) Emended, A °स्कन्धम°. ३१५९ [1]) Emended with C, A °काकुत्स्य°.—[2]) Thus A; C fills up the *lacuna* with बलम्.

कीर्णकर्णज्वरांधारीन्पीत्कृतैस्तीरभूरुहाम् । आश्रित्योत्क्षिप्तकेणेत्थं निन्युस्ते तां निशीथिनीम् ॥३१६०॥ 3160

अपान्ते क्ष्माधरोत्संसहेमतामरसभ्रमम् । उद्गच्छतो रवेर्यावच्छिच्छिदुर्न करच्छटाः ॥३१६१॥

चक्राह्वविरहालोकसशोकानामिवागलत् । कुट्मलाक्षिपुटाद्बाष्पवशं भाम्भश्च वीरुधाम् ॥३१६२॥

मितपत्तियुतस्तावत्तस्कन्दाद्विनिर्गतः । – – –[1]स्वरयन्तुरं[2]वाहान्मूर्ध्यङ्क्रिणा स्पृशन् ॥३१६३॥

रोद्धुकामाण्डामरीयान्वीरान्पृष्ठैर्विलोकितैः । सर्वतो धावतः कुर्वन्योधान्प्रतिहतौजसः ॥३१६४॥

पारश्वधी चारुवेषो युवा संमुखमापतन् । युग्याधिरूढस्तैः प्रैक्षि संप्राप्तः सरितस्तटम् ॥३१६५॥कुलकम्॥ 3165

अदृष्टपूर्वं तं दृष्ट्वा श्रीखण्डोत्क्षिप्तखिलालकम् । कुङ्कुमालेपिनं चैते भोजोऽयमिति मेनिरे ॥३१६६॥

अतिवाह्य निशां राजवदनं तं विमोहयन् । प्रातश्च तरसामन्त्य स तथा संमुखोऽभवत् ॥३१६७॥

प्रविष्टयुग्यं तोयान्तः पाराद्गामितवाजिनः । धन्यादयस्तमभ्येत्य मुदिताः पर्यवारयन् ॥३१६८॥

उदभूत्तुमुलः शब्दस्ततः कटकयोर्द्वयोः । एकत्राक्रन्दमुखरः परत्रानन्दनिर्भरः ॥३१६९॥

नादमाकर्ण्य संग्रामबुद्ध्या दिग्भ्यः प्रधावितैः । तं परैर्मिलितं वीक्ष्य मूर्च्छितमात डामरैः ॥३१७०॥ 3170

तस्याभिनन्दनालापप्रमुखा प्रक्रियाभवत् । अदैन्यभुग्धन्यादिष्वनुज्झितनिजक्रमा ॥३१७१॥

प्रणमानं मनोहर्षवेगात्संस्तभ्य सर्वतः । अथेत्थं स्तुवता तत्तस्य धन्येनाभ्यधीयत ॥३१७२॥

राजपुत्र पवित्रेयं पृथिवी स्थैर्यशालिना । त्वया धाम्ना सुमनसां मेरुणा वा महीभृता ॥३१७३॥

गवां जयति सर्वासां निर्विकारतया वसन् । विक्रियोपहतं गौस्ते क्षीरं –[1] क्षीरवारिधेः ॥३१७४॥

कस्य पुंस्कोकिलस्येव त्वां विनाधममध्यतः । निर्गत्य निजकुल्यानां सिद्धं मध्यावगाहनम् ॥३१७५॥ 3175

सदाचारस्य भवता प्रथमं महते पथि । न तद्विधं संचरामधरमं चेत्ततोऽधिकम् ॥३१७६॥

इत्यादिप्रसृतालापदत्तोद्घातोऽधिरोह्य सः । जयोत्तरङ्गं तुरगं स्तुवद्भिस्तैरनीयत ॥३१७७॥

लग्नान्याः कतिचित्क्रोशान्विक्रोशन्तस्तदा ययुः । स्वकुल्यैर्नीयमानं तं काका इव पिकान्तिकम् ॥३१७८॥

स एवमेकत्रिंशेऽब्दे ज्यैष्ठस्य दशमेऽहनि । त्रयस्त्रिंशद्वर्षदेश्यः समगृह्यत भूभुजा ॥३१७९॥

राज्ञी कृतप्रणामं तं प्रियं पुत्रमिवागतम् । अभ्यनन्दच्छ्रान्तभृत्यमस्याहारमकल्पयत् ॥३१८०॥ 3180

इन्दुवंशाभिसंवादिगुणग्राममवेक्ष्य तम् । प्रागदृष्टवती मेने वञ्चिते सा विलोचने ॥३१८१॥

गुणैरशाठ्यदाक्षिण्यमाधुर्याद्यैरकृत्रिमैः । तस्या विशदशीलं स क्ष्मापतिममन्यत ॥३१८२॥

मुखरागो मनोवृत्तेर्हारौज्ज्वल्यं गृहश्रियः । भर्तृस्वभावस्याचारो योषितामनुमापकः ॥३१८३॥

दिनक्षयव्यञ्जिताभ्यक्रमं[1] मत्यानुमुत्सुकम् । राज्ञोऽभ्यर्णं विशेत्येवं[2] दाक्षिण्यात्कोऽपि नाब्रवीत् ॥३१८४॥

कथंचिद्भुजमाध्यस्थ्यश्रैमत्यैः सन्निवेश्य । स त्वादिक्षत्परतिराज्ञाम्बेत्योऽभ्यधीयत[1] ॥३१८५॥ 3185

राज्ञोऽभ्यर्णं विशेत्युक्तेरुपोद्घातोपमं वचः । तत्तस्य श्रोत्रशष्कुल्यां –[1] शङ्कुक्रियां व्यधात् ॥३१८६॥

३१६३. [1]) Thus A; C सर्वारस्वर°.—[2]) Emended with C; A °स्तुरङ्गवा°.—[3]) The letter न cannot be read with certainty: C °स्पृशन्. ३१६६. [1]) Emended; A °क्षम्ति°. ३१७०. [1]) Thus corr. by $A_1$ from डामरैर्मि°. ३१७१. [1]) Emended with G (*sec. manu*); A °मुखापकि°. ३१७२. [1]) Emended with C; A °स्तम्भ्य. ३१७४. [1]) Thus A; C supplements तं. ३१७७. [1]) Emended; A °दत्तोद्घातोऽधिरोह. ३१७८. [1]) Emended; A °स्कोशान्वि°. ३१७९. [1]) Emended with C; A त्रयोदश. ३१८१. [1]) Emended; A इन्दुवंशा°. ३१८३. [1]) Emended; A मुखरागमनो°. ३१८४. [1]) Emended with C; A °क्रमं.—[2]) Emended; A विशत्येवं. ३१८५. [1]) Doubtful emendation; A स त्वादिक्षुर्नरपतिराज्ञाम्बेत्योऽभ्य°. ३१८६. [1]) Emended; A विशत्यु°.—[2]) Thus A; C supplements सदा.

चिरात्ताडितमर्मेव समाश्वास्यैक्षताथ सः । मध्यस्थानां स्थितं स्थैर्ये[1] दाक्षिण्यादोष्ठयोः परम् ॥३१८७॥
प्राणान्मुमुक्षोस्ते रूक्षभाषिणस्तस्य सान्त्वनैः । मन्दत्वं विक्रियां निन्युर्विनयानतमौलयः ॥३१८८॥
आचारं चैनमक्लिष्टमपि न्याय्यं वचस्विनम् । न कोपि प्रतिवाक्येन शक्यं जेतुममन्यत ॥३१८९॥
3190 अथ स्वान्तस्थितस्वामिवैवर्ण्यं दर्शयन्निव । दशनांशुघनैर्धन्यो धीरः स्निग्धमभाषत ॥३१९०॥
पद्धतिं राजधर्माणां सदाचारे स्थितां च ते । जानतोपि कथं मोहः क्रमायातेषु वस्तुषु ॥३१९१॥
किं संधिः सोभिधीयेत यत्र संधेयदर्शनम् । अकृत्वा गम्यत इति प्राज्ञो कथमजीगणः ॥३१९२॥
अनद्यतनभूभर्तृसुलभं[1] भूभुजं[2] तव । ज्ञात्वा सत्त्वोज्ज्वलं शातिधर्मजातप्रवर्तनम् ॥३१९३॥
नास्य दम्भस्मयस्तम्भाप्रीतिस्थैर्यखलोक्तयः[1] । आदरादर्शयेद्यावो निःश्वासस्यापि काः श्रियः ॥३१९४॥
3195 अस्योपजीवनाद्या भीः साम्राज्यासादनाच्च सा[1] । प्रकाशो बिम्बितो[2] योर्काद्दीपस्याज्ज्वलतः स किम् ॥३१९५॥
निर्वाणगोष्ठीनिष्ठत्वं शमिनामाश्रयेषु यत् । तत्पर्ययस्य राजर्षेः --[1]म्बुन्दानुबन्धिनः ॥३१९६॥
एवं स्वगृहसंप्राप्यप्रायोनिःश्रेयसस्य ते । स्थानैः श्रियः समाप्याथ किं स्यादन्यैर्महीधरैः ॥३१९७॥
मुग्धा न केवल परे गणिताः फणिभ्यः कालानुकूलनिजकुण्डजलस्यजो[1] ये ।
क्षिप्यन्ति चन्दनतरूङ्शिशिराश्रिताश्च माप्यशीतमनघ[2] विवरं विशन्ति ॥३१९८॥
प्राणोपकरणं राज्ञो राज्ञी राजात्मजाश्च ये । तद्धिते यदनौचित्यं तेषामौचित्यमेव तत् ॥३१९९॥
3200 स्वश्लेष्मवैकृतं पाय इव क्वथितशीतलम् । अनुतापेन ते कृत्यं भूयो वैरस्यमेष्यति ॥३२००॥
तथा समर्थां सामर्थ्यादप्रत्याख्याय[1] भारतीम् । कुण्ठशाब्दलवस्तस्थौ प्रस्थानार्थं स मन्थरः ॥३२०१॥
पथि संमथितस्तोकान्यासतव्यान्वीक्ष्य सर्वतः । अजायताथ संरुद्धकृत्यसाधुत्वदार्ढ्यधीः ॥३२०२॥
पदातिचरणक्षुण्णरेणुव्याजाददृश्यत । वसुंधरातलं बद्धसंधीव नभसा समम् ॥३२०३॥
दध्यौ ----[1] भोजः कञ्चित्संप्राप्नुयां नृपम् । कच्चिदमुष्य विद्येत दर्शनं विप्रलम्भकैः ॥३२०४॥
3205 आराधन --[1]धाम्नि नान्तरान्तरितो विटैः । स्वामिनां क इवाप्नोति गुणाविष्करणक्षणम् ॥३२०५॥
शीतोपचारकरणाद्दयितो भवेयमौर्वार्दितस्य जलधेः प्रसृतं धियेति ।
स्रोतो हिमाद्रिपयसो विनिपात एव पासीकृतं तिमिभिराहत ---[1] स्यात् ॥३२०६॥
इत्यादिचिन्तास्तैमित्यात्पुरःक्षोभाच्चलक्षयम् । सैन्यस्य दृढाध्वतयाबुद्धासन्नं नृपास्पदम् ॥३२०७॥
नातिप्रांशुं नातिकृशं सूर्यांशुश्यामलाननम् । सरोजकर्णिकागौरं शिथिलश्मश्रुविग्रहम् ॥३२०८॥
ककुद्मत्ककुदोत्सेधिस्कन्धमायतवक्षसम् । दम्भुजानतिदीर्घेण व्यक्तगण्डगलोन्नतिम् ॥३२०९॥
3210 उन्नसं पक्वबिम्बोष्ठं विस्तीर्णाग्रुल्वणालिकम् । तिर्यग्विप्रेक्ष्य ---[1] धीरमन्थरगामिनम् ॥३२१०॥
समाहितांशुकोष्णीष --[1] श्रीखण्डव --[2]म् । सीमन्त --[3]नुम्बिन्या रेखया चन्द्रगौरया ॥३२११॥

---

३१८७. [1]) Emended with C; A स्थैर्य. ३१९३. [1]) Emended; A सुलभे.—[2]) Emended; A भूभुजां. ३१९४. [1]) Emended with G (*sec. manu*); A °स्तम्भप्री°. ३१९५. [1]) Emended with C; A सः.—[2]) Emended with C; A बिम्बतो. ३१९६. [1]) Thus A; perhaps read राजर्षेर्विद्वद्वृन्दा°; C °र्वैजर्जमान् वृन्दा°. ३१९८. [1]) Emended with C; A °जल-जो.—[2]) Emended with C; A °शीतम-घं. ३२०१. [1]) Doubtful emendation; A समर्थासामर्थ्यो-प्रत्या°; C °सामर्थ्याच प्रत्या°. ३२०४. [1]) Thus A; C supplements विज्ञतरो. ३२०५. [1]) Thus A; C आराधयन् प्रभुं धाम्नि. ३२०६. [1]) Thus A; C °हतमेव तत् स्यात्. ३२०७. [1]) Emended; A °सन्नृपास्पदम्. ३२१०. [1]) Thus A; C °प्रेक्ष्यमाणास्यं. ३२११. [1]) Thus A; C °ष्णीषमौलिं.—[2]) Thus A; C श्रीखण्डवर्तुलं.—[3]) Thus A; C सीमन्तस्थानचु°.

अथावसन्नं हर्म्यस्थसचिवैः परिवारितः¹ । -----²मात्मानं समवैक्षत पार्थिवः³ ॥३२१२॥ कुलकम् ॥

शीतिविस्फारितदृशा राज्ञा दृष्टस्ततः सभाम् । सोऽध्यारुरोह संबाधां कौतुकोत्कन्धरैर्जनैः ॥३२१३॥

स्पृष्ट्वा पादौ निषण्णोऽथ नृपस्याग्रेऽथ पाणिना । क्षुरधेनुं पाणिबद्धामासनाग्रे समार्पयत्¹ ॥३२१४॥

पाणिं सफणिवल्लीकं चिबुकाग्राकुलिद्वयम् । ततोऽस्य चिबुकोपान्ते विन्यस्यन्पार्थिवोऽब्रवीत् ॥३२१५॥ 3215

न त्रिपृष्ठ गृहीतोऽसि साधुनापि विलम्बसे । तदङ्ग कस्माद्धर्मः शस्त्रमेतत्त्वयार्पितम् ॥३२१६॥

व्यजिज्ञपत्स भूपालं देव शस्त्रस्य धारणम् । स्वामिसंरक्षणं स्वस्य परित्राणस्य कारणम् ॥३२१७॥

देवे निजप्रतापाग्निगुप्तसप्तसरित्पतौ । सेवावकाशो विरलः स्वच्छस्त्रस्यापि दृश्यते ॥३२१८॥

लोकान्तरेऽपि शरणं चरणाश्रयणं प्रभोः । तथात्र लोके किं कार्यं प्राणोपकरणैः परैः ॥३२१९॥

राजा जगाद तं स्वस्पर्धाबन्धेऽधुना भवान् । निर्व्यूढकृत्यो वादीव कृत्यं नो वर्तते परम् ॥३२२०॥ 3220

भोजो बभाषे दाक्षिण्यजन्मायाधुना प्रभोः । दृष्टास्ते मया किंचिदोपचारार्थमुच्यते ॥३२२१॥

किं ते न चिन्तितं दुष्टं किं किं न कृतमप्रियम् । यदसिद्धं न तच्छक्तिमगादित्यवधार्यताम् ॥३२२२॥

किं न मद्वान्वये कश्चित्कारणेष्वधिवितो भवान् । विद्मः स्मानन्यकुल्यं मान्ये वयं चर्मचक्षुषः ॥३२२३॥

यदा यदा देव वाञ्छामकार्षं भवदप्रिये । भूमिस्तदा तदा भूत्वा भूत ---¹ भूयसः ॥३२२४॥

यावत्कवीनां निर्भाति प्रतिभानेन भास्वरः । देवाभवतः प्रत्यक्षः प्रतापस्तावदस्तव ॥३२२५॥ 3225

न शेखरे न प्रहरे न हरेऽप्युज्झितो¹ मया । प्रालेये भूभृतः कुञ्जे संज्वरस्त्वत्प्रतापजः ॥३२२६॥

ततः प्रभृत्यवनतिप्रणयः शरणैषिणः । सिद्धः संध्याविधिर्ध्यस्यादेव दूरस्थितेर्न मे² ॥३२२७॥

अथाभेदाभिलाषेण पापार्थस्किल चेष्टितम् । स्फुरत्तामाश्रकव्यक्ते न तु तद्विग्रहाग्रहात् ॥३२२८॥

स्वत्संबन्धाविमे दिक्षु प्रतीक्ष्याः क्ष्माभुजां¹ वयम् । सद्गाङ्गाम्भसः काचकुम्भसंभावना भुवि ॥३२२९॥

अद्यापि द्योतते शार्ङ्गराजयेन दिगन्तरे । तत्संतानभवोऽनन्तः समूहः क्षत्रजन्मनाम् ॥३२३०॥ 3230

त्वय्यर्पिते पार्वतीयभूभृत्सङ्केऽप्यदादि¹ नः । कदलाशामनु --मुखैः² खिदोन्मुखैरभूत् ॥३२३१॥

इतीदृशीभिः ---² प्रमाणमथ वा प्रभुः । इत्युक्त्वा भूपतेर्मूर्ध्ना सोऽपृक्ताचरणौ पुनः ॥३२३२॥

प्रणामसंभ्रमभ्रस्तोष्णीषपट्टशीर्षे ततो नृपः । तस्योत्थितस्य स्वशिरोवाससा समवस्थयत् ॥३२३३॥

स्वां तां च धात्रीं तत्पश्यतामुत्सङ्गे सान्त्वयन्व्यधात् । तस्यासंक्षोभगाम्भीर्यसमूहे च निबोधिनम् ॥३२३४॥

दत्ते¹ मया विभूतिं वा स्वमेते पूजयाथ वा । न शस्त्रमद्वैमुख्यं कार्यं मच्छासनं त्वया ॥३२३५॥ 3235

अवन्ध्यशासने --¹स्वमुवभाति² ते व्यधात् । शकर्यां³ राजानुगत्येव बभ्रिस्त्वाङ्के स कालवित् ॥३२३६॥

ततो निर्यन्त्रणस्यास्य नर्मणः सान्त्वनस्य च । चिरसेवीव तत्कालं राज्ञोऽजायत भाजनम् ॥३२३७॥

---

३२१२. ¹) Emended; A °रितम्.—²) Thus A; C अवकुण्ठनमात्मानं.—³) Emended with C; A पार्थिवम्. ३२१४. ¹) Emended with C; A समर्पयत. ३२१९. ¹) Emended; A न [illegible]. ३२२३. ¹) Emended with C; A विद्म स्मा. ३२२४. ¹) Thus A; C तदा भूता यावं कम्पस्य भूयसः; perhaps read भूता भूः प्रकम्पस्य भूयसः. ३२२६. ¹) Emended; A °ज्झितो. ३२२७. ¹) Emended; A संध्याविधि°.—²) Emended; A दूरस्थिते न. ३२२८. ¹) Emended with C; A पा[illegible]र्थस्किल. ३२२९. ¹) Emended; A क्ष्माभुजा. ३२३०. ¹) Emended; A [illegible]°. ३२३१. ¹) Thus A; doubtful.—²) Thus A; C कदलाशामनुमौनावलैः खे°. ३२३२. ¹) Emended with C; A इतीदृ°.—²) Thus A; C supplements स्तुतिभिः. ३२३५. ¹) Emended; A दत्तं. ३२३६. ¹) Emended; A °शासने—; perhaps read अवन्ध्यशासने राज्ञीस्वनु°; C °शासनेऽशासनी-स्व°.—²) Emended; A °स्वमुवति ते; the *lacuna* not indicated.—³) Emended; शकर्यां.

अन्वस्माभिष्टो धन्योऽथ स्वार्चाम--[1]बन्धुती । कृतप्रणामो भूपाल स्वगुणाकर्णनं विना ॥३२३८॥
न प्राणा द्रविणं नाथ गण्यं निर्धिक्रिया पुनः । सत्क्रिया स्वामिनोऽप्यर्थे[1] मस्मात्पार्थिव चिन्त्यताम् ॥३२३९॥
3240 तथापि कथ्यमानं तत्र स्यात्संभावनाभुवि । यदस्मिं[1]धिन्त्यतेस्माभिरिति भूपो व्यभाषत ॥३२४०॥
क्षणमुच्चावचां चर्चां विरचय्य निशां पतिः । भोजेन सार्धं शुद्धान्तं रल्हादेव्यास्ततो ययौ ॥३२४१॥
कृतप्रणामस्तां वीक्ष्य सौजन्यादिगुणोज्ज्वलाम् । स राजपारिजातं तं मेने कल्पलतायुतम् ॥३२४२॥
मान्योऽयं देवि सौजन्यज्ञातेयाभ्यामिहागतः । विशिष्यतेऽसौ पुत्रेषु क्ष्माभृ[1]द्योऽपेर्यभाषत ॥३२४३॥
सभाजनाय सौजन्यनिधिर्भोजाम्बितस्ततः । उदूढकार्यभाराणां दाराणामप्यगादृशाम् ॥३२४४॥
3245 अभाणीन्निपुणा राज्ञी भोजं राज्ञा सहागतम् । अधुनैव नृपस्यात्मः संवृत्तोऽसीति[1] सस्मितम् ॥३२४५॥
लज्जास्मितमुखी पत्युः प्रणत्या स्वागतोक्तिषु । ददस्येवोत्तरं भोजं निर्दिशन्त्यप्यभाषत ॥३२४६॥
आर्यपुत्र न विस्मार्यं प्रत्याख्यातामन्त्रितम् । मानैकशरणस्यास्य ज्ञातिप्रीतिप्रवर्तनम् ॥३२४७॥
पूर्वोपकर्तृ सलिलं वृक्षावस्यूशतोऽन्वहम् । पश्चान्स्वकुलपद्मानां युक्तं जेतुं भवादृशाम् ॥३२४८॥
कार्यकृच्छ्रेषसत्त्वानाममुष्यागमनं विना । सिध्येदीप्तस्यसंरक्षा नेह प्रत्यागमश्च नः ॥३२४९॥
3250 उदीपे[1] रक्षतस्तीरं शरीराभयिणी भवेत् । ध्रुवं वनस्पतेर्वी[2]रुत्संनिपातानुपातिनी ॥३२५०॥
पतिगत्यनुगामित्वं प्राणानां परिचिन्तितम् । तथा कार्यं यथा न स्यात्कातव्यस्यान्यथात्मनः ॥३२५१॥
राजा जगाद तां देवि सर्वकर्तव्यसाक्षिणी । अन्यथाप्रतिपत्त्वं[1] मे स्वमप्यस्य[2] न मन्यसे ॥३२५२॥
निगृहीतवतो दुष्टौ सुज्जिमल्लार्जुनावपि । निस्तापं मम नाद्यापि प्राप्तानुशयमाशयम् ॥३२५३॥
अथ राज्ञार्थितः स्थातुं परार्ध्ये धाम्नि सानुगः । भोजो नामन्यतान्यत्र राजधान्याः[1] स्थिरां स्थितिम् ॥३२५४॥
3255 चिरदूराश्रयनिर्गतिप्रभावाप्रचुरदर्शनैः । आराधनं धराभर्तुरसाध्यं ध्यातवानिह सः ॥३२५५॥
रक्षितॄनमहीक्ष्मापास्थिरं[1] च समकल्पयत् । [2]अनया - नृपं कार्या न सुराराधनागमे ॥३२५६॥
विज्ञाय भावं प्रीतेन राज्ञा दत्तं ततो गृहम् । सर्वोपकरणापूर्णं राजधान्यन्तरेऽभजत् ॥३२५७॥
राजापि ममतास्फीतप्रीतिभिः स्वैः परैस्तथा । उपासितस्तत्र रतिं चिराभिन्न इवाययौ ॥३२५८॥
भोगवेलोचिताश्चर्यदर्शनादौ नृपोऽपि तम् । प्रियं पुत्रमिवास्मार्षीद्दूतैः पार्श्वं निनाय च ॥३२५९॥
3260 जमाह दक्षिणे पार्श्वे भुञ्जानं ज्ञातिगौरवात् । स्पर्शास्वादितभोज्यादिदाने नैव व्यवर्जयत् ॥३२६०॥
अकृत्रिमं तथा स्नेहमुवाह ---[2] यथा । लज्जितं ज्ञातिवत्सर्गिमस्तद्द्वा[3]लापस्यकैः समम् ॥३२६१॥
तामेवालम्बत व्यक्तां[1] सोऽपि वृत्तिं यथा यथा । राजा सपरिवर्होऽपि विश्रम्भमविगर्हितम् ॥३२६२॥
आसन्नाभ्यन्तरा भिन्ना ये द्वैधे तानदर्शयत् । राज्ञां[1] विरक्तिं स्वस्यारिबाहुल्यं च व्यसर्जयत् ॥३२६३॥

---

३२३८. [1]) Thus A; C स्वार्चामल्पबन्धुती. ३२३९. [1]) Emended with C; A स्वामिनो॰र्थे. ३२४०. [1]) Emended; A यदास्मिं°. ३२४३. [1]) Emended with C; A क्ष्माभृद्योपेरय°. ३२४५. [1]) Emended; A संवृत्तोसीति; C संवृत्तोऽस्मीति. ३२५०. [1]) A, gloss उदीपः प्रतिवृत्त्या अत्युद्रिक्तजलागमः.—[2]) Emended with C; A °वीरुत्सन्नि°. ३२५२. [1]) Emended; A प्रतिपत्त्वं.—[2]) Emended with C; A स्वमप्य॰. ३२५४. [1]) Emended; A °धान्यां. ३२५६. [1]) Emended; A °क्ष्मापास्थिरं.—[2]) Thus A; the text is here evidently corrupt; C अनयास्तं नृपं; G (*sec. manu*) अनुयान्तं नृपं कार्यानुसुराराधनागमे. ३२५७. [1]) Emended with C; A दत्तं. ३२६०. [1])—[1]) Written by $A_{2}$ on new paper. ३२६१. [1])—[1]) Written by $A_{2}$ on new paper.—[2]) Thus A; C supplements धन्यको.—[3]) Emended; A° स्तद्वालापस्यकैः. ३२६२. [1]) Conjectural reading; A तमेवालम्बत व्यक्तिं. ३२६३. [1]) Emended; A राज्ञां.

अकृत्रिमाल्पवाधानात्करणानां सभान्तरे । न मन्दभाज्जडो नापि धृष्टो नापि बकव्रतः ॥३२६४॥

प्रमादस्खलिते हीनातिरिक्तत्वे च भूपतेः । कार्ये नावदधे क्षुद्रः कविरेव महाकवेः ॥३२६५॥ 3265

न विक्रमकथासक्त ----¹व्यकत्थत । प्राग्वृत्तमन्तरा पृष्टः सोपस्कारं च नाभ्यधात् ॥३२६६॥

वि--कारम्भोः साम्यसकुल्यत्वादिवादुभिः । धीराधृष्टैर्दृष्टिपातैरपुनर्भाविणो व्यधात् ॥३२६७॥

तथा स्पृष्टोऽप्यनुत्तानाशयोऽभूद्वचनादितुम् । न शेकुस्तं यथा आत्मनर्मविस्पिशुनादयः ॥३२६८॥

क्षणेष्ववसितालोकक्षोभादिविधुरादिषु । प्रा--¹वसथं गच्छन्त्यास्कुर्²ं कामपि नातनोत् ॥३२६९॥

यथा यथास्य विस्रम्भाद्भूपोऽभूच्छिथिलाग्रहः । तथा तथैव सिद्धोऽश्व इव नाधावदुद्धतम् ॥३२७०॥ 3270

सदैवाग्रेसरोऽन्यत्र पश्चाद्युद्धपदेऽभवत् । अनिषिद्धोऽपि शुद्धान्तमन्त्रागाराद्यगाहने¹ ॥३२७१॥

विश्रम्यौपयिकाद्यभिप्रार्थनमादरात्स्वयम् । दूरीचक्रे परापेक्षां शश्वत्संशयिताशयः ॥३२७२॥

अना---समये तस्या---¹रक्षिणः । न स्वप्नवृत्तमप्यासीदप्रावेद्यं महीभुजे ॥३२७३॥

मन्त्र्यान्तःपुरिकादीनां परस्परविगर्हणम् । नात्रणयद्विस्मृतिं च दुष्टत्वमभिधानयत्¹ ॥३२७४॥

सचेतनोऽपि दुर्मर्मगोष्ठीष्वनुरणन्नयः । अवदत्स्फुरदप्यन्तर्भिटानां नाम लाघवम् ॥३२७५॥ 3275

एवं शुद्धानुभावस्य तस्य कृत्येन कृत्यवित् । पुत्रेभ्योऽप्यधिकां प्रीतिं स्निग्धन्भेजे¹ क्रमान्नृपः ॥३२७६॥

कलिकालमहीपालदुस्तरः सिंहभूभुजा । सोऽयं गोत्रपरित्राणे नवः सेतुः प्रवर्तितः ॥३२७७॥

इत्थं विश्रावितादोषोपद्रवस्लिष्टकल्मलतः । अमि--¹मपि स्वास्थ्य--² भूभृदचिन्तयत् ॥३२७८॥

असौ हि निर्हिमोर्वीभृन्मार्गे काले पलायनम् । ज्ञात्वा सत्त्वस्य दुःसाध्यं बद्धं ध्यायन्व्यलम्बत ॥३२७९॥

अतः सुमेधा यात्रायां यावत्क्षणमपैक्षत । सञ्जपालेनाविचारात्तावत्प्रारम्भि धावनम् ॥३२८०॥ 3280

अल्पाधिष्ठानसुभटः स देवसरसोद्भटैः । बहुभिः सहितः सैन्यैर्मार्ताण्डे निदधे पदम् ॥३२८१॥

निर्निरोधप्रवेशः स प्रदेशः परिपन्थिनाम् । आसाद्य योधा निःसारा वर्षाश्चेति विवेद सः ॥३२८२॥

त्रिंशत्कानुचरा युद्धसंनिहितसायकाः । तेन सार्धं विदधिरे न चाहीयन्त पौरुषम् ॥३२८३॥

निःसीमसैन्यसहितो¹ ऽलवन्योन्यत्र डामरे । तत्र सर्वाभिसारेण धावतो युयुधे क्रुधा ॥३२८४॥

लुण्ठितद्रविणापूर्णास्ते देवसरसौकसः । सर्वे ततः सञ्जपालं विधुताः परिजह्रिरे¹ ॥३२८५॥ 3285

द्विषत्संवर्तपर्यन्त्यां सर्वत्र कुण्ठितेऽभवन् । अधिष्ठान¹भटा एव कुलशैला इवोद्धताः² ॥३२८६॥

ते तीक्ष्णतीक्ष्णतरणैः सोढारातिरुपश्चिरम् । बहुसिंहवन्तोऽन्यांस्तत्र तत्राहवे हताः ॥३२८७॥

¹क्षतेषु युधि सर्वेषु विन्ध्यानैर्मण्डलं निजैः । भूरेषु तत्र मार्ताण्डोऽप्यासीदविरलव्रणः¹ ॥३२८८॥

रराजाजौ साञ्जपालिर्गर्यापालो हतेषु यः । त्रिषु वाजिषु चातुर्यात्पदातिर्नोपलक्षितः ॥३२८९॥

---

३२६६. ¹) Thus A; C supplements °सचवानार्थैः स्वं व्य°. ३२६७. ¹) Thus A; possible emendations would be विकटज्याकारम्भोः or विगर्हकारम्भोः; C विचारकारम्भोः. ३२६९. ¹) Thus A; C प्रासोऽस्याव°.—²) Emended; A गच्छच्छ्-कुं. ३२७१. ¹) Emended with C; A °गाहमे. ३२७२. ¹) Conjectural reading; A प्रार्थन-वरस्वयम्; C °प्रार्थनः स वरस्वयम् ३२७३. ¹) Thus A; C अनारतसमये तस्य न बहुः पथि रक्षिणः. ३२७४. ¹)—¹) Written by A₃ on new paper. ३२७६. ¹) Emended with C; A भीजे. ३२७८. ¹) Thus A; C अभिप्रायमपि स्वास्थ्यहेतुं भू°. ३२८४. ¹) Emended with C; A निःसीम सै°. ३२८५. ¹) Emended; A °जहिरे. ३२८६. ¹) Thus corr. by a later hand from A₁ अधिष्ठानि भटा.—²) Emended with C; A इवोद्धताः. ३२८७. ¹) Emended with C; A बहुभिह°. ३२८८. ¹)—¹) Written by A₃ on new paper. ३२८९. ¹) Emended; A सञ्जपालि°.—²) Emended; A गमपालः; cf. viii. 3322.—³) Emended; A वाजिष्वपा°; C वाजिष्वपा°.

3290 तस्मायम्योपलब्धाजिर्जर्जरस्तद्भुजः शिशुः । निनाय विस्मयं वीरान्दृष्टासंख्यमहाहवान् ॥३२९०॥
दक्षिणं दोर्न तस्यैके यद्वामं कम्पनापतेः । मदेभांस्तापयत्यर्कः कुर्याद्भरद्वाभिधुः ॥३२९१॥
स धावन्वाजिनाराजवेकदोःस्फुरितायुधः । सधूमदण्डो[1] शकाभिः सपक्षेवाग्निर्वं स्थितः ॥३२९२॥
तं वैरितुमुले वाणव्रणभङ्गेष्ववशी पुनः । इष्टावलोकयद्वाजी ‒ ‒ जांबद्धपद्धतिः ॥३२९३॥
धर्मगौरवभूपृष्ठकाठिन्याघातपीडितः । स विलक्षो द्विषन्मध्यात्तनयाभ्यां विनिर्हृतः ॥३२९४॥
3295 कटके सर्वतो नष्टे मार्ताण्डमाङ्गनान्तरे । विरोऽवसासि क्षिप्त्वा तं तावपासरतां ततः ॥३२९५॥
तत्रस्थं ‒ ‒[1]मा क्ष्माभृत्प्रहितः पृथुलैर्बलैः । तावद्भिः प्राप्यमप्याशु डामरं पिण्डितं व्यधात् ॥३२९६॥
क्ष्मापाले विजयक्षेत्रं प्राप्ते कोटितवेष्टनः । सज्जपालो लवन्यस्य वसतीर्निरदाहयत् ॥३२९७॥
स तादृगपि भूपाले क्रुद्धे[1] वक्रीकृतभ्रुवि । अदरिद्रो गिरिद्रोणीश्रेणिभूर्मूलभाजनः ॥३२९८॥
संवृत्तो निःसहायश्च परिग्रहबहिष्कृतः । आपत्तुलमपाण्डित्यभृत्योपालम्भभाजनम् ॥३२९९॥
3300 निकृत्तकण्ठाखोथ क्ष्मापकोपकपेर्व्यधात् । निरालम्भतया ‒ ‒[1] स स्वशीर्षफलार्पणाम् ॥३३००॥
रड्डादेवीतनूजानां ज्यायांसं गुल्हणाभिधम् । श्रीमांल्लोहरराज्येय[2] क्ष्मावृषा सोऽभ्यषेचयत्[2] ॥३३०१॥
षट्[1]समहायनो[1] राजतनयः स वयोऽधिकान् । चूताङ्कुरो जीर्णतरुनिवेशानजयद्गुणैः ॥३३०२॥
अभिषेक्तुं सुतं देव्या यातायाः क्ष्माभुजो व्यधुः । शिरःशोणाश्मकिरणैश्चरणौ यावकारुणौ ॥३३०३॥
तत्राभिषिक्ते वसुधामुमाबमहशोषिताम् । देवीभावाभिषेकार्थमिवासिञ्चन्पयोमुचः ॥३३०४॥
3305 भूयोपि राजवदनो विग्रहोत्पादनोत्सुकः । अमन्दमवचस्कन्द जयचन्द्रं नृपाज्ञया ॥३३०५॥
नागभ्रातृव्यसहिता गार्गेरनुप्रवेशिनः । पश्चात्प्रसर्पिणीः सेनाः सोवधीत्संकटेध्वनि ॥३३०६॥
गार्गिः परिभवम्लानाननं तिष्ठन्दिनैस्ततः । नागभ्रातृसुतापण्यमन्धाक्षोष्ठकं[2] मृधे ॥३३०७॥
दुर्गमत्वादनाक्रान्तमन्यैर्वेगात्प्रविश्य च । दग्ध्वा च दिन्नाग्रामं स निरगाल्लघुविक्रमः ॥३३०८॥
तथापि राजवदनो न शौर्यात्पर्यहीयत । न संदधे न चुक्रोध शक्यमस्य विनिर्गमम् ॥३३०९॥
3310 अहन्यहनि हीनाभिः सेनाभिर्व्यपतन्नृपे । जयचन्द्रमुखान्युद्धदसुखान्यग्रधीभवत् ॥३३१०॥
क्ष्मानायकोथ निःसीमनखबाहुप्रसारणः । रणान्तरेऽथ तं तीक्ष्णैर्गूढन्यस्तैरघातयत् ॥३३११॥
तन्मुण्डगण्डलेखेन लुठता खण्डशः कृतः । झटिति त्रुटितः स्वास्थ्यविटप्यङ्कुरणोन्मुखः ॥३३१२॥
पृथ्वीहरकुलाच्छेदस्वच्छधा मेदिनीपतिः[1] । अवधील्लोठनमपि कर्णदण्डप्रयुक्तिभिः ॥३३१३॥
एकवारं वेष्टितोपि रक्षितस्तिक्ककेन सः । भूमिभृद्भीतिपाशस्य निपातेनाभ्यवर्तत[1] ॥३३१४॥
3315 मल्लकोष्ठक्षुरजन्यसङ्घचन्द्रादयोभवन् । जीवन्मृताश्च शान्ताश्च दारिद्र्योपद्रवार्दिताः ॥३३१५॥

३२९०. [1]) Emended with C; A °स्तूपसद्भुज°. ३२९२. [1]) Emended with C; A °दण्ड.—[2]) Emended with C; A °ग्राविव. ३२९३. [1]) Thus A; C तस्याावद्ध°. ३२९९. [1]) Thus A; C कम्पनात्मा°. ३२९८. [1]) Emended with C; A कुद्धो.—[2]) Emended with C; A °भ्य‒मूल°. ३३००. [1]) Thus A; C supplements तस्य. ३३०१. [1]) Emended; A श्रीमाल्ला°.—[2])—[2]) Written by A₃ on new paper. ३३०२. [1])—[1]) Written by A₃ on new paper. ३३०७. [1]) Emended with C; A °सुतामस्यामव°.—[2]) Comp. viii. 2996. ३३०८. [1]) Emended; A स. ३३१०. [1]) Doubtful; thus C; A °न्यवयधीभवत्. ३३१२. [1]) Conjectural reading; A °विवोंस्वकुरौ° ; C °विरास्यंकुरणो°. ३३१३. [1]) Emended with C; A °पतेः.—[2]) Comp. regarding this name the note to viii. 2496.—[3]) Emended; A कर्णचए°. ३३१४. [1]) Emended with C; A °भ्यवर्तिता. ३३१५. [1]) Thus A; misread °वडुचन्द्रा° in R C; cf. वडुचन्द्रस्य viii. 648.

अविचिन्त्योत्पलक्षोणिभृतः प्राणान्विनश्वरान् । ऐश्वर्यैकरिपूबल्याहनिर्व्यूढव्यवस्थिती ॥३३१६॥

मठेऽमुष्मिन्कोशाल्यं तत्पुत्रा जाम्बवाप्रते । कुलोद्गतो निहितवान्सिंहदेवो व्यवस्थितिम् ॥३३१७॥युग्मम्॥

सुस्सापिहारं पैतृव्यं पितुर्देवगृहत्रयम् । तत्रार्धसिद्धमासाद्य परिपूर्णं व्यधान्नृपः ॥३३१८॥

स एव ग्रामान्संख्यसीमहापणसमर्पणैः । निर्दोषपारिषद्यादिविद्यार्थिभोज्यधीर्व्यधात् ॥३३१९॥

अवरोधेन्दुवदनां मृतामुद्दिश्य चन्द्रलाम् । मत्स्यथापि मठोनूनभीहारैर्वारितातिथिः ॥३३२०॥ 3320

रुद्रो नगरनिर्दाहैः सोऽपि सूर्यमतीमठः । पूर्वाधिकोपकर्षेण तेनैव निरमीयत ॥३३२१॥

संजाते सज्जपालस्य ततो लोकान्तराश्रये । कम्पने निदधे राजा गयापालस्तदात्मजः ॥३३२२॥

विपाकसुकुमारोऽपि दुःसहः स्ननुनाभवत् । विस्मारितः स सौम्येन शरद्भानुरिवेन्दुना ॥३३२३॥

ग्रीष्मोष्मदोषविषमेष्वविशेषभूतैर्मेघोदये तटतरोस्तटिनीप्रवाहः ।
पश्यत्स्वकाण्डतटविद्रापतनेन मार्गं नार्गासति स्वसलिलस्य विभूतिलाभम् ॥३३२४॥

आ भिक्षुक्षपणाद्राजभञ्जनादपि भूभुजः । विधुरे कार्यभाराणां योऽभूद्धुरः परम् ॥३३२५॥ 3325

तस्य तस्मिन्नृपरते क्षीणप्रक्षीणकण्टके । स धन्योऽनन्यसामान्यमिमा प्रमयमाययौ ॥३३२६॥

ताम्बूलमायात्रिकतां नीत्वामुनामयानिव । आर्पिपन्मधुरावहं जीर्णं यस्य निजः सुतः ॥३३२७॥

स जगज्जीवितेनापि रक्षणीयः क्षमापतिः । पदे पदे विपन्मग्नः प्रजोद्धरणधीरधीः ॥३३२८॥

व्याधितस्य विनिद्रोऽपि संसक्रान्त्यक्लेशशुम्भिः । नान्तक्षणे तस्य पार्श्वीकृतक्रोधावलन्नृपः ॥३३२९॥

नियमजस्यामात्यस्य स्वकर्मविपरीतता । तस्य कांचित्क्षणं जाता जनजीवितदा भवे ॥३३३०॥ 3330

भूभुजामपि मान्धातृमुखानां निधनेन याः । दुःखं बभुः प्रजास्तासां समभावि तदा सुखम् ॥३३३१॥

द्वैराज्योपप्लुते राष्ट्रे नवस्य नृपतेरभूत् । अव्याहतं यत्साचिव्यं तस्य सर्वाभिषङ्गभित् ॥३३३२॥

कालो बली व्यवहृतेर्ननु तद्वशेन पूर्वापराचरणविस्मरणे न कस्य ।
शक्तिः क्षितेर्वहनकर्मणि योग्यतायां निर्धारणे मुरजितस्तु वराहतायाम् ॥३३३३॥

नगराधिकृतो भूत्वा सुज्जेर्निर्वापिते पुरा । चिरभक्तां यो देशस्याव्यवस्थां न्यवारयत् ॥३३३४॥

भट्टः क्रयेषु दीनारव्यवहारोऽव्यवस्थया । निगृह्य तं भ्रंशकार्येनिर्वितण्डः प्रवर्तितः ॥३३३५॥ 3335

परिणीताकुमारीलभ्यंशो गृहपतेरभूत् । दण्डप्रवृत्तिर्या तेन सा विचार्य निवारिता ॥३३३६॥

एकान्ततो हितो भूत्वा विद्यामेवं पुनर्व्यधात् । नगराधिक्रियां लब्ध्वा स एव परिपीडनम् ॥३३३७॥

वराभिर्नर्तकीभिश्च परिणीतगृहस्थिती । संप्रयुक्तान्कथ्यमानान्हठेनादण्डयद्बहून् ॥३३३८॥

---

३३१६. 1)—1) Written by $A_3$ on new paper.—2) Emended with C; A ऐश्वर्यं क°. ३३१७. 1)—1) Written by $A_3$ on new paper.—2) Emended; A° स्थितम्. ३३१८. 1)—1) Written by $A_3$ on new paper.—2) Emended with C; A स्वसा°; cf. viii. 248.—3) Emended with C; A पैतृव्य.—4) Emended with C; A —नृप. ३३१९. 1) Emended with G (*sec. manu*); A ग्रामसा°. ३३२०. 1) Emended with C; A °वदनं.—2) Thus A, R; $A_3$ चन्द्रलाम्; C चन्द्रलाम्. ३३२१. 1) Emended with G (*sec. manu*); A वृद्धो नगरनिर्मोह (वृद्धो written by $A_3$); cf. viii. 1193. 1528. ३३२३. 1) Emended; A सौम्येन. ३३२६. 1) Emended; A धन्यो मान्यसा°. ३३२७. 1) Thus A; perhaps read नीत्वासुता°.—2) Emended with C; A आर्पिपन्मधु°. ३३२९. 1)—1) Written by $A_3$ on new paper. ३३३०. 1)—1) Written by $A_3$ on new paper. ३३३२. 1) Emended with C; A अव्याहतं. ३३३३. 1) Emended with G (*sec. manu*); A निर्माणे. ३३३५. 1) Doubtful emendation: A प्रवर्तेत; C प्रवर्तित. ३३३७. 1) Emended; A पीडनम्. ३३३८. 1) Emended with C; A° वराभि — —कीभिश्च.—2) Conjectural reading; A परि — तगृ°; C परिणीतगृ°.

किंवो---[1]लेशानां तुषाणामिव चिन्तनैः । अङ्कोह्लालोभयोर्भूमिर्न तादृगपरोभवत् ॥३३३९॥

3340 भिक्षुमल्लार्जुनौ[1] कालानुवृत्त्याभितवानपि । नासौ[2] अहो[3] स्वामिहितं[4] न तौ ---[5] नावधीत् ॥३३४०॥

अक्षीणस्यागर्हीमस्य विभूतिसमयेप्यभूत् । संस्कारौपयिकं नास्य पर्याप्तं निधने धनम् ॥३३४१॥

कृतघ्नतायां राज्ञोन्यस्य पर्याप्ते किमुदीर्यताम् । यो जीवित इवानीतान्संविभेजेनुजीविनः ॥३३४२॥

लोकान्तरातिथिं बिज्जाभिधामुद्दिश्य वल्लभाम् । धन्यस्य बिज्जनामाङ्क[1]विहारारम्भकारिणः ॥३३४३॥

परलोकं प्रयातस्य निर्माण[1]प्रतिपूरणम् । स्थितं व्यवसितेः कं च विनियोगं चकार सः ॥३३४४॥ युग्मम् ॥

3345 भूभृद्धार्मिकताव्याप्रकृतोत्सेकवासवैः । युद्धैकवृत्तिभिरपि प्रवृत्ते पुण्यकर्मणि ॥३३४५॥

विपक्षाणां सुभिक्षेण तुरुष्कविषयाभयात्[1] । जन्मभूमेर्वृत्तये यैः क्रौर्याद्यन्यत्र शिक्षितम् ॥३३४६॥

[1]येपि वृत्तिं विरोध्याजिव्यये सुस्सलभूभुजि । कलहावसरेष्वेत्र[1] कश्मीरेषु प्रपेदिरे ॥३३४७॥

[1]गोत्रे तेषां क्षत्रियाणां जातः कर्मलियानुजः । राजबीजी सङ्गियाख्यः प्रतिष्ठां[1] स्वाख्ययाकरोत् ॥३३४८॥

वितस्तापुलिने बाणलिङ्गे तेन निवेशिते । जायते स्वर्धुनीरोधःसंपर्कविमुक्तधीः ॥३३४९॥

3350 तदीयं च मठं चैव तपोधनविभूषितम् । दृष्ट्वा निवर्तते रुद्रलोकालोकनकौतुकम् ॥३३५०॥

लोठनेन्यप्रतिष्ठानामधन्यद्रविणार्पणे । न तेनाद्यतने काले संरब्धं[1] शुद्धबुद्धिना ॥३३५१॥

उदयस्य प्रिया चिन्ताभिधाना कम्पनापतेः । पुलिनोर्वीं वितस्ताया विहारेण व्यभूषयत् ॥३३५२॥

प्रासादपञ्चकव्याजात्तद्विहारस्थितः करः । उदस्त इव धर्मेण प्रोत्तुङ्गाङ्गुलिपञ्चकः ॥३३५३॥

सांधिविग्रहिको मङ्खाख्योलंकारसोदरः । समवस्याभवच्छ्रेष्ठः श्रीकण्ठस्य प्रतिष्ठया ॥३३५४॥

3355 मठाग्रहारदेवौकोजीर्णोद्धारादिकर्मभिः । अनुजः[1] सुमना नाम रिल्हणस्यासदत्तुलाम् ॥३३५५॥

भूतेश्वरे मठं कृत्वा त्रिग्राम्यामप्यपाययत्[1] । तोयं कनकवाहिन्या वितस्तायाश्च यः पितॄन् ॥३३५६॥

प्रदेशे[1] कश्यपागाराभिधाने नीलभूः सरित् । जीगीषयेव जाह्नव्या यत्र पूर्वां दिशं गता[2] ॥३३५७॥

उत्ताराय गवादीनां यः सेतुं तत्र बन्धयन् । निर्ममे निर्मलं कर्म संसारोत्तरणक्षमम् ॥३३५८॥

नगरेपि स्वनामाङ्कप्रपाङ्कणागारकारिणा । मठो येन कृतोभ्रष्टजटाधरघटाश्रयः ॥३३५९॥

3360 मम्मेश्वरं स सौवर्णामलसारं[1] चकार यः । सोमतीर्थं तथा तोयोद्यानाद्युद्द्योतितान्तिकम्[2] ॥३३६०॥

अत्र क्ष्माभुजो[1] वंशे वंशीनत्यधनादिषु । सासूयस्वादमात्यानां[2] धनप्राणादिहारिणः[3] ॥३३६१॥

कुध्यन्नवासनाध्यासासूयया वासवोपि वा । प्राभ्रंशयद्दिवो देवो[1] मान्धातारं धराभुजम् ॥३३६२॥

आविप्लुतमतिर्भृत्यान्कुर्वन्सत्यवतोन्वहम् । दृष्ट्वा ध्यातस्वमाहात्म्यवृद्धिस्तु प्रीयते नृपः ॥३३६३॥

कल्लशक्ष्मापतेः[1] प्राग्योपज्ञं[2] भृत्योस्य रिल्हणः । कुर्वन्स्वर्णातपत्राणां प्रतिष्ठां प्रीतिकार्यभूत् ॥३३६४॥

---

३३३९. [1]) Thus A · C यो भवेद्धलेशानां. ३३४०. [1]) Thus R C; $A_5$ भिक्षुमल्ला°.—[2])—[3]) Written by $A_5$ on new paper.—[4]) Thus $A_5$; C °कृत्वा भुत°.—[4]) Emended; A स्वामिहतं.—[5]) Thus A; C supplements तावपि. ३३४३. [1]) Doubtful emendation, A °नामाख्य°. ३३४४. [1]) Emended with G (*sec. manu*); A निर्वाण.° ३३४६. [1]) Emended with C; A तुरुष्कामिषया°. ३३४७. [1])—[1]) Written by $A_5$ on new paper. ३३४८. [1])–[1]) Written by $A_5$ on new paper. ३३५१. [1]) Emended; A संरब्धे. ३३५५. [1]) Emended; A अनुजा. ३३५६. [1]) Emended; A त्रिग्राम्यामप्यपातयत्; cf. यामेन त्रिग्रामिकाग्राम्या वितस्ता दक्षिणेन तु v. 97. ३३५७. [1]) Emended; A प्रदेश.—[2]) These two *pádas* and the following three verses are written by $A_5$ on new paper. ३३६०. [1]) Emended with C; $A_5$ R °मलसारं.—[2]) Emended; $A_5$ R °द्यानाद्युद्योति°. ३३६१. [1]) Doubtful emendation; A क्ष्माभुजौ.—[2]) Emended; A °स्वदमात्यानां.—[3]) Emended; °हिंहारिणः. ३३६२. [1]) Emended with C; A देवी. ३३६४. [1]) Thus corr. by $A_1$ from °पतिः.—[2]) Thus A; cf. vii. 528 ffg.

स्वर्णपर्णं[1] सुरेश्वर्यां शिवयोः समवेतयोः । सदीपारात्रिकामत्रमैत्रीमेति सघण्टिकम् ॥३३६५॥ 3365
बन्धोर्हिमाद्रेर्दयितः सुताजामातरौ शिवौ । स्वर्णच्छत्त्रच्छलान्मेरुर्मूर्ध्न्याघ्रातुमुपागतः ॥३३६६॥
उद्दिश्य यद्विधबुधममात्मयोनिर्वर्गो मयाकृतटमं दयितेन गौर्याः ।
सिद्धं तदत्र ---[1]मुमयेति हेमच्छत्त्रच्छलाद्वरदृशा धलितौ शिरूर्ध्वम् ॥३३६७॥
छत्त्रं तत्र च रिल्हणेन विहितं रौक्मं महद्रुक्मिणीप्रेयोमन्दिरमूर्ध्नि नद्धमधुनादभ्रं परिभ्राजते ।
सैन्येन क्षतजावपानजनुषा नष्टं ततः स्वामिना प्राप्तं चक्रमवेक्षितुं स्वदयितं भास्वानिवाभ्यागतः ॥३३६८॥
तीर्थे मन्मथजित्खगध्वजहराजयोर्भिनाचार्यके साधारामरणं क्रियापरिणति स्वर्णातपत्रं प्रभोः ।
भात्येकस्य शिखाहिफूत्कृतिचलद्गङ्गाम्बरेणूपगं केशान्तस्थितमेघपार्श्वगतडित्पिण्डाभमन्यस्य च ॥३३६९॥
सौवर्णद्रुहिणाण्डकर्परपुरे संसूत्रिता छत्त्रकव्याकोशस्य समुद्गकप्रतिकृती दीर्घार्पित[1] घने ।
सक्रेनेन्दुकिरीटकैटभरिपुद्यामासितालंक्रिया सद्रत्नाकरयोः पिधानकरणिं स्वर्णातपत्रं गतम् ॥३३७०॥ 3370
ते लोठनमहीपालमन्वजायन्त भूभुजः । रड्डादेव्या गुणोदाराश्चत्वारश्चतुराः[1] सुताः ॥३३७१॥
गुल्हणेनापरादित्यो राघवेणेव लक्ष्मणः । अभिन्नभावः संवृद्धिं वर्तते लोठने भयन् ॥३३७२॥
ललितादित्यदेवेन[1] जयापीडो हि दारकः । भरतेनेव शत्रुघ्नः पाल्यमानः[2] प्रवर्तते ॥३३७३॥
पार्थिवाहस्करश्लाघनमस्काराग्र्यशस्करः । पञ्चमः[1] क्षितिभृद्धर्म्यो बालातप इवोदितः ॥३३७४॥
चपलैः शैशवाच्छन्दानुभावत्वात्ससौष्ठवैः । लडितैर्ललितादित्यो भित्तीरप्यार्द्रयत्यहो ॥३३७५॥ 3375
दन्तरत्नाञ्जनं ताम्राधरं गौरं तवाननम् । सबालातपभृङ्गाङ्कस्वर्णपङ्केरुहायते[1] ॥३३७६॥
आलापास्तस्य माहात्म्यगर्भा बाल्यास्फुटा[1] अपि । अमृताद्री इवोद्गारा मथ्यमानस्य वारिधेः ॥३३७७॥
महाभिजनसंजातो राजसूनुः स शैशवे । अभिधत्तेनुभावेन भव्येनागामि जृम्भितम् ॥३३७८॥
अत्यक्तमण्डनशिखण्डिशिखोपि तोयस्पर्शासहाञ्चितकलापिकलापभङ्ग्या ।
वापीं निपीतसलिलो वलितं प्रयाति चेष्टोत्कभावमहिमा वरवर्णिभावः ॥३३७९॥
यत्नो मेनिला[1] राजलक्ष्मीः पद्मश्रिया समम् । संजाताः[2] कमला चास्य कन्याः सत्कृत्यवृत्तयः ॥३३८०॥ 3380
विनोदलीलोद्यानैस्तैर्भित्यकान्तैरपत्यकैः । विद्योतितेनवद्यौ[1] तौ प्रावृट्पुष्पाकराविव ॥३३८१॥
तीर्थायतनपूतेस्मिन्मण्डलेखण्डितैश्वर्यैः । रड्डादेव्या एव याता भाग्यभावं विभूतयः ॥३३८२॥
कृतानुयात्रा सा दैवयात्रासु[1] क्षितिपाङ्गना । [2]राजलक्ष्मीरिवाभाति राजसामन्तमन्त्रिभिः ॥३३८३॥
सतीवेशे तीर्थयात्रास्वयजन्त्यस्या निमज्जने । स्नानासक्तसतीमूर्तिस्पर्शनोत्सुक्यमञ्जसा ॥३३८४॥
चित्रे कालेन यात्रासु द्रष्टुं वृष्टघुसरैः सदा । यस्मावृडिव --[1]यं जीमूतैरनुगम्यते ॥३३८५॥ 3385

---

३३६५. [1]) Emended; A °पर्णा. ३३६७. [1]) Thus A; C करुणामुमयेति°.—[2]) The last *páda* and the following verse written by $A_3$. ३३६८. [1]) Emended with C; $A_3$ R चक्रमिवे°. ३३६९. [1]) Thus A; C °पर्ग. ३३७०. [1]) Thus A; C °र्पितार्थे घने. ३३७१. [1]) Emended with C; A °श्चतुरस्सुताः. ३३७३. [1]) Emended with C; A ललितादित्य°.—[2]) Emended with C; A पाल्यमानः. ३३७४. [1]) The last two *pádas* and the following verse written by $A_3$ on new paper. ३३७६. [1]) Emended with C; A °भृङ्गाङ्कुरस्वर्ण°. ३३७७. [1]) Emended; A बाल्यास्फुटा. ३३८०. [1]) Emended with C; A मैमिला; cf. viii. 3394, 3397. —[2]) Emended; A संजाता. ३३८१. [1]) Doubtful emendation; A विद्योतवाजवद्यौ; C द्योतितावनवद्यौ. ३३८३. [1]) Emended with C: A यात्रास्वपि°.—[2]) These two *pádas* and the first *páda* of the following verse are written by $A_3$ on new paper. ३३८५. [1]) Thus A; C supplements नैचैर्यं.

सा पार्थिवेषु तीर्थेषु स्नानाय प्रस्थिता ध्रुवम् । दिव्यैर्वर्षमिषात्तीर्थैः प्रावृष्येव नदीर्व्यधा ||३३८६||

अभ्रंलिहांश्च गिरींश्च कूलंकषा नदीः । मृद्वङ्गी दुर्गमा मार्गे तीर्थौत्सुक्येन वेल्यसौ ||३३८७||

सुवर्णाभिः प्रतिष्ठाभिर्जीर्णोद्धारैश्च धीरया । तया चित्रं चतुरया पत्युर्दिशा विलङ्घिता ||३३८८||

अद्यापि विसरत्क्षीरार्णवकान्तिच्छटाच्छलात् । यो भातीव सुधाप्लुतिसितश्वेताश्मनिर्मितः ||३३८९||

3390 उपमन्योरुदन्याया दारिद्र्योपद्रवापहः । रुद्री रुद्रेश्वरो नाम्ना श्रीमान्कश्मीरभूषणम् ||३३९०||

जगत्सौन्दर्यसारं स सस्वर्णामलसारकः । शान्तावसादप्रासादोद्धारश्च विहितस्तया ||३३९१||

सत्त्वानामिव भृत्यानां कोपैर्वविकृते नृपे । उदन्वतीव शरणं सिन्धुर्हैमवतीव सा ||३३९२||

स्थिरप्रसादे भूपाले निग्रहानुग्रही क्षणात् । भूभुजामपि संवृत्तावविच्छिन्नौ तदिच्छया ||३३९३||

सोमपालात्मजो भूभृद्भूपालः प्रापितस्तया । मानिन्या मेनिलादेव्या विवाहेन महार्हताम् ||३३९४||

उत्पत्तिभूमिसुलभानुभवो न भूम्ना कस्याप्यहो व्यभिचरत्यनुभावभावः ।

3395 तेजस्तमोविलुठनव्रतमुष्णभानोर्भेदं तदुत्थमकरोत्तमसोपि चक्रम् ||३३९५||

भुवनाद्भुतसाम्राज्यमार्जने भूभुजामवत् । प्रातिभाव्यं दृढं रत्नाक्रान्तसन्मण्डलाग्रणिः ||३३९६||

ऊढायां मेनिलादेव्यां परिणेतुरभूदपि । पिता वैमत्यमुत्सृज्य निर्व्याजं राज्यदायकः ||३३९७||

राज्ञः प्राजिधरस्याजौ तरसा भूभुजोनुजः । वैरिभिर्निहतस्याग्रे वैरसंशोधनोद्यतः ||३३९८||

रक्षां शरणमेत्योच्चमानोत्कटधी घटोत्कचः । भेजे राज्यश्रियं प्राप्य चित्रं राज्यश्रियं पराम् ||३३९९|| कुलकम् ||

3400 कृतसाहायकोमात्यै राज्ञः समज्ञिमद्रुदम् । राज्यात्प्राभ्रंशयद्भ्रातृसुतं पञ्चवटं नृपम् ||३४००||

अलङ्घ्यतत्प्रभावास्फारदानाम्बुनिर्भरात् । सरितं खड्गवल्ली च कृष्णां विद्वेषिगोचराम् ||३४०१||

द्वितीयस्योरशाभर्तुरकीर्तिं निर्जवासृजत् । देवप्रभावाद्योधाममत्युग्रपुरमग्रहीत् ||३४०२||

शीतोष्णवारणशशिद्योतकल्लोलितास्ततः । बहवो वाहिनीनाथाः प्रथामित्थं प्रपेदिरे ||३४०३||

समाद्वाविंशती राज्यावाप्तेः प्राग्भूभुजो गता । तावत्येवाग्रराज्यस्य पञ्चविंशतिवत्सरे ||३४०४||

3405 इत्यदृष्टमनन्यत्र प्रजापुण्यैर्महीभुजः । परिपाकमनोज्ञत्वं स्थेयाः कल्पान्तिगाः समाः ||३४०५||

अम्भोपि प्रवहत्स्वभावमशनैराश्यानमश्मायते ग्रावाम्भः स्रवति द्रवत्वमुदितोद्रेकेषु चाथेयुषः ।
कालस्यास्खलितप्रभावरभसं भाति प्रभुत्वेद्भुते कस्यामुत्र विधातृशक्तिघटिते मार्गे निसर्गः स्थिरः ||३४०६||

प्रयाते त्र्यधिकेप्यर्धसमाषट्कशते कलेः । कश्मीरेष्वास्त गोनन्दः पार्थानां सेवया नृपः ||३४०७||

सूनुर्दामोदरोस्याथ तस्य पत्नी यशोमती[1] । गोनन्दोन्यस्तत्सुतोपि ततोतीत्य महीपतीन्[2] ||३४०८||

पञ्चत्रिंशतमज्ञातानृपवाभिजनाभिधाम् । राजाभवल्लवो[1] नाम सूनुस्तस्य कुशस्ततः ||३४०९||

---

३३८६. [1]) Emended; A प्रस्थित. ३३९२. [1]) Emended with C; A शरणं.—[2]) The last *páda* and the following two verses written by $A_3$ on new paper. ३३९३. [1]) Emended; $A_3$ R C °विच्छिन्नावपि°. ३३९५. [1]) Emended with C; A उत्पत्तिर्भू°. ३३९६. [1]) Emended; A °मार्जनी. ३३९९. [1]) Emended; A °स्योचं मानोत्क°. ३४००. [1]) Emended; A राज्यं प्र°.—[2]) Doubtful emendation; A °वटो. ३४०१. [1]) The last *páda* and the following verse written by $A_3$ on new paper. ३४०२. [1]) Doubtful emendation of G (*sec. manu*); A °कीर्तिर्निज°. ३४०४. [1]) Emended with C; A °विंशत्स व°. ३४०६. [1]) Emended with C; A ग्रावाम्भ:. ३४०८ [1]) Emended with C; A दामोदरस्याथ.—[2]) Comp. यशोवती i. 70.—[3]) Emended with C; A °पती. ३४०९. [1]) Emended with C; A राजा वल्लभको; cf. अथाभवल्लवो नाम i. 84.

द्वौ खगेन्द्रसुरेन्द्राख्यौ पुत्रपौत्रावमुष्य तु । गोधरोऽथान्यकुलजः सुवर्णाख्यस्तदात्मजः ॥३४१०॥ 3410

तज्जन्मा जनकोऽप्यासीत्सूनुः शच्याः शचीनरः । अथाशोकोऽभवद्भूभृद्भ्रात्रोऽस्य प्रपितृव्यजः ॥३४११॥

तज्जो जलौकाः संदिग्धवंशो[1] दामोदरस्ततः । तुल्यं वयोऽथ हुष्काख्यास्तुरुष्काभिजनोद्भवाः ॥३४१२॥

अभिमन्युस्तृतीयोऽथ गोनन्दोऽस्य बिभीषणः । राजेन्द्रजिद्रावणश्च – –वः क्रमशोऽभवत् ॥३४१३॥

अन्यो[1] बिभीषणः सिद्ध उत्पलाक्षश्च[2] तदनु[3] । पश्चात्ततो हिरण्याक्षहिरण्यकुलयोरभूत्[4] ॥३४१४॥

राजा वसुकुलस्तस्य सूनुः ख्यातस्त्रिकोटिहा[1] । क्षितिनन्दो बकाख्याज्जा[2]त्सुनन्दस्तदात्मजः ॥३४१५॥ 3415

नरोऽन्योऽक्षस्ततस्तस्माद्वीमा गोकर्णको नृपात् । तस्मान्नरेन्द्रादित्योऽभूत्सूनुरन्धयुधिष्ठिरः ॥३४१६॥

तस्य प्रभ्रंशितो भृत्यैरन्याभिजनसंभवः । भूपः प्रतापादित्योऽभूज्जलौकोऽपि तदात्मजः ॥३४१७॥

तुञ्जीने[1] निःसुते तज्जो विजयोऽन्यकुलोद्भवः । जयेन्द्रोऽस्य सुतेऽपुत्रे[2] सचिवः संधिमानभूत् ॥३४१८॥

युधिष्ठिरस्य पौत्रेण भूपादित्यात्मजन्मना[1] । श्रीमेघवाहनेनाथ गोनन्दे[2]ऽभ्युदितं कुले[3] ॥३४१९॥

. . . . . . . . . . . . . . . . . . . . . . . . . . | . . . . . . . . . . . . . . . . . . . . . . . . . . ||

ततः प्रवरसेनोऽन्यस्तोरमाणात्मजः[1] क्षितिम् । लेभे हिरण्यभ्रातृव्यस्तस्य पुत्रो युधिष्ठिरः[2] ॥३४२०॥ 3420

ततो नरेन्द्रादित्यश्च रणादित्यश्च भूपतिः । क्रमादभूतां तत्पुत्रौ विक्रमादित्यभूपतिः[1] ॥३४२१॥

बालादित्यश्चोदभवद्[1]रणादित्यस्य[2] नन्दनः । बालादित्यस्य जामाता ततो दुर्लभवर्धनः ॥३४२२॥

सूनुर्दुर्लभकस्तस्य चन्द्रापीडोऽभवत्ततः । तारापीडोऽनुजन्मा च मुक्तापीडोऽस्य[1] चानुजः ॥३४२३॥

भूपावास्तां कुवलयापीडो वैमातुरोऽस्य च । वज्रादित्यः सुतो राज्ञो मुक्तापीडस्य तत्सुतौ ॥३४२४॥

पृथिव्यापीडसंग्रामापीडावनु नृपोऽभवत् । जयापीडोऽस्य मन्त्री च जज्ञे[1] पुत्रावपि क्रमात् ॥३४२५॥ 3425

ललितापीडसंग्रामापीडौ[1] ज्येष्ठात्मजस्ततः । श्रीचिप्पटजयापीडः कल्यपालसुतोऽभवत् ॥३४२६॥

अभिचारेण तं हत्वा सामत्यावितरेतरम् । उत्पलाद्यैरसंमानराज्यैस्तन्मातुलैः कृतः ॥३४२७॥

भ्रातुः पुत्रोऽजितापीडो जयापीडस्य तत्पदे । अनङ्गापीडनामा च संग्रामापीडजस्ततः ॥३४२८॥

तमुत्पाट्योत्पलापीडोऽस्याजितापीडनन्दनः । अवन्तिवर्मा शूरेण[1] तं निवार्याथ मन्त्रिणा ॥३४२९॥

---

३४१०. [1]) The last three *pâdas* and the following verse are no longer found in A as the upper portion of fol. 327 has broken off; the text is given from R G.—[2]) Emended with C; R G (*prima manu*) सुवर्णाकुशला°; cf. i. 97. ३४१२. [1]) Emended; R C °वंशौ; the upper strokes of the letters are not legible in A. ३४१३. [1]) Thus A; C पिताकुर्यो क्रमाद्भूपी. ३४१४. [1]) Here the name of NARA is omitted.—[2]) Emended; A उत्पलाक्षश्च.—[3]) Thus A; doubtful.—[4]) Emended; A हिरण्याक्षोहिरण्यकुलयोर°. ३४१५. [1]) C inserts here two *pâdas* श्रीमिहिरकुलो राजा बकाख्यस्तदनन्तरं.—[2]) Emended; A क्षितिनन्दो बकात्मजाद्य°. ३४१८. [1]) Emended; A तुञ्जने; cf. ii. 11.—[2]) Emended; A जयेन्द्रस्य – पुत्रे; C जयेन्द्रस्तत्सुतोऽपुत्र:. ३४१९. [1]) Thus A; but compare ii. 145 ffg.—[2]) Emended with C; A गोनन्दाभ्युदितं.—[3]) After this verse C inserts the following: तत: प्रवरसेनोऽभूद्भूप: काश्मीरमण्डले ॥ तत्सुतश्च हिरण्योऽभूत् पालयन् क्षितिमण्डलं । मातृगुप्तोऽभवत्तद्राज्यस्तेन प्रकाशिना ॥. One verse containing the names of PRAVARASENA I., HIRANYA and MÂTRIGUPTA appears to have been omitted here by A. ३४२०. [1]) The remaining portion of this verse, the following verse and the first *pâda* of verse 3422 are no longer found in A, as the upper portion of fol. 327 has broken off; the text is given from R G.—[2]) Thus C; R पुत्रो –ष्ठिरात्, corr. *sec. manu* as above; G पुत्रायुधिष्ठिरात्. ३४२१. [1]) Thus C R; G तद्वच विक्रमादित्य वर्धिनः. ३४२२. [1]) Thus C R; G °श्चाभीवदभवत्°.—[2]) Emended with R G; A °दित्यस्य नं°. ३४२३. [1]) Thus C; R G °पीडस्य; in A three *aksharas* after मुक्ता have become illegible. ३४२५. [1]) Emended with C; A जज्ञपुत्रावपि. ३४२६. [1]) Emended with C; A °पीडज्येष्ठा.° ३४२७. [1]) Emended with C; A सम्मत्या°. ३४२९. [1]) Here ends the text of A at the foot of fol. 327 *rev.*, the last leaf of the MS. being lost. The text of the remaining verses is given from R G.

3430 ममोत्पलस्य विदधे साम्राज्ये सुखवर्मजः । भूपः शंकरवर्मा स गोपालस्तस्य चात्मजः[1] ॥३४३०॥
रथ्यागृहीतः प्राभूच्च तद्भ्राता संकटाभिधः । सुगन्धाख्या तयोर्माता तां विनाश्याथ भूभुजम् ॥३४३१॥
शूरवर्मप्रणप्तारं पार्थं तन्निपपात च । चक्रुर्निर्जितवर्माणं ततस्तस्य[1] च तत्क्रमात् ॥३४३२॥
चक्रवर्मा शूरवर्मा चेति निर्जितवर्मजः । [1]विहिता बहुशो राज्ये तत्स्तम्भे[2] शंभुवर्धनः ॥३४३३॥
तदन्तरे लब्धराज्ये मन्त्री व्यापाद्य तं नृपम् । चक्रवर्मण्यतीतेथ पापी पार्थात्मजः क्रमात् ॥३४३४॥
3435 उन्मत्तावन्तिवर्मासीत्तत्पुत्रे शूरवर्मणि । राज्याद्भ्रष्टे द्विजैश्चक्रे राज्ये मन्त्री यशस्करः ॥३४३५॥
प्रपितृव्यात्मजस्तस्य वर्णटस्तनयोनु तम् । राज्ये वक्राङ्घ्रिसंग्रामस्तस्थौ निष्पाद्य तं ततः ॥३४३६॥
अमात्यः पर्वगुप्ताख्यो राज्यं द्रोहेण लब्धवान् । क्षेमगुप्तः सुतोस्यासीदभिमन्युस्तदात्मजे ॥३४३७॥
शान्ते माता पाल्यमाने नन्दिगुप्ते च तत्सुते । ततस्त्रिभुवने भीमगुप्ते च क्रूरचेष्टया ॥३४३८॥
पौत्रे तथैव निहते[1] स्वयं दिद्दाख्यया कृतम् । राज्यं[2] संग्रामराजोपि भ्रातृव्योन्ते नृपः कृतः ॥३४३९॥
3440 हरिराजानन्तदेवावास्तां तस्यात्मजौ ततः । कलशोनन्ततनयः क्रमाद्भूपौ तदात्मजौ ॥३४४०॥
उभावुत्कर्षहर्षाख्यावपि निष्पाद्य भूपतिम् । हर्षदेवं तमुद्दामविक्रमोनन्यवंशजः ॥३४४१॥
भ्रातुः पुत्रस्य दिद्दाया जस्सराजस्य नप्तृतः । मल्लाभिधानादुद्भूतो भूपतामुच्चलोभजत् ॥३४४२॥
द्रोहेण तं हतवतां भृत्यानामपतत्ततः । शङ्कराजान्यनामाभूद्रड्डाख्यः क्षणिको नृपः ॥३४४३॥
गर्गेण निहते तस्मिन्सल्हो[1] द्वैमातुरोप्यभूत् । तस्योच्चलमहीभर्तुर्भ्राता निर्बध्य तं बली ॥३४४४॥
3445 सुस्सलाख्योग्रहीद्राज्यं माल्हिरुच्चलसोदरः । विरक्तैः पातिते तस्मिन्राज्याद्भृत्यैर्नृपः कृतः ॥३४४५॥
षण्मासान्हर्षभूभर्तुर्नप्ता भिक्षाचराभिधः । पुनर्निर्वास्य तं प्राप्तराज्ये सुस्सलभूभृति ॥३४४६॥
क्रमाल्लवन्यैर्विश्वस्तैराज्योद्वेजिते हते । लवन्यान्निखिलांस्तं च[1] हत्वा भिक्षाचरं नृपम् ॥३४४७॥
सुतः सुस्सलभूभर्तुः संप्रत्यप्रतिमक्षमः । नन्दयन्मेदिनीमास्ते जयसिंहो महीपतिः ॥३४४८॥
गोदावरी सरिदिवोत्तुमुलैस्तरङ्गैर्वक्त्रैः स्फुटं सपदि सप्तभिरापतन्ती ।
श्रीका[1]न्तिराजविपुलाभिजनाब्धिमध्यं विश्रान्तये विशति राजतरङ्गिणीयम् ॥३४४९॥

[1] इति श्रीमहाकविश्रीकल्हणकृतायां राजतरङ्गिण्यामष्टमस्तरङ्गः[1] ॥

समाप्तेयं राजतरङ्गिणी

कृतिः श्रीमहामात्यचण्पकप्रभुसूनोर्महाकवेः कल्हणस्य ॥

---

३४३०. 1) The last two *pâdas* are found in the above form in C; in R G they are added *sec. manu*, being probably copied from C. ३४३१. 1) Emended with C; R G निनाश्य°. ३४३२. 1) Thus R G; cf. v. 287 ffg.; C ततः पार्थस्ततः क्रमात्. ३४३३. 1) These two *pâdas* and the first half of the following verse are omitted in C.—2) Thus R; G --स्तं. ३४३७. 1) Thus C R (*sec. manu*); G R (*prima manu*) सोमगुप्त. ३४३९. 1) Emended; R G C निहिते.—2) Emended; R G राज्ये; C कृते । राज्ये. ३४४४. 1) Emended; R G C मल्लो; R (*sec. manu*) मल्हो. ३४४७. 1) Thus R; G °लांस्ते च; C °लांस्तांश्च. ३४४९. 1) Emended; R G C श्रीकान्त°; comp. vii. 1285. *Colophon.* 1)—1) This part of the Colophon is not found in G.

Canto. Verse.

१. १०. *For* स्कन्धावारं *read* स्कन्धावारं[1], *adding note:* [1]) Emended ; A स्कन्धावारं.

१. १७३.[1]) *For* A₂ भूमीश्वरी *read* A₁ भूमीश्वरी.

१. ११७. *For* स्वादुनीलकण्ठ° *read* स्वादु नीलकण्ठ°.

२. १. *For* ललनासु° *read* ललनासु°

२. ४४. *For* पीतमाणाय *read* पीतमाणाय.

२. ११६. *For* संवारितिमिश्रिता *read* संवाति मिश्रिता°.

२. १७०. *For* जरत्र° *read* जरत्र°[1], *adding note:* [1]) A जरत्र°.

३. १०१. *To* पुरुषाधम: *add note:* Subhâshitâvali, 361, reads पुरुषोत्तम:.

३. ४९२. *To* निश्चयश्चित्तं *add note:* Subhâshitâvali, 579, reads निश्चयश्चित्तं

*To* जगतस्त्रिगम्यो° *add note :* Subhâshitâvali, 579, reads जगतो सिन्धो°.

४. ११५. *For* चोचं *read* चो चं.

*To* परोपकारत्वाय *add note:* Subhâshitâvali, 3133, reads जनोपकारत्वाय.

४. १४८. *For* अधिश्रयंस्तं *read* अधिश्रियंस्तं.

४. २३४. *To* °न्कालेतिवाली° *add note :* Subhâshitâvali, 3028, reads °न्कालेपि वाली°.

४. ४९८[2]) *For* A₂ वेत्ता, A₁ वेत्ते *read* A₂ वेत्ते, A₁ वेत्तं.

४. ७१२. *For* °गुणस्मय *read* °गुणस्मय[1], *adding note:* [1]) Emended ; A°गुणस्मय.

५. ११५. *For* सत्कर्मजन्मसु *read* सत्कर्म जन्मसु.

५. १३६. *For* वर्षे एकोनषष्ठे *read* वर्षे एकोनषष्टे.

५. १३१. *For* °शिभवत् *read* °शिभिवत्.

५. १४५. *For* °भुभुज: *read* °भुभुज:.

५. २२५.[1]) *For* वसाहनल° *read* वसाहनल

५. २३३. *To* कमलुकाभिधान् *add note:* Comp. the name of the Shâhiya King *Kamalû*, Albêrûnî's *Indica* (transl. by Sachau) ii. 13.

५. २६०. *For* °पाइका *read* °पाइका.

५. २९५. *For* स्वभुक्तास्ति° *read* स्वभुक्तास्ति°.

५. ३०५. *For* श्रीवक° *read* श्रीवक°.

Canto. Verse

६. ९८. *For* समर्पयन् *read* समार्पयत्[2], *adding note:* [2]) Emended ; A समर्पयन्.

६. १२५. *For* सहस्र *read* सहस्रं.

६. ३४५. *For* काश्मीरिकाबल° *read* काश्मीरकबल°.

७. ११७. *For* स्वल्पानुगोभवत् *read* स्वल्पानुगो भवत्.

७. ४६६. *For* °स्कन्धानां[1] *read* °स्कन्धानां[1], *adding note:* [1]) Emended ; A °स्कन्धानां.

७. ५६०. *For* वैशमविभवत् *read* वैशमविभिवत्.

७. ५८७. *For* °विपक्षेऽपि° *read* °विपक्षेऽपि°.

७. ५८८. *To* कीर्तिस्थकंपुरा° *add note:* [1]) Thus A ; perhaps read कीर्तिवर्मपुरा° ; comp. viii. 538.

७. ५९०. *For* काश्मार° *read* काश्मार°.

७. ५९१. *For* °व्यसशीर्षं *read* °व्यसशीर्षं.

७. ६०३.[1]) *For* A प्रत्यासे *read* A₁ प्रत्यासे.

७. ७६१. *For* पक्षमतिभवत् *read* पक्षमतिभिवत्.

७. ८०४. *To* स्मरिरस: *add note:* Subhâshitâvali, 3132, reads निजारिर:,

*To* विद्या स्वैव *add note:* Subhâshitâvali, 3132, reads वेश्या: सेव.

७. ८४६. *For* चरड: *read* चरडं[1], *adding note:* [1]) A चरड:.

७. ८८९. *For* कोपाक्रान्ते *read* कोपाक्रान्ते

७. ८९२. *For* दुदुदु° *read* दुदुदु°.

७. ९५०. *For* विरलासु° *read* विरलासु°.

७. ९७९. *For* काश्मीरिकाणां[1] *read* काश्मीरकाणां, *omitting note.*

७. १००८. *For* काश्मीरिकाणां[1] *read* काश्मीरकाणां, *omitting note.*

७. १०११. *For* दुदुदु° *read* दुदुदु°.

७. ११३१. *For* संग्रस्यगुणमन्थत: *read* संग्रस्यगुणिमन्थत:.

७. ११८९. *For* काश्मीरिका[1]: *read* काश्मीरका:, *omitting note.*

७. ११८९. *For* स्कन्धावारे *read* स्कन्धावारे[1], *adding note:* [1]) Emended ; A स्कन्धावारे.

## CORRIGENDA AND ADDENDA.

Canto. Verse.

७. १४५७. *For* गजशालीय° *read* गजशालेय°[1], *adding note:* [1]) Emended; A °शालीय°.

७. १६५८. *For* सर्वर्तुषु लोभिषत् *read* सर्वर्तुष्वलोभिषत्.

७. १६६५. *For* मूर्तिमिषा° *read* मूलमिषा°.

८. ३५४. *For* °स्कन्धावारेषु *read* °स्कन्धावारेषु[1], *adding note:* [1]) Emended; A° स्कन्धा°.

८. ४८९. *For* वेतालो *read* वेताली[1], *adding note:* [1]) Emended; A वेताली.

८. ६७७. *For* हन्म *read* हन्मं.

८. ७४५. *For* वैर्जयो मोचिषा° *read* वैर्जयोमोचिष वा°.

८. ८८७. *For* काश्मीरिक°[1] *read* काश्मीरक°, *omitting note.*

*For* °पादपः *read* °पादपः.

८. ९०२. *For* °तालादीवाद्य° *read* °तालादिवाद्य°

८.९२१.९२२. *For* काश्मीरिका°[1] *read* काश्मीरका°, *omitting note.*

८. १००८. *For* °कान्यमुखरै *read* °कन्यमुखरे.

८. १०५५. *For* स्कन्धावारं *read* स्कन्धावारं[1], *adding note:* [1]) Emended; A स्कन्धावारं.

८. १०८४. *For* °गिरिद्रुकाल्याण *read* °गिरिद्रुकाल्याण°.

८. ११४८. *For* काश्मीरकै[1] *read* काश्मीरिकै, *omitting note.*

८. ११६८. *For* राज्ञामलजन्मनात् *read* राज्ञामलजन्मनात्.

८. १२४६ *For* मित्रमयाः *read* मित्रमयो.

८. १०१६. *For* क्षोतीरसा° *read* क्षोती रसा°.

८. १०४२. *For* °क्षोहिण्यो *read* °क्षोहिण्यो.

८. २१११. *For* संस्तम्भेन°[1] *read* संस्तम्भेन°, *omitting note.*

८. २०४८.[1]). *For* PRITHVIHARI's *read* PRITHVIHARA's.

८. २०५७. *For* काश्मीरका:[1] *read* काश्मीरिका:, *omitting note.*

८. ३०११.[1]). *For* सारसा *read* साससा.

८. ३१४२. *For* °स्संस्तम्भ[1] *read* °स्संस्तम्भ, *omitting note*

८. ३१८२. *For* इन्दुवंश° *read* इन्दुवंशा°.

---

*N.B.—Some letters, especially* ] *and* f, *have occasionally broken in the printing.*